कृष्णदास संस्कृत सीरीज १३४

श्रीमदनन्तभट्टविरचितः

# विध[illegible]पारिजातः

[illegible]र्थः खण्डः




सम्पादकः
पण्डित ईश्वरचन्द्र शास्त्री

कृष्णदास अकादमी, वाराणसी

कृष्णदास संस्कृत सीरीज

१३४

3-5

श्रीमदनन्तभट्टविरचितः

# विधानपारिजातः

( स्मृतिग्रन्थः )

चतुर्थः खण्डः

सम्पादकः

पण्डित ईश्वरचन्द्रशास्त्री




कृष्णदास अकादमी, वाराणसी

१९९२

प्रकाशक : कृष्णदास अकादमी, वाराणसी
मुद्रक : चौखम्बा प्रेस, वाराणसी
संस्करण : पुनर्मुद्रित, वि० संवत् २०४९
मूल्य : रु० १०००-०० ( १-४ भाग )

© कृष्णदास अकादमी
पो० बा० नं० १११८
चौक, (चित्रा सिनेमा बिल्डिंग), वाराणसी- २२१००१ ( भारत )
फोन : ५२३५८

अपरं च प्राप्तिस्थानम्
चौखम्बा संस्कृत सीरीज आफिस
के० ३७/९९, गोपाल मन्दिर लेन
पो० बा० नं० १००८, वाराणसी–२२१००१ ( भारत )
फोन : ३३३४५८

KRISHNADAS SANSKRIT SERIES

134

# VIDHĀNA-PĀRIJĀTA

( A SYSTEM OF HINDU LAW )

OF

SRIMAD ANANTA BHATTA

VOL. IV

*Edited by*

**Pandita Iswar Chandra Sastri**




KRISHNADAS Academy

1992

# विधान-पारिजाते

## प्राक्कथनम् ,

—*—

अयं पारिजातोमहानिबन्धो धर्म्मपरिमलपरिपूर्णः, धर्म्मसंहितानाम श्रुतेः स्मृति—सारभूता (१) स्मृतिस्तु श्रुतितोजाता। सर्व्वस्य शास्त्रस्याकरभूता श्रुतिः। तथाहि 'श्रुतिस्तु वेदः प्रोक्तोवै धर्म्मशास्त्रं तुवै स्मृतिः' (२) स्मृतिस्तु विशेषतोहि प्रवृत्तिनिवृत्ति-प्रबोधिका—तच्च वक्ति महर्षिः 'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकं नवा' इति। तयोः प्रवृत्तिः श्रीभगवन्तं परमेश मुपासीत, निवृत्तिः न सुरां पिबेत् इति। श्रुतिरवादीत् धर्म्मलक्षणम् , 'धर्म्मोविश्वस्य जगतः प्रतिष्ठा, लोके धर्म्मिष्ठं प्रजा उपसर्पन्ति, तस्माद्धर्म्मं परमं वदन्ति' (३) 'धर्म्मेण पापमपनुदति' इति। 'धर्म्मोरक्षति रक्षितः', धर्म्मश्चर धर्म्मः सर्व्वेषांभूतानां मधु' इति च। अत्र विश्वस्य प्रतिष्ठा इत्युक्तेः विश्ववासिनां जनानां धर्म्मोऽभ्युदयनिः-श्रेयससाधनार्थं राजते जगति।

---

(१) श्रुति :—श्रीपरमेशस्य श्वासप्रश्वासादिनिर्गता। ''निःश्वसित—मस्यवेदाः वीक्षितमेतस्य पञ्चभूतानि' इति वाचस्पति मिश्रपादाः। अत्र श्रुतिः 'अस्य च महतो भूतस्य निःश्वसितं यहग्वेदः' इत्यादि। अपरा स्मृतिरपि 'न कश्चिद्वेद कर्त्ता च वेदस्मर्त्ता चतुर्मुखः'। अपौरुषेयत्वादस्य कर्त्ता नास्ति, अन्यन् मीमांसादर्शने प्रव्यक्तमस्ति। श्रुयते गुरुशिष्य परम्परया, अनादिकालतः पितापुत्र परम्परया वा या सा श्रुतिः।

(२) 'स्मृतिस्तु धर्म्मसंहिता'। स्मर्य्यते धर्म्माधर्म्मौ यया सास्मृतिः। वेदार्थं स्मरण पूर्व्वकं या महर्षिभृग्वादि-विरचिता सा स्मृतिर्वा। ताश्च स्मृतयः मन्वादि संहिताख्याः। तथाहि 'मन्वत्रि विष्णु हारीताः याज्ञवल्क्योशनाङ्गिराः यमापस्तम्ब समवर्त्ताः कात्यायनो बृहस्पतिः। पराशर व्यास शङ्ख लिखिता दक्ष गोतमौ। शातातपो वशिष्ठश्च धर्म्मशास्त्र प्रयोजकाः' इति। तासु स्मृतिषु मनोरेव श्रेष्ठत्वम्, यद्यपि भृगु प्रोक्तासंहिता पश्चान्मनुना प्रोक्ता, तथापि च तत्र मनोः प्राधान्ये श्रुतिरवादीत्—'मनुर्वै यत् किञ्चावदत्तद्भेषजं भेषजायाः' इति। स्मृतिश्चात्र यथा,—'यः कश्चित् कस्य चिद्धर्म्मोमनुना परिकीर्त्तितः। स सर्वोऽभिहितोवेदे सर्व्वज्ञानमयोहि सः' इति। अन्यच्च 'वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम्। मन्वर्थ विपरीता या सा स्मृतिर्न प्रशस्यते।' मनवोऽष्टादश संख्यकाः। तेषां इह मन्वादिभेदेन काले भिन्नत्वम्।

(३) 'त्रयीधर्म्मस्कन्धा यज्ञोऽध्ययनं दानमिति' छान्दोग्ये।

**स च धर्म्मश्चतुर्विधलक्षणः, तथा च स्मृतौ,—**

'वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः (१) ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्म्मस्य लक्षणम्' इति ॥
मतान्तरेच 'दशलक्षणकोधर्म्मः सेवितव्यः प्रयत्नतः' ।

**तमाह महर्षि मनुः—**

'धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्व्विद्यासत्यम क्रोधोदशकं धर्म्मलक्षणम्' ॥

**अत्रापरञ्च—**

'वेदोऽखिलो धर्म्ममूलं', 'धर्म्ममूलमिदं स्मृतम्' । दर्शनशास्त्रेऽपि,— 'अथातोधर्म्मजिज्ञासा' । 'चोदनालक्षणोऽर्थोधर्म्मः' । 'एवमथातो ब्रह्मजिज्ञासा' । 'यतोऽभ्युदयनिः श्रेयससिद्धिः स धर्म्मः' । 'धर्म्मेण गमनमूर्द्धं गमन मधस्तादधर्म्मेण' । अत्रापरं 'धर्म्मक्षेत्रे कुरुक्षेत्रे' । 'अथातोधर्म्मं व्याख्यास्यामः' ।

'श्रेयान् स्वधर्म्मोविगुणः' । 'धर्म्मः प्रोज्झित कैतवः' । 'धर्म्मः स्वनुष्ठितः पुंसाम्' । 'धर्म्मस्य ह्यपवर्गस्य' । 'धनञ्च धर्म्मैकफलम्' ।

---

(१) श्रुति :—श्रूयते गुरु परम्परया पितापुत्र परम्परया वेति श्रुतिः, श्रूयत एव न केनापि क्रियते, तत् कर्त्तुरस्मरणात् । श्रु श्रवणे, ततः कर्म्मणि क्तिन् । श्रूयते धर्म्मोऽनया वेति 'श्रूयजीविस्तुभ्यः' इति वार्त्तिकात् करणे वा क्तिन् । वेदः—विद ज्ञाने, विदन्त्य नेन परमेश-धर्म्मादिकम्, ततः विदेः 'हलश्चेति' घञा सिद्धः । आम्नायः—म्ना अभ्यासे, आम्नायते अभ्यस्यते गुरुतः, इति कर्म्मणि घञ् । यद्वा आमनत्युप दिशति सत्यं धर्म्मा-धर्म्मौवेति 'श्याद्व्यधा' इत्यादिना णः स्यादिति । सूक्तम्—सु-सम्यगेव उक्तं परमेशेन न तु कृतम्, घटादिवत् । मन्त्रः—मन्त्र्यते मोक्षतत्त्वं येन । मतिगुप्त भाषणे, ततो घञा सिद्धः । 'मन्त्रो वेदविशेषेस्याद् देवादीनाञ्च साधने' । 'न कश्चिद् वेद कर्त्ता च वेदस्मर्त्ता चतुर्म्मुखः' इति स्मृतेश्च ।

ऋगादित्रयी वेदाः,—ऋच्स्तुतौ ऋच्यन्ते स्तुयन्ते परमेशादयोदेवा यया सा ऋक् । साम,—'षोऽन्त-कर्म्मणि' । स्यति पापम् येन तत् । औणादिकान्मनिन् । 'साम क्लीव सुपायस्य भेदेवेदान्तरेऽपिच' । यज देवपूजासङ्गत करणादिषु । इज्यतेऽनेन । 'अर्त्तिं दृवपि' इत्याद्यौणादिकादुस् यजुरिति । एषां ऋगादीनां लक्षण ज्ञापकानि सूत्राणि यथा,—'यत्रार्थवशेन पादव्यवस्था सा ऋक्' (१) 'गीतिषु सामाख्या' (२) 'शेषे यजुः' (३) इति । अथर्व्ववेदेन सह वेदाश्चत्वारः । महाभारतस्य पञ्चमवेदत्व मौपचारिकं केचन स्वीकुर्व्वन्ति, तथाच 'वेदा-नध्यापयामास महाभारत पञ्चमान्' इति । अपरञ्च—'चतुर्भ्यः स रहस्येभ्यो वेदेभ्योऽधिकंयदा, तदा प्रभृति लोकेऽस्मिन् महाभारत मुच्यते' । अपरञ्च गीता व्याख्याने, 'भारते सर्व्ववेदार्थः भारतार्थश्च कृत्स्नशः । गीताया-मस्ति तेनैव सर्व्वशास्त्रमयीहि सा' इति । महाभारतस्य पञ्चमवेदत्वे हेतुर्महर्षिभिर्गीतः, तथाहि भारतान्तर्गतानि एत्यान्येव, श्रीभगवद्‌गीता, (१) अनुगीता, (२) सनत् सुजातीयाध्यात्मशास्त्रम, (३) श्रीविष्णु सहस्रनाम, (४) गजेन्द्रमोक्षः पाण्डवगीता वा (५) इति ।

**अन्यच्च,—**

'वेद प्रणिहितो धर्म्मोह्यधर्म्मस्तद्विपर्य्ययः'। इति

**अपराणि च,—**

'एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्व्वमन्यत्तु गच्छति'॥
'अनित्यानि शरीराणि विभवोनैव शाश्वतः।
'नित्यं सन्निहितोमृत्युः कर्त्तव्योधर्म्म-सञ्चयः'॥
'धर्म्मेणहि सहायेन तम स्तरति दुस्तरम्' इति च।

अस्मिन् प्रसङ्गात् त्रय्यपि उच्यते,—'विधानमृग्यजुः साम्नां त्रयीधर्म्मं विदुर्बुधाः'। ऋग्यजुः सामानि त्रयोवेदास्त्रयी। त्रयोऽवयवा यस्याः सा संहतिः त्रयीति (*)। अत्र वेदानां त्रित्वं श्रुतिर्वक्ति, यथा 'ऋचः सामानि यज्ञि रे च्छंन्दांसि यज्ञिरे तस्माद् यजुरजायत' इति। यद्येवं स्यात्तदाकथं 'चत्वारीवेदाः ऋगयजुः सामाथर्व्वाणः'। 'चतुर्भ्यः सरहस्येभ्यो वेदेभ्योऽधिकं यदा' इति च (†) अत्र त्रयीति विशेषणं वौद्धागमादिव्यावृत्त्यर्थम्। चतूर्णां वेदानां त्रयीसंज्ञा त्रिवेद्याश्च। यथाहि—

द्विजशब्दो ब्राह्मणे त्रिवर्ण्याञ्च वर्त्तते। अतश्चत्वारएव वेदाः, तथाच श्रुतिः- 'तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्व्ववेदः। शिक्षाकल्पोव्याकरणं निरुक्तंच्छन्दो-ज्यौतिषमिति' (‡) अपरा च्छान्दोग्य श्रुतिश्च—'सहोवाच—र्ग्वेदं भगवोऽध्येमि यजुर्व्वेदं सामवेद माथर्व्वणं चतुर्थमिति हासपुराणं पञ्चमं वेदानाम्' इत्यादि। नहि केवलं महर्षिमन्वादिप्रणीतानां स्मृतिसन्दर्भाणां 'संहितेति' नामास्ति वेद-सन्दर्भस्यापि संहितेति नाम दृश्यते यथा, शुक्ल यजुः संहिता, तैत्तिरीय संहिता, मैत्रायणी संहिता, इत्यादि। व्याकरणनयेतु संहिता, सन्धिरित्यपि। शाब्दिकरीत्यातु संहिता सन्निकर्षः संयोगः, द्वयोर्मेलनम्। तथा च 'संहितैकपदे नित्या नित्या धातूपसर्गयोः' इत्यादि (ऽ)। पौराणिक मते च ऋषिप्रणीतधर्म्म-शास्त्रं संहितेति। अत्र स्कन्दपुराणोक्त—षट्संहिताः।

---

(*) त्रयीति,—अत्र त्रिशब्दात् 'संख्याया अवयवे तयप्,'। (५-२-४२ सू०) 'द्वित्रिभ्यां तयस्य,—इति 'अयत्'। 'टिड्ढा' इत्यनेन ङीप्। त्रय्याधर्म्मः त्रयीधर्म्मः त्रयीप्रतिपादित-यागादिः।

(‡) एतानि श्रुतेः षडङ्गानि मुण्डकोपनिषदि उक्तानि।

(†) सरहस्या श्चत्वारो वेदा इति प्रागप्युक्तम्। 'कार्ष्णं च पञ्चमोवेदः यन्महाभारतं-स्मृतम्' इति च।

(ऽ) स्मृतिस्तु 'धर्म्मशास्त्र स्मरणयोः स्त्रियाम्' इति कोषकारः। संहितेति, संपूर्व्वाद्दधातेर्धातोः कर्म्मणि क्तः। ततो 'दधातेर्हिः' (३।४।४२) इति सिद्धम्।

**तद् यथा,—**

'स्कान्दमद्याभिवक्ष्यामि पुराणं श्रुति सम्मतम्।
षड्विधं संहिताभेदैः पञ्चाशत् खण्डमण्डितम्॥
आद्या सनत् कुमारोक्ता द्वितीया सूतसंहिता।
तृतीया शाङ्करी विप्राश्चतुर्थी वैष्णवी मता।
ततपरा संहिता ब्राह्मी सौरान्त्या संहिता मता॥

**ग्रन्थतः पञ्चपञ्चाशत्सहस्रेणोपलक्षिता।**

आद्यातु संहिता विप्रा द्वितीया षट्सहस्रिका॥
तृतीया ग्रन्थतस्त्रि शत् सहस्रेणोपलक्षिता।
तृतीया संहिता पञ्च-सहस्रेणोपलक्षिताः॥
ततोऽन्यास्त्रिसहस्रेण ग्रन्थेणैव विनिर्म्मिताः।
अन्याः सहस्रतः सृष्टा ग्रन्थतः पण्डितोत्तमाः' (*)॥

वेदाङ्गेषु षट्सु कल्प सूत्रं द्वितीयाङ्गम्। तस्माद् विभक्तानि धर्म्म-शास्त्र-याग-प्रतिसूत्र-श्रौत सूत्र-गृह्य सूत्राणिचेति। प्रथमं कात्यायन-श्रौतसूत्रम्। द्वितीयं वौधायनादि धर्म्मसूत्रम्। पारस्कर-गोभिलादिगृह्यसूत्रम्। एतान्यत्र धर्म्मशास्त्रेऽन्तर्भूतानीति केचनर्षयः प्रोचुः। एषां धर्म्मोद्दिशे कृत्य प्रकाशकत्वात्। कल्पसूत्रस्य विषयोयज्ञादिः। धर्म्मसूत्रस्य धर्म्मकृत्यादिः। गृह्य सूत्रस्य संस्कारादिः।

एतेभ्यः सर्व्वेभ्य इतिहास-पुराण-ज्योतिषेभ्यश्च सारं समाकृष्य धर्म्मशास्त्र-निबन्धा हेमाद्रि-शूलपाणि-जीमूतवाहन कामधेन्वादिकृद्भिः वहवोनिवन्धा विरचिताः। दृश्यन्ते प्रायस्त्रिशत-परिमिता धर्म्म शास्त्रनिवन्धग्रन्था विद्यन्ते च। बहूणां निबन्ध-ग्रन्थानामत्र पारिजाते नामोल्लेखोऽस्ति। एवमस्मात् प्राक्सन्दर्भकृद्भिरपि तेषां नामधेयानि गृहीतवाक्यानि च समङ्कितानि। अस्य सूचीपत्रे प्राक्तन निवन्धकृतां निवन्धानाञ्च नामाणि मया समुद्धृतानि। वहवोमहार्घ्य ग्रन्था एकस्य ग्रन्थागारस्य च विद्वेषाद् (†) दाहे, शिलादित्येन दग्धाः। एतत् पारिजातकृद्भिर्हेमाद्रिमाश्रित्य तमनुसृत्यत्र तद्वाक्यानि समङ्कितानि। यथाहि—'हेमाद्रिमाद्रियत

(*) स्कन्द पुराणे, सूत संहितायाम्, शिवमाहात्म्यखण्डे प्रथमाध्याये।

(†) नृपेण बौद्ध-शिलादित्येन संस्कृतद्वेषान्महान् ग्रन्थालयोऽदाहि।

सुवर्ण निवेशरूपम्' (*)। गौड़ीयमत प्रसङ्गेणवङ्गीय विद्वाम्बररघुनन्दनोक्तिरपि पञ्चमस्तवके समुद्धृता (†)।

## अत्र पारिजाते प्रथमस्तवकादि प्रारम्भे अवसानेच एतद्ग्रन्थोक्त—

## विषय-संक्षेपोक्ति र्यथा :—

प्रथमे स्तवके स्वस्ति वाचनादिकमुच्यते ।
द्वितीये दुष्ट-ऋत्वादि-जातशान्तिकमीर्य्यते ॥
तृतीये गुरुशान्त्यादि व्रत-वन्ध-विवाहयोः ।
प्रकीर्णानि विधानानि कीर्त्यन्तेऽत्र चतुर्थके ॥
मरणस्य विधानानि कीर्त्यन्ते पञ्चमेऽत्रतु ।
जननादि-क्रमेणैव शान्तिकम इहेरितः ॥

सुप्रसिद्ध धर्म्मशास्त्रीयसारसंग्रहकारेभ्यो रघुनन्दन भट्टाचार्य्य-रत्नाकर मिश्र-निर्णयसिन्धुकृदादिभ्यः परवर्त्तितया एतद्ग्रन्थकर्त्तृ धृत वचनानि, तेषां नकेनापि प्रमाणत्वेन समुद्धृतानि । यद्येषस्तेभ्य प्राचीनतमोऽभविष्यत्तदा तैः सर्व्वैर्ग्रन्थकृद्भिरेव पारिजातकर्त्तृ-वचनानि प्रामाण्यबाहुल्येनोद्धृतानि अकारिषत। नह्यस्यायं केवलं पारिजातनिबन्धो विरचितः अपरेच प्रणीताः सन्दर्भा विद्यन्ते, यथाहि,—

(१) दानपारिजातः—
(२) शान्तिपारिजातः ।
(३) आह्निकपारिजातः ।
(४) दानसागरः ।
(५) कुण्डमण्डपहोमविधानम् ।
(६) ग्रहयज्ञविधानम् ।
(७) कथामृतनिधिः ।
(८) पञ्चोपाख्यानसंग्रहः ।

एतेच पारिजातकर्त्तुः स्वरचिताः सन्ति निबन्धाः ।

---

(*) मुक्ताफले श्रीमद्भागवत सारे वोपदेवेनावादि । एव मेव तट्टीकाकृता हेमाद्रि सूरिणा च । 'हेमाद्रि र्वोपदेवेन मुक्ताफलमचीकरत्' इति तत्रैवास्ति ।

(†) 'सारस्वताः कान्यकुब्जा वङ्गमैथिल उत्कलाः ।
पञ्चगौड़ा इमी ख्याता विन्ध्यस्योत्तरवासिनः' ॥ 'हेमाद्रिरपश्चात्' इति पारिजातेऽत्र १२२ पत्रे । भट्टाचार्य्यस्य स्मृति तत्त्वोल्लेखः, यथा :—
'दन्तजननाभावे शुद्धितत्त्वे ब्रह्मपुराणम् । एवमेव २५५ पत्रे, चस्य 'श्राद्धतत्त्वे च' इति ।

(४) दान सागराख्यो महानिबन्धः, वङ्गीय नृप वल्लालसेनेन प्राग् विरचित:, एवमपरश्च 'अद्भुत-सागरः' दुर्निमित्तादिविषये ज्योतिर्विज्ञानाख्यनिबन्धः प्रणीतः प्रकाशितश्च ।

अत्र वङ्गदेशे विरलप्रचाराणि पुस्तकान्येतानि, तथाप्येतेषां धर्म्मकृत्ये सम्यक् समुपकार कत्वम्, चतुर्वर्गचिन्तामणिवत्। समधिक प्राधान्यञ्चान्येषु देशान्तरेषु अक्षुण्ण-त्वेन सुशोभते, इति समवलोक्यै तद्देशीयैरपि अवश्यं स्वीकार्य्यम्।

निबन्धकर्त्ताचास्य सन्दर्भस्यानन्तदेवभट्टः, कस्मिन् समये कतमं देशं (महाराष्ट्रदेशम्?) अलमकार्षीदिति निश्चेतुमन्य उपायो न विद्यते। परन्तु निबन्धस्यास्य पञ्चमस्तवकावसाने एवं द्वौ श्लोकौ ग्रन्थकृदुक्तौ स्वपरिचायकौ संन्निविष्टौ स्तः, तावनुसृत्य उच्यते—

(१) काण्वर्षिकुलजातचन्द्रमाः।
(२) अस्यच पितामहः जह्नु भट्टः।
(३) पिता नागदेव भट्टः।
(४) पितृव्यः चन्द्रदेव भट्टः।
(५) जननी भागीरथी।
(६) जन्मभूर्महाराष्ट्रदेशः।
(७) मोक्षधामवाराणस्या मूषित्वा तेन निबन्धोऽयं समलेखि (*)।

विरचनकालः काश्यात् (१६८२) द्व्यशीत्यधिक षोड़शशततमशकाब्दीयः।

सन्दर्भस्यास्य सम्पादनभारोऽति दुर्व्वहोमयि न्यस्तः। यदज्ञोऽतिवृद्धोऽहम्, तत्साधने श्रीभगवत् कृपामेव कारणत्वेनानुभवामि। एतस्मात्परं मुद्रणशालाया-मक्षरसंयोजकानां त्रुटिरपि वर्त्तते। 'एसियाटिक-सोसाइटि' नामसारस्वतमहासमितेः, आदर्शपुस्तकद्वयमशुद्धिबहुलं समवलोक्य यथामति संशोध्य-प्राकाश्यं नीतः। शमिति—

प्रमादाच्च भ्रमाच्चैव वार्द्धक्याद्द दृष्टिहानतः।
नेत्रयोर्म्मम दोषोऽस्ति क्षन्तव्योऽहं विदाम्बरैः॥

१८७१ शकाब्दाः,
कलिकाता—महानगर्य्याम्।

विदाम्बराणामनुचर—
श्रीईश्वरचन्द्र शास्त्री।

---

(*) अन्यत् डक्टर पी, भी, काणेस्यैतेषां धर्म्मशास्त्रस्येतिहासग्रन्थ द्रष्टव्यम्।

# विधान पारिजाते

## पञ्चमस्तवकस्य-

## विषय-सूची ।

—*—

कर्त्रादिविपर्य्यये प्रायश्चित्तम् ।

—*—

आरब्ध प्रेत कृत्ये सूतकादि,—



—*—

अथाशौचविधानम् ,—



—*—

शावाशौचे,—

अनेकमरणसन्निपाते,—



—*—

अथाशौचविधानम् ,—



—*—

शावाशौचे,—

—*—

—*—

अशौचापवादः,—

—*—

विधानाद् शौचापवादः,—

—*—

—*—

सपिण्डीकरणविधानम् ,—

—*—

प्रथमाब्दे विहितनिषिद्धादि—



—*—

क्षयाहश्राद्धम्—

—*—

—*—

अन्वारोहणे श्राद्ध निर्णयः,—



—*—

—*—

—*—

—*—

—*—

—*—

—*—

अथ श्राद्धे वस्त्राणि ,—



—*—

अथहविः,—



—*—

—*—

—*—

अथ त्वणदानादि,—



—*—

अथासनानि,—

—*—

अथ पात्रासादनम् ,—

अथ वस्त्रम् ,—



—*—

यज्ञोपवीतम् ,—



—*—

अथाग्नौकरणम्,—



—*—

पाणिहोमप्रकारः,—

—*—

अथ परिवेशनम् ,—



—*—

पात्रालम्भः,—

—*—

अथ पिण्डदानम्,—

—*—

पिण्डप्रतिपत्तिः,—



पिण्डदाने निषिद्धकालादि,

—*—

—*—

आमश्राद्धाभावे हैमश्राद्धम्,—

—*—

—*—

—*—

अधुना शूद्रधन-विभागः,—



—*—

अथ सीमाविवादः,—

-- * --

प्रायश्चित्तोपक्रमः,—

पञ्चमस्तवक सूची पत्रं
समाप्तम् ।



# विधान-पारिजातः।

## अथ पञ्चमस्तबकः।

—)*(—

### निधनकालिककृत्यम्।

वन्दे श्रीमदनन्तसंज्ञगिरिपं लक्ष्मीनिवासं हरिम्।
विघ्नध्वान्तदिवाकरं सुरगुरुं सर्व्वार्थसिद्धिप्रदम् ॥१॥

ब्रह्मा सर्व्वसुरेन्द्रपूर्व्वकसुरा यस्य प्रसादात् सदा।
सर्व्वारब्ध समाप्तिमापुरनिशं १(*)मद्वंशदेवं हि तम् २(†) ॥२॥

नत्वा क्षीराब्धिजाजानिं तथा ब्रह्मादिकान् सुरान्।
गणेशं विघ्नहर्त्तारं वन्दे हैमवतीसुतम् ॥३॥

चतुर्द्दशसु विद्यासु निष्णाताः शुद्धचक्षुषः ३(‡)।
अपरोक्षब्रह्मतत्त्वा जयन्ति गुरवो मम ॥४॥

श्रुतिसकलरहस्यं विम्बितं यस्य चित्ते,
मुकुरइव विशुद्धे४(+) दोषमालिन्यशून्ये।
सपदि विमलभक्त्या यस्य तुष्टोरमेशः;
जनक-जनक-पादं भट्टमेनं नतोऽस्मि ५(×) ॥५॥

श्रीपितृचरणान्वन्दे भट्टनागेशसंज्ञितान्।
यत् प्रसादादहं जातो ६(ऽ) धर्म्मशास्त्रे विचक्षणः ॥६॥

श्रीमाननन्तभट्टोऽहं काण्वशाखि-विदां प्रियः।
चतुरः स्तवकानुक्त्वा पञ्चमं प्रारभेऽधुना ॥७॥

---

१(*) 'समाधिमापुः' इति क्वचिदादर्शग्रन्थे पाठः।
२(†) 'देवांह्रि च' इति कुत्रचित्पाठान्तरम्।
३(‡) 'शुद्धवपुषः' पुस्तकान्तरधृतः पाठः।
४(+) 'मुकुरइव सुखाब्जे' इति ग्रन्थान्तरधृतः पाठः।
५(×) 'जनकपादं भट्टमेनम्' ,, ,, ,,।
६(ऽ) 'अहं यातोधर्म्मशास्त्रे' ,, ,, ,,।

सर्व्वशाखीय-शास्त्रार्थः स्पष्टोऽत्र परिकीर्त्त्यते ।
वासुदेवप्रसक्त्यर्थं विदुषामपि तुष्टये ।।८।।
सन्ति ग्रन्थसहस्राणि प्रेतकर्म्मविधौबुधाः ।
कोऽप्यस्य महिमा वेद्योऽभिज्ञैर्जयति सर्व्वतः ।।९।।
स्मार्त्तानि च पुराणानि वचनानि लिखाम्यहम् ।
सन्देहेत्वाकरग्रन्थो विद्वद्भिरवलोक्यताम् १(*) ।।१०।।

—*—

## अथ मरणचिह्नं ज्ञात्वा स्वहितं कर्त्तव्यमित्युक्तं देवजानीये२(†) ।

—*—

1\. दुश्चिकित्स्यैर्महारोगैः पीड़ितस्तु पुमानथ ।
ज्ञात्वारिष्टादिभिर्मृत्युं स्वर्लोकहितमाचरेत् ।।१।।
सितासिते सरिते यत्र संगते तत्राप्लुतादिवमुत्पतन्ति ।
ये वै तनुं विसृजन्ति धीरा स्ते जना अमृतत्वं भजन्ते ।।२।।
सर्व्वेन्द्रियविरक्तस्य वृद्धस्य कृत कर्म्मणः ।
व्याधितस्य स्मृतं तीर्थे मरणं तपसोऽधिकम् ।।३।।
असाध्यव्याधिना युक्तः स्वव्यापाराक्षमः पुमान् ३(‡) ।।
प्रविशेदनलं दीप्तं कुर्य्याद्वा ऽनशनन्तथा ।।४।।
अगाधतोयराशिं वा भृगोः पतनमेव वा ।
गच्छेन्महापथं वापि तुषारगिरिमादरात् ४(+) ।।५।।

---

१(*) प्रागग्रन्थकद्भिरनुक्रमणिकानुसारेण चतुर्थस्तवकेऽन्यत्सर्व्वमुक्त्वा सम्प्रति निधनकालोत्तरं सर्व्वं स्मार्त्तकृत्यमुच्यते । आकरग्रन्थास्तु—ब्राह्मण-धर्म-गृह्य-सूत्रमन्वादिस्मृति-पुराण-संग्रह-निबन्धादयः ज्ञेयाः ।

२(†) मरणकालीनचिह्नादिकं ज्योतिषाद् वैद्यकशास्त्राद्धर्मशास्त्रात् पुराणशास्त्राच्चावगन्तव्यम् । विशेषतोनिधनोत्तरं कस्य मनुजस्य कुत्र कीदृशी गतिः स्यात्तच्छान्दोग्ये पञ्चमप्रपाठके सम्यग्वर्णितमस्ति । तदानीं श्रेष्ठसहायोधर्म्मएवैकः ।
तथाहि—"एकएव सुहृद्धर्म्मोनिधनेऽप्यनुयाति यः । शरीरेण समं नाशं सर्व्वमन्यत्तु गच्छति" । अपरञ्च "विमुखा बान्धवा यान्ति धर्म्मस्तमनुगच्छति ।

३(‡) वैद्यके तु, आमयास्त्रिविधाः । तेष्वाद्यश्चिकित्स्यऔषधादिना ।
द्वितीयोदुश्चिकित्स्यः । तृतीयोऽचिकित्स्यः सहजो मारकोवेति ॥
,, "मृतांपापकृतांतीर्थे भवेत् पापस्य संचयः" इतिस्मृतौ ।

४(+) "अप्रतिसमाधेयस्यव्याधेर्जलादिप्रवेशेन मरणम्" इतिमिश्राः । महातु महापथं महाप्रस्थानं कैलासाद्रिपथे । तद् तत्तु केदारसंहितायां स्कन्दपुराणे ज्ञायामस्ति ।

प्रयागवट-शाखाग्राद् देहत्यागं करोति वा ।
स्वयं देहविनाशश्चेत् कालप्राप्ते महामते १(*) ॥६॥
उत्तमान् प्राप्नुयाल्लोकान्नात्म-घाती भवेत् क्वचित् ।
महापापक्षयात् स्वर्गे सर्व्वान् कामान् स चाश्नुते २(†) ॥७॥
एतेषामधिकारोऽस्ति सर्व्वेषां सर्व्वजन्तुषु ।
नराणामथ नारीणां सर्व्ववर्णेषु सर्व्वदा ॥८॥
अचिकित्स्यामय ग्रस्तोदशाश्च दशमीङ्गतः ।
तपोविशेषैर्विविधैः सादयेद्देहमात्मनः ॥९॥
अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्य्यतः ।
जलानशनभृग्वग्नि-महाप्रस्थानमिष्यते ॥१०॥
समाः सहस्राणि च सप्त वै जले, दशैकमग्नौ पतने च षोड़श ।
महापथे षष्टिरशीतिराहवे, भवेदनाशादिह चाक्षया गतिः ॥११॥
जलाग्निप्रवेशभृगुपतनादि चतुर्थस्तवके द्रष्टव्यानि ।

तथा ३(‡) ।

## तदासन्नमृत्यौ बैतरणी माह—

2\. आसन्नमृत्युना देया गौरेका विभवान्विता ४(+) ।
तदभावे तु गौरेव नरकोद्धरणाय वै ॥१२॥
तदा यदि न शक्नोति दातुं वैतरणीञ्च गाम् ।
शक्तोऽन्योऽरुक् तदा दद्याच्छ्रेयोदद्यान्मृतस्य च ५(×) ॥१३॥
येऽपि संकीर्णकर्म्माणो राजानो रौद्रकर्म्मिणः ।
तेभ्यः पवित्रमाख्येयं भूमिदानमनुत्तमम् ॥१४॥

3\. **भारतेऽपि—**

दद्यादासन्नमृत्युर्यः सोपस्कारां सदक्षिणाम् ।
गङ्गादितीर्थमाश्रित्य कृष्णां वैतरणीन्तु गाम् ॥१५॥

---

१(*) प्राप्ते काले ज्योतिषा सम्यग्ज्ञाते भृग्वग्निपतनादिभिर्नात्मघातित्वदोषः स्यात् ।

२(†) उत्तमान् लोकान्, दिव्य लोकान् । अथवा शुचीनां श्रीमतां योगिनाञ्च कुले गति ।

३(‡) महर्षि व्यासः ।

४(+) 'गौः' सवत्सा तु पूर्व्ववत्' इति पाठान्तरम् । पूर्व्ववत्, सुवर्ण शृङ्गादिविधिना चतुर्थस्तवके तत्सर्व्वंगोदानप्रकरणे उक्तम् ।

५(×) अन्योऽरुक्-रोगशून्यः ।

" सुवर्ण-गो-भूमिदानादिभिराशु महापापानि नश्यन्ति ।

विधान पारिजाते ।

कृताशेषाघनिष्कृत्यै दानान्यन्यानि शक्तितः ।
अन्यानि,— भू-तिल-हिरण्यादीनि ॥

## गोदानमन्त्रस्तु—

यमद्वारे महाघोरे या सा वैतरणी नदी १(*) ।
तत्तुकामः प्रयच्छामि कृष्णां वैतरणान्तु गाम् ॥१६॥
पठित्वैवं प्रदातव्या सुवर्णेन समन्वितेति ।

4. **नारदीयेऽपि—**

आसन्नमात्मनः कालं ज्ञात्वा प्राज्ञैः समाहितैः ।
संमभ्यर्च्च्य हृषीकेशं पुष्पधूपादिभिस्ततः ।। १७॥
प्रणिपातैः स्तवैः पुण्यै र्ध्यानयोगेन पूजयेत् ।
त्यजननशनस्थोऽपि प्राणान् यः संस्मरेद्धरिम् २(†) ॥१८॥
स याति विष्णुसायुज्यं यावदिन्द्राश्चतुर्द्दश ।
ॐनमो वासुदेवाय एतच्च सततं जपेत् ३(‡) ॥१९॥
यस्तूदीरयितुं नाम समर्थस्तदुदीरयेत् ।
ध्यायेत्तु देवदेवस्य रूपं विष्णोर्मनोहरम् ॥२०॥
अत्यन्तं वयसा वृद्धोव्याधिनाचोपपीड़ितः ।
यदि स्थातुं न शक्नोति शयीतोदक् शिरा क्षितौ ॥२१॥
दक्षिणाग्रेषु दर्भेषु शयीत प्राक्शिरा अपि ।
विष्णोर्नामानि संश्राव्य जपेदारण्यकं सुतः ॥२२॥
यंयंभावमुपाश्रित्य त्यजन्त्यन्ते कलेवरम् ४(+) ।
जन्तुस्तन्मयतां याति यशस्कारी कृमिर्यथेति ॥२३॥

---

१(*) 'तस्यां वैतरणी' 'तांश्च तत्तु ददाम्येनाम्' इत्यत्र पाठान्तरद्वयमस्ति ।
२(†) 'दत्त्वा दानञ्च विप्रेभ्यो दीनानाथेभ्यएव च ।
बन्धौ मित्रौ च मित्रे च चैत्रे धान्ये धनादिषु ॥
साधुवर्गेच सर्व्वत्र समत्वं विनिवर्त्तयेत्' ॥
आदर्शपुस्तकान्तरे इदमधिकंपाठान्तरमस्ति ।
३(‡) 'इमं मन्त्रं सदा जपेत्' इति पाठान्तरम् ।
४(+) 'यं यंवापि स्मरन् भावन्त्यजत्यन्तेकलेवरम् ।
तन्तमेवेतिकौन्तेय सदातद्भावभावितः' ॥ इति गीतायाम् ।

5. **भागवतेऽपि—**

एतावान् सांख्ययोगाभ्यां स्वधर्म्मपरिनिष्ठया ।
जन्मलाभः पुरः पुंसां अन्ते नारायणस्मृतिः १(*) ॥२४॥
अन्तेनारायणस्मृतिरिति, मरणकाले प्रायश्चित्तं—

6. **कार्य्यमित्युक्तं स्मृतिषु ।**

आसन्नमृत्युना कार्य्यं प्रायश्चित्तं यथाविधि ।
अशक्तौ पुत्रभार्य्याभ्यां बान्धवैर्व्वाविशेषतः २(†) । २५॥
गर्भाधानादिसंस्काराः सर्व्वे न स्युर्मनागपि ।
कृतेयं विधिनेष्टिश्चेन्मुक्तिरुक्ताद्यसूरिभिः ॥२६॥
देशंकालं तथात्मानं देह-द्रव्य प्रयोजनम् ।
उपपत्तिमवस्थाञ्च ज्ञात्वा कर्म्म च कारयेत् ॥२७॥
कः काल कानि मित्राणि कौ च द्रव्यव्ययागमौ ।
कस्याहं का च मे शक्ति रिति चिन्त्यं मुहुर्म्मूहुः ॥२८॥
युगपत् कृतपापेषु जन्माभ्यासाद् गुरुष्वपि ।
अर्व्वाक्च ब्रह्महत्यायाः षड़ब्दं कृच्छ्रमाचरेत् ३(‡) ॥२९॥

7. **मिताक्षरायामपि—**

जन्मप्रभृति पापानि बहूनि विविधानि च ।
कृत्वार्वाग्ब्रह्महत्यायाः षड़ब्दं व्रतमाचरेदिति ॥३०॥

**अन्यत्रापि—**

पञ्चाब्दंचतुरब्दंवा त्र्यब्दंद्व्यब्दमथापि वा ।
सार्द्धाब्दमप्यथैकाब्दं यथाविधि समाचरेत् ४(+) इति ॥३१॥

---

१(*) 'नारायणस्मृतिस्तु'—'नमो नारायणाय'। ॐ नमो भगवते वासुदेवाय' इत्युभयमहामन्त्रद्वयमिति। सांख्येन तत्त्वेषु प्रकृतिपुरुषविवेकज्ञानेन, योगेन सम्प्रज्ञातसमाधिनाचेति। तथाहि 'यत् सांख्यैः प्राप्यतेस्थानं तद्योगैरपिगम्यते'। इति।

२(†) अतोच 'ऋत्विक्पुत्रोगुरुर्भार्य्या ( भ्राता ) भागिनेयोऽथविट्पतिः।
एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि'।
—अशक्तौ धर्म्मकृत्ये प्रतिनिधिः प्रोक्तः शास्त्रे।

३(‡) "स्तेनोहिरण्यस्य सुरांपिबंश्चगुरोस्तल्पमावसन्ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैः" इति छान्दोग्ये।

" "प्रायश्चित्तानि पापक्षयमात्रसाधनानि चान्द्रायणादीनि" इति वेदान्तसारे।

" "प्रयतत्वाद्धोपचितमशुभं नाशयतीति प्रायश्चित्तम्" इति हारीतः।

४(+) यथाविधि'—इतिप्रायश्चित्तविवेक-निर्णय-मयूख-प्रायश्चित्तेन्दुशेखरोक्तरीतिमाश्रित्य कुर्य्यादिति।

## अकरणे दण्डोयुक्तः ।

प्रायश्चित्तमकुर्व्वाणाः पापेषु निरता नराः ।
तत् पश्चात्तापिनः कष्टान् नरकान् यान्ति दारुणान् ॥३२॥

8. **भारतेऽपि—**

अपश्चात्तापिनः पापा विद्यातीर्थतपोबलात् ।
कुर्व्वन्त्यकार्य्यन्तेऽरण्ये भवन्ति ब्रह्मराक्षसा इति ॥३३॥

प्रायश्चित्त प्रयोगस्तु प्रथमस्तबके विष्णुश्राद्धविधाने द्रष्टव्यः ।
ग्रन्थबाहुल्यान्नपुनरत्र लिख्यते ।
प्रायश्चित्तानुष्ठानसमये पापानुवादनं कार्य्यम् ।

## यथा—

एतज्जन्मकृतं पापं जन्मान्तरकृतञ्च यत् ।
प्रायश्चित्तमनुष्ठातुं दुरितान्यनुचिन्तयेत् ॥३४॥
ब्रह्महत्या मद्यपानं विप्रस्वर्णापहारणम् ।
गुरुभार्य्यादिगमनं महापातकि-संगतिः ॥३५॥
प्रतिलोम....बृद्धश्चापि गवादिप्राणिहिंसनम् ।
ज्ञात्यस्थि....कृत्यमपण्यानाञ्च विक्रयः ॥३६॥
परिवेत्तृत्वसम्भूतं भृतकाध्यापनादि च ।
पारदार्य्यं क्षात्रभार्य्यं स्त्रीगमाश्वादि हिंससम् ॥३७॥
मार्ज्जारादिवध श्छेदो द्रुमाणां पुंश्चलीगमः ।'
उदक्यादिपरिष्वंगो रेतः स्कन्दोऽवकीर्णिना ॥३८॥
व्रतलोपोऽभिसंशश्च निन्दितार्थोपसेवनम् ।
सगोत्रादेः परिणयः कन्याश्वादिक-विक्रयः ॥३९॥
अयाज्य-याजनञ्चैव शरणांगतनाशनम् १(*) ।
वेश्यागमो हीनसेवा विश्वासोपकृतघ्नता २(†) ॥४०॥

---

१(*) 'हिंसनमिति' भिन्नः पाठः। द्विजेरसमानगोत्रामार्षेयीमुद्वहेत्। असगोत्रा चयामातुरस-गोत्रा चया पितुः' इत्यादिस्मृति प्रमाणादिति।

२(†) 'ब्रह्मघ्नेच सुरापेच चोरे भग्नव्रते शठे।
निष्कृतिर्विहितासद्भिःकृतघ्नेनास्तिनिष्कृतिः' ॥
कृतमुपकारंहन्ति यः सः कृतघ्नः ।

क्रिया स्वभावसंस्कार दुष्टशाकान्नभक्षणम् ।
सुहृद् गुर्व्वाद्यसंस्कारः सभायां पक्षपातिता ॥४१॥
परनिन्दा कूटसाक्ष्यं परदा(र)ननिराकृतिः ।
अपांक्तैः सह भुक्तिश्च नित्यभाजनभोजनम् ॥४२॥
काम क्रोध भयप्राप्ति-लोभाहङ्कारपूर्व्वकम् ।
कायवाक्चित्तसंसर्ग-स्वप्रजागर्त्ति-सम्भवम् ॥४३॥
ज्ञानाज्ञानकृतं वापि परार्थमपि यत् कृतम् ।
मया तत् परिगत्यर्थं यथाशक्ति यथाविधि ॥४४॥
सत्पात्राय कृतिद्वारा प्रायश्चित्तं विधीयते । इति

9. **कृच्छ्रादिलक्षणमुक्तं याज्ञवल्क्येन—**

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः ॥४५॥
यथाकथञ्चित् त्रिगुणः प्राजापत्योऽयमुच्यते । इति

10. **अत्र ग्रासनियम उक्तः पराशरेण—**

सायन्तु द्वादशग्रासाः प्रातः पञ्चदश स्मृताः ।
अयाचितेतु सम्प्रोक्ता श्चतुर्विंशति सम्मिताः ॥४६
अत्र सायं प्रातःशब्दौ एकभक्तनक्तपरौ ज्ञेयौ ।
मुख्यपक्षासम्भवे प्रत्याम्नाय उच्यते ।
प्राजापत्यक्रियाशक्तौ धेनुन्दद्यात् पयस्विनीम् १(*) ।
धेनोरभावे दातव्यं मूल्यं तुल्यं नसंशयः २(†) ॥४७॥
तुल्यं-सम्पूर्णं निष्कपरिमितं सुवर्णम् ।

## निष्कपरिमाणन्तु—

सुवर्णपञ्चमांशस्तु निस्कइत्यभिधीयते इति वचनोक्तं ग्राह्यम् ।

---

१(*) 'तुल्यं मूल्यम्' इति आदर्शान्तरधृतः पाठः । अत्र व्रताशक्तौ इति भिन्नः पाठः ।

२(†) तथाहिमूल्यदानविषये—
'कृते व्रतं समादिष्टं त्रेतायां धेनुरेव च ।
कृच्छ्रादीनान्तु सर्व्वेषां मूल्यन्तु द्वापरे कलौ ।"
सम्वर्त्तेन महर्षिणाप्य् वसेनोक्तम् ।

## सुवर्णपरिमाणन्तु—

दशार्द्धगुञ्जं प्रवदन्ति माषम् , माषाह्वयैः षोड़भिश्च कर्षम् ।
कर्षैश्चतुर्भिश्च पलं तुलाज्ञाः, कर्षसुवर्णस्य सुवर्णसंज्ञम् ॥४८॥

### इति लीलावतीग्रन्थे १(*) ।

निष्केऽप्यशक्तस्य तदर्द्धादि देयं भवति ॥४९॥

12. **गवामभावे निष्कंस्यात्तदर्द्धं पादमेववेति विज्ञानेश्वरोक्तेः** २(†) ।

निष्कमर्द्धंस्तदर्द्धंवा गोदानेतु विधीयत इति वचनाच्च ।

13. **पराशरेणान्येऽपि कृच्छ्रप्रत्याम्नाया उक्ताः ।**

**यथा—**

कृच्छ्रोऽयुतन्तु गायत्र्या उद(प)वासस्तथैव च ।
धेनुप्रदानं विप्राय सममेतचतुष्टयमिति ॥५०॥
उदवासश्चाहोरात्रसाध्यः । गायत्र्या अयुतं जपः ३(‡) ।

---

१(*) ज्योतिषे द्रव्यपरिमाणविषये भास्कराचार्य्यैरवादि ।

२(†) याज्ञवल्क्यस्मृतिव्याख्याने मिताचरायां यथोक्त-चीरवत्याः सवत्सधेनोरभावे सन्न ल्योक्तेरिति ।

„ 'धेनुः पञ्चभिराढ्यानां मध्यानां त्रिः पौराणिकी ।
कार्षापणैकमूल्याहि दरिद्राणां प्रकीर्त्तिता' इति स्मृतौषट्त्रिंशन्मतम् ।

„ कालवशाच्छक्तिह्रासाद्व्यवस्थास्मृत्युक्ता यथा;—
'कृते व्रतं समादिष्टं त्रेतायांधेनुरेव च ।
कृच्छ्रादीनान्तुसर्व्वेषां मूल्यन्तुद्वापरेकलौ' ॥ अन्यत् प्रायश्चित्तविवेके, प्रायश्चित्तेन्दुशेखरमयूखादिषु ।

३(‡) 'गायत्री वा इदं सर्व्वं यत् किञ्च भूतं जगत्' ।
'गायति च त्रायति च' इति श्रुतिः ।

„ 'गायन्तं त्रायते यस्माद गायत्रीत्वमतः स्मृता' इति स्मृतिः ।

„ 'दशभिर्जन्मजनितं शतेन च पुरा कृतम् ।
त्रियुगन्तु सहस्रेण गायत्री हन्ति पातकम्' „ „ ।

14. **षट्त्रिंशन्मतेऽपि—**

कृच्छ्रोऽयुतन्तु गायत्र्या तथा द्वादश-द्विजभोजनम् १(*) ।
तिलहोमाः सहस्रञ्च सममेतच्चतुष्टयम् ॥५१॥ इति
तिलहोमस्तु-गायत्र्यैव कार्य्यः सन्निधानात् ।

**अन्यत्तु—**

तिलैः सहस्रसंख्याको होमो व्याहृतिभिस्तथा ।
षडुपवासाः कृच्छ्रःस्याद्वेदपारायणन्तथा ॥५२॥
समुद्रगा नदीस्नानं प्राणायाम शतद्वयम् २(†) ।
पुण्यतीर्थेनाद्रशिरः स्नानं द्वादशसंख्यया ॥५३॥
द्वादशाढ़कधान्यं वा प्राजापत्यसमं भवेत् ।

**यथा—**

रुद्रैकादशिनी प्रोक्ता द्वादशद्विजभोजनम् ।
योजनात्मकतीर्थस्य गमनं कृच्छ्रसंज्ञितमिति ॥५४॥

15. **मिताक्षरायान्तु—**

एकादशगुणान् वापि रुद्रानावर्त्त्य धर्म्मवित् ३(‡) ।
महद्भ्यः स तु पापेभ्यो मुच्यते नात्र संशयः ॥५५॥
इति स्मृतिमुदाहृत्य महापातकेष्वेकादशगुणोक्तेः ४(+) ।
अन्यत्र ह्रासकल्पमाकार्येति रहस्य प्रायश्चित्तप्रकरणेऽभिधानात् ।
अल्पसंख्यापीति केचित् ।

---

१(*) तथा हि विश्वामित्रः—'कृच्छ्रं चान्द्रायणादीनि शुद्ध्यभ्युदय कारणम्' ।
—शूलपाणिभिः कृच्छ्रमनेकविधमुक्तं प्रायश्चित्तविवेके ।

२(†) 'प्राणायामोऽष्टाङ्गयोगे प्रोक्तः पातञ्जले' ।
'प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम्' ।
प्राणोवायुरिति प्रोक्तः योगिनां योगसाधनम्' ॥
अन्यदुपनिषदि धर्म्मशास्त्रे योगशास्त्रे तन्त्रशास्त्रे चास्ति ।

३(‡) "ब्रह्महत्यासुरापानंस्तेयं गुर्व्वङ्गनागमम् ।
महान्तिपातकान्याहुः संसर्गश्चापितैः सह: ॥ इति कृतौ ।

४(+) मीमांसा दर्शनस्य दशमाध्यायाष्टमपादे प्रकृतिविकृतिराज्ञान्तप्रकरणे भिन्नविन्दादि-
प्रकरणस्थेन वाक्येनोपसंहारः । यथाहि—
एवञ्च प्रकृतावेतत् पाञ्चदश्यं प्रतिष्ठितम् ।
विकृतौ च न यत्राखि साप्तदश्ये पुनः श्रुतिः' ॥ इति न्यायप्रकाशे ।

## साग्नेस्तु—

16. **कृच्छ्रत्रयम्प्रत्याम्नायाश्चतुर्विंशतिमते ।**

चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च ।
मित्रविन्दा पशुश्चैव कृच्छ्रत्रयमथापिवा १(*) ॥५६॥
तिल होमाःशतं चैव पराकद्वयमेव च २(†) ।
गायत्र्या लक्षजापश्च समान्याहुर्मनीषिणः ॥५७॥

इत्याद्येवं मुख्यकल्पेन प्रत्याम्नायेन वा पूर्व्वोत्तराङ्गसहितं प्रायश्चित्तं यथाभिलषितं कृत्वा दश दानानि दद्यात् ।

## तानि च—

गोभूतिलहिरण्याज्यवासोधान्यगुड़ानि च ।
रौप्यलवणमित्याहु र्दशदानान्यनुक्रमात् ॥५८॥ इति

17. **समर्थस्यान्यान्यपि दश दानान्युक्तानि, प्रचेतसा—**

## यथा—

गावोऽश्वोमहिषीवस्त्रं हिरण्यंरौप्यताम्रकम् ।
दास्येतान्यष्ट दानानि धान्यं भूमिस्तथा दशेति ३(‡) ॥५६॥

---

१(*)　'तिल होम शतचैव' इत्यपि भिन्नः पाठः ।

२(†)　पराकव्रतं यथा, मनुः—
　'यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।
　पराकोनामकृच्छ्रोऽयं सर्व्वपापापनोदनः' ॥
अत्रैव बृहस्पतिश्च—
　'जपहोमरतः कुर्य्याद द्वादशाहमभोजनम् ।
　पराक एष विख्यातः सर्व्वपापप्रणाशनः' ॥
　अन्यदप्ति प्रायश्चित्त विवेके ।

३(‡)　कूर्म्मपुराणे च—
　'कनकश्च तिलानागा दासी रथ महीगृहाः ।
　कन्या च कपिलाधेनुर्महादानानि वै दश' ॥

„　गारुड़े क्रियानिबन्धेऽष्टौ दानानि उक्तानि—
　'तिलालौहं हिरण्यञ्च कार्पासं लवण तथा ।
　सप्तधान्यं क्षितिर्गावः एकैकं पावनं स्मृतम्' ।

18. **मनुनात्र विशेष उक्तः—**

सर्व्वेषामेवदानानामेकजन्मानुगं फलम्।
हाटकश्रुतिधेनूनां सप्त जन्मानुगं फलमिति ॥६०॥

19. **प्रतिपदार्थदानाशक्तौ तु यमः—**

सर्व्वेषां प्रतिनिधिर्हि हिरण्यं वा विचक्षणः।
हिरण्यगर्भमन्त्रेण दद्याद्दानं प्रयत्नतः ॥६१॥ इति

20. **देयपरिमाणमाह मनुः—**

निवर्त्तनमिता भूमि द्रोणत्रयमितास्तिलाः।
सुवर्णं निष्कमात्रन्तु घृतं सप्रस्थमाढ़कम् ॥६२॥
सूक्ष्मवस्त्रद्वयञ्चैव गुड़ञ्च पलषष्ठिकम्।
सार्द्धखारी ( रि ) द्वयं व्रीहि लवणं सार्द्धखारीकम्।
निष्कत्रयमितं रौप्यं दशदानप्रमाणकम् ॥६३॥ इति

**निवर्त्तनमत्रैवम्—**

दण्डेन सप्त हस्तेन दश दण्डं निवर्त्तनम् १(*)।
त्रिभागहीनं गोचर्म्म-मानमाह प्रजापतिः ॥६४॥ इति

**खारी तु—**

पलद्वयन्तु प्रसृतं चतुर्भिः कुड़वं स्मृतम्।
चतुर्भिः कुड़वैः प्रस्थः प्रस्थाश्चत्वार आढ़कः ॥६५॥
आड़कैस्तैश्चतुर्भिश्च द्रोणश्च कथितो वुधैः।
कुम्भः द्रोणद्वयं शूर्पः खारी द्रोणास्तु षोड़श ॥६६॥ इति

---

१(*) तथाऽन्यबृहस्पतिरन्यथाह—
'दशहस्तेन दण्डेन त्रिंशद्दण्डोनिवर्त्तनम।
दश तान्येवगोचर्म्म ब्राह्मणेभ्यो ददाति यः' ॥

" वशिष्ठश्च—
'दशहस्तेन वंशेन दश वंशान् समन्ततः।
पञ्च चाभ्यधिकान् दद्यादेतद् गोचर्म्मचोच्यते' ॥
इति गोचर्म्माख्य भूमेः पारिभाषिकं परिमाणम्।

**21. रौप्य निष्कमानमाह मनुः—**

पलं सुवर्णाश्चत्वारः पलानि धरणं दश ।
द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः ॥६७॥

चतुः सौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः १(*) । इति हेमप्रकरणोक्तचतुःसुवर्णमानोन्मितं रजतं निष्क इत्यर्थः । सुवर्णपरिमाणं प्रागेवाभिहितम् । इदं सर्व्वं सदक्षिणं देयम् ।

स्वर्च्चितं स्वर्च्चितायैव दद्यात् पात्राय भक्तितः २(†) ।
दक्षिणा सहितं तच्च देशे काले समाहितम् ॥६८॥ इति

—*—

**अत्र दानमन्त्राश्चतुर्थस्तबकस्यादिभागे द्रष्टव्याः ।**

—*—

**22. अत्र तिलपात्रदानमुक्तं विष्णुना—**

ताम्रपात्रे तिलाञ्चैव पलषोड़शकल्पितान् ।
सहिरण्यान् स्वशक्त्या वा विप्राय प्रतिपादयेत् ॥६६॥
नाशयेत्त्रिविधं पापं वाङ्मनःकायसम्भवम् ॥७० ।

**23. ब्राह्मेऽपि—**

ताम्रपात्रन्तिलैः पूर्णं प्रस्थमात्रं द्विजातये ।
सहिरण्यन्तु योदद्याद्भक्त्या वित्तानुसारतः ।
सर्व्वपापविशुद्धात्मा लभते गतिमुत्तमाम् ॥७१॥

---

१(*) याज्ञवल्क्यस्तु—

'कृष्णलः पञ्च ते माषास्तेसुवर्णास्तु षोडश ।
पलं सुवर्णाश्चत्वारः पञ्च वापिप्रकीर्त्तितम्' ॥

अन्यत् पुष्कलं हेमाद्रौ दानखण्डेऽस्ति ।

२(†) "गोहितो गोप्ररक्षः दाता यज्वा ब्राह्मणः पात्रमाहुः" । इति
,, "ददाति विप्राय बहुश्रुताय वेदान्तविज्ञानतपस्विने च" । स्मृतौ ।
,, 'देशे काले च पात्रेच तद्दानं सात्त्विकं स्मृतम्" इति गीतायां सत्पात्रयोग्यकालादौ श्रद्धा-भक्ति पुरःसरं सदक्षिणं दानं सम्पूर्णफलं स्यादिति ।

## तन्मन्त्रस्तु—

यानि कानि च पापानि ब्रह्महत्यासमानि च।
तानि सर्व्वाणि नश्यन्ति तिलपात्रप्रदानतः १(*) ॥७२॥
तिलाः काश्यपसम्भूता स्तिलाः पापहराः स्मृताः।
तिलपात्रप्रदानेन मम पापं प्रशाम्यतु ॥७३॥ इति

24. **पुराणे—**

दश दानानि देयानि मनुष्येण प्रयत्नतः।
विष्णोः पापहरस्यैव प्रीत्यर्थं सर्व्वदैव हि ॥७४॥ इति

25. **मुमूर्षोर्द्दशदानावश्यकतोक्ता विष्णुना—**

यस्योत् क्रमणवेलायां दशैतानि विधानतः।
दीयन्ते नरोयाति पुण्यलोकान्सुखेन च ॥७५॥
अन्यथा निरयं यातीत्येवमाह प्रजापतिः॥ इति

## ततोवैतरणी गोदानम्।

ब्राह्मणं वेद विद्वांसं सम्पूज्य विधिवन्नरः।
गान्दद्याद्वैतरण्याख्यां तस्याः सन्तरणाय वै २(†) ॥७६॥

## दानमन्त्रास्तु—

यस्मात्त्वं पृथिवी सर्व्वा धेनोत्वं कृष्णरूपके।
सर्व्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥७७॥

---

१(*) तिलदानविषये च, पितर ऊचु—
" तिलान्ददन् महाभाग काङ्क्षितान् वै न संशयः।
तिलैर्व्विना नजीवामो नातिलस्तिष्ठते दिवि" ॥
पितामह उवाच—
" "गच्छध्वं वै तिलादत्ताः सर्व्वेषां वोद्विजोत्तमाः।
परितुष्टाश्चपितरस्तिललाभात् प्रजापते" ॥
"सर्व्वेषामेव दानानां तिलदानं परं स्मृतम्।
अक्षयं सर्व्वदानानां तिलदानमिहोच्यते ॥"

२(†) वैतरणीधेनुदानविषये चतुर्थस्तवके प्रागुक्तमन्यत्।
अत्र मार्कण्डेय उवाच—
"चिरमन्तर्निमज्जन्ति ग्लानिं गच्छन्ति देहिनः।
चतुर्व्विधैः प्राणिगणैर्द्दृष्ट्वा सा महानदी।
तरन्ति तस्या दानेन अन्यथा तु पतन्ति ते।
धार्मिका दानशीलाश्च तान्तरन्ति नरोत्तम"! ॥
तां वैतरणी नदीमित्यर्थः। तत् प्रस्तावे कथनात्।
" दशदानानि दानप्रसङ्गे चतुर्दशस्तवके उक्तानि।

धेनुके त्वं प्रतीक्षस्व यमद्वारे महापथे ।
तत्तितीर्षुरहं भद्रे वैतरण्यै नमोऽस्तु ते ॥७८॥
(ॐ)विष्णुरूप-द्विज श्रेष्ठः भूदेव-पङ्क्तिपावनः ।
सदक्षिणा मया तुभ्यं दत्ता वैतरणी नदी १(*) ॥७९॥ इति

मोक्षधेनुरपि देया । तन्मन्त्रस्तु—

मोक्षं देहि हृषीकेश मोक्षं देहि जनार्दन ।
मोक्षधेनुप्रदानेन मुकुन्दः प्रीयतां मम ॥८०॥ इति
तद्ग्रहीत्रभावे उत्सर्गं कृत्वा कालान्तरे दद्यादित्युक्तम् ।

26. मनुना—

उत्क्रान्तावथगां दद्यादन्यद्वापि यथाविधि २(†) ।
अभावे द्रव्यपात्राणां पश्चाद्दद्यात् समाहितः ॥८१॥ इति

—*—

## इत्यासन्नमृत्युकाले वैतरणी दानम् ।

—*—

## अथ ऋणधेनुर्देया ।

ऋणत्रयविमुक्त्यर्थं ऋणधेनुं प्रयच्छति३(‡) ।
तुष्यन्ति देवाः पितरो मनुष्याश्च न संशयः ॥८२॥ इति

---

१(*) धर्म्मकृत्ये तत् समाप्तौ दक्षिणा विधेया । अदक्षिणं कृत्यञ्च नैव फलदम् । तथाच मात्स्ये—
'यष्टारं दक्षिणाहीनं नास्ति यज्ञसमोरिपुः' ।
" श्रुतौ च—
'व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ।' इति
" स्मृतौ च—'कर्त्ता कर्म्मणि सम्पूर्णे तत्क्षणादेव दक्षिणाम् ।
न दद्याद् ब्राह्मणेभ्यश्च दैवेनाज्ञानतोऽथवा ।
मुहूर्त्ते समतीते तु द्विगुणा सा भवेद्ध्रुवम् ॥

२(†) उत्क्रान्तिश्च—निधनकाले प्राणवायोर्ब्रह्मरन्ध्रेण ऊर्द्ध्वगमनं सुप्रशस्तम् । अन्येन्द्रियैर्गतिर्वायोरप्रशस्तम् । तथाहि—'ऊर्द्ध्वं प्राणाउन्नमयन्ति' इति । ब्रह्मविदस्तु—'नतस्य प्राणाउत्क्रामन्ति इहैव समवलीयन्ते' । अन्यदुपनिषत् सु वेदान्तदर्शनतद्भाष्यादिषुचास्ति ।

३(‡) ऋणत्रयञ्च—'जायमानो वै ब्राह्मणस्त्रिभिः ऋणवाणजायत' । तत्तु देव-पितृ-मनुष्याणामृणम् । विद्यातपः सन्न्यासादिभिर्देवर्णम् । कर्म्मणा पितृणामृणम् । इष्टापूर्त्त-दानादिभिर्मनुष्यर्णं परिशोधयेत् । 'ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत्' इति स्मृतिः ।

### तन्मन्त्रस्तु—

देव-पितृ-मुनीनाञ्च यदृणञ्चे तरस्य च ।
ऋणत्रयविशुद्ध्यर्थ मृणधेनुन्ददाम्यहम् ॥८३॥ इति

### मन्त्रस्तु—

प्राणोत्क्रान्तिप्रवृत्तस्य सुखोत्क्रान्तिःप्रमुक्तये ।
अस्मै सम्प्रददे तुभ्यं यद्गामुत्क्रान्तिसंज्ञिताम् ॥८४॥ इति
पूर्व्वमकृतौ मरणा( न )न्तरं कार्य्यमित्युक्तम् ।

27, **ब्राह्मे—**

उत्क्रान्ति वैतरण्यौ च दश दानानि चैव हि १(*) ।
प्रेतेऽपि दत्त्वा तं प्रेतं संस्कुर्य्यादिति निर्णयः ॥८५॥ इति
मरण समये ऊर्द्धोच्छिष्टादिसम्भवे प्रायश्चित्तमाह—

28. **अङ्गिराः—**

ऊर्द्धोच्छिष्टाधरोच्छिष्टमन्तरिक्षे मृतिस्तथा ।
अभक्षभक्षणेचैव नित्यकर्म्मविलोपणे ॥८६॥
अस्पृश्यस्पर्शमरणे खट्टादौ मृति सम्भवे २(†) ।
श्वानक्रव्याद संस्पर्शे कृमिकीटोद्भवेऽपि च ॥८७॥
एवमाद्यपनुत्यर्थं प्रायश्चित्तं समाचरेत् ३(‡) ॥८८॥

---

१(*) वह्निपुराणेतु—
'अनेन विधिना धेनुं योविप्राय प्रयच्छति ।
सर्व्वकामसमृद्धात्मा विष्णुलोकं स गच्छति' ।

" जातुकर्णः—
'गोभूतिल हिरण्याज्यवासोधान्य गुड़ानि च ।
रौप्यलवणमित्याहुर्द्दशदानान्यनुक्रमात्' ।
'एतानि दश-दानानि नराणां मृत्युजन्मणोः । कुर्य्यादभ्युदयार्थंच प्रेतेपिञ्च परत्वे' ।

२(†) 'अस्पृश्य स्पर्शने' इति पाठान्तरमप्यस्ति । कृच्छ्रं प्राजापत्यमिति । अत्र कृच्छ्रतद्दैव्रतादीनां नियमोमहर्षिमनु-वशिष्ठ-पराशर-गौतम याज्ञवल्क्यादीनां वचनादिकं संगृह्य शूलपाणिना-प्रायश्चित्तविवेके सर्व्वमुक्तम् । मदनरत्नेचान्ययाऽस्ति, 'ऊर्द्धोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टे-तथैव च । अस्पृश्यस्पर्शनेचैव खट्टादिमरणेऽपिच' ।

" 'शवं रात्रुषितस्त्रीन् कृच्छ्रान् कृत्वा दहेत्मृतः' 'ऊर्द्धमित्यादि-कृच्छ्र त्रयं प्रकुर्व्वीत' इत्यङ्गिराः । 'खट्टायां मरणेचैव त्रींस्त्रीन् कृच्छ्रान् प्रकल्पयेत्' इति स्मृति चन्द्रिकायां षट्त्रिंशकारिकाकारः ।

३(‡) अपनुत्यर्थं, उक्तपापप्रणाशार्थम् ।
अत्र चान्द्रायणव्रतमाह मनुः—
'एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयन् ।
उपस्पृशं स्त्रिषवनमेतच्चान्द्रायणं स्मृतम्' ॥
'इन्दुव्रतं चान्द्रायणमिति कथ्यते । चन्द्रस्य पक्षद्वयेऽयनमिवायनं यस्य तद्व्रतम् । चान्द्रायणेनचैकेन सर्व्वपापक्षयोभवेत्' । महर्षिजावालिमतेन पञ्चधाभेदः प्रायश्चित्त विवेके प्रोक्तः ।

कृच्छान् षट् सप्त दश वा चान्द्रायणमथाऽपिवा ।
शुद्धिं तदानीं सम्पाद्य सर्व्वधर्म्मेण दाहयेत् ॥८६॥ इति

29. **पर्य्युषितशव संस्कारेऽपि प्रायश्चित्तमाह, स एव—**

दिवा वा यदि वा रात्रौ शवस्तिष्ठति कस्यचित् ।
तं पर्य्यूषितमित्याहुर्दहने तस्य का गतिः ॥६०॥
पञ्चगव्येन संस्नाप्य प्राजापत्यत्रयं चरेत् ।
तस्माद्दिवा प्रमृतस्य दिवा संस्कार इष्यते ॥६१॥
एवं रात्रिप्रमृतस्य प्रायश्चित्तमथान्यथा । इति

30. **साग्निकस्यात्र विशेषमाह, कात्यायनः—**

स्वयं होमासमर्थस्य समीप उप सर्पणम् ।
तत्राप्यशक्तस्य स(स्व)तः शयनोचोपवेशनम् ॥६२॥
हुतायां सायमाहुत्यां दुर्व्वलश्चेद् गृही भवेत् ।
प्रातर्होमस्तदैव स्याज्जीवेच्चेच्छुः पुनर्नवा १(*) ॥६३॥

अत्र दुर्व्वलोमुमूर्षुः। वाशब्दोऽवधारणे। होमोनैव कार्य्यः कृतत्वादित्यर्थः ।

31. **तथा च कात्यायन सूत्रम्—**

सायमाहुत्यां हुतायां चेद्दुर्व्वलः स्यात्तदैव प्रातराहुतिः, तत् संस्था श्रुतेरग्निहोत्रस्यजीवेच्चेत् पुनः कालेनवा कृतत्वादिति। तथा पौर्णमासे कृते प्राक्चेद्दर्शात् स्वामी मुमूर्षुः कथं पिण्डपितृयज्ञः स्या २(†) दर्शेऽप्येवं तदैव तु—

वैश्वदेवे कृतेऽप्येवं चातुर्म्मास्य समापनम् ३(‡) ।

---

१(*) 'जीवेच्च सपुनर्नवा' इति पाठान्तरं छन्दोगपरिशिष्टे। इदं शुक्लपक्षपरमिति कमलाकरः।

२(†) 'दर्शोऽप्येवम्' इति पाठान्तरम्। पिण्डैर्युक्तपितृयज्ञः पिण्डपितृयज्ञः। तथा चापस्तम्बः—अमावास्यायांयदहश्चन्द्रमसं न पश्यति तदहः पिण्डपितृयज्ञं कुरुते' इति। अयं यज्ञः सकालविधानादनङ्गं स्यात् इति च। 'पिण्डपितृयज्ञस्तु पर्व्वसन्धिमत् अहोरात्रापराह्णे'। अतः पञ्चसन्धिदिने पितृयज्ञः स्यात्। अन्यत् कमलाकरीयेऽस्ति।

३(‡) गरुड़पुराणे वैश्वदेवविधिः स्मार्त्तः श्रौतश्चास्ति।
—पुराणेतु ब्रह्मोवाच, 'वैश्वदेवं प्रवक्ष्यामि होम लक्षणमुत्तमम्'। इत्यादि। प्रयोगस्तु, आह्निका—चारतत्त्वेऽस्ति। तत् प्रत्यहं कृत्यमिति।
तथाच स्मृती 'पाठोहोमश्चातिथीनां सपर्य्यातर्पणं बलिः।
एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः'।
वैश्वदेव कृत्यानुष्ठानकालेतु 'चण्डालोऽपिहिपूज्यः स्याद्वैश्वदेवेह्युपस्थितः' इति।

..............................

उपक्रान्ता स्वामिनं ज्ञात्वा कर्त्तव्यानि सुतादिभिः १(*) ॥९४॥

तत्रैवं क्रियमाणेतु हविरासादनात् पुरा ।

..............................

तद्वदाहवणीये तान्यूर्द्धमासादनान्मृतौ ।

मरणान्तंहि तत्कर्म्म कर्त्रभावात् समाप्यते ॥९५॥

इष्टिः पश्वादिकन्तत्र कालाल्पत्वान्नसंभवेत् ।

देवतानां प्रधानानामेकैकस्य पृथक् पृथक् ॥९६॥

पुरोऽनुवाक्या याज्याभ्यां चतुराज्याघृताहूतीः ।

जुहुयादेवमन्यत्र सर्व्वत्रापदि हूयते ॥९७॥

अथेष्ट्याधानमध्ये स्यात् पत्युर्मरणसंशयः ।

अवशिष्टेष्टदेवेभ्य स्तत् संख्यानि घृतानि च ॥९८॥

चतुर्गृहीतान्येकत्र गृहीत्वा चमसे सह २(†) ।

पुरोऽनुवाक्या याज्याभ्यां पूर्व्ववज् जुहुयात् पृथक् ॥९९॥

32. छन्दोगोऽपि—

पूर्व्वपक्षे तु रात्रौ चेन्मृति-शङ्काग्निहोत्रिणः ।

सायं हुत्वा तदैवाथ जुहुयात् प्रातराहुतिम् ॥१००॥

यदि त्वपरपक्षे स्यान्मृतिशङ्काग्निहोत्रिणः ।

हुतावशिष्टः पक्षेऽस्मिन् जुहुयात् सकलाहुतीः ॥१०१॥

दर्शेष्टिञ्च तदा कुर्य्यादिष्टिर्यदि न सम्भवेत् ।

देवतानां प्रधानामेकैकस्य हुनेत् पृथक् ॥१०२॥

---

१(*) अत्र उत्क्रान्तमिति च पाठान्तरम् ।

अथाग्निहोत्रम्,—अयं यागविशेषः । एतन्माससाध्यमेकम् । अपरं यावज्जीवनसाध्यञ्च । अत्राग्निहोत्रंनाम होमस्यैव नामधेयम् ।

,, अग्नये होत्रं होमो यस्मिन् कर्म्मणीति भिन्नाधिकरणबहुव्रीहिः ।

,, अग्नयस्तु—गार्हपत्यो दक्षिणाग्निराहवनीयश्चेति त्रयः । हस्तमस्यपद्धतौ खादिरगृह्यसूत्रादौ च लिखितमस्ति । अयं श्रौतः स्मार्त्तश्च । अस्मिन् दशद्रव्याणि हवनीयानि । अग्न्याधानात् परं प्रथमपौर्णमास्यां दर्शपौर्णमास यागारम्भः कार्य्यः । 'दर्शपूर्णमासाभ्यां स्वर्गकामोयजेते' ति विधिवाक्यात् । अत्रषड्यागाः । पौर्णमास्यां त्रयः । अमावास्यायां त्रयः दर्शनामधेयम् । पौर्णमास्यां कर्त्तव्ययागत्रयस्य पूर्णमासपदं नामधेयम् ।

२(†) अत्र 'चमसेनसह' चमसैः सह' वेतिपाठान्तरम् ।

आहिताग्नेः श्रौतस्यारम्भसमये यस्मिन्नग्नौ होमः कृतः निधनात् परं तेनैवाग्निनास्य विधानानुसारेण तस्यदाहः स्यात् ।

अत्राग्निहोत्रं पुष्पिकायां प्रागुक्तम् ।

चातुर्मास्यान्तराले चेत् स्वामिनो मृतिशङ्कनम् ।
तत्र तदेव पर्य्यन्तं अग्निहोत्राण्यशेषतः १(*) ॥१०३॥
तदैव कुरुते दर्शान् पौर्णमासान् वहूनपि ।
चातुर्मास्यावशिष्टानि पर्व्वाण्यत्र समापयेत् ॥१०४॥
पश्वलाभे पुरोडाशं निर्व्वपेत् पशुदैवतम् ।
आमिक्षामथवा कुर्य्यात् पूर्णाहुतिमथापि वा ॥१०५॥

## अन्यत्रापि—

आहिताग्निः कदाचित्तु कृष्णपक्षे मृतोयदि ।
तदा शेषाहूतीः सर्व्वा जुहोत्येवाश्वलायनः ॥१०६॥
अन्ये तदैव दर्शेष्टिं कुर्य्युः कृष्णे मृतस्य तु २(†) ।
शुक्लपक्षे निशि प्रेतस्येच्छन्ति प्रातराहुतिम् ॥१०७
अशक्त्या यजमानश्चेत् पत्नीकर्म्म नलुप्यते····३(‡) ।
न तावता क्रतुभ्रेषः स्यादाथर्व्वण सूत्रतः ॥१०८॥

33. **अनुपद सूत्रेऽपि—**

तच्चेदपर पक्षे प्रयाणं शंकेत यावत्योऽपरपक्षस्यावशिष्टा रात्रयः स्युस्तासां सायं प्रातराहूतीः प्रतिसंख्यं हुत्वा प्रत्याहृत्यामावास्येनहविः····समापयेयुरेव न यज्ञविलोपः—इति पूर्व्वपक्षेचेद्रात्रौ प्रातराहुतिरेवेति ।

---

१(*) होमीयदशसु द्रव्येषु एकस्यालाभे अन्येन पुरोडाशेनहोमो विधेयः—

,, चातुर्मास्यमिति—मिथुनार्कात्तुलार्कं यावत् ।
अर्थाद्धरिशयनादुत्थानं यावदनुष्टेयव्रतं चातुर्म्मास्यम्—भारते 'आषाढ़े तु सितेपक्षे एकादश्यामुपोषितः। चातुर्म्मास्यव्रतं कुर्य्याद यत् किञ्चिनियतो नरः। आषाढ़े शेषे शयनं, भाद्रे पार्श्वं परिवर्त्तनं, कार्त्तिकेसमुत्थानं भगवतो नारायणस्येति। एतद्व्रतमष्टचत्वारिंशत्संस्कारेष्वन्तर्नीतमस्ति ।
आहितो गृहीतोऽग्निर्विधिनायेन यजमानेनेति सः। अन्यदाश्वलायन सूत्रेऽस्ति ।

,, स्वयमसमर्थश्चर्त्विजापि तत् कारयितव्यम् । यथा विराटपर्व्वणि, 'पुरोहितोऽयमस्माकमग्निहोत्राणिरक्षति' ।

२(†) अमावास्यायां, आग्नेयैन्द्र दधि पयो यागास्त्रयः। कृष्णे कृष्णपक्षे मृतस्येति। त्रिषुच आग्नेयपुरोडाशयागः। ऐन्द्रपयोयागः ।

,, ऐन्द्रदधियागश्चेति । पौर्णमास्यान्तु-आग्नेयपुरोडाशयागः। आग्नेयोपांशुयागः। अग्निषोमीय पुरोडाशयागश्चेति त्रयः ।

३(‡) एतत् कर्त्तुंमशक्ते यजमाने तत् पत्न्या कार्य्यम्। कर्म्मलोपो न विधेयः। यतः आर्त्ताग्नौ पत्न्यासहाग्न्याधानमतः पत्न्या कृते कर्म्मणि नो क्रतोर्हानिः स्यादिति। अथादर्शपाठः सन्दिग्धः ।

34. **मरण समये कर्त्तव्यमाह बृहस्पतिः—**

दुर्व्वलं स्नापयित्वाथ शुद्धचैलाभिसम्वृतम्।
निवेशयेद्वर्हिष्मत्यां दक्षिणं(ा)शिरसं क्षितौ १(*) ॥१०९॥
विगतासुं तमास्नाप्य सुवस्त्रमुपवीतिनम्।
चन्दनोक्षितसर्व्वाङ्गं सुमनोभिर्विभूषयेत् ॥११०॥
प्रेतसम्बन्धियत् कर्म्म सर्व्वन्तदपसव्यवत् २(†)।
उद्धृत्याहवनीयाग्निं स्वस्थाने दक्षिणानलम् ( तलं ) ॥१११॥
सकृत् सकृत् समूहादि संस्कृते दक्षिणामुखः ॥११२॥
कर्त्ता प्रत्यग्न्यधिश्रित्य शुष्कगोमय संयुताः।
कार्पासादिभिरन्यैश्च स्थाली स्तेषु प्रतापयेत् ॥११३॥
अत्र श्राद्धं भवेदस्य प्रेतोत्थाननिमित्तकम् ३(‡)।
एकोद्दिष्टविधानेन जयाशीः स्वस्ति वर्जितम् ॥११४॥
अक्षय्योदकसम्बन्धादूहितं प्रेतशब्दवत् ४(+)।

35. **कात्यायन सूत्रेऽपि—**

सन्दीपज(न)वतीः प्रत्यग्न्यधिश्रयत्युत्खातः। इति

36. **ब्राह्मेऽपि—**

ते ये ततः सन्तापादग्नयोजायेरं स्तैरेनं दहेयुस्तथाहैतैरेवंदग्धो भवति नो प्रत्यक्षमिवेति।

37. **कालनिर्णये दीपिकायाञ्च—**

एकोद्दिष्टविधिमृ॑तस्य निधनस्थाने ततोवर्त्मनि स्थाने विश्रमणस्य संचयविधे द्वेशं श्रयं स्यादिदं तुर्य्येवाह्नि तृतीयक इति ५(×)।

---

१(*) तत्तु 'कण्ठस्थानंगते जीवे भीतेऽभिप्राप्तमानसम्।
ज्ञात्वा:तु(स्तु)विह्वलन्त च शीघ्रं निः सार्य्यते गृहात्'। इति
स्नानादिकं मन्त्रपूर्व्वकं विधेयं। मन्त्रास्तु चौर्द्ध्वदेहिकविधानसन्दर्भे सन्ति। तेतु
'ॐगयादीनिच तीर्थानि' इत्यादयः।

२(†) | तक्तं तु सर्व्वं अपसव्येन प्राचीनावीतिना कार्य्यम्।
द्विजानां सर्व्वेषां मन्त्रपूतमुपवीतं धार्य्यमिति।

३(‡) प्रेतस्योत्थान निमित्तकं श्राद्धं भवेदत्र। एकोद्दिष्ट श्राद्धविध्यनुसारेण तत् कार्य्यम।

४(+) सर्व्वत्र पितृपदस्थाने प्रेत पदं: प्रयोज्यम्। तथा प्रेतवने सम्वत्सरं यावद्व कृत्ये
प्रेतपदं प्रयोक्तव्यम्।

५(×) द्वेशी त्रयं स्यात् इत्थं पाठः क्वचिदादर्शे।

38. **नागरखण्डेऽपि—**

त्रीणि सञ्चयनस्यार्थे तानि वै शृणु साम्प्रतम् ।
यत्र स्थाने भवेन्मृत्यु स्तत्र श्राद्धं प्रकल्पयेत् ॥११५॥
एकोद्दिष्टं ततोमार्गे विश्रामो यत्र कारितः ।
ततः सञ्च)यनस्थाने तृतीयं श्राद्धमिष्यते १(*) ॥११६॥ इति
धनिष्ठापञ्चकादि मृतस्य-विशेषः ।

39. **कूर्म्मपुराणे--(*) (क)**

धनिष्ठापञ्चकमृते पञ्चरत्नानि तन्मुखे ।
तस्याहुतित्रयं (तत्र) कर्त्ता दद्याद्-वह्नवपामिति ॥११७॥
ततोनिर्हरणं कुर्य्यादेषः(वं)साग्नेर्विधिः स्मृतः ॥११८॥

40. **पञ्चरत्नान्याह नारदः—**

वज्रं मौक्तिकवैदुर्य्यं पुष्परागेन्द्रनीलकम् ।
पञ्चरत्नमिति प्रोक्तं नारदेन महर्षिणा २(†) ॥११९॥
इतरं निषदने एव जले वा प्रतिपादयेत् ३(‡) ।

## इतरं निरग्निमिति ।

क्रियादक्षे मृते तद्वद्धिरण्यशकलं मुखे ।
न्यस्य पिष्टमयं कुर्य्यात् पुरुषत्रितयन्ततः ॥१२०॥
होमः प्रतिमुखन्तत्र भवेद्वह्न वपामिति ।
आस्य एव सकार्पसंकुसुमं प्रतिपाद्यतु ॥१२१॥
निर्यात्य साग्नि संस्कुर्य्यादन्यमप्सु समुत्सृजेत् ।
कुर्य्यात् स्त्री त्रितयं पिष्टमयं साग्नेर्मृतौ स्त्रियाः ॥१२२॥
हारिद्राम्बर संछत्रं निर्हरेयुः सुतादयः ४(+) ॥१२३॥ इति

---

१(*) 'सञ्चयनस्यार्थे' इति भिन्नः पाठः ।
(क) अन्त्येष्टिदीपिकायाञ्च । 'आदौ कृत्वा धनिष्ठाद्यमेतन्नचत्रपञ्चकम् । रेवत्यन्ते सदा दूष्यन्त्वशुभं दाहकर्म्मणि' ॥
२(†) मतान्तरेयथा,—
'कनकंहीरकं नीलं पद्मरागञ्च मौक्तिकम् ।
पञ्चरत्नमिदं प्रोक्तमृषिभिः पूर्व्वदर्शिभिः' ॥
रत्नानाञ्चाप्यभावे तु स्वर्णं कर्षार्द्धं मेववा ।
सुवर्णस्याप्यभावे तु चान्यं ज्ञेयं विचक्षणैः ॥ इति हेमाद्रिः ।
३(‡) अनग्नेश्च जलादौ प्रतिपादनम् । निखननेदेव
४(+) अत्र 'संछन्नमिति' पाठान्तरमस्ति । पीताम्बरेण संछन्नं, समुद्धृतमित्यर्थः ।

41. **अत्र निर्हरणे विशेषः स्मृतौ—**

स्थापयन्त्यनसि प्रेतं एकाग्निश्च कटादिषु १(*) ।
शिविकायां विमाने वा प्रचेतोवचनादिह ॥१२४॥
पृथक्सन्तापजानग्नीनामपात्रेष्वथाहरेत् ।
शम्याग्निमावसथ्यञ्च कृत्वा पात्रान्तरे क्वचित् ॥१२५॥
विधुरस्य कपालाग्नीनामपात्रेण सन्तपेत् ॥१२६॥
कपालाग्नि—लौकिकमग्निम् ।
पृषदाज्यं घृतं दर्भांस्तिलान् पात्राणि सप्त च ।
हिरण्यानि घृताद्यत्र चन्दनादीन्धनानि च ॥१२७॥
अनस्येतानि कृत्वैव सपिण्डा दक्षिणान्दिशम् ।
अनसासह यान्तिच यमसूक्तादि पाठकाः ।
अपेतोध्याय इत्यत्र यमसूक्तं विधुर्बुधाः ॥१२८॥
एकाग्निमितरं पुष्प-मालादिभिरलङ्कृतम् ।
कटादिभिरपि स्कन्धैः शुचयो वै समाहिताः ॥१२९॥
चत्वारस्तं वहेयुस्ते पञ्चमः पुरतोऽनलः ॥
त्रियष्टितलभाण्डस्थं सर्व्वोपस्करसंयुतम् ॥१३०॥ इति ।

42. **मनुः—**

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण (छा)माषयेत् ।
अस्वर्ग्याह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता ॥१३१॥
अत्र स्वेषु तिष्ठत्स्वित्यविवक्षितम्, अस्वर्ग्याश्रवणात् ॥१३२॥
स्वेषु,—स्वजातीयेषु इत्यर्थः ।

43. **तथा—**

दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् ।
पश्चिमोत्तरवैश्यस्तु यथासंख्यं द्विजातयः ॥१३३॥

44. **वैश्यादारभ्य प्रातिलोम्येन हारीतः—**

नग्रामाभिमुखं प्रेतं निर्हरेयुरिति ।
निर्हरता यदि वर्त्मनि ग्रामः स्यात्तन्मध्ये न गन्तव्यमित्यर्थः ।

---

१(*) अनसि पूते शकटे इत्यर्थः । अनप्राणने, अनिति चीत्करोति । ततः औणादिकादसुन् । —'क्लीवेऽनः शकटोऽस्त्रीस्यात्' इति ।

45. **विष्णुः—**

मृतं द्विजं न शूद्रेण निर्हारयेत्, न शूद्रं द्विजेन ॥१३४॥
पितरं मातरञ्च पुत्त्रा निर्हरेयुः, न द्विजं पितरमपि शूद्रा इति ।

46. **प्रायश्चित्तमाह जावालिः—**

शूद्रेण विप्रो दग्धो यो न लभेच्छाश्वतीं गतिम् ।
प्रायश्चित्तं प्रकुर्व्वीत बान्धवः पापशुद्धये ॥१३५॥
चान्द्रायणं पराकञ्च प्राजापत्यं विशुद्धये १(*) ।
विप्रेभ्यो दक्षिणान्दत्वा ततः स्यादौर्द्ध्वदेहिकम्, इति२(†) ॥१३६॥

47. **कात्यायनः—**

हिरण्यशकलान्यस्य क्षिप्त्वा च्छिद्रेषु सप्तसु ।
मुख्येष्वपि पिधायैनं निर्हरेयुः सुतादयः ॥१३७॥
आमपात्रेऽन्नमादाय प्रेतमग्निं पुरः सरम् ।
एकोऽनुगच्छेत्तस्यार्द्धमर्द्धं पथ्युत्सृजेद्भुवि ॥१३८॥
ऊर्द्ध्वमादहनं प्राप्तमासीनो दक्षिणामुखः ।
सव्यं जान्वा च शनकैः सतिलं पिण्डदानवत् ॥१३९॥

48. **मनुरपि—**

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ॥१४०॥
विशुद्ध्यति—त्रिरात्रेणेति च ॥

49. **एतस्यापवादमाह धर्म्मार्थे पराशरः—**

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफल मानुपूर्व्वाल्लभन्ति ते ॥१४१॥
वोढ़ा वाग्निप्रदाता वा सद्यः स्नात्वा शुचि र्भवेत् ।
अत्र वोढ़ा—शववहनकृत् ।

---

१(*) स्मृतौच 'चान्द्रायणेन चैकेन सर्व्वपापक्षयो भवेत्'। अन्यच्च 'प्रायश्चित्तानि चान्द्रायणादीनि पापक्षयमात्रसाधनानि'। तल्लक्षणन्तु—"एकैकं ह्रासयेत् कृष्णे शुक्लपक्षेविवर्द्धयेत्। उपस्पृशंस्त्रिसवनं मेतच्चान्द्रायणं स्मृतम्"।
पराकव्रतलक्षणं यथा,—
"यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।
पराकव्रतनामायं सर्व्वपापापनोदनः" इति स्मृतौ ॥

२(†) प्राजापत्यव्रतं यथा,—त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् ।
त्र्यहं परन्तु नाश्नीयात् प्राजापत्यं चरन् द्विजः' इति प्रायश्चित्ततत्त्वे ।

50. **ब्राह्मेऽपि—**

चतुर्व्विधेन वाद्येन कुर्य्युः कोलाहलं महत्।
भूमौ शनैर्निधातव्यो यावत्येतस्य जीवनमिति १(*) ॥१४२॥

51. **गारुड़े—**

तेनाभुक्ष्य गुरुं ज्ञाप्य तं नयेत तैतृकं वनम्।
दक्षिणाशिरसं कृत्वा सचैलन्तु सवन्तथा ॥१४३॥
तीर्थस्यावाहनं कृत्वा स्नापनं तत्र कारयेत् ॥१४४॥

## स्नानमन्त्रो यथा—

गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः।
कुरुक्षेत्रं तथा गङ्गां यमुनाञ्च सरिद्वराम् २(†) ॥१४५॥
अन्यानि पुण्यक्षेत्राणि ध्यात्वा संस्नापयेच्छवम्।
देवाश्चाग्निमुखाः सर्व्वे गृहीत्वा तु हुताशनम् ३(‡) ॥१४६॥
गृहीत्वा पाणिना सर्व्वे वदेयुर्मन्त्रमुत्तमम्।
कृत्वा तु दुष्करं कर्म्म ज्ञानतोऽज्ञानतोऽपि वा ४(+) ॥१४७॥
मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम् ॥१४८॥
धर्म्माधर्म्मसमायुक्तं लोभमोहसमावृतम्।
दहेयं सर्व्वगात्राणि दिव्यान् लोकान् स गच्छतु ॥१४९॥
एवमुक्त्वा ततः शीघ्रं कृत्वाचैव प्रदक्षिणम् ५(×)।
ज्वलमानं तदा वह्निं शिरःस्थाने प्रदापयेत् ॥१५०॥
चतुर्वर्णेषु संस्कार एवं भवति पुत्रकेति ॥१५१॥

---

१(*) 'यावत् प्रेतस्य' इति भिन्नः पाठः।

२(†) अवस्थानेतु मन्त्रस्यापरार्द्धं यथा,—
'कौशिकीं चन्द्रभागाञ्च सर्व्वपापप्रणाशिनीम्।
भद्रावकाशां सरयूं पनसं गण्डकीन्तथा।
वैणवञ्च वराहञ्च तीर्थं पिण्डारकन्तथा।
पृथिव्यां यानि तीर्थानि सरितः सागरास्तथा ॥
ध्यात्वा तु मनसा सर्व्वे कृतस्नानं गतायुषम्' ॥ इति

३(‡) ॐ देवाश्चाग्निमुखा सर्वे एनं दहन्तु।

४(+) 'जानतावाप्यजानता' इति शुद्धितत्त्वे पाठान्तरमस्ति।

५(×) 'कृत्वात्विति' मन्त्रपाठेन प्रदक्षिणपूर्व्वकं वारत्रयं ज्वलदग्निं शिरः स्थाने प्रदापयेत्
'असगोत्रः सगोत्रोवा यदि स्त्री यदिवा पुमान्। यथाग्निदाता तस्य पिण्डं दद्या
सदाहि' इति स्मृतौ। अत्र पिण्डं पूरकपिण्डमित्यर्थः।

52. **स्मृतिसंग्रहे तु—**

आसन्द्यां प्रेतमारोप्य गन्धपुष्पाद्यलङ्कृतम् ।
बध्नीयाद्वान्धवस्तस्य पादाङ्गुष्ठावुभौ दृढौ ॥१५२॥

53. **आसन्दीलक्षणन्तु विधानग्रन्थे—**

साक्षाच्छवस्य पालाशैर्दर्भैः कृत्वाकृतिं दृढाम् ।
खादिरैर्हैववृक्षैर्व्वा शवविग्रहसम्मिताम् ॥१५३॥
सा चासन्दी चतुर्व्विंशत्य ङ्गुलायामतः समा ।
चत्वारोद्वौ च वोढारः अपसव्यात् कुशैस्तथा ॥१५४॥
कृत्वा तु वरणन्तेषामथसंघव-रोहणम् १(*) ।
निवीतिनो वहेयुस्तं ज्ञातयोऽन्ये च वाहकाः ।
दहनं वापि ते कुर्य्युरिति धर्म्मोऽव्यवस्थितः ॥१५५॥

54. **अत्रिरपि—**

ऋषितर्पणचाण्डाल भाषणप्रेतवाहने ।
विन्मूत्रमैथुने चैव यन्निवीती समाचरेत् २(†) ॥१५६॥
गर्भवत्याः पतिः प्रेतवहनं पवनंवनम् ३(‡) ।
वर्ज्जयेद्दूरगमनमेतन्नैमित्तिकं विना ॥१५७॥

55. **अन्यत्रापि—**

प्रेतवाहं गयाश्राद्धं मौञ्जीबन्धनमेव च ।
विदेशगमनं क्षौरं न कुर्य्याद्गर्भिनी पति, रिति—

56. धर्म्मप्रदीपे जीवत्पितृकस्यापि निषेध उक्तः ॥१५८॥

57. **स्कान्धे—**

स्कन्धे प्रेतस्य वहनं स्नानं केशविभागतः ।
न जीवत्पितृक कुर्य्यात्तर्ज्जन्यारौप्यधारणमिति ४(+) ॥१५९॥

---

१(*)
२(†) अत्र 'पवन'मिति 'यजनं इति वा पाठो दृश्यते ।
३(‡) 'उपवीतं भवेन्नित्यं निवीतं कण्ठसज्जनम्' इति कौर्म्मे । अन्यत्र 'लतोपवोतीदेवेभ्यो-
निवीतीच भवेत्ततः ।
मनुष्यांस्तर्पयेद्भक्त्या ऋषि पुत्रान् ऋषीं'स्तथा', इति स्मृतौ ।
उत्तराच्छादन वस्त्र' कण्ठलम्बितोपवीतंविति आर्त्ताः ।
४(+) 'पूजाकाले सर्व्वदैव कुशहस्तोभवेच्छुचिः ।
तर्ज्जन्यारजतं धार्य्यं स्वर्णं धार्य्यमनामया' । इति मन्त्रशास्त्रे ।

## मध्ये आसन्ध्यादिभङ्गे जाते प्रायश्चित्तमुक्तम् ।

—*—

58. **अत्रिणा च—**

आसन्ध्यामपि भग्नायां कृशानौ पतितेऽपि वा ।
तत् पात्रभङ्गे रज्जूनां दाहे च्छेदेऽपि वा पुनः ॥१६०॥
शवेऽतिपतिते वापि अन्यस्मिन् वोपघातने ।
प्राजापत्यं ततः कृत्वा सर्व्वं कर्म्म प्रवर्त्तयेत् ॥१६१॥ इति

59. **रेणुः—**

आमपात्रेऽग्निमादाय शरीरं साधनानि च ।
आश्मशानाद्व्रजन्त्येते ज्ञातीनामधिकन्त्विदम् ॥१६२॥
यमसूक्तं जपन्तस्ते रीतीभूता स्तमन्वयुः १(*) ।
श्मशानं यान्ति वृद्धाग्रा क निष्ठाग्राः गृहान् प्रति, इति ॥१६३॥

60. **देवजानोये—**

मृतस्योत्क्रान्ति समयात् षट्पिण्डान् क्रमशो ददेत् ।
प्रतिस्थाने तथा द्वारि चत्वरे तार्क्ष्य कारणात् २(†) ॥१६४॥
विश्रामे काष्ठचयने तथा सञ्चयने च षट् ३(‡) ।
स्थाने श्राद्धं प्रकुर्व्वीत दशपिण्डा दशाहिकाः ॥१६५॥
इमानि सोदकुम्भानि कार्य्याणीत्युक्तं महर्षिणा ॥१६६॥

61. **गारुडे,—**

षोड़शाद्याः प्रदातव्यामध्वन्नजल पूरिताः ।
उत्क्रान्ति श्राद्धमारभ्य षोड़शैव क्रमात् स्मृताः ॥१६७॥
शृणु तत् कारणं तार्क्ष्य षट्पिण्डपरिकल्पने ।
मृतस्थाने शवोनाम तेन नाम्ना प्रदीयते ॥१६८॥
तेन दत्तेन तुष्यन्ति गृहवास्त्वधिदेवताः ।
चत्वरे खेचरोनाम तदुद्दिश्य प्रदापयेत् ॥१६९॥

---

१(*) अत्र यमसूक्तं ऋग्वेदे १० म, मः, १४ सूक्तम् । परेयिवांसंपरः'—'सर्व्वाता यमभाहिता' इत्यन्तानि सूक्तानि ।

२(†) 'तार्क्ष्यं' इत्यत्र 'भोच' इति पाठान्तरंक्वचिदस्ति ।
अत्र 'प्रतिस्थानम्' इत्यपि पाठान्तरमस्ति ।

३(‡) एतेषु षट्सु स्थानेषु श्राद्धं कुर्व्वीत इत्यर्थः ।
अत्र 'दशाह्निकाः इत्यपि भिन्नः पाठः । इमानि श्राद्धानीति बोध्यम् ।

तेन तत्रोपघाताय भूत-शौटीर दुर्गताः १(*) ।
विश्रामे भूतसंज्ञोऽयं तन्नाम्ना तत्र दीयते ॥१७०॥
पिशाचा राक्षसा यक्षा ये चान्ये दिक्षु वासिनः ।
तस्य होतव्य देहस्य नैवायोग्यत्वकारकाः २(†) ॥१७१॥
चितामोक्षप्रभृतिकं प्रेतत्वमुपजायते ।
चितायां साधकं नाम वदन्त्येके खगेश्वर ॥१७२॥
केऽपि तं प्रेतमेवाहु र्यथाकल्पविदस्तथा ।
तदादि तत्र तत्रापि प्रेतनाम्ना प्रदीयते ३(‡) ॥१७३॥
इत्येवं पञ्चपिण्डैर्हि शवस्याहुतियोग्यता ।
अन्यथा चोपघाताय पूर्व्वोक्तास्ते भवन्ति हीति ॥१७४॥

## 62. तीर्थेऽर्द्धजलमरणे विशेषो नारदीये—

पुण्यतीर्थे जलेऽस्त्रस्थं निधाय पितरं सुतः ।
'वेदाह'मिति मन्त्रेण श्रीमदष्टाक्षरन्तथा ४(+) ॥१७५॥
श्रावयेद्दक्षिणे कर्णे तस्य निर्व्वाणसिद्धये ।
पञ्चाक्षरं तथा शम्भो र्विष्णोः पञ्चाक्षरन्तथा ५(×) ॥१७६॥
आत्मानं ब्रह्मविद्याञ्च श्रावयेच्च पुनः पुनः ॥१७७॥

---

१(*) 'शौटीर' इत्यत्र 'सौचिग' इतिवा पाठः आदर्शान्तरे ।

२(†) एते होतव्य शरीरस्य नैवोपघातकारका भवन्तीत्यर्थः ।

३(‡) निधनोत्तरं सम्वत्सरपर्य्यन्तं प्रेतत्वपरिहाराय यत् कृत्यं तस्मिन् प्रेतनामोल्लेखो विधेयः ।
आतिवाहिकदेहानन्तरं प्रेतदेहः स्यात् ।
तथाहि स्मृतौ 'कृते सपिण्डीकरणे नरः सम्वत् सरात्परम् ।
प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते' इति ।
निधनोत्तरं क्षिप्रं वायविकः—आतिवाहिको देहोजीवेन लभ्यते ।
तथाहि स्मृतौ 'तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम्' इति ।
'तथा देहान्तर प्राप्तिर्धीरस्तत्रनमुह्यति' इति गीतायाम् । अन्यत् शुद्धि तत्त्वेऽस्ति ।

४(+) 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' ॥ शुक्लयजुः—३१।१८ सूक्तम् ।
—अष्टाक्षरोमहामन्त्रः । ॐनमोनारायणाय' इति । अयं पञ्चरात्रीया ।

५(×) पञ्चाक्षरोमन्त्रः शैवः । ॐनमः शिवाय' इति । तथैव विष्णोर्मन्त्रो यथा 'नारायणाय' इति । 'ॐ विष्णवेनमः' इति वा । ब्रह्मविद्या अध्यात्मविद्या, उपनिषत् । ॐतत् सदिति वा ।

63. **वाराहे,—**

कर्म्मयोगाद्यदा देही मुञ्चत्यत्र निजं वपुः ।
तदा भूमिगतं कुर्य्याद् गोमयेनोपलिप्य तु ॥१७८॥
तिलान्दर्भान् विकीर्य्याथ मुखे स्वर्णं विनिक्षिपेत् ।
तुलसीसन्निधौ कृत्वा शालग्रामशिला तथा १(*) ॥१७९॥
'सेतु सामादि'सूक्तैश्च मरणं मुक्तिदायकम् २(†)
सम्मृज्य चोपलिप्याथ उल्लिख्याहृत्य वेदिकाम् ३(‡) ॥१८०॥
अभ्युक्ष्योप समादाय वह्निन्तत्र विधानतः ४(+) ।
पुष्पाक्षतैश्च सम्पूज्य देवं क्रव्यादसंज्ञितम् ॥१८१॥
तमग्निं प्रार्थयेद्देवं मन्त्रेणानेन सत्तमः ।

## मन्त्रो यथा,—

त्वं भूतकृद्जगद्योनिःत्वं लोकपरिपालकः ॥१८२॥
उक्तः संहारकस्तस्मादेनं स्वर्गं मृतं नय ।
इति क्रव्यादमभ्यर्च्च्य शरीराहुतिमाचरेत् ॥१८३॥
स्नानं प्रेतस्य कृत्वाथ पुष्पैर्व्वस्त्रैश्च पूजनम् ।
नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेत् ॥१८४॥
श्मशानवासिभ्यः शवस्त्रैकदेशं परित्यजेदिति किञ्चिद्देयमित्यस्यार्थः ।
गोत्रजस्तं गृहीत्वाथ चितामारोपयेत्तदा ।
ततश्चन्दनकाष्ठानि क्षिप्त्वा दद्याद्धुताशनम् ॥१८५॥
अर्द्धदग्धे ततोदेहे दद्यादाज्याहुतिन्ततः ।
अस्मात्त्वमधि(भि)जातोसि तदयं जायतां पुनः ॥१८६॥

---

१(*) तुलसीसन्निधौ, श्रीशालग्रामसमीपे, पञ्चवटी सान्निध्येच मुमूर्षोः कुशादिषु शयनस्थानं विधेयम् । पञ्चवटी यथा,—'अश्वत्थबिल्ववृक्षञ्च वटधात्री अशोककम् । वटीपञ्चकमित्युक्तं स्थापयेत् पञ्चदिक्षु च' । वृहत्पञ्चवटीतूक्ता हेमाद्रीयव्रतखण्डे । यत्रतु तुलसीकाननं तत्र हरेः सन्निधानम् । यस्मिन श्रीफलतरुसन्निधौ श्रीशिवसन्निधानम् । अश्वत्थसमीपे श्रीविष्णोः स्थानम् ।

२(†) सेतुसामादिसूक्तं यथा,—आरण्यकगाने, ऊहगानेवास्ति । 'सामगानपद्धती' सन्दर्भेचापि विद्यते । 'सेतुन्तर' इत्यादि ।

३(‡) 'उल्लिख्योऽद्ध वेदिका'मिति पाठान्तरमादर्शान्तरे ।

४(+) 'अभ्युक्ष्योपसमादाय' इति क्वचिद्द भिन्नः पाठः ।

असौ स्वर्गाय लोकाय स्वाहा ज्वलति पावके १(*) ॥१८७॥
एवमाज्याहुतिं दत्त्वा तिलमिश्रां समन्त्रकाम् ।
रोदितव्यं ततोगाढ़मेवं तस्य सुखं भवेत् ॥१८८॥
दग्धा शवं ततस्त्वेवं प्रादेशीं काष्ठिकान्तथा २(†) ।
सप्तप्रदक्षिणाः कुर्य्यादेकैकान्तु विनिक्षिपेत् ।
निःशेषस्तु न दग्धव्यः शेषं किञ्चित्त्यजेत्ततः ३(‡) ।
देयाः प्रहाराः सप्तैव कुठारेणोल्मुकोपरि ॥१८९॥
'क्रव्यादाय नमस्तुभ्यमिति' लभ्येत् समाहितः ४(+) ।
नावेक्षितव्यः क्रव्यादो गन्तव्या च ततो नदीति ॥१९०॥

64. **गृह्यकारिकायाम्—**

समे देशे विहृत्याग्नीन्वैतानान् सतृणे शुचौ ।
उद्धृत्य क्षीरसंयुक्ता ओषधीर्मासपर्णिकाः ॥१९१॥
मुष्वादूर्व्वाश्च गन्धाह्वा अध्याप्त (त्म) पुरुषाहुतीः ।
न्यग्रधोऽश्वत्थहारिद्र तिलकसर्ज्जकादयः ॥१९२॥
दूरे त्याज्यास्ततोऽग्नीना मन्तराचिनुयुश्चितिम् ।
केशश्मश्रूणी लोमानि नखानिच निकृन्ति ॥१९३॥
पुरीषं चाथ निर्य्यात्य केशादीन्निखनेत्ततः ।
प्रेतदेहन्ततः कृत्स्नं घृतेना भ्यङ्गयेत्ततः ॥१९४॥
विषुरीषस्य पक्षेऽन्तः सर्पिषाञ्जनमिष्यते ॥१९५॥
हारिद्रं वस्त्रखण्डञ्च सञ्चयार्थं निधाय तु ।
चित्यां प्राग्ग्रीवमास्तीर्य्या जिनमुत्तरलोमकम् ॥१९६॥
तस्मिन् प्राक्शिरसं प्रेतं उत्तानं विनिपातयेत् ।
अपसल्य (व्य) विसृष्टाभि र्दृढ़ाभिः कुशरज्जुभिः ॥१९७॥

---

१(*) अयं मन्त्रो यजुषां पाठ्यः। नचसाधारणछन्दोगानाम् ।
" गोत्रजः पुत्रादिः। हुताशनं मन्त्रपूर्व्वकमभिन्द्यादिति ।
" मन्त्रस्तु 'अस्मात्त्वमभिजातोऽसीति' केचनईयुः ।
२(†) प्रादेशीकाष्ठिका प्रादेशपरिमिता पूतकाष्ठस्य खण्डविशेषः। मन्त्रपाठ पूर्व्वकं सप्तवारं तां त्यजेत् ।
३(‡) अयं सर्व्वं नैव दहेत् किञ्चिदवशिष्ट गङ्गानदी तीर्थपूतसलिले प्रक्षिपेत् ।
४(+) 'क्रव्यादोमृतभक्षणे' इत्यर्थेनाम गृह्यकारिकायाम् । ओंक्रव्यादाय नमस्तुभ्यम् क्रव्यादाय नमोनमः' इति पूर्णमन्त्रः ।

'नद्धोनिष्क्रान्तिसमये च्छेदयेदधुनैव ताः ।
हिरण्यसकलान्यस्य मुखे नासिकयोस्तथा १(*) ॥१६८॥
एवमाज्याहुतिं हुत्वा तिलमिश्रां समन्त्रकाम् ॥१६६॥
रोदितव्यं ततोगाढ़मेवं तस्य सुखं भवेत् ।
दग्ध्वा शवं ततस्त्वेवं प्रादेशीः काष्ठिकास्तथा ॥२००॥
सप्त प्रदक्षिणाः कुर्य्यादेकैकान्तु विनिक्षि पेत् २(†) ।
निःशेषस्तु नदग्धव्यः शेषं किञ्चित्यजेत्ततेः ॥२०१॥
देयाः प्रहाराः सप्तैव कुठारेणोल्मुकोपरि ।
क्रव्यादाय नमस्तुभ्यमितिलभ्येत् समाहितः ३(‡) ॥२०२॥
ना वेक्षितव्यःक्रव्यादो गन्तव्या च ततो नदी इति' ।
चक्षुषोः कर्णयोस्तद्वदेकैकन्तेषु विन्यसेत् ।
जुहूमाज्येन सम्पूर्णां सादयेद्दक्षिणे करे ४(+) ॥२०३॥
सव्ये चोपभृतं रिक्तां ध्रुवामुरसि विन्यसेत् ।
वैकङ्कतं शिरोग्रे तु दक्षिणायां नसि स्रुवम् ।
सर्व्वाण्येव शिरोग्राणि पात्राणीत्याह गोभिलः ॥२०४॥
पाशित्रे नेत्रयोर्मूर्द्ध्नि रिक्तं प्रणीतकं न्यसेत् ।
कपालानि विकल्पेन द्वे शूले पार्श्वयोः क्रमात् ॥२०५॥
प्रघासमक्तं यस्य नश्येद्वा तत् कथञ्चन ।
द्वेधोपधीयते च्छित्त्वैवैकं तैत्तिरि वेदतः ॥२०६॥
उदरे सादयेत् तस्य पृषदाज्यवतीमिड़ाम् ।
शय्यां श्निश्नेऽरणिद्वन्दमुदग्वृषणयोरपि ॥२०७॥

---

१(*) सर्व्वाणि हिरण्य खण्डानि क्रमेण मुखे द्वयोर्नासिकयोर्द्वयोर्नेत्रयोर्द्वयोः श्रोत्रयोः प्रदेयानि । अनेन देहः पूतो भवति । तथाहि—श्रुतिः 'पवित्रं वै हिरण्यम्' इति । निधनात् प्राक्काले हिरण्यदानमपि सर्व्वपापहरं स्यात् । तथाहि, 'हिरण्यदानं गोदानं भूमिदानन्तथैव च । नाशयन्त्याशुपापानि महापकजान्यपि' इति स्मृतिः । क्वचिदादर्शेष्वन्य इत्यधिकः पाठः पुनरुक्तिश्च १९८-२०२ श्लोकाः ।

२(†) एकैकं मन्त्र मुच्चार्य्य एकैकां काष्ठिकां निःक्षिपेदिति ।

३(‡) 'क्रव्यादाय नमस्तुभ्यमिति' इत्यनेन मन्त्रेण । मन्त्रोऽयं साधारणः ।

४(+) अत्र तु आदर्शपुस्तकत्रये पाठशुद्धिर्नास्ति ।

" अग्निहोत्रिणां यज्ञपात्राण्येतानि ।

मुसलेन सह न्युब्जमन्तरोर्व्वोरुलूखले ।
प्राघासिकानि सर्व्वाणि तत्रैवोपासनान्यपि ॥२०८॥
सादयेदन्तरेणोर्व्वोः स्थानानवगमादूयतः ।
मृन्मयाश्ममयानाञ्च दानं विप्राय मन्वते ॥२०९॥
शासाद्यश्ममयं पात्रमोविलीचात्रयोनयः ।
तद्वद्विप्राय दातव्या नोचेदम्भसि निक्षेपेत १(*) ॥२१०॥
यद्यनुस्तरणीपक्षस्तत आनीयतामपि ।
गां पश्चात् कर्णमाहत्य तन्मांसान्यग्निहोत्रिणः ॥२११॥
प्रत्यंगमुपधीयन्ते हस्तयोः कु(अ)क्षिगोलकौ ।
मुखञ्च वपयाच्छाद्य ततोऽग्नीनां समिन्धनम् ॥२१२॥
गौरनुस्तरणी प्रोक्ता नपक्षोऽयं कलौ भवेत् २(†) ।
शूर्पेणाग्निं समीन्धीयाद् वाससा न मुखे न तु ॥२१३॥
आज्येन सकृदात्तेन जुहुयादाहुतिन्ततः ।
शंस्पेस्तु चासमित् पूर्व्वावहन्यात्पितृदिङ्मुखः ३(‡) ॥२१४॥
प्रेतेन सहितः पुत्रो भ्राता वा तदभावतः ।
अन्यो वा ब्राह्मणः कश्चित् सपिण्डादेरभावतः ॥२१५॥
हीनजाति व्युदासार्थं दाहादौ भ्रातृपुत्रयोः ।
विप्रस्य ग्रहणं सूत्रे वावदीदत्र भाष्यकृत् ॥२१६॥
'अस्मात्त्वमिति' मन्त्रेणानूहितेन स्त्रिया अपि ४(+) ।
ततः प्रचरणीमास्ये खादिरं नासिके स्रुवम् ५(×) ॥२१७॥

---

१(*) 'तद्वत्' प्राग्वत् ब्राह्मणायदेयम् । यद्वा जले विसर्ज्जयेत् ।

२(†) 'न पक्षोऽयम्' इति क्वचित्पाठः ।

३(‡) 'शंस्यन्तु' इति ग्रन्थान्तरधृत-पाठः ।

४(+) मन्त्रोऽयं प्रागुक्तः । अत्र पुंवत् स्त्रीणामपि
ऊहनियमो नास्ति । ऊहविधा च मीमांसादर्शने सम्यगस्ति ।
मन्त्रे ऊहस्तु सर्व्वं क्विन् नोविधेय इति मीमांसितम् ।

५(×) खादिरादि यज्ञीय काष्ठजातं पात्रम् । तथाहि—
'औदुम्बरी स्रुवा प्रोक्ता आश्वत्थी चोपभृन्मता ।
जुहूः पलाशकाष्ठस्य खदिरस्य ध्रुवो मताः' इति न्यायप्रकाश टीकायाम् ।
सामान्येतु-खदिरपलाशोदुम्बराश्वत्थ काष्ठानां ग्रहणम् । अस्येद यज्ञीयत्वात निरूपणीयास्ति ।

वज्रं दक्षिणहस्ते च योजयेदग्निहोत्रिणः १(*) ।
उत्तानानितु पात्राणि चावदीदत्र गोभिलः २(†) ॥२१८॥
स्याद् द्वितीयान्तनिर्द्देशात् प्रतिपत्तिरियं श्रुतेः ।
'जुहूं सादयती' त्यादौ पात्राणां वचनाद् यदि ॥२१६॥
अग्निभिर्यज्ञ पात्रैस्तमाहिताग्निं दहन्त्यतः ।
पात्राणां करणता स्पष्टा प्रतीयेतापि सादने ॥१२०॥
प्रतिपत्तिर्द्वितीयान्त निर्द्देशादविरोधतः ।
तेषान्तु प्रतिपात्राणां दाहे करणता भवेत् ३(‡) ॥२२१॥
अतः पात्रविनाशेच नोत्पत्तिः प्रतिपत्तितः ।
प्रत्ययादि ( हि )पुनर्हा होवेत्यस्मिन्नपि सूत्रतः ४(+) ॥२२२॥
एवं गृहपतिर्द्दग्धः सर्व्वं तरति दुष्कृतम् ॥२२३॥
यश्चैनं दाहयेत् सोऽपि प्रजां प्राप्नोत्यनिन्दिताम् ।
यथा स्वायुध धृक् पान्थोह्यरण्यान्यपि निर्भयः ।
अतिक्रम्यात्मनोऽभीष्टं स्थान मिष्टञ्च विन्दति ५(×) ॥२२४॥
लोकानन्यानतिक्रम्य परं ब्रह्मैव विन्दतीति ॥२२५॥
इति श्रौताग्नेरयं पात्रविन्यासः ॥

—*—

65. **अथ स्मार्त्तमात्राग्नेः पात्रविन्यासः कारिकायामेव ६(०) ।**

अथ पुत्रादिराप्लुत्य कुर्य्याद्दारुचयं बहु ।
तत्रोत्तानं निपात्यैनं दक्षिणा शिरसन्तथा ॥२२६॥

---

१(०) प्रताग्निहोत्रवृत्तं सर्व्वं आह्निकचन्द्रिकायामग्निहत्तञ्च खादिरगृह्यसूत्रेऽस्ति ।

२(†) 'उत्मानानि' इति भिन्न पुस्तके पाठः । गोभिलाचार्य्यस्तोदयन्येषु इत्तं प्रोक्तम् ।

३(‡) 'प्रतिपन्नानां' इति चादर्शान्तर धृतः पाठः ।

४(+) 'प्रत्ययाद्धि' इति पुस्तकान्तरे पाठान्तरम् । सूत्रतः प्रागुक्त सूत्रानुसारेणेति ।

५(×) अभीष्ट स्थानम्;—स्वर्ग निर्व्वाणादि, संसारो दुःखमयः । अत्र सुखं क्षणिकम् । निर्व्वाणेतु शाश्वतं तदु भवति ।

६(०) अत्राग्नि होत्रिनौ द्वौ तयोरेकः श्रौताग्नि होत्री । अस्यतूपनयनांतपरं अग्नि होत्र-ग्रहणम् । यावज्जीव मेतत्कर्म्माचाम । अपरः स्मार्त्ताग्नि होत्री । अस्यतु विवाहात्-परं पत्नया सहाग्नि होत्र ग्रहणमयमपि अग्निचिन्नवति । अनयोः क्रमाद्दाहविधानं क्षेणोच्यते ।

न्यसेद्धिरण्यं शिरसि प्रणीतां चमसन्तथा ।
श्रवणा कर्म्मसम्बन्धि-द्वितीयं पिण्डयज्ञीयम् ॥२२७॥
शूर्पे तत् पार्श्वयोः कुर्य्यादिकं चेत् तद्द्विधा भवेत् ।
न पैत्र्यं शूर्पमन्यत्र कुर्य्यादनतिदेशतः ॥२२८॥
अण्डयोररणीं तद्वत् प्रोक्षणीपात्रमादितः ।
पात्राणि चान्तरेणोर्व्वोर्मृन्मयाद्यम्भसि क्षिपेत् ॥२२६॥
अथाग्निं सव्यजान्वाद्यं दद्याद्दक्षिणतः शनैः ।
पूर्व्ववज्जुहुयाद्वह्नौ शेषं स्यादाहिताग्निवत् ॥२३०॥
शूर्पेणाग्निं समिन्धीया द्वाससा न मुखेनत्विति ॥२३१॥

अत्र प्राक्शिरस्त्वदक्षिणाशिरस्त्वे श्रौतस्मार्त्ताग्निविषये—इति कारिकाकाराभिप्रायः । तथा च श्रौत सूत्रं कात्यायनानाम् १(*) । प्रेतस्य केशश्मश्रुनखलोम्नं निकृन्तनं कृत्वा विपुरीषं चेत् केशादि निखाय सर्पिषाभ्यज्य चितौ प्राग्ग्रीवं कृष्णाजिनमास्तीर्य्य तमाददाति प्राक्शिरसं प्रेतमिति ॥

66. **अन्येतु—**

वैतानिकस्यौपासनिनोऽपि-वाजसनेयशाखिनः-प्राक्शिरस्त्वमेवाविशेषादित्याहुः ।

तत्र देशाचारतो व्यवस्था । आश्वलायनादिशाखिनान्तु सर्व्वेषामपि दक्षिणाशिरस्त्वमेव ।

67. **तथाहि—**

कुशलश्चितिश्चिनोति तस्यां वर्हिरास्तीर्य्य कृष्णाजिनं चोत्तरलोम प्रेतमग्निमुत्तरेण हृत्वा २(†) दक्षिणाशिरसं सम्वेशयन्तमुत्तरेण पत्नींपात्रमित्याश्वलायनपरिशिष्टोक्तेः ।

68. **पूर्व्वोक्तवचनेभ्यश्च । चितिप्रकारस्त्वाश्वलायन सूत्रे—**

संस्थिते भूमिभागं खानयेद्दक्षिणपूर्व्वस्यान्दिशि दक्षिणापरस्याम्वा प्राग्दक्षिणाप्रवणं वा प्रत्यग्दक्षिणप्रवणमित्येके, यावानूर्द्ध्वबाहुकः पुरुषस्तावदायाममात्रं त्रिवितत्या वागमित (३‡) आश्मशानमिति ।

---

१(*) तथाच कात्यायमसूत्रम् इति ।
२(†) 'कृत्वा' इति भिन्नः पाठः ।
३(‡) 'आगमतः ,, ,, ,, ।

69. **तत् परिशिष्टेऽपि—**

अथ पितृमेधः संस्थिते दक्षिणपूर्व्वस्यां दक्षिणपरस्यां वा प्रागद्दक्षिणायतदक्षिणप्रवणं तद्दिक् प्रवणं वा, यावानुद्वाहुपुरुषस्तावदायामं व्यायाममात्रं, तिर्य्यगर्व्वाग्वितस्तिमात्रं १(*) खातं खनेयुरभित आकाशं बहुलौषधिकं यत्र सर्व्वत्रापः प्रध्वंसेरन्नेतद्दहनस्य लक्षणम्, श्मशानस्य सकण्टक-क्षीरिणः समूलान् परिखायोद्वासयेदिति ॥

70. **श्मशानस्थलमुक्तं स्मृतौ—**

समे बहुतृणे देशे दक्षिणप्रवणे तथा ।
ग्रामस्य दक्षिणे देशे हुतभुग्दिशि वा भवेत् ॥२३४॥
क्रव्याददिशि वा प्रोक्तं श्मशानं मुनिभिः स्मृतमिति २(†) ।

## तत्र संस्कारोऽप्युक्तः ।

दाहदेशं ततः कर्त्ता शोधयेत् पञ्चकर्म्मभिः ।
मार्जनो लेपनोल्लेखपांसुद्धारजलोक्षणैः ॥२३५।
पर्णशाखा शमीशाखा मार्ज्जने शिष्टसम्मतेति ।

ततश्चोक्तरीत्या प्रेतं श्मशानं प्रत्यानीय तत्रोक्तरीत्या खातं खात्वा तत्र पञ्चसंस्कारान् कृत्वा चितिं विरचय्य तत्र कृष्णाजीनमास्तीर्य्य प्रेतं निधाय पात्राणि यथा विधि विन्यस्योक्तविधिना तत् संस्कारकेऽग्नौ हुत्वा तच्छिरोदेशे कर्त्ताग्निंदद्यादिति प्रयोगोद्रष्टव्यः ।

71. 'कर्त्ता शिरसि चाग्निं ददाति तं ज्वलयेयु' रित्याश्वलायनपरिशिष्टम् । एतच्छिरोदेशेऽग्निदाने प्रमाणम् ॥

—*—

## अथाग्निनिर्णयः ।

72. **तत्र वृद्ध याज्ञवल्क्यः—**

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ।
अनाहिताग्निरेकेन लौकिकेनेतरे जनाः ॥२३६॥ इति

सभ्यावसथ्ययोः प्रतिपत्तिरुक्ता ।

---

१(*) 'परिमितम्' इति भिन्नः पाठः ।
२(†) 'ध्रुवमिति' पाठान्तरमस्ति ।

73. **देवजानीये—**

सभ्यावसथ्यौ चितिमुत्तरेण संस्थापनीयौ पितृदिङ्मुखेन।

74. सकृत् सुसंस्कृतभूप्रदेशे देशेषु सप्तस्विति गोभिलाख्यः १(*) ॥२३७॥

75. **शाट्यायनोऽपि—**

सभ्यावसथ्यावाहिताग्नेर्दहनकर्म्मणि न प्रयुज्येते चितादेशात् प्रागुदीच्यां दिशि पञ्चप्रक्रमानतिक्रम्योत्सृजति, पात्राणि तु प्रयुज्यन्त इति।

76. अनाहितो वौपासनाग्निः सचैकेन स्मार्त्तेन।

77. **तथा च कात्यायनसूत्रम्—**

शालाग्निना दहत्येनमनाहितश्चेदिति। इतरे जना ब्रह्मचारि-विधवादयः। ते लौकिकेनाग्निना दग्धव्या इति वृद्धयाज्ञवल्क्यवचनार्थः। विच्छिन्नाग्नेस्तु प्रेतस्यातीतदिवसगणनया प्रायश्चित्तं कृत्वा तावत्कालीनहोमद्रव्यं च दत्वा प्रेताधानं कृत्वा तेनैवाग्निना दहनं कार्य्यम्। न लौकिकाग्निना।

78. **तथाचापस्तम्बसूत्रम्—**

अनग्निरुत्सृष्टाग्निर्विच्छिन्नाग्निर्व्वा प्रमीयन्ते, तमन्येन न दहन्तीति। तस्य सम्प(म्पा)र्तनादुद्धृत्यावोक्ष्य यजमानायतने प्रेतं निधाय गार्हपत्यायतनेऽरणीं संस्थाप्य यस्याग्नयोऽजुह्वतो मांसकामाः सङ्कल्पयन्तु ते यजमान-मांसं खादयन्तु ते बर्हिषि सादिताय स्वर्गं लोकमिमं प्रेतं नयन्त्विवति। तूष्णीं विहृत्य द्वादशगृहीतेन स्रुचं पूरयित्वा तूर्ष्णीं हुते (तो) ऽमात्यादि कर्म्म प्रतिपद्यत इति। एवं विष्टारणि यजमानमरणे अपूर्व्वेऽरणी आदाय तयोरुपरि प्रेतदक्षिणं पाणिं निधाय 'पुत्रादिर(य)सन्त' इति समारोपमन्त्रं जपित्वा पश्चान्मृताधानं सर्व्वं कृत्वा तं पूर्व्ववद्दहेत्। एवमेव स्मार्त्ताग्नेरपि द्रष्टव्यम्। 'अनाहिताग्नेरप्येवं मृताधानं यथोदित'मिति वचनात्। मृताधानप्रकारोवक्ष्यते। यद्वा पृष्टोदिवि विधानेन कात्यायनोक्तेनाग्निं सम्पाद्य विच्छिन्नाग्निं संस्कुर्य्यात्। विधुरस्य पृष्टोदिविविधानेनोत्पन्नाग्निनैव दाह इति। तदेतत्सर्व्वं याज्ञिकाभियुक्तप्रसिद्धमिति नात्र प्रपञ्चयते॥

—*—

१(*) 'इति गोभिलाचार्यः' इति भिन्नः पाठः।

79. **अत्रान्योविशेषो बौधायनकारिकायाम् ,—**

**यथा—**

औपासनेन गृहिणं पत्नीं वा सन्दहेन्मृताम् ।
निर्म्मथ्येन मृतं पश्चादपि चोत्तपनाग्निना ॥२३८॥
निर्म्मथ्येन कुमारीश्चेत् स्त्रियश्चेत्यपरे ब्रुवन् ।
अग्निनोत्तपनीयेन तेभ्योऽन्यानिति हि स्तितिः ॥२३९॥
निरग्निकां स्तथा भिक्षून्निदध्याद्वा जले क्षितौ ।

80. साग्निकान् दाहयेद्भिक्षूनित्युवाच मुनिः क्रतुः ॥२४०॥
उत्पाद्योत्तपनीयेन वह्निना वेति केचन ।
विधुरं विधवाञ्चैव कपालेनाग्निना दहेत् ॥२४१॥
ब्रह्मचारि-यतींश्चैव दहेदुत्तपनाग्निना ।
तुषाग्निना च एधव्यौ १(*) द्वौ कन्याबालएवचेति—॥२४२॥
उत्तपनादिभेदो लौकिकाग्नेरेव द्रष्टव्यः ।

81. **तल्लक्षणं क्रियासारे,—**

दर्भेष्वग्निं समारोप्य पुनर्द्दर्भेषु संयुतम् ॥२४३॥
पुनस्तद्वत्तदीयोऽग्निः स एवोत्तपनीयकः ।
अग्निवर्णं कपालं च तप्त्वा तत्र विनिक्षिपेत् ॥२४४॥
करीषादिः(ग्निः)ततोयस्तु जातोग्निः सकपालजः ।
कपालमग्नौ निक्षिप्य तमादाय तुषान् क्षिपेत् ॥२४५॥
यावदग्निसमुत्पत्तिः स तु वै तुषपावकः । इति
लौकिकाग्निरपि—चण्डालादिव्यतिरिक्त एव ग्राह्यः ।

82. **यथाह देवलः—**

चाण्डालाग्निरमेध्याग्निः सूतकाग्निश्च कर्हिचित् ।
पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचितः ॥२४६॥ इति

—*—

१(*) 'दग्धव्यौ' इति पाठान्तरम् ।

# अथाहिताग्नेः पूर्व्वं भार्य्यामरणे विशेषमाह ।

—*—

83. **याज्ञवल्क्यः—**

दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।
आहरेद्विधिवद्दारानग्नीं श्चैवा वि····लापयेत् १(*) ॥२४७॥ इति ।

84. **वृद्ध मनुरपि,—**

एवं वृत्तां सवर्णां स्त्रीं द्विजातिः पूर्व्व(धा)मारिणीम् ।
दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्म्मविदिति ॥२४८॥

85 **कात्यायनोऽपि—**

अनयैवावृता नारी दग्धव्या या व्यवस्थिता ।
अग्निप्रदान मन्त्रोऽस्यां न प्रयोज्य इति स्थितिः ॥२४९॥
अग्निनैव दहेद्भार्य्यां स्वतन्त्रा पतिता न चेत् ।
तदुत्तरेण पात्राणि दाहयेत् पृथगन्तिके ॥२५०॥ इति ।

86. **अयमभिप्रायः—**

सदाचारा पत्नी पात्रैरग्निभिश्च दाह्या व्यभिचारिणी तु केवलाग्नि-भिर्दाह्या । पात्राणि तु पृथक् तदन्तिक उत्तरतोदाह्यानि । पतितातु श्रौतस्मार्त्ताग्निभिर्न दाह्येति ।
अनेकभार्य्यस्यापि अग्निहोत्रिणः पूर्व्वं कनिष्ठामरणे विशेषश्च ।

87. **देवजानीये,—**

न दहेदग्निहोत्रेण पूर्व्वं पत्नीं मृतामिति ॥२५१॥
निषेधः श्रूयते शास्त्रे द्वितीयाविषयोह्यसौ ।
द्वितीयाश्चैव योभार्य्यां दहेद्वैतानिकाग्निभिः ॥२५२॥
जीवत्यां प्रथमायान्तु सुरापानसमं हि तत् ।
सत्यमेवं, तथापि स्त्रीसामान्यविषयोह्ययं निषेधः ॥२५३॥

---

१(०) अत्र 'विधानतः' । 'अग्निं न विजयं नयेत्' इति पाठद्वयं भिन्नमस्ति ।

परिशिष्टादावेवं हि स्मर्य्यते । तत्र तु—

तस्मान्नयैकदेशेन दग्धव्या पूर्व्वमारिणी ।

88. पत्नी ज्येष्ठेतरावापि यज्ञपार्श्वे निरूपितम् ॥२५४॥

निषेधस्त्वसवर्णाविषयोदुष्टाविषयो वा ज्ञेयः ।

89. आधानेन सहानधिकृता विषय इति विज्ञानेश्वर आह ।

90. **तथाच वृद्ध शातातपः प्रागुक्तम्—१(*) ।**

एवं वृत्तां सधर्म्मां स्त्रीं द्विजातिः पूर्व्वमारिणीम् ।
दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्म्मविदिति ॥२५५॥

91. **अन्यत्रापि,—**

"आहिताग्न्योस्तु दम्पत्योर्यस्त्वादौ म्रियते यदि ।
तस्य देहः सपिण्डैस्तु दग्धव्यस्त्रिभिरग्निभिः ॥२५६॥
पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना ।
यद्वा, दम्पत्योरनयोर्मध्ये पूर्व्वं स्वामी मृतो यदि ॥२५७॥
तयोरुल्मुकं पृथक् कृत्वा समारोह्यानलं श्रुतेः ।
धारयेदरणिस्थत्वा दाप्रयाणात् प्रयत्नतः ॥२५८॥
मृता निर्मथ्य दग्धव्या तेन पत्नी २(†) सुतादिभिः" ।

## अयमभिप्रायः ।

सदाचारा पत्नी पात्रैरग्निभिश्च दाह्या । व्यभिचारिणी तु केवलाग्निभिर्दाह्या । पात्राणि तु पृथक् तदन्तिक उत्तरतो दाह्यानि । पतिता तु श्रौतस्मार्त्ताग्निभिर्नदाह्येति । अनेकभार्य्यस्यापि पूर्व्वं कनिष्ठामरणे-

92. **विशेषो देवजानीये,—**

न दहेदग्निहोत्रिणः पूर्व्वं पत्नीं मृतामिति ।
निषेधः श्रूयते शास्त्रे द्वितीयाविषये ह्यसौ ॥२५६॥

---

१(*) 'वृद्ध मनुरपि' इत्यादितः—वृद्धशातातपः, ततोऽपिच 'इति मैत्रायणी श्रुतिः, इत्यन्तोयन्य एकस्मिन् आदर्शेऽधिको दृश्यते । तथैव गृहीतोऽत्र ॥

२(†) अत्रायमभिप्राय—इत्यारभ्य,—'तेन पत्नी सुतादिभिः' इत्यन्तः पाठः अन्यस्मिन् आदर्शे अधिको दृश्यते । तथैवात्र गृहीतः ।

द्वितीयां चैव योभार्य्यां दहेद्वैतानिकाग्निभिः ।
जीवत्यां प्रथमायान्तु सुरापानसमं हि तत् ॥२६०॥

सत्यमेव तत् । तथापि स्त्रीसामान्यविशयेऽह्ययं निषेधः । परिशिष्टादावेवंहि स्मर्य्यते । तत्र तु—

तस्मान्नयैकदेशेन दग्धव्या पूर्व्वमारिणी ।

93. पत्नी ज्येष्ठेतरावापि यज्ञपार्श्वे निरूपितम् ॥२६१॥

निषेधस्त्वसवर्णा विषयो दुष्टाविषयो वा ज्ञेयः ॥२६२॥

आधाने(न)सहानधिकृता विषय इति विज्ञानेश्वर आह ।

94. **तथाच मनुः,—**

'एवं वृत्तां सवर्णां स्त्रीं द्विजातिं पूर्व्वमारिणीम् ।
दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्म्मविदिति' ॥२६३॥

95. **अन्यत्रापि,—**

"आहिताग्न्योस्तु दम्पत्योर्यस्त्वादौ म्रियते यदि ।
तस्य देहः सपिण्डैस्तु दग्धव्यस्त्रिभिरग्निभिः ।
पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना ॥२६४॥

## यद्वा—

दम्पत्योरनयोर्मध्ये पूर्व्वस्वामी मृतो यदि ।
नार्योल्मुकं पृथक् कृत्वा समारोह्यानलं श्रुतेः ॥२६५॥
धारयेदरणिस्थत्वादाप्रयाणात् प्रयत्नतः ।
मृतानिर्म्मथ्य दग्धव्या तेन पत्नी सुतादिभिः १(*) ॥२६६॥
यदि पूर्व्वं मृता पत्नी दाहयित्वाग्निभिस्त्रिभिः ।
पुनर्दारक्रियां कृत्वा पुनराधानमेव च ॥२६७॥
यदि दारक्रियानिच्छुः (छ) प्रथमाचापि पूर्व्वयत् ।
नार्य्युल्मुकं पृथक् कृत्वा दग्धव्या पूर्व्वमारिणी ॥२६८॥

96. न सर्वैरग्निभिर्दाह्या त्वितिमैत्रायणी श्रुतिः" ।

---

१(*) इत्यन्तं एकस्मिन् आदर्शेऽधिकोऽस्ति । अन्तरा पार्थक्यमपि किञ्चिदस्ति ।

## सा यथा—

यस्तु स्वैरग्निभिर्भार्य्यां संस्करोति कथञ्चन।
असौ मृतः स्त्री भवति स्त्री चैवास्य पुमान् भवेदिति ॥२६९॥

97. **यज्ञपार्श्वेऽपि,—**

पुनः परिणयाधाने न सिद्ध्येयत मृता च सा।
गार्हपत्यैकदेशेन दाह्या साधारणं यतः॥ २७०॥ इति।

98. **विष्णुरपि—**

मृतायामपि भार्य्यायां वैदिकाग्नीन्न हि त्यजेत्।
उपाधिनापि तत् कर्म्म यावज्जीवं समापयेत् ॥२७१॥

## अत्रोपाधिः कुशपत्न्यादिः।

## यथा—

अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः।
अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः ॥२७२॥ इति।

99. **आपस्तम्बस्तु—**

दारकर्म्मण्यशक्त आत्मार्थमग्न्याधेयं दर्शपौर्णमासाग्रायणाग्निहोत्रार्थम्, शेषाणि कर्म्माणि न भवन्तीति। बह्वृच ब्राह्मणमपि—
तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेदित्यादि।

100. **भरद्वाज सूत्रेऽपि,—**

सर्व्वाधाने यदिपूर्व्वं पत्नी म्रियते तामौपासनेन दहेदिति केचित्। तां निर्मन्थेनेति वचनात्, प्रकृतिवज्जुहोत्या मरणात्तेष्वजस्त्रं जुहृद्वसतीत्यादि। तदेतदग्निसेवा परस्यैव।

## अन्यस्य तु—

आहिताग्न्योस्तु दम्पत्योरित्युक्तं प्राक् ॥२७३॥
अन्यथा तन्निर्व्विषयं स्यात्।

101. **कात्यायनसूत्रेऽपि,—**

अपत्नीकस्याहवनीये तच्छायि ( खि ) ण इति । अपत्नीको—

102. **मृतपत्नीक इति देवयाज्ञिकभाष्येऽपि सम्यगुक्तम् ।**

103. **त्रिकाण्डमण्डनेऽपि—**

एकाकीवादधीताग्नीन् विवाहश्चेन्न सिद्ध्यति ।
नित्येष्वाग्रयणान्यग्निहोत्रकर्म्माण्यस्य नेतरदित्युवाचेत्यलम् ।
इदं सर्व्वं स्मार्त्ताग्निमात्रवतोऽपि योजनीयम् ।
य आहिताग्नेर्धर्म्मः स्यात् स औपासनिनोऽपि वेति वचनात् ॥२७४॥

104. **शौनकोऽपि—**

भार्य्यायै पूर्व्वमारिण्यै दत्वाग्निं चान्त्यकर्म्मणि ।
पुनर्दारक्रियां कुर्य्यात् पुनराधानमेव च ॥२७५॥

105. **अनेकपत्नीकस्य तु—**

तयोरेका यदि मृता दग्धा तेनैव तां पुनः ।
आदधीतान्यया सार्द्धं वैवाह्यं विधिवद् गृहीति ॥२७६॥

106. **आश्वलायनस्तु,—प्रकारान्तरमुचे ।**

**यथा—**

स्मार्त्तार्द्धेनाग्निभिर्दह्यान्मृतां पत्नीञ्च तां त्रिभिः ।
शिष्टार्द्धेनोद्वहेदन्यां पुनश्चैवाग्निमान् यजेत् ॥२७७॥
प्रागुद्वाहाच्च शिष्टार्द्धे स्मार्त्तस्याग्नेर्यथाविधिः ।
संशुश्रवेदपत्नीक इष्टिं कुर्व्वीत वा नवा ॥२७८॥
सायं प्रातर्होमधर्म्मं मर्द्धाग्नावपि सञ्चरेदिति ॥२७९॥

## अत्रेष्टिः स्थालीपाकः ।

**द्विपत्नीकस्य संसृष्टाग्नेस्तु पूर्व्वं यजमानमरणे सर्व्वांशैः पितृमेधः ।**
**पत्नीनान्तु स्वैः स्वैरौपासनांशैः ।**

107. उक्तं हि कल्पभाष्यार्थ संग्रहे,—

लौकिकाग्नीतरोद्वाहं कृत्वा संसृष्टवह्निमान् ।
तस्यैकस्यां मृतायान्तु विभागोग्नेर्मुनीरितः ॥२८०॥
विभज्य वह्निं प्रत्यक्षं भागयोस्तु पृथक् पृथक् ।
पूर्णाहुत्या विविच्याग्निमिष्ट्वा भागं विनिर्द्दिशेत् ॥२८१॥
पूर्व्वस्या दक्षिणं भागमितरस्या स्तथेतरम् ।
या तु तस्य मृता भार्य्या तद्भागं विनियोजयेत् ॥२८२॥

## तथा,—

पूर्व्वोपासनवह्नौ तु यथोद्वाहः परः कृतः ।
तस्यैकपत्नीमरणे कृत्स्नाग्निर्विनियुज्यते ॥२८३॥
ततस्तस्य क्रियायान्तु स्थितया सह भार्य्यया ।
प्रधानोद्वाहहोमन्तु कृत्वा पूर्व्ववदाचरेत् ॥२८४॥
एवं विज्ञाय यः कुर्य्यात्तरतीह स संसृतिम् ।
अन्यथाग्निन्तु संस्कुर्व्वन् पतत्येवेति निश्चय इति ॥२८५॥
इति साग्निकभार्यादाहविवेकः ॥

—*—

## अथ प्रोषितस्य साग्नेर्दाहे विशेषः ।

—*—

108. देवजानीये,—

अत्र—(त्रिः) प्रोषितश्चेन्मृतस्तस्य विशेषः प्रतिपाद्यते १(*) ।
पराकद्वयमष्टौ वा कृच्छ्रान् कृत्वा सुतादिभिः ॥२८६॥
मृताग्निहोत्रं होतव्यं प्रागदाहात्तत्र कथ्यते ।
प्राचीनावीतिना सर्व्वं शंस्यमेवोद्धरेत् सरे २(†) ॥२८७॥
सादनामावतः कूर्चं स्थापनं न भवेदिति ।
प्रागग्रैर्दक्षिणाग्रैश्च तृणैः शंस्य परिस्तृतिः ॥२८८॥

---

१(*) अत्र विशेषः प्रायश्चित्तविधानं ज्ञेयम् ।

२(†) 'शम्भे वीश्वरेत्परे' इति पाठान्तरम् । 'साधनाभावत' इति च पाठान्तरमत्र ।

पर्य्युक्षणं च तस्यैव कार्य्यमात्रं प्रदक्षिणम् ।
न(कु)र्य्याद्दक्षिणतो भस्म निरुह्योष्णं च सन्धिनी ॥२८६॥
दुग्धं भस्मन्यधिश्रित्यावर्ज्योत्पासैक वर्जितम् १(*) ।
औद्वास्य सकृदासाद्य दक्षिणं स्रुक्स्रुवन्ततः ॥२६०॥
प्रतप्य प्रैषरहितं तत्पयः सकृदुन्नयेत् ॥
धारयेत् समिधं चाधो नर्य्यं दक्षिणतो नयेत् ।
तूष्णीं समिधमाधाय सव्यं जानु निपात्य च ॥२६१॥
अपसव्यं स्रुवं कृत्वा सकृत् सर्व्वं विनिक्षेत् ।
ततः कृष्णाजिनेऽस्थीनि पुरुषाकारवन्न्यसेत् ॥२६२॥
ऊर्णानि च्छादयेत्तानि घृतेनाभ्यज्य पूर्व्ववत् ।
पात्राणि योजयित्वा तं दहेत् सन्तापजाग्निभिः ॥२६३॥
अनाहिताग्निमप्येवं निरग्निश्च दहेदपि ।
प्रथमं तदहः कृत्वा यथाशास्त्रं हि सञ्चयः ॥२६४॥
अस्थीनि चेन्न नलभ्यन्ते प्रोषितस्याग्निहोत्रिणः ।
पलाशपत्रवृन्तानां षष्ठ्य धिक शतत्रयम् ॥२६५॥
कृष्णाजिने नराकारं कृत्वा वेष्ट्याजिने मतम् ।
ऊर्णासूत्रेण वध्वैव यत्रपिष्टयैः प्रलेपयेत् ॥२६६॥
निर्द्दिष्टवद्दत्तोऽयं नाम्नेत्याहाश्वलायनः ।
अ क्त्वाज्येन दहेत् कृत्वा मृद्दिग्धं सञ्चयार्थतः ॥२६७॥
देशान्तरप्रमीतस्य साग्निकस्य द्विजन्मनः ।
यदा प्रतिकृतेर्द्दाह स्तदहस्तत् क्रिया मता ॥
तदहश्चेत् प्रदुष्येत केनचित् सूतकादिना ॥२६८॥

—*—

## सूतकानन्तरं कुर्य्यात् पुनस्तदहरेव तु ।

—*—

109. **अत्र पैठीनसिरपि,—**

अनग्निमत उत्क्रान्तेराशौ चादि द्विजातिषु ।
दाहादग्निमतो विद्याद्विदेशस्थे मृते तथेति ॥२६६॥

---

१(‡) 'वाज्योत्पावैकवर्जितम्' इति भिन्नः पाठः ।
,, अत्र उत्पावः, वाज्योत् पावकम्' इति ज्ञेयम् ।

अथ पर्णनरे दग्धे पात्रन्यासे कृते सति ।
गतेष्वग्निषु तद्देहाद्यद्धंवलभ्यते कचित् ॥
तदार्द्धं दग्ध्वा काष्ठानि तानि निर्म्मथ्य तन्दहेत् ॥३००॥
यद्यर्द्धं दग्धा काष्ठन्तु तदीयश्चेन्न लभ्यते ।
तदा तदस्थिखण्डश्च प्रदातव्यं महाजले १(*) ॥३०१॥ इति ।

110. **ब्रह्मपुराणे तु पर्णशरीरे विशेषो यथा,—**

प्रेताकारञ्च तत् कुर्य्याद्धस्तपादादिचिह्नितम् ।
अपेत इति जप्त्वा वै देहे तद् विधिपूर्व्वकम् ॥३०२॥
नराकारे विभागोऽत्र वृन्तानां प्रतिपाद्यते ।
षष्ट्युत्तरञ्च···त्रिशत संख्याकानां यथाविधि ॥३०३॥
च त्वारिंशच्छिरःस्थाने ग्रीवायाञ्च दशैव तु ।
उरः स्थाने शतं दद्यात् षष्टिञ्च जठरोदरे ॥३०४॥
बाह्वोः स्थाने शतन्दद्यात् त्रिंशद्वै जानुजङ्घयोः ।
दद्याच्चत्वारि शिश्ने तु षड्दद्याद् वृषणद्वये ॥३०५॥
पादाङ्गुलीषु दशकं कल्पयेदस्थिसंग्रहम् ।
बाहुजङ्घापाणिपादेष्वर्द्ध मर्द्धं प्रकल्पयेत् ॥३०६॥
सञ्चयः पितृमेधश्च स्मृत स्तत्रापि याज्ञिकः ।
पलाशवृन्तैर्दाहः स्यादस्थ्यलाभेऽग्निहोत्रिणः ।
दर्भैरनाहिताग्नेः स्याद् हिरण्यायितं तद्विदुरिति ॥३०७॥

111. **कात्यायनोऽपि,—**

विदेशमरणेऽस्थीनि आहृत्याभ्यज्य-सर्पिषा ।
दाहयेत्तदुपाच्छाद्य पात्रन्यासादि पूर्व्ववत् । ( द्वद्वयम् )
अस्थ्नामलाभे पर्णानि शकला युक्त्यावृताः ।
दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकम् ॥३०८॥
अनयैवावृता नारी दग्धव्या या व्यवस्थिता ।
अग्निप्रदानमन्त्रोऽस्यां न प्रयोज्य इति स्थितिः ॥३०९॥
व्यवस्थिता—अव्यभिचारिणी इति ।

---

१(*) महानदी,—महानद्यां, गङ्गायाम्, वारिधौ च ।

112. **आश्वलायनकारिकायान्तु, प्रकारान्तरमुक्तम् ।**

अस्थिनाशे पर्णावृतैः पुरुषं प्रतिकल्पयेत् १(*) ।
अशीत्यर्द्धं शिरः स्थाने ग्रीवायां दश योजयेत् ॥३१०॥
उरसि त्रिंशतं दद्याद्विंशतिं जठरे न्यसेत् ।
बाहुद्वये शतं दद्यादङ्गुलीषु तथा दश ॥३११॥
द्वादशार्द्धं वृषणयोरष्टार्द्धं शिश्न एवतु ।
ऊरुदेशे शतं दद्यात्त्रिशतं जानुजङ्घयोः ॥३१२॥
पादाङ्गुलीषु दशचेत्येवं षष्ट्युत्तरन्तथा ॥३१३॥
मस्तके नारि केलन्तु अलाबुं तालुके तथा ।
पञ्चरत्नं मुखेन्यशेजिह्वायां कदलीफलम् ॥३१४॥
शवन्तु,–ऊर्णासूत्रेण संवेष्ट्य यवपिष्टेन लेपयेत ॥ इति ।
द्रव्यान्तराक्षेपोऽवयवेपूक्तः ।

113. **निगमे,—**

मस्तके कदलीन्दद्या न्नारिकेलं शिरः स्थले ।
ललाटे कदलीश्चैव दन्तेषु दाड़िमान्न्यसेत् ॥३१५॥
कर्णयोः कंकणे दद्यान्नेत्रयोश्च कपर्दकौ ।
तिल पुष्पं नासिकायां नाभावाम्रफलं न्यसेत् ॥३१६॥
पुरीषे गोमयं दद्याम्मूत्रे गोमूत्रमेव च
रेतः स्थाने पारदन्तु वृन्ताके वृषणद्वये ॥३१७॥
शिश्नेतु गृञ्जनन्दद्यात् केशेषु कटि केशरान् ।
लोमसूर्णाः प्रदातव्या मांसेतु यवपिष्टकम् ॥३१८॥
पञ्चामृतैः पञ्चगव्यैः प्रोक्ष्य जीवन्तु भावयेत् ।
पुष्पचन्दनधूपैस्तु उपवीतेन चार्चयेत् ॥३१९॥
ततः संस्कारकरणं स्वशाखोक्तविधानतः । इति ।
अथ पुनः संस्कारेच कालशुद्धिर्विधीयते २(†) ॥३२०॥

---

१(*) शरनिर्मित मूर्त्तौ, पलाश पत्र विन्यासः प्रागुक्तरूपः ।

२(†) कालशुद्धिः ज्योतिः शास्त्र-धर्म्म शास्त्रानुसारेण ज्ञेया ।

114. **नाायणभट्टीये,—**

आशौ चमध्ये एव पुनः संस्कारकरणे यथा सम्भवं दिनं शोध्यम्। कालान्तरे नारायणवल्यादिकं कृत्वा यदा क्रियते तदा सर्व्वथाशोध्यमेव। यथा, सम्वत्सरात्तषण्माषाद्बोदूर्ध्वं प्रेतकार्य्यें उत्तरायणः श्रेयान्। तत्रापि कृष्णपक्षः। तिथिषु—नन्दां त्रयोदशीं चतुर्द्दशीं दिवक्षयतिथिश्च वर्ज्जयेत्।

## वारेषु—शनिशुक्रौच वर्ज्यौं।

115. **नक्षत्रेषु—**

भरणी-कृत्तिका-श्लेषा-मघा मूल-धनिष्ठादिपञ्चक-त्रिपुष्कराणि सर्व्वथा-वर्ज्ज्याणि। रोहिणीपुनर्व्वसूत्तरफल्गुनीचित्रा-विशाखानुराधा-पूर्व्वा-षाढ़ा अपि वर्ज्या इत्येके।

116. **योगेषु च—**

व्यतीपात-परिघ-वैधृतिविस्कुम्भा अपि वर्ज्ज्या विशिष्टकरणञ्च १(†)। कर्त्तुश्चतुर्थाष्टम्-द्वादशस्थे चन्द्रे चातिदोषः। सर्व्वथा दिन शुद्ध्यसम्भवेऽतिदुष्टं वा(अ)त्याज्य नक्षत्रं ग्राह्यम्।

आन्तर नक्षत्रन्तु पुनःसंस्कारेवर्ज्ज्यमेव। नन्दायां शुक्रे चतुर्द्दश्यां त्रिजम्मनक्षत्रेषु नवश्राद्धमेकोद्दिष्टं प्रतिपिद्धम्। एकादशाह्यदौ-ननिषेधः। तत्र तिथ्यादि नशोध्यम्।

तत्रापि युगादि-मन्वादि— संक्रान्त्यमावास्या-गयागङ्गासु प्रेतकार्य्यें पुनः संस्कारेच न किञ्चिदपि पुनः शोध्यमिति।

117. **आश्वलायन गृह्यपरिशिष्टेऽप्येवमेवाभिहितम्।**

## यथा,—

अथातीत संस्कारः स चेदन्तर्द्दशाहं स्यात्तत्रैव तत् सर्व्वं समापयेत्। ऊर्द्ध्वं चेदाहिताग्नेर्द्दाहादारभ्य सर्व्वमाशौचं कार्य्यम्। यथाकालमन्येषु पत्नीपुत्रयोः पूर्व्वमगृहीताशौचयोः सर्व्वमाशौचम्। गृहीताशौचयोः

---

१(†) मुहूर्त्तचिन्तामणि—ज्योतिस्तत्त्व—दीपिकादिषु विद्यते।

कर्म्माङ्गं त्रिरात्रम् । अत्र संस्कारोऽञ्जलयः शतं दश वा भवन्ति । यदा शतं तदा प्रथमेऽह्नि त्रिंशदञ्जलय स्त्रयः त्रयः पिण्डा द्वितीये चत्वारिंशदञ्जलयश्चत्वारः पिण्डाः । तत्रैव सञ्चयनञ्च ।
अथ तृतीये त्रिंशदञ्जलयस्त्रयः पिण्डा इति विभागः । अथ यदि दशाञ्जलय स्तदा प्रथमेऽह्नि त्रयोद्वितीये च चत्वारः पिण्डसञ्चयनम् । तृतीये त्रय एकैकः पिण्ड इति विभजेन्नवश्राद्धानि । प्रथमेऽह्नि द्वीतीयएकैकम् , तृतीये द्वे दद्यादेकैकमेव वा ।
यथाप्राप्तमन्यद्दाहादस्थीनि संस्कुर्यात् । सोऽयमतीतसंस्कारः । उदगयने शुक्लपक्षे प्रशस्यते ।
नैव नन्दा त्रयोदशी भूत दिनक्षयेषु । न सौरिशुक्रयोर्य्याम्यायने चेदार्द्राश्लेषामघा मुलधनिष्ठादिपञ्चकम् ।
त्रिपुष्करेपूत्तरापाढ़ाम् । ऋक्षेपु रोहिणी पुनर्व्वसुफल्गुनीचित्रा-विशाखानुराधापूर्व्वापाढ़ा, त्रिपुष्करेपु ( नेत्येके ) नैव व्यतीपाते वैधृतौ विषुवे च । कर्त्तुश्चतुर्थाष्टम-द्वादश चन्द्रमः सु न च ।
काकादिस्पर्शोपहतेर्व्वास्थपु संस्कुर्य्यात् । तानि गोक्षीरेण अष्टाविं-शति( धा )पावमानीभिः १(*) शुद्धमतीभिश्च २(†) क्षालयित्वाऽथ संस्कुर्य्यात् । अस्थ्यलाभे त्रीणि शतानि षष्टिश्च पालाशवृन्तान्याहृत्य-तैर्यथावयवं पुरुषरूपं कुर्य्यादित्यादि । अग्न्यारण्योरारूढ़े प्रमीपेत् । यति र्यदिग्नतं कृत्वा मथित्वाग्निं कृत्वा वोपायरोहणं घृतञ्च द्वादशोपात्तं तूष्णीं हुत्वा शव क्रियेत्याश्वलायन स्मरणञ्च ॥

—*—

## अथ देशान्तरमृतस्य विच्छिन्नाग्नेर्नष्टारणेश्च संस्कार प्रकारः ।

—*—

### तद् यथा—

प्रोषितश्चेन्मृतस्तस्य विशेषः प्रतिपाद्यते ।
पराकद्वयमष्टौवा कृत्वा कृच्छ्रान् सुतादिभिः ॥३२१॥ इति ।

---

१(*) ॐ पावमानीः 'इत्याद्यारभ्य सर्पिमंधूदक मित्यन्तमेकोनविं शति सूक्तानि ।
२(†) ॐ 'यतोमिन्द्रं स्तवाम' इत्यारभ्य, वाजं सिषाधति' इत्यन्तं त्रि सूक्तम् ।

सम्प्रदानञ्च(स्य)सिद्ध्यर्थं पराकद्वयमष्टौ कृच्छ्रान्वा कृत्वा अग्निविच्छेद-दिवसगणनया यथासंख्यं प्रायश्चित्तं कृत्वा सुतादिभिः पश्चात् संस्कारः कार्य्यः ।

## अग्नि विच्छेद प्रायश्चित्तमाह ,

118. **कात्यायनः,—**

यावन्त्यव्दान्यतीतानि निरग्नेर्विप्रजन्मनः ।
तावन्ति कृच्छ्रानि चरेद्‌····हौम्यं दद्यात् प्रयत्नतः १(*) ॥३२२॥ इति ।
कृच्छ्रान्यनुष्ठाय होमं कुर्य्यादिति ।

## संस्कार प्रकार माह ,

119. **रेणुः—**

स चेद्विच्छिन्नवह्निः स्याद्बहुकालं ततोमृतः ।
गृह्यान्तरोक्तमाधानं संस्काराय तदुच्यते ॥३२३॥
प्राचीनावीतिना कुर्य्यादग्न्यागारे तथा ख(स्त्र)रान् ।
प्रेताग्नीनां सुसंस्कृत्य प्रेतस्वाम्यासने क्षिपेत् ॥
नर्य्यालयेऽरणीं स्थाप्य मन्थेघ(व)स्येति मन्त्रतः ॥३२४॥
यस्याग्नयोजुह्वतो मांसकामाः,
सङ्कल्पयन्तु ते यजमानमांसम् ।
खादन्तु ते वर्हिषि सादिताय स्वर्गम् ;
लोकश्चेमं प्रेतं नयन्तु तूष्णीम् ॥ ?३२५॥
तूष्णीमुद्धृत्य शंस्याग्नि संस्कृतेन च सर्पिषा ।
शंस्ये हुत्वा स्रुचा तुष्णीं गृहीत्वा द्वादशस्रूवान् ॥३२६॥
दक्षिणाग्निं समुद्धृत्य निदहेत् पूर्व्ववच्छवम् ।
उच्छिन्नाग्नेर्म्तस्याथ नस्तः पूर्व्वे यदारणीम् ।३२७॥
आनीयान्येतयोः प्रेत-पाणिं स्थाप्याथ दक्षिणम् ॥
अ(ज)यन्त) इति पुत्रादिः समारोप्य यदुर्ज्जयेत् ॥३२८॥
मृताग्नयाधानवत् सर्व्वं कृत्यातं पूर्व्ववद्दहेत् ॥
अनाहिताग्नेरप्येवं मृताधानं यथोदितमिति ॥३२९॥

—*—

१(*) अत्र पाठशुद्धिः सन्दिग्धा, आर्षोऽयं पाठः ।

## अथ साग्नि र्यदि दुर्म्मरणमृत स्तत्संस्कार-प्रकारमाह,

—*—

120. **पराशरः,—**

चण्डालेन श्वपाकेन गोभिर्विप्रहतो यदि ।
आहिताग्निर्मृतोविप्रो विशेषेणात्म घातकः ॥३३०॥
दहेत्तं ब्राह्मणंविप्रो लौकाग्नौ मन्त्रवर्ज्जितम् । १(*)
तदस्थीनि पुनर्गव्यक्षीरेण क्षालयेत्ततः ॥
स्वेनाग्निना स्वमन्त्रेण पृथगेतत् पुनर्दहेदिति ॥३३१॥

तदपि वत्सरान्ते षण्मासान्ते वा प्रायश्चित्त-नारायणवली कृत्वा श्राद्धादि-कार्य्यम् ।

121. **तदाहाङ्गिराः—**

चण्डालादुदकात् सर्पाद्ब्राह्मणाद्वैद्युतानलात् २(†) ।
दं ष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्म्मणाम् ॥३३२॥
उदकं पिण्डदानञ्च प्रेतेभ्यो यत् प्रदीयते ।
नोपतिष्ठति तत् सर्व्वमन्तरिक्षे विनश्यतीति ॥३३३॥

122. **आश्वलायनोऽपि—**

चाण्डालादित्यादि-पापकर्म्मणामित्यन्तमुक्त्वोवाच ।
न संस्कारविधिस्तेषां नैव कार्य्योदकक्रिया ॥३३४॥
रोदनं नैव कर्त्तव्यं सूतकं न च बन्धुभिः ॥
दग्ध्वाशरीरं लौकाग्नौ संस्थाप्यास्थीनि यत्नतः ३(‡) ।
प्रायश्चित्तं तु कर्त्तव्यं पुत्रैश्चान्द्रायणत्रय मिति ॥३३५॥

अयमाशौचादि निषेधो दाहादिकालावच्छिन्नस्यैव न सर्व्वथा । विप्रगोनृपहतानामणवक्षं चात्मघातिनामिति तत्कालं आशौचस्य मिताक्षराया मुक्तत्वात् ।

---

१(*) ‘दहेत्तं ब्राह्मणं लौकिकाग्नौ’ इत्यमपि पाठः ।

२(†) ‘अतभक्षणात्’ इति पाठान्तरम् ।

३(‡) ‘दग्ध्वा शरीरं’ ” ”

” ‘तत्कालेष शौचस्य’ इतिभिन्नः पाठः ।

123. मनुरपि,—

वृथा सङ्करजातानां प्रव्रज्यासु च तिष्ठताम् ।
आत्मनस्त्यागिनाञ्चैव निवर्त्ततोदकक्रियेति ॥३३६॥

वृथाजाताः पञ्च महायज्ञरहिताः । संकरजाताः प्रतिलोमजाताः ।

124. याज्ञवल्क्योऽपि—

पाप(ख)ण्डयना श्रितास्तेनाभर्त्तृघ्न्यः कामगादिकाः ।
सुराप्य आत्मघातिन्यो नाशौचोदकभाजनाः इति ॥३३७॥

वेदवाह्यलिङ्गधारणं पापण्डम् । अनाश्रिताः सत्यप्यधिकारे आश्रम-विशेषरहिताः । स्तेनाः ब्राह्मणस्वर्णव्यतिरिक्तोत्तमद्रव्यापहारिणः । सुराप्य-इत्यादेरुद्देश्यगतत्वाल्लिङ्गमविवक्षितम् । आत्मत्यागिनो—बुद्धिपूर्व्वकमात्मघातिनः ।

एतन्मरणे अशौचमुदकादि न कार्य्यमित्यर्थः । इदं सव्व बुद्धि-पूर्व्वकमृतानामेव । प्रमादेनैतैर्मृतानां विशेषोऽनुपदमेव वक्ष्यते । नारायणवलिविषये तु—

125. वृद्धपराशरः—

अथान्यदपमृत्यूनां शुद्ध्यर्थं श्राद्धमुच्यते ।
दन्तिशृङ्गिगरव्यालनीराग्न्युद्वन्धनैस्तथा ॥३३८॥
विद्युन्निर्घातवृक्षैश्च चाण्डालैः स्वात्मनाहताः ।
व्रणसङ्घातकीटैश्च म्लेच्छैश्चैव तथा हताः ॥३३९॥
पापमृत्यव एते वै तच्छुभार्थमथोच्यते ।
नारायणवलिः कार्य्योविधानन्तस्य तूच्यते ॥३४०॥
ऊर्द्ध्वं षन्मासतः कुर्य्यादथवोर्द्ध्वन्तु वत्सरात् ।
तेषां पापव्यपोहार्थं सम्प्रदानत्वसिद्धय, इत्यादि ॥३४१॥

126. मिताक्षरायाञ्च,—

नारायण-वलिः कार्य्यो लोकगर्हाभयान्नरः १(*) ।
तथा तेषां भवेच्छौचं नान्यथेत्यव्रवीद्यमः ॥३४२॥
तथा तेभ्योऽपि दातव्यमन्नञ्चैव सदक्षिणमिति ॥३४३॥

---

१(०) नारायणवलिः,—हेमाद्रौनिवन्धे, विश्वनाथ पद्धतौचास्ति ।

127. **व्यासोऽपि,—**

नारायणं समुद्दिश्य शिवं वा यत् प्रदीयते ।
तस्य शुद्धिकरं कर्म्म तद्भवेन्नैतदन्यथा ॥३४४॥

128. **षड्विंशन्मतेऽपि,—**

गो-ब्राह्मण-हतानाञ्च पतितानां तथैव च ।
ऊर्द्ध्वं सम्वत्सरात् कुर्य्यात् सर्व्वमेवौर्द्ध्वदेहिकमिति ॥३४५॥

129 **आश्वलायनगृह्यपरिशिष्टे तु,—**

द्विगुणादिप्रायश्चित्तं कृत्वा सद्यएव नारायणवलिपूर्व्वकमौर्द्ध्वदैहिकं कुर्य्यादित्युक्तम्। यथा, एवं दुर्मृतानां पलाशविधिमेव कुर्य्यात्। शरीराणि च तेषां महानद्यां क्षिपेत्।
अग्निन्तु वैतानमप्सु क्षिपेत्। गृह्यं चतुष्पथे। यज्ञपात्राणि दहेत्। संहृत्य सारञ्च तेषामब्दोर्द्ध्वमृतुत्रयोर्द्ध्वम्वा, नारायणवलिं कृत्वा संस्कारं कुर्य्यात्। अधिकम्प्रायश्चित्तं कृत्वा सद्य एव वेति ॥

130. **नारायणभट्टीयेऽपि,—**

अथैषां शक्ताः पुत्रादयः सन्ति, तदात्मघातनिमित्तं प्रायश्चित्तं द्विगुणं चान्द्रायणद्वयं तप्तकृच्छ्रचतुष्टयञ्च कृत्वा संस्कुर्य्युः। यद्वा त्रिंशत्-कृच्छ्राणि कृत्वा……… पाषण्डादीनां योग्यं सर्व्वप्रायश्चित्तञ्च कृत्वा सदैव कालान्तरे वा सम्वत्सरादर्व्वागपि दाहश्राद्धादि कुर्य्युरनित्यत्वा-दायुषः ॥

—*—

## नारायणवलिप्रयोगो वक्ष्यते ।

—*—

131. **अत्रायं भावः,—**

वैतानिकः आवसथिको वा यजमानो यदि दुर्मरणमृतस्तदोक्तप्रायश्चित्तं कृत्वा नारायणवलिं विधाय वैतानिकेनावसथ्येन वाग्निना तं संस्कुर्य्या-
132. दिति। यदत्र मिताक्षरायां १(*) गृह्यपरिशिष्टे २(†) चोक्तम्।

१(*) विज्ञानेश्वर कृतायां याज्ञवल्क्य स्मृतिव्याख्यायाम् ।
२(†) आश्वलायन गृह्यपरिशिष्टसन्दर्भे ।

नाशौचं नोदकं नाश्रू नदाहाद्यन्त्य कर्म्म च ।
ब्रह्मदण्डहतानाञ्च न कुर्य्यात् कट(न्ट)धारणमिति ॥३४६॥
कटं-प्रेतवहनसाधनम् ।
तथा, वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे ।
पात्राणि तु दहेदग्नौ यजमाने वृथा मृते ॥३४७॥ इति ।
तदकृतप्रायश्चित्तविषये सुताद्यभावविषयं वेति ज्ञेयम् ।

**अन्यथा—**

नारायणं समुद्दिश्य शिवं वा यत् प्रदीयते ।
तस्य शुद्धिकरं कर्म्म तद्भवेन्नैतदन्यथेति ॥३४८॥
व्यासवचनमुक्त्वा-नारायणवलिः प्रेतस्य शुद्ध्यापादानद्वारेण प्रेतक्रियायां सम्प्रदानत्वा(त्व)योग्यतां जनयतीति ।
और्द्ध्वदैहिकमपि सर्व्वं कार्य्यमेवेति मिताक्षराकारोक्तिरसङ्गता स्यात् ।
न चैतत् संस्कारः कथमलौकिकाग्निपरं, न श्रौतस्मार्त्ताग्निपरम् ।
'वैतानं प्रक्षिपेदप्सु चावसथ्यं चतुष्पथ' इति विशेषश्रवणादिति वाच्यम् ।
तथात्वे दुर्मृत्यु मृतानां लौकिकाग्निनापि न संस्कारो युज्यते ।
आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ।
तेषामपि तथा गङ्गातोये संस्थापनं हितम् ॥३४९॥
कृत्वाग्निमुदकं स्नानं स्पर्शनं वहनं य(क)था ।
रज्जुच्छेदाश्रुपातञ्च तप्तकृच्छ्रेण शुध्यति ॥
इति मिताक्षरायामेवाग्निनिषेधात् । 'स्वेनाग्निना स्वमन्त्रेण पृथगेतत्-पुनर्दहेदिति'-पूर्व्वोक्त पराशरस्मरणाच्चेति सर्व्वमनवद्यम् ॥

133. **अथ प्रमादेन दुर्मृत्यूनां विशेषमाहाङ्गिराः,—**

—*—

अथ कश्चित् प्रमादेन म्रियेताग्न्युदकादिभिः ।
तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया ॥३५०॥
प्रमादे निष्कृतिः कार्य्या द्वौकार्य्यौ तप्तकृच्छ्रकौ ।
कृच्छ्राणां पञ्च दश वा ततः संस्कारमाचरेदिति ॥३५१॥

अथ यदि बुद्धिपूर्व्वं शास्त्रविहितमार्गेणात्मानं घातयति प्रयागादौ तस्य दोष एव नास्ति । शास्त्रेणाभ्यनुज्ञातमरणत्वात् । तस्य प्रायश्चित्तमपि नास्ति । त्रिरात्रमेवाशौचं तत्रैव दशाहकृत्यकार्य्यम् । चतुर्थदिने एकादशाहकृत्यम् । पञ्चमदिने सपिण्डनम् ।

त्र्यहाशौचे पिण्डास्त्रयो दश वा भवन्ति । तत्राद्ये पक्षे यथा संख्यम् । द्वितीये तु प्रथमदिने पिण्डत्रयम् , द्वितीये तु प्रथमहिने पिण्डत्रयम् , द्वितीये पिण्डचतुष्टयम् , तृतीये पिण्डत्रयम् । तथा दशाञ्जलिपक्षे प्रथमेऽह्नि त्रयोऽञ्जलयः । द्वितीये चत्वार स्तृतीये त्रय इति । शताञ्जलिपक्षे प्रथमेऽह्नि त्रिंशद् द्वितीये चत्वारिंशत् । तृतीये त्रिंशदिति ज्ञेयम् ॥

एवमन्यत्रापि त्र्यहाशौचे वेदितव्यम् ।

134. **तथाच मिताक्षरायामुक्तम्—**

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥३५२॥
तत्र त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः ।
तृतीयेतूदकं कृत्वा चतुर्थे श्राद्धमाचरेदिति ॥३५३॥

135. **विहितमरणफलमुक्तं स्तवकादिभागे—**

अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्य्यतः ।
जलानशनमृग्वग्नि महाप्रस्थानमिष्यते ॥३५४॥
"समाः सहस्राणि तु सप्त वै जले' इत्यादिना ।३५५॥

136. **अथ देशान्तरगतस्य जीवद्वार्तानाकर्णने सति पितृ-विषये जातूकर्ण्यः—**

पितर्य्युपरते यस्य न वार्ता नैवचागतिः ।
ऊर्द्ध्वं पञ्चदशाद्वर्षात् कृत्वा तत् प्रतिरूपकम् ॥३५६॥
कुर्य्यात्तस्य च संस्कारं यथोक्तविधिना ततः । इति

**त(य)था,—**

चान्द्रायणत्रयं कृत्वा त्रिंशत् कृच्छ्राणि वा सुतैः ।
कुशप्रतिकृतिं (कृत्वा) दग्धा कार्य्या शौचादिका क्रिया ॥३५७॥

देशान्तरगतो नष्ट स्तिथिर्नज्ञायते यदि १(*) ।
कृष्णाष्टमी ह्यमावास्या कृष्णा वैकादशी तिथिः ॥३५८॥
उदकं पिण्डदानञ्च तत्र श्राद्धञ्च कारयेदिति—पराशरः ।
पितृव्यतिरिक्तविषये तु ,

137. **बृहस्पतिः—**

नाकर्ण्यते यस्यवार्त्ता यावद्द्वादश वासरम् ।
कुशपुत्रकदाहेन तस्य स्यादवहारणमिति २(†) ॥३५९॥

138. **देवजानीये—**

तस्य पूर्ण(र्व्व)वयस्कस्य विंशत्यब्दादतः क्रिया ।
ऊर्द्धपञ्चदशाब्दात्तु मध्यमे वयसि स्मृतेति ॥३६०॥

**तथा,—**

महापातकसंयुक्तो दैवात्स्यादग्निमान् यदि ३(‡) ।
पुत्रादिः पालयेदीग्नन् युक्त आदोष संक्षयात ॥३६१॥
पालयेद् ,—होमेष्टिकरणादिना रक्षेत् । युक्तो-यत्नवानित्यर्थः ।
प्रायश्चित्तं न कुर्य्यादूयः कुर्व्वन्वा म्रियते यदि ।
गृह्यनिर्व्वापयेच्छ्रौतम( स्वं )स्येत् सपरिच्छदम् ४(०) ॥३६२॥

**यद्वा—**

प्रक्षिपेदप्सु वैतानं आवसथ्यं चतुष्पथे ।
पात्राणि च दहेदग्नौ यजमाने वृथा मृते ॥३६३॥
पात्राणि दद्याद्विप्राय दहेदप्स्वेव वा क्षिपेत् ।
सादयेदुभयं वाप्सु( वाक्षु )अद्भ्योऽग्निर्निरवद्यत ॥३६४॥

139. इति कारिकायाम् ५(S) । अथ यदि दाहे क्रियमाणे यद्यग्निः शाम्येत् तदा विशेषमाह ,—

---

१(*) 'देशान्तरगतेनष्टे, इति भिन्नः पाठः ।

२(†) अथावहारणं, कुशपुत्तलिकादाहात् परं विहितकृत्यं विधेयमिति बोध्यम् ।

३(‡) स्मृत्यन्तरे, 'ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह' ॥
इति पञ्चविधं महापातकम् ।

४(०) अत्र, अस्येत्, 'सम्प्रज्येत्' इति पाठान्तरद्वयमस्ति ।

५(S) प्रसङ्गात् पूर्व्वमप्येतदुक्तम् । अत्र यद्वेति विशेषोक्तिः ।

140. **रेणुः—**

गतेष्वग्निषु तद्देहाद्यर्द्धं चेल्लभ्यते क्वचित् ।
तदार्द्धदग्धकाष्ठन्तु तदीयश्चेन्नलभ्यते ।
तदा तच्छवखण्डञ्च प्रक्षेप्तव्यं महाजले ॥३६५॥

**अन्यत्रापि,—**

अथाग्निनाश स्तर्हि स्यादाहिताग्नेस्तदोच्यते ।
नद्योल्मुकं मथित्वैनं संस्कुर्य्युस्तदभावतः ॥३६६॥
तद्भस्मपृष्ठकाष्ठेन मथित्वा निर्दहेच्च तम् । इति ।
पुनर्दाहे न मन्त्राद्या प्र वर्त्तन्ते पूर्व्वत एव निष्पन्नत्वात् ॥३६७॥

141. **हेमाद्रौच, यमः—**

यजमाने चितारूढ़े पात्रन्यासे कृते सति ।
वर्षाद्यभिहते वाग्नौ कथं कुर्व्वन्ति याज्ञिकाः ॥३६८॥
शेषं लब्ध्वा त्वदग्धेन निर्मन्थं तत्र कारयेत् ।
शेषालाभे तदा कुर्य्याद् दग्धशेषस्य वा पुनः ॥३६९॥
अप्सु प्रास्यति शेषन्तदाग्नेयन्तत् स्मृतं बुधैः ।
हुत्वा वा लौकिके वह्नौ भूर्भुवःस्वर्घृताहुतीः ॥३७०॥
स्रुवेण वास्रुचातेन दग्धशेषं क्षिपेत्ततः । इति ।

—*—

## अथ रात्रि मृतस्य संस्कारः ॥

—*—

142. **देवजानीये, निगमवाक्यम्—**

रात्रौ वा रात्रिशेषे वा म्रियन्ते चेद्द्विजातयः ।
दाहं कृत्वा यथान्यायं द्वौ पिण्डौ निर्व्वपेत् सुतः १(*) ॥३७१॥

143. **तत्रापि—**

सन्ध्यागम्वा तथा रात्रौ दाहः पाथेयकर्म्मच ।
नव श्राद्धञ्च नोकुर्य्यात् कृतं निष्फलतां व्रजेत् ॥३७२॥

---

१(*) यथान्यायमिति, अन्त्येष्टिविधानपद्धत्यनु सारेणेति ।

## इति निजोक्तेरेव ।

144. **अन्यत्रापि,—**

प्रेतदाहं नव श्राद्धं नग्नप्रच्छादनन्तथा ।
रात्रौ न कुर्य्यात् सन्ध्यायां यदि कुर्य्यान्निरर्थकमिति ॥३७३॥

एवञ्च रात्रि सन्ध्यानिषेधाद्दिवससन्ध्यायां न, निषेध इति गम्यते ।

**यद्वा, दिन मृतस्यालस्यादिना रात्रिदाहनिषेधार्थे—**

'सन्ध्यायां' वा तथारात्रावित्यादिवचनमिति ज्ञेयम् ।

दिवा वा यदि वा रात्रौ शवस्तिष्ठति कर्हिचित् ॥३७४॥
तत् पर्य्युषितमित्याहु र्दहने तस्य का गतिः ।
पञ्चगव्येन संस्नाप्य प्राजापत्यत्रयञ्चरेत् ॥३७५॥
ततो दाहं प्रकुर्व्वीत पुत्रादिः शास्त्रतः क्रमादिति ।

दिवामृतस्य रात्रिदाहे प्रायश्चित्तश्रवणात् । तस्माद्दिवामृतस्य दिवव दाहः । रात्रिमृतस्य रात्रावेव पाथेयनवश्राद्धादि वर्ज्जितो दाहः कार्य्य—इति परमार्थः । तथा रात्रिमृतस्य क्रियार्थ कर्त्तृ-वपनं प्रातरेव कार्य्यम् ।

145. **उक्तञ्च, स्मृतिसंग्रहे,—**

वपनं दहनात् पूर्व्वं पश्चाद्वेति मृते गुरौ ।
न कुर्य्याचेद्वृथादाहः स्वयञ्च नरकं व्रजेत् ॥ ३७६॥
रात्रौ दग्ध्वा तु पिण्डान्तं कृत्वा वपनवर्ज्जितम् ।
नपनं नेष्यते रात्रौ श्वस्तदा वपनक्रियेति १(*)॥३७७॥

146. **यतिमरणे विशेषमाह, शातातपः,—**

एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् ।
न कुर्य्यात् पार्व्वणादन्यद् ब्रह्मीभूते यतिक्षये २(†) ॥३७८॥

147. **उशनापि,---**

एकोद्दिष्टं न कुर्व्वीत यतीनाञ्चैव सर्व्वदा ।
अहन्येकादशे प्राप्ते पार्व्वणन्तु विधीयते ॥३७९॥

---

१(*) श्वश्व:—परेऽहनि इत्यर्थः ।

२(†) यतिः संयतात्मा, यमादिपरायणः । अन्यद् मानवे धर्म्मशास्त्रे षष्ठेऽध्याये द्रष्टव्यम् ।

सपिण्डीकरणन्तेषां नकर्त्तव्यं सुतादिभिः।
त्रिदण्डग्रहणादेव प्रेतत्वं नैवजायत इति १(*) ॥३८०॥

148. **स्मृतिमञ्जर्य्याम्,—**

सुतैश्च वपनं कार्य्यं परहंसस्य सर्व्वदा।
कर्त्तव्यं खननं तस्य नाशौचं नोदकक्रिया ॥३८१॥
पत्नी च वपनं कुर्य्याद् वृषोत्सर्गं नकारयेत्।
एकादशे द्वादशेवा पार्व्वणतु विधीयत इति।
तत् संस्कार विधिस्तु विधानमालोक्तश्चतुर्थस्तवके द्रष्टव्यः॥ ३८२॥

—*—

149. **अथ वपने विशेषो देवजानीये,—**

वपनञ्च गुरुमरणे मृतदिने द्वितीये तृतीयेच पञ्चमे सप्तमेवा कुर्य्यात्।
सूतकान्ते च सूतकानिवृत्त्यर्थं पुनः कुर्य्यात्।

150. **तदुक्तं व्यासेन,—**

द्वितीयेऽनि कर्त्तव्यं क्षुरकर्म्म प्रयत्नतः।
तृतीये पञ्चमेवापि सप्तमे वाथवासरे ॥३८३॥
पूर्व्वं पूर्व्वत्रा संभवे एतेऽधिककल्पाः, तद्वपनं केषामित्यपेक्षायाम्—

151. **आपस्तम्ब आह,—**

अनुभविनाञ्च परिवपनमिति—अनुभाविनः पश्चाद्भाविनः पुत्रभ्रात्रादयः दुःखानुभाविनश्च पुत्राएवेत्यपरेव्याचक्षते।

**तत्र देशाचारतोव्यवस्था, तथा,—**

पुत्रः पत्नी च वपनं कुर्य्यादन्ते यथाविधि।
पिण्डदानोचितोऽन्योऽपि कुर्य्यादित्थं समाहितः ॥३८४॥
अत्रान्ते-दशमदिने।

## अथ बालसंस्कारविधिः।

—*—

152. **तत्र याज्ञवल्क्यः—**

ऊनद्विवर्षं निखनेन्न कुर्य्यादुदकन्ततः॥ इति

---

१(*) त्रिदण्डः—वाग्दण्डः, कायदण्डः, मनोदण्डः, इति।

ऊनेऽपरिपूर्णे द्वे वर्षे यस्य स ऊनद्विवर्षः तं प्रेतं निखनेद् भूमौ अवटं कृत्वा निदध्यान्नपुनर्दहेदित्यर्थः।

## तथा,—

सकृत्प्रसिञ्चत्युदकमित्यादिभिः प्रेतोद्देशेन विहितमुदकदानाद्यौर्द्ध्व-देहिकमपि न कुर्य्यात्। अयं च प्रेतो गन्धमाल्यानुलेपनादिभि-रलङ्कृत्य शुचौ भूमौ श्मशानादन्यत्रास्थिनिचयरहितायां बहि-र्ग्रामान्निखननीयः।

153. **तथाच, मनुः—**

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः।
अलङ्कृत्य शुचौ भूमा वस्थिसञ्चयनादृते ॥३८५॥
नास्यकार्य्योऽग्नि संस्कारो चापि कार्य्योदकक्रिया।
अरण्ये काष्ठवत्त्यक्त्वा क्षिपेयुस्त्र्यहमेवत्विति ॥

154. **तदन्यस्य तु,—**

आश्मशानादनु व्रज्य इतरोज्ञातिभिर्वृतः।
यमसूक्तं तथा गाथा जपद्भि लौकिकाग्निना १(*) इति ॥३८६॥

तत स्तस्मादूनद्विवार्षिकादिनरः पूर्णोद्विवर्षो योमृतोऽसौ श्मशान-पर्य्यन्तं ज्ञातिभिः सपिण्डैः समानोदकैश्च ज्येष्ठपुरः सरैरनुगन्तव्यः। अनुगम्य च 'परेयिवांस' मित्यादि स्वशाखोक्तयमसूक्तं यमगाथाश्च गायद्भि लौकिकाग्निना दग्धव्यः। यदि जातारणिर्नास्ति ततूसद्भावेतु तन्मथितेनैव दग्धव्यः। तस्याग्निसमुत्पाद्य कार्य्यमात्रार्थत्वेनोत्पत्तेः।

155. **लौगाक्षिणात्र विशेष उक्तः—**

तूष्णिमेवोदकं कुर्य्यात्तूष्णिं संस्कार कर्म्म च।
सर्व्वेषां कृतचूड़ाणामन्यत्रापीच्छयाद्वयमिति ॥३८७॥

**अस्यार्थः—**

चौलकर्म्मानन्तरकाले मृतौ नियमेनाग्न्युदकदाने स्यातामू। अन्यत्रापि

---

१(*) यमसूक्तं ऋग्वेदोक्तं प्रागुक्तम्। 'परेयिवांसम्' इत्यादि शुक्लयजुर्वेदेनास्ति। यमगाथा च गृह्यसूत्रव्याख्यानेविद्यते, तथाहि "अहरहर्नीयमानाम् गामश्वान्पुरुषांस्तथा वैवस्वतोनतृप्यति सुरापइव दुर्मदः" इति। तुलादानपद्धति सन्दर्भेऽपि यमसूक्तमस्ति।

नामकरणादूर्द्ध्वं अकृतचूडेपीच्छया प्रेताभ्युदयकामनया द्वयंस्या नियमेनेति ।

156. **मनुनाप्यत्र विशेषोदर्शितः—**

नात्रिवर्षस्य कर्त्तव्या वान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्य्यान्नाम्नि वापि कृते सति इति ॥३८८॥

उदकग्रहणं साहचर्य्यादग्निसंस्कारस्याप्युपलक्षणार्थम् । 'नात्रिवर्षस्येति' १(*) वचनात् कुलधर्म्मापेक्षया चूड़ोत्कर्षेऽपि वर्षत्रयादूर्द्ध्वमग्न्युदकदानादिनियमोऽवगम्यते । लौगाक्षिवचनाद्वर्षत्रयात्प्रागपिकृताकृतचूड़योः तयोर्नियम इति विवेचनीयम् ।

अथ यद्युनुपेत उपनीत स्तर्ह्याहिताग्न्यावृतः आहिताग्निदाह प्रक्रियया स्वगृह्यादिदाह प्रसिद्धया लौकिकाग्निना दग्धव्यः । तत्र यस्य क्लृप्तद्वारं कार्य्यरूपं प्रयोजनं सम्भवति भूमितोषणप्रोक्षणादिस्तदुपादेयम् । यत्पुनर्लुप्तप्रयोजनं पात्रप्रयोजनादितन्निवर्त्तते २(†) ।

157. **लौकिकाग्नौ वृद्ध याज्ञवल्क्यः—**

आहिताग्निर्यथान्यायं-दग्धव्यस्त्रिभिरग्निभिः ।
अनाहिताग्निरेकेन लौकिकेनापरोजनः । इति ॥३८९॥

अयम्भावः—नामकरणादर्व्वाङमरणे-निखननमेव नचोदकदानादि । ततऊर्द्ध्वं यावत्त्रिवर्ष-वैकल्पिकमग्न्युदकदानं । कृतचूड़स्यतु वर्षत्रयात प्रागपि नियतमग्ण्युदकदानम् । ततः परं यावदुपनयनं तूष्णीमेवाग्न्युदकदानं नियतम् । उपनयनादूर्द्ध्वं पुनः समन्त्रक मग्न्युदकदानंकृत्वा सर्व्वमे वौर्द्ध्वदेहिकं कार्य्यम् । एव मेवस्नातकस्यापि ।

158. **देवयाज्ञिकः—**

जन्मतः पञ्चवर्षाणि भुङ्क्ते दत्तमसंस्कृतम् ।
पञ्चवर्षाधिके धाले विपत्तिर्यदिजायते ।
वृषोत्सर्गादिकं कर्म्म कर्त्तव्यमुदकन्ततः ॥३९०॥

---

१(*) अत्रिवर्षस्येति—'ऊनत्रिवर्षस्ये'त्यर्थः ।

२(†) अत्र क्लृप्तप्रयोजनमिति च पाठान्तरमस्ति ।

श्राद्धानिषोड़शापाद्य सपिण्डीकरणं विना ।
यथोपजीवितो बालस्तत्तद्विप्राय दापयेदिति १(*) ॥३६१॥
तत्र ब्रह्मचारिस्नातकमरणे विधानविशेषं कृत्वा संस्कारः कार्य्यः ।

159. **तदुक्तं विधानमालायाम् ;—**

येषां कुले ब्रह्मचारी निधनं प्राप्नुयाद्यदि ।
तत् कुलं क्षयमाप्नोति सोऽपि दुर्गतिमाप्नुयात् ॥३६२॥
ब्रह्मत्वं प्राप्नुयाद्बोधिद्रुमेऽनवरतंवसेत् ।

**बोधिद्रुमोऽश्वत्थवृक्षः २(†) ।**

तस्यापि तस्य वंशस्य गतिमिच्छन्महीयसीम् ।
विधानञ्च विधायाशु और्द्ध देहिकमाचरेत् ॥३६३॥
मृतस्य म्रियमाणस्य षड़ब्दं व्रतमाचरेत् ।
त्रिंशद्वासोब्रह्मचारिभ्योदद्यात्कौपिनकान्नवान् ( तू ) ॥३६४॥
हस्तमात्राः कर्णमात्रा दद्यात् कृष्णाजिनानि च ।
पादुकाच्छत्रपात्राणि गोपीचन्दनमेव च ॥३६५॥
मणिप्रवालमालाश्च ब्रह्मसूत्राणि चार्पयेत् ।
मन्त्रैस्तल्लिङ्गकैर्दद्याद्ब्रह्मसायुज्यसिद्धये ॥३६६॥
अभावे व्रतिना पूज्याः गृहस्थाः साधवः शुभाः ।
एवं कृते विधानेन विघ्नस्तस्य न जायत इति ॥३६७॥

160. **शौनकेनतु—**

अर्कविवाहं कृत्वा तं संस्कुर्य्यादित्युक्तम् ।
ब्रह्मचारि मृतौ रीतिं कथयामि समासतः ॥३६८॥

**तद्यथा,—**

तत्रावकीर्णदोषस्य प्रायश्चित्तं प्रकल्पयेत् ।
द्वादशाब्दं षड़ब्दंवा त्र्यब्दं शक्त्याथवाचरेत् ॥३६६॥
स्नातकोब्रह्मचारी च निधनं प्राप्नुयाद्यदि ।
संयोज्यचार्कविधिना संस्कार्य्यौ तौ ततः परम् ॥४००॥

---

१(*) अत्र 'यज्ञोपजीविते' इति भिन्नः पाठः ।
२(†) 'बोधिद्रुमश्चलदलः' इतिकोषः । ज्ञानजनकः अश्वत्थवृक्षः ।
'अश्वत्थः सर्व्ववृक्षाणाम्' इति गीतावाक्यात् ।

कृत्वा व्रतविसर्गन्तु वह्निं स्थाप्योऽर्कमन्तिकात् ।
अन्वाधानं ततः कुर्य्यादाज्यभागान्तमाचरेत् ॥४०१॥
चतस्रोव्याहृतीर्हुत्वा अग्निं व्रतपतिं हुनेत् ।
अग्निं व्रतफलस्यापि सम्पादनमथापरम् ॥४०२॥
विश्वान् देवांस्तथाहुत्वा होमशेषं समापयेत् ।
पश्चादर्कसमीपे ( यः ) च शाखामादाय वा ततः ॥४०३॥
वट्वर्कयोर्विवाहस्तु कार्य्यश्चाग्निसमीपतः १(*) ।
हरिद्राचूर्णतैलेन तयोः स्यादनुलेपनम् ॥४०४॥
नान्दीश्राद्धं ततः कृत्वा होमकर्म्म समाचरेत् ।
अग्निं बृहस्पतिञ्चैव विवाहविधियोजकम् ॥४०५॥
यस्मै त्वं काममन्त्रेण घृतञ्च जुहुयात्ततः ।
व्याहृतीश्च ततोहुत्वा होमशेषं समापयेत् ॥४०६॥
वस्त्रयुग्मेनवाच्छाद्य संयोज्यार्कविवाहवत् ।
तोऽर्कशाखासहितं संस्कुर्य्याद्ब्रह्मचारिणम् ।
अन्यथा तु प्रकुर्व्वाणोवंशक्षयमवाप्नुयादिति ॥४०७॥

## अथैषां वाक्यानामेकवाक्यतया सन्दर्श्य प्रयोगः प्रोच्यते,—

ब्रह्मचारिमरणे षड़ब्दं त्र्यब्दं द्व्यब्दमेकाब्दंवा यथाशक्ति प्रायश्चित्तं पित्रादिः कृत्वा त्रिंशत्संख्याक-ब्रह्मचारिभ्यः कौपीनान् हस्तमात्राः कर्णमात्राः कृष्णाजिनानि पादुकाश्छत्राणि पात्राणि गोपिचन्दन-खण्डान् मणिप्रवालमयी जापमाला यज्ञोपवीतानि च तत्तन्मन्त्रेण दद्यात् । तावत् संख्याक ब्रह्मचार्य्यसंभवे गृहस्थेभ्योवा दत्वा तान्क्षमाप्य ब्रह्मचारिकुलस्य शान्तिरस्त्विवति तान्सम्प्रार्थ्य शान्तिर्भवत्वित्युक्ते ब्रह्मचारिण और्द्ध्वदेहिके कर्म्मणि सम्प्रदानयोग्यतासिद्धिरस्तु । तथा-स्त्विवति च तैः प्रत्युक्ते अग्निमुपसमादाय देशकालादिसंकीर्त्त्यामुक-गोत्रस्यामुकशर्म्मणोम्रियमाणस्य मृतस्यवा ब्रह्मचारिणोव्रतविसर्गं करिष्ये ! तदङ्गं हिरण्येन नान्दीश्राद्धं करिष्ये, इति सङ्कल्प्य तत्-

---

१(*) 'अत्रवटार्कयोः' 'वटाश्वत्थविवाहः' पाठान्तरद्वयं सम्भवति । वटु विप्रतनयोवेति बोध्यः ।

कृत्वाऽन्वाधानाद्याज्यभागान्तं कृत्वा च स्रुवेणाज्याहुतीर्जुहुयात्। ताश्च व्याहृतयश्चतस्रः (४)। ॐअग्नये व्रतपतये स्वाहा (५) १(*)। अग्नये व्रतानुष्ठानफलसम्पादनाय (६)। विश्वेभ्योदेवेभ्यः (७)। ततः स्विष्टकृदादि-होमकर्म्म समापयेदिति व्रतविसर्गः॥

—*—

## ततोऽर्कविवाहं कुर्य्यात्।

—*—

अर्कसमीपमागत्यार्कशाखामानीयार्कंब्रह्मचारिणौ हरिद्राचूर्णेन सतैलेनानुलिप्य पीतवस्त्रेणावेष्ट्य वस्त्रयुग्मेनाच्छाद्याग्निमुपसमाधाय देशकालादिसंकीर्त्त्यामुकगोत्रस्यामुकशर्म्मणोब्रह्मचारिणः स्नातकस्य वा और्द्ध्वदेहिधिकारसिद्ध्यर्थमर्कविवाहं करिष्ये। तदङ्गहिरण्येन नान्दीश्राद्धं करिष्ये इति सङ्कल्प्य तत् कृत्वान्वाधानाद्याज्यभागान्तं कृत्वाऽर्धं जुहोतीति।

ॐअग्नये स्वाहा (१)। वृहस्पतये स्वाहा (२)। विवाहविधियोजकाय स्वाहा (३)।

यस्मैत्वकामकामाय वयं सम्राड्यजामहे।

त्वमस्मभ्यं कामं त्वायेदं त्वं घृतं पिवस्व स्वाहा (४) कामायेदं न मम। ततश्चतस्रो व्याहृतीर्हुत्वा(४) स्विष्टकृदादि होमशेषं समाप्यार्कशाखया ब्रह्मचारिणं संयोज्य तया सहितं ब्रह्मचारिणं स्वशाखोक्तप्रकारेण तुषाग्निना दहेदिति ब्रह्मचारिमरणविधानम्॥

—*—

## अथ कुष्ठिमरणविधानम्।

—*—

161. तत्र शौनकः—

मृतस्यकुष्ठिनोदेहं निखनेद्गोष्ठभुमिषु।
वासरत्रितयात्तस्मादुद्धृत्यान्यत्र तन्दहेत्॥४०८॥
नगङ्गाप्लवनं कार्य्यं निक्षेपविधिरुच्यते।
षड़ब्दव्रतपूर्व्वेण विधिनान्त्यं क्रतुश्चरेत् २(†)॥४०९॥

---

१(*) शुक्ल यजुर्व्वेदे २।५ अः, मन्त्रः।
२(†) एतद्वचनं प्रायश्चित्तविवेके, प्रायश्चित्ततत्त्वादावस्ति। —षडाब्दं क्रतुं षन्तेष्ट्यादि ज्ञात्यम्।

## अत्रान्त्यक्रतुरन्त्येष्टिः ।

ततोऽस्थि सञ्चयं तस्य गङ्गायां प्रक्षिप्रेत् सुधीः ।
मासि मासि ततः कुर्य्यान्मासि श्राद्धानि पार्वणात् ॥४१०॥
संकल्पविधिना केचित् प्रयच्छन्ति मनीषिणः ।
इत्येतत् कुष्ठिनोद्धूर्द्ध कथितं शास्त्रकोविदैः ।
स्मृतिविद्भिरनूचानै र्मन्वाद्यैः पूतविग्रहैः ॥४११॥
इति कुष्ठिमरणे संस्कार विधानम् १(*) ।

—*—

## अथ रजस्वलामरणे संस्कार विधानम् ।

—*—

162. **स्मृति संग्रहे,—**

अन्तरिक्षे मृता ये च वह्नावप्सु प्रमादतः २(†) ।
उदक्या सूतिका नारी चरेच्चान्द्रायणत्रयम् ॥४१२॥
पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् ३(‡) ।
वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्व्वकम् , इति ॥४१३॥

163. **यज्ञ पार्श्वेतु , प्रकारान्तर मुक्तम्—**

तद्यथा, सूतिकायां मृतायान्तु कथं कुर्व्वन्ति याज्ञिकाः ।
कुम्भे सलिलमादाय पञ्चगव्यं क्षिपेदिह ॥४१४॥
तल्लिङ्गै र्व्वामदेवादिपुण्यर्ग्भिरभिमन्त्रयेत् ४(०) ॥
तल्लिङ्गैः,—पञ्चगव्यप्रकाशकैर्गायत्र्यादिमन्त्रैः ।
वामदेवादि-ऋग्भिरभिमन्त्रणं कलशस्यैव ॥४१५॥

---

१(*) 'संस्कारः सत्कारो वा' इति ग्रन्थान्तरस्थः पाठः :—

२(†) 'वह्नायाम्बात्प्रमादतः' ,, - ,, ,, ।

३(‡) पञ्चवारं पञ्चगव्यैः मन्त्रशोधितैः स्नापयेदित्यर्थः ।

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकैरिति इति पञ्चगव्यैः ।

४(०) पवित्रकुम्भे वामदेवादिभिः'कयानश्चित्रया' इत्यादिभिर्वा सम्यगभिमन्त्रयेदिति , पञ्चगव्ययुक्त मटस्थ जलम् ।

त्रिप्राणां वचनाल्लब्धा प्रायश्चित्तं यथोदितम् ।
कृत्वा धेन्वादि दत्वा वा कृच्छ्रान्यब्ददशत्रये १(*) ।
तेनैव शतकृत्वस्तां स्नापयेच्छूर्पमध्यतः ॥४१६॥
प्रक्षाल्य पञ्चगव्येन स्नापयित्वा रजस्वलाम् ।
स्नापयेत् पूर्व्ववत् प्रेतां प्रायश्चित्ते कृते सति ।
वस्त्रान्तरावृतां कृत्वा विधिवत्तां दहेद्बुधः । इति ॥४१७॥

164. **इदमपि त्र्यहादूर्द्धमेव न पूर्वमित्याह, वृद्धशातातपः—**

रजस्वलायाः प्रेतायाः संस्कारंयः समाचरेत् २(†) ।
ऊर्द्ध्वं त्रिरात्रात् स्नातायाः शवधर्म्मेण दाहयेदिति ॥४१८॥

165. **पूर्व्वं कर्त्तव्यमाह, देवलः ।**

कदाचिद्दैवसंयोगान्म्रियते चेद्रजस्वला ।
तस्या दाहो न कर्त्तव्यः क्षिपेदप्सु दिनत्रयमिति ॥४१९॥
अत्र देशकालानुसाराद् व्यवस्थेयम् ।

—*—

## अथोदक्यया सूतिकया वा स्पृष्टे प्रेतसंस्कारः ।

—*—

166 **यज्ञपार्श्वे एव,—**

उदक्याः सूतिका वापि यदि प्रेतं स्पृशन्ति हि ।
तस्यैव विधिरादिष्टो वात्स्येनै व महात्मना ३(‡) ॥४२०॥
रजस्वलायाः प्रेताया विधिरत्राप्यसंशयः ।
एष एव च विधिः कार्य्यः सूत्यामेकादशेऽहनीति ॥४२१॥

—*—

## अथास्य प्रयोगः प्रस्तूयते ।

—*—

रजस्वला वा सूतिका वा यदि मृता यदिवा शव स्ताभ्यां स्पृष्टः ।
तदामुं विधिं कृत्वा संस्कारः कार्य्यः ।

---

१(*) 'दशाब्दके' इति क्वचिदादर्शे पाठः ।
२(†) 'संस्कारं यत्समाचरेत्' 'संस्कारवत् समाचरे' दिति वा पाठः ।
३(‡) वात्स्येन महर्षिणा विहित इति । एतदुक्तं रजस्वलाया इत्यादि ।

**तद्यथा,—**

अद्येत्यादि संकल्पवाक्यमुच्चार्य्यामुकगोत्रायाः अमुष्याः सूतिकाया-रजस्वलाया वा, तथा तत् स्पृष्टस्य वा अमुकस्य प्रेतस्य रजस्वलाद्यव-स्थामरणनिमित्त प्रत्यवायपरिहारद्वारा, और्द्ध्वदेहिक योग्यत्वार्थम् । चान्द्रायणत्रयं धेन्वादिदानं पञ्चदशकृच्छ्रान्वा कृत्वा १(*) शूर्पेणाष्टोत्तर-शतस्नानानि कारयिष्ये ।

इति सङ्कल्प्य ब्राह्मणवचनेन यथासम्भवं प्रायश्चित्तं कृत्वा यवपिष्टेन प्रेतामनुलिप्य स्वयं स्नात्वा शूर्पोदकेन पृथक् पृथग्गृहीतेना-ष्टोत्तरशतवारं स्नापयेत् ।

ततः प्रेतां प्रक्षाल्य भस्मगोमय मृत्तिकाकुशोदकैः स्नापयित्वा कुम्भे सलिलं निधाय । पञ्चगव्यानि तत्तन्मन्त्रैः प्रक्षिप्य 'कयान' इत्यादिभिः २(†) पुण्यर्ग्भिरभिमन्त्र्य तेन कुम्भेन तां स्नापयेत् ।

**तत्र मन्त्राः—**

पावमान्यः स्वस्तयन्यः यदन्ति यच्चदूरके । 'आपोहिष्ठेति' तिस्रः 'कयान' इति तिस्रः ३(‡) ।

एवं संस्नाप्य पूर्ववस्त्रं परित्याज्य वस्त्रान्तरं परिधाप्य स्वशाखोक्त-विधिना दहेत् ।

इदन्तु चतुर्थदिन दशमदिनविषयम् । अन्यत्र तु रजश्वलां सूतिकाञ्च मलं प्रक्षाल्य स्नापयित्वा काष्ठवद्ध्वा तदनन्तरमुक्तविधिपूर्व्वक-विधिनादहेत् । तत् पृष्टं प्रेतन्तु सद्यएव संस्कुर्य्यात् ॥

---

१(*) चान्द्रायणादि व्रताद्याचरणाशक्तौ धेनुं पयस्विनीन्दद्यात् । धेनोरभावे दातव्यं तुल्यं मूल्यं न्नृषिकल्पितमिति । कृच्छ्रादि-विधानं प्रायश्चित्त विवेके भवदेवीय प्रायश्चित्त निर्णयादावस्ति ।

२(†) ॐ पावमान्यः स्वस्तयन्यः यदन्ति यच्चदूरके—इत्यादयः पावमान्यः सूक्तयः ।
ओँ आपोहिष्ठा मयोभुव स्तानऊर्ज्जे दधातन । महेरणाय चक्षसे ॥१॥
ओँ योवः शिवतमोरस स्तस्य भाजयतेह नः । उशतीरिव मातरः ॥२॥
ओँ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथाच नः ॥३॥ शुक्ल यजुः अः ११ मः ५० ॥

३(‡) ओँ कया नश्चित्र आभुव दूती सदावृधः सखा ।
कया शचिष्ठयावृता ।१। कस्त्वा सत्योमदानां मंहिष्ठो मत्सदन्धसः दृढ़ा चिदारुजेवसु ॥२॥
अभीषुणः सखीना मविता जरितॄणाम् । शतंभवा स्यूतये ॥३॥ शुक्ल यजुः अः २७ मः ४१

167. **अपरार्के तु—१(*) ।**

सूतिका विशेषमरणे प्रायश्चित्त विशेष उक्तः ।

यथा, सूतिका तु यदा साध्वी विस्नाता मरणं गता ॥४२२॥

त्रिवर्षं पूर्णपर्य्यन्तं शुध्येत् कृच्छ्रेण सर्व्वदा ॥४२३॥

एतत् प्रथमा हर्विषयम् ।

तथा, सूतिका तु यदा नारी विस्नाता मरणं गता ।

म्रियते चेत्तु सा साध्वी द्विवर्षं कृच्छ्रमाचरेत् ॥४२४॥

एतद् द्वितीयाहर्विषयम् ।

तथा, सूतिका तु यदा साध्वी विस्नाता मरणं गता ।

त्रिषण्णवदिनादर्व्वागेकाब्देन विशुद्ध्यतीति ॥४२५॥

एतत्तृतीयाह्नादि विषयमिति तत्रैव व्यवस्थापितम् ।

**सूतिकायास्तु,—**

प्रसूतिका यदा नारी प्राणांश्चैव परित्यजेत् ।

मासमेकावधिं यावत्त्रिभिः कृच्छ्रैर्विशुद्ध्यति ॥४२६॥

एतद्दशाहादुत्तरविषयम् । दशाहमध्ये तु पूर्व्वोक्तं पञ्चदशकृच्छ्रात्मकेनेति ।

यद्वा शक्ते ( क्यं ) शक्तिदेशकालानुसारेण व्यवस्थेति ॥

इति रजस्वलासूतिका तत् स्पृष्टमरणे संस्कारविधानम् २(†) ॥

—*—

## 168. अथ कात्यायन परिशिष्टोक्तं सूतिकारजस्वला-संस्कार विधानम् ।

—*—

169. **हेमाद्रौ,—**

अथातः सूतिकासंस्कारं व्याख्यास्यामः ।

सूतिकायां प्रेतायां पञ्चदशत्रीन्वा कृच्छ्रांश्चरित्वा तन्मलं प्रक्षाल्य धौत-

१(*) याज्ञवल्क्य सूतिकाख्या अपरार्कज्ञात, अन्या मिताक्षरा । अपरा दीपकलिका । बालक्रीडाच ।

२(†) 'पञ्चदशकृच्छ्रेण शुध्येत व्यासस्य वचनं यथा' इति पुस्तकान्तरे भिन्नः पाठः ।

वस्त्रं धारयित्वा कुम्भे, जलमादाय पञ्चधाकृत्वा पञ्चगव्यं १(*) तत्तन्मन्त्रैः कुम्भे क्षिप्त्वा, आपोहिष्ठादिभिः एव लिङ्गैरन्योदकेन प्रोक्षयित्वा, ब्राह्मणैरनुज्ञातः तेनैव कुम्भेन प्रेतां स्नापयेत्।
'सप्तभिः पावमानीभिः'२(†) यजुः पवित्रमन्त्रैः पञ्चगव्येन तत्तन्मन्त्रैश्च कुम्भशतैश्चापि विद्वद्भिः स्नापयित्वा, तिलधेनुं गां वा दक्षिणार्थं दद्यात्।
अन्यद्वस्त्रमाच्छाद्योर्द्ध्वदेहिक विधिना संस्कारं कुर्य्यात्।
रजस्वलामरणेऽप्येवमिति, अत्र दशाह त्र्यहात् पूर्व्वं सूतिका-रजस्वलयो र्मरणे पञ्चदशकृच्छ्राणि कार्य्याणि। तदुत्तरकाले कृच्छ्र-त्रयमिति विवेकः ३(‡)।

इति कात्यायण परिशिष्टोक्तं सूतिकारजस्वलामरणे संस्कारविधानम्॥

—*—

## अथ गर्भिणी मरणे संस्कारः।

—*—

### तत्रैव—४(§)

अथातोगर्भिणी संस्कारं व्याख्यास्यामः।
यदि गर्भिणी म्रियेत षण्मासादूर्द्ध्वं कर्त्ता पूर्व्ववत् श्मशानानयनादिचिति-कल्पनान्तं कृत्वा चितेः पश्चात् प्रेतां निधाय।
भर्त्ता पुत्रो वन्धु रन्यो वा धीरः सव्ये पार्श्वे नाभेरुपरि प्रेताया उदरं चतुरङ्गुलमात्रं लिखित्वा 'हिरण्यगर्भःसमवर्त्तताग्रे' इति हिरण्य क्षुरेण दर्भेणवोदरं निर्भिद्य गर्भस्थमादाय कुमारं दृष्ट्वा 'जीवतु मम पुत्र' इत्ये-नमभिमन्त्र्य वालं स्नापयित्वा हिरण्यमन्तर्द्धाय भूमौ निधाय ग्राम-

---

१(*) —क्वचिदादर्शे 'प्रेतायामिति' पाठोनास्ति। पञ्चगव्यन्तु गोमूत्रादि पञ्चकम्। तत्तन्मन्त्रै-र्गायत्र्यागोमूत्रमित्यादिमन्त्रैः शाखाभेदेन भिन्नैः। 'आपोहिष्ठा'। 'योवः शिवतमः'। 'तस्मा अरङ्गमाम'। इति मन्त्रत्रयम्। शुक्ल यजुः अः ११मः ५०। अः ११, मः ५२। अः ११, मः ५२। प्रागपि एते मन्त्राः प्रोक्ताः।

२(†) सप्तभिरिति। पावमानीसूक्तैः।

३(‡) अपरादर्शे ग्रन्थे 'अत्रेत्यादि' 'विवेकः' इत्यन्तः पाठः समस्तः।

४(§) तत्रैवेति—हेमाद्रिधृत सूतिकासंस्कारप्रकरणे इति।

श्मशानयोरन्तरं नीत्वा जातकर्म्म कृत्वा 'यस्तेस्तन' १(*)इत्यन्यस्याः स्तनं प्रतिधाप्य ग्रामं नयेत्।

कुमारीमप्येवन्तु प्रसूतेत्यूहो यदि न जीवेत् तदा प्रक्षाल्य तस्याः पार्श्वे निखनेत्। अथ प्रेतां पुण्याहोदकेन पञ्चगव्येन च स्नापयित्वा तस्या उदरच्छिद्रे स्रुवेणाज्यमादाय 'आयासाय स्वाहे' त्यनेनानुवाकेनाज्याहूतीर्हुत्वा मन्त्रोक्तविंशतिदेवताभ्यो यथा दैवतं त्याग' कृत्वा, २(†) अथ प्राणायस्वाहेत्यनेनानुवाकेन च हुत्वा मन्त्रोक्तसप्तदेवताभ्य स्त्यागं कृत्वा प्रेतां चितिमारोप्य चितां प्राक्शिरसं निधायेत्यादि दहनान्तं कृत्वा जठरमेवप्रायश्चित्तार्थं वेदपारायणीयकुटुम्बिने ब्राह्मणायाष्टकाधेनुं तिलधेनुं वा दद्यात्।

170. इतरवृद्धिरेकाहमेकोद्दिष्टं कुर्व्वन्तीति। अत्र 'आयासाय स्वाहेति' अनुवाको वाजसनेयके प्रवर्ग्यकाण्डेऽभिहितः ३(‡)।

171. प्राणायस्वाहेत्यनुवाकस्तु तत्रैवाश्वमेधिककाण्डेऽभिहितः ४(S)। अन्यत् स्पष्टम्॥

172-173 अत्र पूर्व्वं प्रायश्चित्तमप्युक्तं अपरार्के विष्णुधर्म्मोत्तरेण,—

यदा गर्भवती नारी सशल्या संस्थिता भवेत्।
कुक्षिं भित्वा ततः शल्यं निर्हरेद्यदि जीवति॥४२७॥
शल्यं गर्भं (गर्भात्) निर्हरेन्निष्काशयेत् दित्यर्थः।
प्रमीतं निक्षिपेत्तन्तु प्रायश्चित्तं ततः परम्।
सा त्रयस्त्रिंशता कृच्छ्रैः शुध्यते शल्यदोषतः॥४२८॥

---

१(*) —'हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम'। शुक्ल यजुः अः १३ मः ४।

—'यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः। येन विश्वा पुष्यसि वार्य्याणि सरस्वति तमिह धातवेऽकः। उर्व्वन्तरिक्षमन्वेमि'। शुक्ल यजुः अः ३८। मः ५। अत्र 'प्रति धाप्य' समारोप्य इत्यर्थः।

२(†) 'अपानाय स्वाहेति' वा स्यात्। प्रक्षतन्तु 'आयासाय स्वाहा' (१९) 'प्रायासाय स्वाहा, (२०) आयासादयोदेवाः। शुक्ल यजुः अः ३९। मः ११।

३(‡) 'प्राणायस्वाहा, अपानायस्वाहा, व्यानायस्वाहा, चक्षुषे स्वाहा, श्रोत्राय स्वाहा, वाचे स्वाहा, मनसे स्वाहा'। इति शुक्ल यजुः अ: २२, मः २३।

४(S) एतत् प्रागुक्तम्। शुक्ल यजुः ३९ अः। मः ११। 'संयासाय २१'। 'वियासाय २२'। 'उद्यासाय २३'। 'शुचे २४'। 'शोचते २५'। 'शोचते २६'। 'शोकाय २७'।

सगर्भदहने तस्या वर्णजं वधपातकम् ।
प्रायश्चित्तं चरित्वातु शुध्यन्ते पापकारिणः ।
दग्ध्वा तु गर्भसंयुक्तां त्रिरब्दं कृच्छ्रमाचरेदिति ॥४२९॥

एवं सति त्रयस्त्रिंशत् कृच्छ्रप्रायश्चित्तेन सगर्भां मृतां संशोध्य जठरभेदननिमित्तप्रायश्चित्तेनात्मानमपि संशोध्य, उक्तविधिना तां संस्कुर्य्यात् । सगर्भायास्तस्या दहने तु त्रैवार्षिकं प्रायश्चित्तं कर्त्ता कुर्य्यादिति तात्पर्य्यम् ॥

इति विधानपारिजाते गर्भिणी मरणविधानम् ॥

—*—

## अथ धनिष्ठा पञ्चक मृत संस्कारविधिः ।

—*—

174. **गरुडपुराणे,—**

आदौ कृत्वा धनिष्ठार्द्धमेतन्नक्षत्रपञ्चकम् १(*) ।
रेवत्यन्तं सदा दूष्यं अशुभं सर्व्वदा भवेत् ॥४३०॥
दाहस्तत्र नकर्त्तव्यो विवादः सर्व्वजातिषु ।
न जलं दीयते तेषु न शुभं सर्व्वथा भवेत् ॥४३१॥
पञ्चकानन्तरं कार्य्यं कर्त्तव्यं सर्व्वमन्यथा ।
पुत्राणां गोत्रिणां तस्य सन्तापोऽप्युपजायते ॥४३२॥
गृहे हानिर्भवत्येषु नक्षत्रेषु मृतश्च यः ।
यद्वा प्राणात्ययदिने विधिं कृत्वा ततो दहेत् ॥४३३॥

**अत्र विधिर्यथा—**

शवस्याथ समीपे तु क्षेप्तव्याः पुत्तलास्तथा ।
दर्भमयास्तु चत्वार ऋक्षमन्त्रैरभिमन्त्रिताः २(†) ॥४३४॥

यद्यप्यत्र चत्वार इत्युक्तं तथापि पञ्चमीं पादयोर्दद्यात् इति

---

१(*) अत्र नक्षत्र पञ्चकम्, 'धनिष्ठा, शतभिषा, पूर्व्वभाद्रं, उत्तरभाद्रं, रेवती' इत्येतानि नक्षत्राणि पञ्च ज्ञेयानि । अत्र विषादः-शताक्षरम् ।

२(†) 'ऋक्षमन्त्राभिमन्त्रिताः' इत्यत्र 'सप्त—सप्त' इति पाठान्तरद्वयमस्ति ।

विनियोगवाक्ये पञ्चंस्या उपादानादत्रापि पञ्चेति ज्ञेयम्।
ततोदाहः प्रकर्त्तव्यस्तैश्च पुत्तलकैः सहेति।

175. ब्रह्मपुराणेऽपि—

कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते।
न तस्योर्द्ध्वगतिर्दृष्टा सन्ततौ न शुभं भवेत्॥४३५॥
न तस्य दाहः कर्त्तव्यो विनाशः स्वेषु जन्तुषु।
पञ्चकानन्तरं कार्य्यं कार्म्मदाहादिकं खलु १(*)॥४३६॥
अथवा तद्दिने कार्य्यो दाहस्तु विधिपूर्व्वकम्।
धनिष्ठापञ्चके जीवोमृति यंदि कथञ्चन॥४३७॥
त्रिपुष्करे याम्यमे च कुलजान्मारयेदध्रुवम्।

**त्रिपुष्कर लक्षणञ्च वक्ष्यते,—**

**अत्र याम्यं भरणी नक्षत्रम्।**

तदनिष्टविनाशाय विधानं समुदीर्य्यते।
दाहदेशे शवं नीत्वा स्नापयेच्च प्रयत्नतः॥४३८॥
दर्भाणां प्रतिमाःकार्य्याः पञ्चोर्णाः सूत्रवेष्टिताः।
यवपिष्टेनानुलिप्ता स्ताभिः सह शवं दहेत्॥४३९॥
प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः।
प्रेतहर्त्ता पञ्चमस्तु नामान्येतानि च क्रमात्॥४४०॥
शिरसि प्रथमान्दद्याद्द्वितीयां नेत्रयोः क्षिपेत्।
तृतीयां वामकुक्षौ तु चतुर्थीं नाभिदेशके॥४४१॥
पञ्चमीं पादयोर्दद्याद्गन्ध पुष्पादि चर्च्चिताम्।
प्रतिमाणां (मायाः) यथाज्येन नामभिर्जुहुयात् क्रमात्॥४४२॥
उद-धारान्ततो दत्वा 'यमाय सोम' मित्यथ २(†)।
त्र्यम्बकस्यापि मन्त्रेण प्रत्येकं जुहुयाद्धृतम्॥४४३॥

---

१(*) अत्र 'कार्म्मदाहादिकं' (कार्य्यं)काम्यदाहादिकमत्रश्चकृत्यंवा पुत्रादिभिर्विधेयम्।

२(†) तद्द यीगोयथा, ज्यौतिषे,—

'पुनर्व्वसूत्तराषाढ़ा कृत्तिकं त्तर फाल्गुनी। पूर्व्वभाद्रविशाखाश्च रवि भौमशनैश्चराः॥
द्वितीया सप्तमीचैव द्वादशीतिथिरेवच। एतेषामेव योगेतु भवन्तीति त्रिपुष्कराः'॥
वारे यस्य सुतं हन्ति तिथौ गोधनमेवच। नक्षत्रे गोत्रहानिः स्यात्रास्त्रचोनभोत्सति'॥?
अस्य दुर्योगस्यत्रिपुष्कर शान्तिरपि शास्त्रे प्रोक्ता।

ततः स्वसूत्रविधिना कर्म्म दाहादिकं चरेत् १(*) ।
साग्नेरास्ये पञ्चरत्नं क्षिप्त्वादाहं समाचरेत् ॥४४४॥

—*—

## अथास्य स्पष्टप्रयोगः प्रतन्यते ।

—*—

देशकालादि संकीर्त्त्यामुकगोत्रस्यामुकशर्म्मणः प्रेतस्य धनिष्ठापञ्चक-मरणेन त्रिपुष्करे त्रिपुष्करनक्षत्रमरणेन भरणीनक्षत्र मरणेनवा सूचितदुर्गतिवंशारिष्टादिविनाशार्थं धनिष्ठादि पञ्चकमरणविधिं, त्रिपुष्करनक्षत्रमरणविधिं, भरणीनक्षत्र मरणविधिं वा करिष्ये इति सङ्कल्प्य ।

दर्भैः पञ्चप्रतिमां कृत्वोर्णाभिः संवेष्ट्य यवपिष्टेनानुलिप्य प्राणप्रतिष्ठां कृत्वा गन्ध-माल्यादिभिरलङ्कृत्य प्रेतवह-प्रेत-सख-प्रेतप-प्रेतभूमिप-प्रेतहर्त्तेति-क्रमेण नामानि कृत्वा, दाहसमये प्रेतोपरि विन्यसेत् ।

तद् यथा,—

प्रेतवहं शिरसि, प्रेतसखं नेत्रयोः, प्रेतपं वामकुक्षौ, प्रेतभूमिपं नाभौ. प्रेतहर्त्तारं पादयोर्निद ध्यात् ।
तासामुपरि प्रेतवाहायस्वाहेत्यादि प्रयोगेण घृताहुतीर्हुत्वा उदकधाराश्च-दत्वा 'यमायसोमम् ' 'त्र्यम्बकं यजामहे' २(†) इति मन्त्राभ्यां पञ्च-प्रतिमासु प्रत्येकमाज्याहुतीर्हुत्वा स्वस्वशाखोक्त विधिना संस्कुर्य्यादिति ॥

—*—

१(०) 'यमसूक्ते पठति । नेदं याजुष्यम् । 'त्र्यम्बक'मिति शुक्ल यजुः अ ३·मः ६० ।
—स्वीय-धर्म्म-गृह्य सूत्रानुसारेण कृत्यं दाहादिकं सम्पाद्यम् ।
२(†) मन्त्रः—शुक्ल यजुः अः मः । 'यमायसोमम्' इति नेदं याजुष्यम् पार्थिवमेव ।
" भरणी नक्षत्रस्य यमदैवतात्वात्तस्मिन् मरणमत्युग्रभाय भवति ।

# अथ धनिष्ठापञ्चक-त्रिपुष्कर-भरणीनक्षत्र-मरणसंस्कारविधानम् ।

—*—

तत्रैव सूतकानन्तरं कार्य्यं विशेष उक्तः ।

176. ब्राह्मे,—

सूतकान्ते ततः पुत्रः कुर्य्याच्छान्तिक पौष्टिकम् ।
कांस्यपात्रस्थितं तैलं वीक्ष्यदद्याद्द्विजन्मने ॥४४५॥
कांस्यं एकाशीतिपलं तदर्द्धं वा तदर्द्धकम् ।
नवघट त्रिपलंवापि दद्याद्दोषापनुत्तये ॥४४६॥
ब्रह्म-विष्णु-महेशेन्द्र-वरुणप्रीतये ततः ।
माष-मुद्ग-यव-व्रीहि-प्रियंग्वादि प्रयच्छति ॥४४७॥
स्वर्णदानं रुद्रजाप्यं लक्षहोमोद्विजार्च्चनम् १(*) ।
गोभूदानं षड़ेतानि कुर्य्याद्दोषोपशान्तये ॥४४८॥
यथाशक्त्यथवा कार्य्यं जपहोमोद्विजार्च्चनमिति ।

177. गारुड़ेऽपि—

सूतकान्ते तदा पुत्रैः कार्य्यंशान्तिक पौष्टिकम् ।
पञ्चकेषु मृतोयोऽसौ गतिंनलभते नरः ॥४४९॥
तिलाश्च वह्निरण्यञ्च तदुद्दिश्य घृतं दहेत् ।
स्वगृह्योक्त विधानेन कृत्वाग्नेः स्थापनन्ततः २(†) ॥४५०॥
अन्वाधानं निर्वपणं देवतानान्तथा हुतिः ।
यमाय धर्म्मराजाय मृत्यवे चान्तकायच ॥४५१॥
वैवस्वताय कालाय सर्व्वभूत क्षयायच ३(‡) ॥

---

१(*) 'स्वर्णदानमित्यत्र' गोदानमिति क्वचिद् ग्रन्थे पाठः ।

२(†) स्व गृह्येति,—यथा छन्दोगानां गोभिलो' गृह्य सूत्रम् ।
यजुषां पारस्कर गृह्य सूत्रं मित्यादि ।

३(‡) यमायेत्यादि,—चतुर्द्दश यमसंख्याकाणां यमानामयं पौराणिकोऽभ्यः । यमपूजने तर्पणेऽपि विहिताः ।

" जात पिण्डस्योपघ्नलायानुष्ठेयं कृत्यं यत्तत् शान्तिरिति । भविष्यति वाधी धनिष्ठापातप्रसक्ता धाया अभ्युदयस्य सर्व्वतः परिवृद्धयेऽनुष्टेयकृत्यं पौष्टिकमिति बोध्यम् । एतदावश्यकत्वञ्च शास्त्रीयञ्चेति सुप्रसक्तम् ।

औदुम्बराय दध्नाय नीलाय परमेष्ठिने ॥४५२॥
वृकोदराय चित्राय चित्रगुप्ताय वै क्रमात् ॥
विधिनातर्पणं कृत्वा एकैकामाहुतिं हुनेत् ।
एवं कृते विधानेऽस्मिन् सर्व्वदोषः प्रणश्यतीति ॥४५४॥

—*—

## अथैषां वचनानामेक वाक्यतया सन्दर्भ्य(र्थ्य) प्रयोगः प्रोच्यते ।

—*—

प्राणानायम्य देशकालादि सङ्कीर्त्यामुकगोत्रस्यामुक १(*) नाम्नो धनिष्ठा पञ्चक—मरणेन, त्रिपुष्कर योग-मरणेनवा, त्रिपुष्कर नक्षत्र मरणेनवा, भरणानक्षत्रमरणेनवा सूचित दुर्गतिवंशारिष्टादि विनाशनार्थं धनिष्ठा-पञ्चकशान्तिं, त्रिपुष्करशान्तिं, भरणीनक्षत्रशान्तिञ्चकरिष्ये २(†) इति सङ्कल्प्य गणेशं सम्पूज्य पुण्याहं वाचयित्वा जपहोमार्थ-मृत्विजोवृत्वा शुद्धभूमौ गोमयेनोपलिप्तायां सम्प्रोक्ष्य धान्योपरि ताम्र-कलशमव्रणमेकं मन्त्रपूर्व्वकं स्थापयित्वा षोड़शोपचारैः पूजयेत् । तत्र सर्व्वौषधीः प्रक्षिप्याथ नक्षत्र मूर्त्तीः पञ्चाग्न्युत्तारण पूर्व्वकं यथायोगं प्रतिष्ठाप्य कलशोपरि सन्निवेश्य अत्र धनिष्ठा देवतावसवः, शततरका देवता वरुणः, पूर्व्वभाद्र-पददेवता-अजैकपात्, उत्तरभाद्रपद-देवता-अहिर्बुध्न्यः, रेवतीदेवता-पूषाच ।

इति धनिष्ठादिपञ्चकदेवताः ।

—*—

१(*) अत्रादर्शपुस्तकान्तरे पाठान्तरमस्ति यत्तदपि'—' इत्य' चिह्नमध्ये प्रदत्तम् .

२(†) अत्रापि पाठान्तरं किञ्चिदस्ति ।

" पुण्याहमन्त्राः—(१) 'पुनन्तु मा देवजनाः' (२) पवित्रेणपुनीहि' (३) 'यत्ते-पवित्रम्' (४) 'पवमानःसोमद्य' (५) 'उभाभ्यांदेव' एते शुक्ल यजुः अः १९ । मः ३९—४३ ।

## इति प्रागुक्त-धनिष्ठा पञ्चकदेवताः ।

—*—

त्रिपादेतु,—यन्नक्षत्रे मृतस्तन्नक्षत्र देवता १(*) । भरणीदेवतातु यमः । तत्रैक एव कुम्भः स्थाप्यः । एता देवता यथायोगं तत्तल्लिङ्गकैर्व्वेद-मन्त्रैर्नाममन्त्रैर्व्वा सम्पूज्य ब्रह्म विष्णु महेन्द्र वरुणेति देवता पञ्चकं पूर्व्वकलशे कलसान्तरेषु वा सम्मन्त्र्य सम्पूज्य ब्रह्मादिपञ्चदेवताग्रे माष-मुद्ग-यव-व्रीहि-प्रियङ्ग्वादि धान्यराशिं कृत्वाऽथैकस्मिन् कुम्भे यममन्त्रेण यममावाह्योपचारैः सम्पूजयेत् २(†) ।

चतुर्द्दश यम नामभिः, अथऋत्विजः कुम्भाभिमन्त्रण पूर्व्वकं शान्ति-सूक्तं पवमानसूक्तं रुद्रसूक्तञ्च जपेयुः ३(‡) ।

यद्वा याजुर्व्वेदिकं साङ्गं रुद्राध्यायं जपेयुः ४(+) । ततः स्वगृह्योक्त-विधिना अग्निं प्रतिष्ठाप्य ग्रहपूजां विधाया ५(×) न्वाधानं कुर्य्यात् ।

---

१(*) प्रतिनक्षत्रं चत्वारः पादाः सन्ति । अथ एता नक्षत्रदेवताः—दस्र-यमाग्नि-धातृशशिनः शर्व्वोऽदिति-वाचस्पति-फणि-पितरो—भगोऽर्य्यमरवि-त्वष्टावायवामाख्याः । इन्द्राग्नी अथ मित्र इन्द्र-निरृति-तोयविश्वे-वि, रि, धि गोविन्दो वसवोऽम्बुराजचरणाहिर्बुध्न-पूषा-
” भिधाः' इति ज्योतिषे रत्नमालायाम् । यममन्त्रश्च—'असियमो अस्यादित्यो' इत्यादि । शुक्लयजुः अ: २९, मं: १४ ।

२(†) शान्ति सूक्तं यथा,—सूक्तानि षट् । मतान्तरेतु—'इन्द्रोविश्वस्य' (१) 'शंनोमित्रः' (२) 'शन्नोवातः' (३) 'अहानिशंभवन्तु' (४) 'शन्नोदेवी रभिष्टये' (५) 'स्योनापृथिविनो' (६) 'आपोहिष्ठा' (७) 'योवः शिवतमः' (८) 'तस्माअरंगमाम' (९) 'द्यौः शान्तिः' इत्यादि 'सामाशान्तिरेधि' इत्यन्तम् । शुक्लयजुः अ: ३६ । म: ८-१७ ।

” पवमानसूक्तं यथा—ॐ'पावमानीः' इत्यारभ्य—'सर्द्धिंमधूदकम्' इत्यन्त ऊनविंशति-संख्यकम् ।

रुद्रसूक्तानि यथा—आर्चिकानि । ॐ'कद्रुद्राय प्रचेतसे' इत्यारभ्य'आभूषन्तीः सोमवेदः' (९) (क) (१-३-२६) । ॐ'इमारुद्राय तवसे' इत्यादि—'पृथिवी उत द्यौः' इत्यन्तम् (१५) (ख) ॐ'इमा रुद्राय स्थिरधन्वने' इत्यादि (५-४-१२) 'बृहद्वदेम विदथे सुवीराः'
३(‡) इत्यन्तम् । (१५) (१-८-५) रुद्राध्यायः ( शतरुद्रीयापि );—'शतरुद्रीयकेनेति नामाख्या पापानि शान्तम्' । अन्यत्र श्रीमदुवायण-उव्वट-महीधर-भट्टभास्करीय-भाष्येष्वपि ।
” ॐ नमस्ते रुद्रमन्यव' इत्यारभ्य—'तं वो जम्भे दधामि' इत्यन्तः । शुक्लयजुः-अ: १६, म: १-६६ । केचन चमक-नमकाभ्यां सम्पठन्ति ।

४(+) रुद्राध्यायं जपेत्' इत्यपि पाठान्तरमस्ति ।

५(×) सूर्य्यादिनवग्रहाणां साधिदेवतप्रत्यधिदेवतादीनां पूजनं कुर्व्वन्ति ।

देवतापरिग्रहार्थमित्यादि-'चक्षुषी आजेनेस्यन्तमुक्त्वा आदित्यादिग्रहान् सतिलाज्यद्रव्येण प्रत्येकमष्टशतसंख्याभिराहुतिभि र्नक्षत्रदेवता अपि यथासम्भवसंख्याभिः । तथा ब्रह्मादिपश्चदेवताः यथासम्भवसंख्याभि-स्तिलाज्याहुतिभि र्यमं धर्म्मराजं मृत्युमन्तकं वैवस्वतं कालं सर्व्वभूतक्षयं औदुम्बरं दध्नं नीलं परमेष्ठिनं वृकोदरं चित्रं चित्रगुप्तञ्च स्थालीपाकेन चरूणा शेषेण स्विष्टकृतमित्याद्यन्वाधाय निर्व्वपणाद्याज्यभागान्तं कृत्वान्वाधानोक्तप्रकारेण प्रधानहोमं कृत्वा स्विष्टकृदादिहोमशेषं समाप्य समस्तकलशोदकैः समन्त्रमभिषिक्तः सकुटुम्बो यजमानो दानानि दद्यात् १(०) ।

**तत्र, कांस्यपात्रे तैलं निक्षिप्यात्मानमवलोक्य—**

ॐ तैलं तु(पु)ष्टिकरं नित्यमायुष्यं पापनाशनम् ।
अमाङ्गल्यहरं नित्यमतः शान्तिं प्रयच्छ मे ।।४५५।। इति
सदक्षिणं तैलपात्रन्दत्वा ब्रह्मविष्णु महेशेन्द्र वरुण—
प्रीत्यर्थं पूर्व्वस्थापितमाषादिराशिं दद्यात् ।।४५६।।

**तत्र मन्त्रः—**

ॐ धन्यं करोति दातारं धान्यं प्राणिहितं स्मृतम् ।
तस्मात् प्रदीयते धान्यं अतः शान्तिं प्रयच्छ मे ।।
तिलाः स्वर्णसमायुक्ताः दुरितक्षयकारकाः ।
विष्णुप्रीतिकरा नित्यमतः शान्तिं प्रयच्छ मे ।।४५७।। इति

## इति तिलान्दद्यात् ।

**लोहदानमन्त्रो यथा,—**

यस्मादायसकार्य्याणि त्वदधीनानि सर्व्वदा ।
लाङ्गलाद्यायुधादीनि अतः शान्तिं प्रयच्छ मे ।।४५८।।
सति सम्भवे महिषीन्दद्यात् । लक्षहोमञ्च कुर्य्यात् ।
इन्द्रादिलोकपालानां या राजमहिषी सदा ।
महिषीदानमाहात्म्यादस्तु मे सर्व्वकामदेति ।।४५९।।

---

१(०) कलशोदकैः सर्व्वैः शान्तिमन्त्रैरभिषिञ्चेत् सकुटुम्बं यजमानम् ।

## इति महिषीदानमन्त्रः ।

ततोगवामङ्गेष्विति गोदानम् ।

हिरण्यगर्भ ( गर्भ )स्थ मिति सुवर्णदानम् । १(*) सर्व्वभूताश्रयेति भूमिदानम् । एतानि दत्वा यथाशक्ति ब्राह्मणभोजनं सङ्कल्प्य भूयसीं (दक्षिणा)न्दत्वा ब्रह्मादिदेवता विसृज्य विप्राशिषो गृहीत्वा सुखी भवेत् ॥ इमां शान्तिं सपिण्डी करणादूर्द्ध्वं पूर्व्वं वा शुभदिने कुर्य्यादिति । विधानपारिजाते ( धनिष्ठादि ) पञ्चक-त्रिपादभरणीनक्षत्र-मृत शान्ति विधानम् ॥

—*—

## अथ प्रोषितस्य मृतबुद्ध्या कृतप्रेतकार्य्यस्य यदि पुनरागमनं तद्विधानमुच्यते २(†) ।

—*—

178. हेमाद्रौ, वात्स्यः—

अमृतं मृतमाकर्ण्य कृतं यस्यौर्द्ध्वदेहिकम् ।
आगते तु पुनस्तस्य मृतकुण्डे निमज्य च ॥४६०॥
जातकर्म्मादि संस्कारान् सद्यः कृत्वाथ(च)भार्य्यया ।
विवाहकर्म्मकर्त्तव्यं ततोऽन्याधेयमेव च ॥४६१॥
होममात्रं भवेत्तेषु होमयुक्तेषु कर्म्मसु ।
द्वादशाहं ब्रह्मचर्य्यं त्रिरात्रमथवा भवेत् ॥४६२॥
अग्नीनादाय विधिवद् व्रात्यस्तोमेन वा यजेत् ३(‡) ।
ऐन्द्राग्नेयेन पशुना इष्टिं वैश्वानरीं यजेत् ४(+) ॥४६३॥
महाव्याहृतिभिर्होमो जातकर्म्मादिषु त्रिषु ।
न तेष्वभ्युदयश्राद्धं तेषां नैमित्तिकत्त्वतः ॥४६४॥

---

१(*) 'हिरण्यगर्भः समवर्त्तताग्र' इत्यादि, शुक्ल: यजुः, १३—४, २३—१ ।

२(†) विदेशगतस्याज्ञातवृत्तस्य द्वादशवर्षकालमपेक्ष्य पश्चात्तस्य दैहिकं कुर्यादितिवचन मदर्थः ।

३(‡) 'अथ पतित-सावित्रीक उद्दालक व्रतञ्चरेत्' । हांच्छूवयं वा । 'व्रात्यः संस्कारहीनः स्यात्' इति । अन्यदपि पतन-परस्वरघ्नसूचेमिताचारायाषाति ।

४(+) 'वैश्वानरं द्वादशकपालं निर्वपेत् ग्रामकामेष्टी' इत्यादि ।

प्र(न)कुर्य्यादायुषीमिष्टिं पुनराधाय पावकान् ।
अन्वारम्भणयुक्तां तां मातृश्राद्धविवर्जिताम् ॥४६५॥
पौर्णमासादिकाः सर्व्वाः क्रियाः कार्य्या यथोदिताः ।
तत्राग्नयआयष्यतेष्टाकपालश्चरुं वपेत् १(*) ॥४६६॥
अत्र निर्वपेदित्यर्थः
अनुवाक्याऽग्नआयूंषि आयुष्मानग्न इत्यर्थः ।
अत्र सप्तदशोवक्त्रः ( र्ज्ञः ) शेषं स्यात्पौर्णमासवत् ॥
अनाहिताग्नेरप्येवं स्मार्त्तं कर्म्मयथोदितमिति ॥४६७॥
इति विधानपारिजाते कृतप्रेतक्रियस्य पुनरागमने विधानम् ॥

—*—

## अथ सर्पहतस्य नागबलि विधानम् ।

—*—

179. **स्मृतिरत्नावल्यां शौनकः—**
सर्पदष्टस्य संस्कारं शौनकोऽहं ब्रवीम्यतः ।
नाग्निर्नचोदकं तस्य नाशौचमपि कारयेत् ॥४६८॥
सम्वत्सरं हि सम्पूर्णं नागं सम्पूज्य भक्तितः ।
नारायणवलिं कृत्वा ह्यस्थ्नां संस्कारमाचरेत् २(†) ॥४६९॥
अन्यथा कुरुते यस्तु नगतिस्तस्य विद्यत इति ॥

180. नागव्रतविधानमुक्तं आश्वलायनगृह्यपरिशिष्टे ॥४७०॥

**तद् यथा, अथ नागवलिः—**

सर्पहतानां दारुमयं मृन्मयं वा पञ्चफणं नागं कृत्वा श्रावणस्य भाद्रपदस्यान्यस्य वा मासस्य शुक्लपञ्चमीमारभ्य यावत् सम्वत्सरं प्रतिमासं तस्यामुपोपितो रात्रौ पञ्चामृतैस्तं स्नापयित्वा शुद्धासने शुचिः सुरभिगन्धपुष्पधूपदीपैः सितैरभ्यर्च्चर्य घृतपायसमोदकान्निवेद्य प्रणमेत् ।

---

१(*) 'वह्निं प्रतिष्ठाप्याग्नेयमष्टाकपालमिति निर्वपे'दित्यादि ।

२(†) अत्र नारायणबलिः पश्चाद्वक्ष्यते । स च हेमाद्रौ, विश्वनाथीयसन्दर्भे चास्ति । अस्थ्नां संस्कारः—अस्थिसञ्चयनप्रथम । ततो नागव्रतविधिर्ज्ञेयः ।

## अनुमासमेकैकम्—१(*)

अनन्तं वासुकिं शङ्खं पद्मं कम्बलं कर्कोटकं अश्वतरं धृतराष्ट्रं शङ्खपालं कालीयं तक्षकं कपिलमिति द्वादश(१२)। पायससर्पिः क्षीरमयै-र्बलिमुद्धृत्य जागरित्वा श्वोभूते त्रिवृतान्नेन ब्राह्मणान् सम्भोज्य दक्षिणया तोषयित्वा नागान् प्रीतिं वाचयेत्।

सम्बत्सरान्ते बहून् ब्राह्मणान् भोजयेत्॥

## एष नागबलिः।

अथवोभयो पक्षयोः पञ्चमीषु संमृष्टायां भुवि पिष्टेन सर्पमुल्लिख्य सुरभिर्गन्धादिभिः सितैरभ्यर्च्चर्य क्षीरमोदकं निवेद्योपस्थाय 'मुञ्चैनं देवदत्तम्'—इति सम्प्रार्थ्य सहबन्धुभि र्मधुरमश्नीयात्। एवं सम्बत्सरान्ते सौवर्णं नागं शक्त्या दत्वा नारायणबलिम्प्रोक्तवत्कृत्वा ततऊर्द्धकर्म्म कुर्य्यादिति २(†)॥

181. **तदुपस्थानमन्त्रस्तु, तन्त्रे—**

ये सर्पाः सर्व्वलोकेषु शेषनागपुरोगमाः ३(‡)।
नमोऽस्तुस्तेभ्यः सुप्रीताः प्रसन्नाः सन्तुमे सदेति ॥४७१॥
विधानपारिजाते सर्पहतस्य नागबलिविधानम्।

—*—

१(*) —अनुमासं—प्रतिमासं कुर्य्यात्। अष्टौ च नागा उक्ताः अयने नागपञ्चम्याञ्च, तथाहि—
'सुप्ते जनार्द्दने कृष्णे पञ्चम्यां भवनाङ्गने'। 'पञ्चम्यां पूजयेन्नागानन्तादीन्महोरगान्'।
'अनन्तो वासुकिः पद्मो महापद्मश्च तक्षकः। कर्कोटः कुलीरः शङ्खोह्यष्टौ नागाः प्रकीर्त्तिताः।
'क्षीरसर्पिर्युतं नैवेद्यं देयं सर्पविषापहम्'। द्वादशमासेषु द्वादशसर्पाः पूज्या भक्तितः।
सर्पमन्त्रस्तु—'नमोऽस्तु सर्पेभ्योयेकेच' (१) शुक्लयजुः अः १३, मः ६-८।
'या इषवो यातुधानानाम्' (२) ,,
'येवामी रोचने दिवः' (३) ,,

२(†) नारायणबलिर्विधाय ततः विहितं कृत्यं कुर्य्यात्।
'नारायणबलिं कृत्वा ततः कर्म्मसमाचरेत्' इति।

३(‡) तन्त्रे नारदपञ्चरात्रोक्ताः। एषा विद्या सर्पदेवजनविद्येति श्रुतौ प्रसिद्धाऽऽसीत्। यद्यपि व्याख्यग्रन्थेषु विद्यते, पाश्चात्ये नैवाऽस्ति।

" विष्णुपुराणोक्त विषयो विष्णुनिवशीय मिताक्षरायामस्ति।

# 'अथ नारायणवलि विधानं मिताक्षरायम्,

—*—

182–183. **विष्णुपुराणेच—**

एकादशीं समासाद्य शुक्लपक्षस्यवै तिथिम् ।
विष्णुं समर्च्चयेद्देवं यमम्वैवस्वतं तथा ॥४७२॥
दशपिण्डान् घृताभ्यक्तान् दर्भेषु मधु संयुतान् ।
तिलमिश्रान् प्रदद्याद्वै संयतोदक्षिणामुखः ॥४७३॥
विष्णुं वुद्धौ समाधाय नद्यम्भसि ततः क्षिपेत् ॥४७४॥
नाम गोत्रमहन्तत्र पुष्पैरभ्यर्च्चनन्तथा ।
धूपदीपप्रदाने च भक्ष्यभोज्यन्तथापरम् ॥४७५॥
निमन्त्रयेत विप्रान्वै पञ्च सप्तनवापि वा १(*) ।
विद्यातपः समृद्धान्वै कुलोत्पन्नान् समाहितः ॥४७६॥
अपरेऽनि सम्प्राप्ते मध्याह्ने समुपोषितः ।
विष्णोरभ्यर्च्चनं कृत्वा विप्रां स्तानुपवेशयेत् ॥४७७॥
उदङ्मुखान् यथा ज्येष्ठान् पितृस्नेहमनुस्मरण् ।
मनोनिवेश्य विष्णौ वै सर्व्वं कुर्य्यादतन्त्रितः ॥४७८॥
आवाहनादि यत् प्रोक्तं दैवपूर्व्वं तदाचरेत् ।
तृप्तान् ज्ञात्वा ततो विप्रां स्तृप्तिं पृष्ट्वा यथाविधि ॥४७९॥
हविष्यव्यञ्जनेनैव तिलादिसहितेन च ।
पञ्च विप्रान् प्रदद्याच्च दैवरूपमनुस्मरन् २(†) ॥४८०॥
प्रथमं विष्णवे दद्याद् ब्रह्मणे च शिवाय च ।
यमाय सानुचाराय चतुर्थं पिण्डमुत्सृजेत् ३(‡) ॥४८१॥
मृतं सङ्कीर्त्य मनसा गोत्रपूर्व्वमतः परम् ।
विष्णोर्नाम गृहीत्वैव पञ्चमं पूर्व्ववत् क्षिपेत् ॥४८२॥

---

१(*) निमन्त्रणयोग्यशास्त्रोक्तब्राह्मणा यथा हेमाद्रौ,—(दानखण्डे)। 'गङ्गादानादिकार्य्येषु ब्राह्मणान् भोजयेद्बुध' इत्यग्रतोबोध्यम् ।

२(†) विप्राः श्रोत्रियाः पङ्क्तिपावनाः शास्त्रविदः आचारान्वितास्तान् भोजयेत् ।

३(‡) यमादीनां नामोल्लेखः प्राक्कृतः । तन्नामगोत्रादिकं वुद्धौ विचिन्त्य समुच्छिष्ट्वा क्षिपेत् । इदृतमं—विद्यावयो-ज्ञानादिपूतचरितं विप्रं श्रेष्ठम् जानीयात् । तथाहि स्मृतौ 'ददाति विप्रायबहुश्रुताय वेदान्तविज्ञाय तपस्विनेच' इति ।

विप्रानाचम्य विधिवद् दक्षिणाभिः समर्च्चयेत् ।
एकं वृद्धतमं विप्रं हिरण्येन समर्पयेत् ॥४८३॥
गवा वस्त्रेण भूम्या च प्रेतं तं मनसा स्मरन् ।
ततस्तिलोदकैर्विप्रा हस्तैर्दर्भसमन्वितैः ॥४८४॥
क्षिपेयुर्गोत्रपूर्व्वन्तु नाम बुद्धौ निवेश्य च ।
हविर्गन्धतिलान् भक्तस्तस्मै दद्युः समाहिताः ॥४८५॥
मित्रभृत्यजनैः सार्द्धं पश्चाद्भुञ्जीत वाग्यतः ।
एवं विष्णुमते स्थित्वा यो ददात्यात्मघातिने ॥४८६॥
समुद्धरति तं क्षिप्रं नात्र कार्य्या विचारणेति ॥४८७॥

184. सर्पदंशनिमित्तं सौवर्णनागदानं परकृतिरूपार्थवादेन भविष्यपुराणे
185. सुमन्तुनाऽभि हितम् ।
सुवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम् ।
व्यासाय दत्वा विधिवत् पितुरानृण्यमाप्नुयात् १(*) इति
तस्मान्मनुजैरपि सर्पहतस्यौर्द्धदेहिक योग्यता सिद्ध्यर्थं सुवर्ण सर्पदानं कृत्वा संस्कारः कार्य्य इत्याशयः ।
186. अत्र नारायणबलौ होमोऽप्युक्तः । यथाऽपरार्के,—
लौकिकाग्निं प्रतिष्ठाप्य आज्यभागान्तमाचरेत् ।
187. चरुहोमन्ततः कुर्य्यात् प्रत्यृचं पुरुषसूक्ततः २(†) ॥४८८॥ इति ।
188. आश्वलायन गृह्यपरिशिष्टे तु, पुरापमृत्यूनामप्ययं विधिः कार्य्य—इत्युक्तम् ३(‡) । तद् यथा,—अथ नारायणबलिरर्व्वाक् सम्वत्सरादूर्द्धें (शुद्धे) काले शुक्लैकादश्यां स्नात्वा इत्यादि—विष्णुर्देवं

१(°) 'चानृण्यमाप्नुयात्' इति भिन्नः पाठः ।
" प्राग्युगे एष आसीदतः कथमपि नागवैरमोक्षणार्थं तत् कुर्य्यात् ।
२(†) पुरुषसूक्तं यथा,—'सहस्रशीर्षा' इत्यादि—'यत्र पूर्व्वे साध्याः सन्ति देवाः' इत्यन्तं षोडश—ऋच्यात्मकं बोध्यम् । एतन्मन्त्र—महर्षिर्नारायण—उव्वट, सायण-महीधरादीनां भाष्येषु वर्त्तते ।
" शुक्ल यजुः अः ३१८ मन्त्राः १—१६ ।
३(‡) अश्वलायनगृह्यपरिशिष्टेयम्, परमिदानीं संक्षेपेण ग्रन्थान्तरेभ्य उच्यते ।
" अस्मिन् विषये ग्रन्थादर्शे 'तद्यथेत्यादि—उक्तमित्यन्तं' सन्दर्भो नास्ति । अस्मिन् विद्यते, पुस्तकान्तरे ।—अतएव-नारायण बल्याद्यकरणादेव । पारलौकिककार्य्यं तत्रोक्तमिति ।

नारायण वलिः कल्प्य इत्युक्तयोक्तं प्राक् ।' एवमन्या( मन्या )मपि स्वाभिमतदेवतां यमद्वितीयायामभ्यर्च्च्य विधिमिमंकुर्य्यात् १(*) । सोऽप्येन मपापं करोति । नतु पुण्यकृतोऽपि वलिमेनमकृत्वा पारलौकिकं कुर्य्यात् । कृतं चेन्नोपतिष्ठतेऽन्तरिक्षे विनश्यति । तस्माद् यथासम्भवमपि कुर्य्यादिति ।

189 अतएव स्मृत्यर्थसारे, होम-तर्पण-वलयो नोक्ताः ।

अथैषां वाक्यानामेकवाक्यतया सन्दर्भ्य प्रयोगः प्रोच्यते, – पूर्वोक्त पापण्ड्यादीनामिच्छापूर्व्वमात्मघातिकानाञ्च नारायणवलिं कुर्य्यात् । तद् यथा, कस्यांचिच्छुक्लैकादश्यां नदीमन्यद्वा तीर्थं गत्वा स्नानादिकं विधाय शुचौ देशे गोमयेनोपलिप्य सम्प्रोक्ष्य पूजासामग्रीं सम्पाद्य कृताचमनः प्राणानायम्य देशकालौ स्मृत्वामुकगोत्रस्यामुकशर्म्मणः प्रेतस्यात्महत्यादिना पाषण्डित्वादिना वा जनितपापोपशमनद्वारा और्द्धदेहिक क्रियायां सम्प्रदानत्व-योग्यता सिद्ध्यर्थं नारायणवलिकर्म्म करिष्ये ।

इति सङ्कल्प्य कलशपञ्चकं व्रीहिणां वा यवानां शरावोपरि उदक्संस्थं स्थापयित्वोदकेनापूर्य्य 'आपोहिष्ठे'ति मन्त्रत्रयेणाभि मन्त्र्य सर्व्वौषधी-तिल-गन्धादि-प्रतिकलशं प्रक्षिप्य वस्त्रैर्व्वेष्टयित्वा, पुष्पाणि पञ्च-रत्नानि च प्रक्षिप्य तदुपरि ताम्रादिनिर्मित पूर्णपात्रेषु ब्रह्म-विष्णु शिव-यम-प्रेतानां पञ्चमूर्त्तीरग्न्युत्तरेण प्रतिष्ठापूर्व्वकं स्थापयेत् ।

मूर्त्ति प्रकृतिः सुवर्णं रजतं वा कर्षादिपरिमितं ग्राह्यम् ।

तत्रावाहनादि षोड़शोपचारान् कुर्य्यात् , पञ्चानामपि । तत्र विष्णोः पुरुषसूक्तेन पूजा । ब्रह्मणो 'हिरण्यगर्भ' इत्यादि तल्लिङ्गेन मन्त्रेण २(†) । रुद्रस्यतु 'कद्रुद्राये'त्यादिना ३(‡) ।

---

१(*) यमद्वितीयातु-महाभारतोक्ता भ्रातृ-द्वितीयेति । कार्त्तिक शुक्लपक्षीया । यथा, 'कार्त्तिकी शुक्लपक्षेतु द्वितीयायां युधिष्ठिर' इत्यादि ।

२(†) शुक्लयजुः अः १३, मः ४ । अः २५, मः १० ।

३(‡) ऋग्-रुद्रसूक्ते—'ॐकद्रुद्राय प्रचेतसे मीलहुष्टमाय व्यत्यसे । वोचम शन्तमंहृदे' ।

,, पुरुषसूक्तं प्राङ्निरूपितम् ।

,, 'आपोहिष्ठेति' त्रयोमन्त्रा.' शुक्ल यजुः अः ११, मः ५० ।

,, षोड़शोपचाराः—मन्त्रशास्त्रे, आसनादि—वन्दन-शेषा' ।

,, 'प्रयोजयेदर्च्चनायामुपचारास्तु षोडश' इति ।

यमस्यतु—'यमाय सोम'मित्यादिना १(*)। प्रेतस्यतु अमुक-—गोत्रायामुकशर्म्मणे प्रेताय नम इति नाम मन्त्रेण। एवं पञ्चदेवताः, पदार्थानु समयेन काण्डानुसमयेन वा। ता यथा विधि सम्पूज्य विष्णुवे महाफलं समर्प्य २(†)। पूजां सम्पूर्णतां वाचयित्वा विष्णुं स्तुवीत।

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन !।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्व्वज ! ॥४६०॥
अनादि निधनो देवः शङ्ख-चक्रगदाधरः।
अक्षयः पुण्डरीकाक्षः प्रेतमुक्ति प्रदोभवेति ॥४६१॥

190-191 विष्णुधर्म्मोत्तरेऽत्र तर्पणमप्युक्तम्। दाल्भ्यं प्रति विष्णुः—

पूर्व्वजान्तर्पयेद्भक्त्या मन्त्रैः पौराण वैदिकैः।
तर्पणं पुरुषसूक्तेन मन्त्रैर्व्विष्णोश्च कारयेदिति ॥४६२॥

पौराणोमन्त्रः प्रागुक्तो 'जितन्त' इत्यादिः।

विष्णुमन्त्रा-विष्णु सूक्तम् ३(‡)। ततः स्वगृह्योक्त मार्गेणाग्निं प्रतिष्ठाप्या न्वाधानं कुर्य्यात्। तत्र विशेषः—अस्मिन्नन्वाहितेऽग्नावित्यादि—चक्षुषी आज्येनेत्यन्तमुक्त्वा नारायणं पुरुषसूक्तेन प्रत्यृचं षोड़शवारं चरुद्रव्येण यक्ष्ये।

शेषेणाग्निं स्विष्टकृतमित्यादि ४(+) प्रकृतमुक्त्वाऽन्वाधानसमिधौ हुत्वा

---

१(*) यमसूक्तं,—ऋग्वेदे १०।१४।१२२। अथान्यानि यमसूक्तानि सन्ति। तानिच सूक्तानि भगवतो रामचन्द्रस्य भूपेन्द्रस्य स्वर्गमनकाले महर्षिणा वसिष्ठेन पठितानि।

२(†) ॐ प्रीयतां पुण्डरीकाक्षः सर्व्वयज्ञेश्वरो हरिः। तस्मिन्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत्। इत्यनेन तस्मिन् परमेशे क्रियाफलं सर्व्वं समर्पयेत्।...अत्र 'तत् कुरुष्व मदर्पण मिति' गीतायाम्।

३(‡) शुक्ल यजुः अः ३१, मः १—१६।

४(+) ऋग्वेदे—(५।८।२४) ओं परोमात्रयातन्वा—इत्यारभ्य—'स्वस्तिभिः सदानः' इत्यन्तं सप्त-सूक्तानि। पुनः (५।८।२५) तत्रैव ओं नू मर्तो दयते' इत्यारभ्य—वषट्ते विष्णवास आकृण, इत्यन्तं सप्त। पुनस्तत्रैव—(२।२।२४) ओं विष्णोर्नुकं—इत्यारभ्य 'परमं पदमव भाति भूरि' इत्यन्तं षट्। पुनश्च तत्रैव (२।२।२५) ओं प्रवः पान्तमन्धस इत्यारभ्य। 'कुमारः प्रत्य-त्याहवम्' इत्यन्तं षट्। पुनरपि (२।३।२६) ओं भवा मित्रोन इतारभ्य 'यजमान माभ-जत्, इत्यन्तं पञ्च। पुनरपि (५।१।१२) ओं सवा कर्मणा इत्यारभ्य 'महिना संबभूव' इत्यन्तं षष्ठी।

स्वगृह्योक्तरीत्या निर्वापादिविधिना चरुं श्रपयित्वाज्यभागान्तं कृत्वा चरुणा पुरुषसूक्तेन प्रत्यृचं षोड़षाहुतीर्जुहुयात् । नारायणायेदं नममेतित्यागोऽत्र ज्ञेयः ।

ततः स्विष्टकृदादि होमशेषं समाप्यार्च्चितदेवसमीपेऽमुकगोत्रायामुक-देवशर्म्मणे प्रेताय विष्णुरूपिणेऽयं पिण्ड इति – मधु घृत प्लुतानुतिल-मिश्रान् दशपिण्डान् दक्षिणाग्रेषु दर्भेषु अवनेजन पूर्व्वकं दक्षिण मुखः प्राचीनावीती पराचीनेन पाणिना दत्वा ततः प्रत्यवनेजनं दत्वा च ।

पिण्डान् गन्धादिभिरभ्यर्च्च्य १(*) यत्ते यममिति, अपेतोयन्त्विवति च सूक्ताभ्यां पिण्डाननुमन्त्र्य पितृसूक्तेन २(†) कुश-तिल-तुलसी-मिश्रित शङ्खोदकेन पिण्डानभिषिञ्च्य गन्धाद्यैः पुनरभ्यर्च्च्य प्रवाहणान्तं कृत्वा नद्यां क्षिपेत्तपत्न्यैदद्यात् ।

ततः पुरुष सूक्तेन प्रेतनामगोत्रै उच्चार्य्यामुकं नारायणरूपं तर्पयामीति प्रत्यृचं पुरुष सूक्तेन ३(‡) तिलोदकैः षोड़शवारं तर्पयेत् । ततः पुरुषाहार परिमितमन्नं विष्णवे ब्रह्मणे शिवाय सकिङ्कराय यमायच वलिन्दद्यात् ।

**तत्र मन्त्रः—**

ब्रह्मविष्णुमहादेवा यमश्चैव सकिङ्करः ॥४६३॥
वलिङ्गृहीत्वा कुर्व्वन्तु प्रेतस्य च शुभाङ्गतिम् ४(S) ॥

इतिं मन्त्रमुक्त्वा विष्णवादिदेवेभ्य इमं वलिं समर्पयामीति वलिन्दत्वा प्रतिदैवतं त्रिविधं फलं समर्प्य पात्रात्तरे शर्करामधुगुड़ सर्पीषिनिवेदयेत् । एवं दिवाकर्म्म निर्व्वर्त्य तस्यां रात्रौ अयुग्मान् पञ्च सप्त नव वा ब्राह्मणानामन्त्र्य मन्त्रपूजित-देवसन्निधौ गीतनृत्यस्तोत्रपाठादिना कृतोपवासो जागरणं कुर्य्यात् ।

---

१(*) अत्र संस्कृत विद्यामन्दिरीय ग्रन्थेन साद्धंमस्य पाठभेदोदृश्यते स च बहुधावर्त्तते ।

२(†) 'अपेतोयन्तुपणयोसुम्नः' शुक्ल यजुः अः ३५ । मः १ ।

,, 'यत्ते यम मिति' सूक्तं, ऋग्, १०।४८।२ ।

३(‡) अत्र पुरुषसूक्तं पूर्व्वमुक्तम् आचार्य्य माजुष्यच्च ।

४(S) 'शुक्ल यजुः अः ३१, मः १—१६ । सूक्तं प्रापुक्तम् ।

५(॥) दुर्मरणजनित प्रेतस्य, शुभांगतिं—प्रेतत्व परिहारपूर्व्वक स्वर्गप्राप्तिं कारयन्त्विति । आत्म घातिप्रभृतिदुर्मरण-मृतानां चान्द्रायण-द्वयं, नारायण-बल्यादनुष्ठनात् पश्चाद विहित-कार्य्यानुष्ठानेन स्वर्गतिर्भवत्येव ।

ततः श्वो भूते मध्याह्ने विष्ण्वादीन् पुनरभ्यर्च्च्य देशादिकं स्मृत्वा प्राचीणावीती। अत्र नारायणवलौ विहितं श्राद्धपञ्चकमेकोद्दिष्ट-विधिना करिष्ये इति सङ्कल्प्यैकोद्दिष्टविधिना स्वसूत्रोक्तेन ब्राह्मणपाद-प्रक्षालनादि कृत्वा यथाऽयेष्ठमुदङ्मुखानुपवेश्यासनादि कं प्रदाय,.... तृतीयप्रश्नान्तं श्राद्धं कृत्वोच्छिष्टसमीपे पिण्डपितृयज्ञवदुल्लेखनाद्यवने-जनान्तं कृत्वा विष्णवे ब्रह्मणे शिवाय यमाय सपरिवाराय च।

विष्णो! अयन्ते पिण्ड इत्यादिप्रयोगेण भुक्तशेषेण दक्षिणसंस्थं पश्चिमसंस्थं वा चतुरः पिण्डान् दत्वा प्रेतस्य नाम-गोत्रे उच्चार्य्य विष्णुरूपं प्रेतं स्मृत्वा विष्णुरूपाय प्रेताय पञ्चमं पिण्डन्दत्वा प्रत्यवनेजनादि पिण्डपूजान्तं कृत्वा विप्रानाचामय्य दक्षिणाभिस्तो-षयित्वा तन्मध्येचैकं गुणवन्तं ब्राह्मणं १(*) प्रेतस्थाने भोजितं प्रेतबुद्ध्या संस्मरन् वस्त्राभरण-गो-हिरण्यै रतिशयेन सन्तोष्या-क्षय्योदकस्थाने तिलदर्भतुलसीयुत शङ्खोदकधारान्दद्यात् २(†)।
ततस्तैः पवित्रपाणिभिर्ब्राह्मणैः कृत्वाऽमुकगोत्रायामुकशर्म्मणे प्रेताय विष्णुरूपायेदं तिलोदकमुपतिष्ठताम् इति वाचयित्वा सकुशतिल-मुदकाञ्जलिं दापयेत्॥

ततो विसर्ज्जनादिश्राद्धशेषं समाप्य ततोऽनेन कर्म्मणा श्रीभगवान् विष्णुरिमं प्रेतं शुद्धमपापमगर्हितं करोतु। इति वाचयित्वा स्वयं स्नात्वा गुड़शर्करापायसादि स्वजनैः सह भुञ्जीत।
अत्र त्र्यहमाशौचं कार्य्यमित्यपरार्कः ३(‡)।

---

१(*) 'ये तव ब्राह्मणाः संमर्शिनः; युक्ता आयुक्ताः, अलूक्षा धर्म्मकामाः स्युः'। इति श्रुतिः।
" 'ददाति विप्राय बहुश्रुताय वेदान्त विज्ञानतपस्विनेच' इति स्मृतिः।
'विद्या·विज्ञानमास्तिक्याभिजात्य शौचाचारयुक्ताय विप्राय दद्यात्' इति स्मृतिः।
'विद्वान् दाता यज्वा ब्राह्मणः पात्रमाहुः'। 'सांख्ययोग विचारेण सविप्रो—धीर उच्यते'। अथवा गीतोक्त-विप्र·लक्षणान्विताय शमादियुक्तायेति।
" याज्ञवल्क्य स्मृति व्याख्यानेविज्ञानेश्वरीयादाविति। तमादौ नैतदुक्तम्।
२(†) 'शौंखस्य' शङ्खपुष्पाणां सङ्खलानाञ्च सङ्खम्।
विष्णुना विधृतोनित्यं मम शान्तिप्रदोभव॥ इति
३(‡) याज्ञ·वल्क्यस्मृति व्याख्यातम्।

यथा—

विष्णुश्राद्धसमाप्तौ तु त्रयोदश्यान्दिनत्रयम् ।
आशौचं पिण्डदः कुर्य्यान्नतु तद्बन्धु गोत्रजा इति ॥४६४॥

192. एतन्नोक्तं मिताक्षरादौ ॥

तेन यथासम्भवं व्यवस्था, शुभमरणस्यापीमं विधिं
यथासम्भवं कृत्वा पारलौकिकं कुर्यादिति १(*) ॥४६५॥

इति श्रीविधानपारिजाते आश्वलायनगृह्यपरिशिष्टोक्तनारायणबलि-
प्रयोग विधानम् ॥

—*—

## अथ सहगमन विधानम् ।

—*—

193. हेमाद्रौ, यथाः—

अथान्वारोहणं स्त्रीणां आत्मनोभर्त्तुरेव च ।
सर्व्वपापक्षयकरं नरकोत्तारणाय च ॥४६६॥
अनेकस्वर्गफलदं मुक्तिदञ्च तथैव च ।
जन्मान्तरे च सौभाग्यं धनपुत्राभि वृद्धिदम् ॥४६७॥

194. अत्र हारीतोऽपि,—

मृते भर्त्तरि या नारी धर्म्मशीला दृढव्रता ।
अनुगच्छति भर्त्तारं शृणु तस्यास्तु यत्फलम् ॥४६८॥
तिस्रः कोट्योऽर्द्ध कोटी च यावन्त्यंगरुहाणि वै ।
तावन्त्यब्दसहस्राणि स्वर्गलोके महीयते ॥४६६॥
मातृकं पैतृकञ्चैव यत्र कन्या प्रदीयते ।
कुलत्रयं पुणात्येषा भर्त्तारं यानुगच्छति ॥५००॥
स्थिते तिष्ठति या नारी म्रियते च मृते प्रिये ।
सुस्थितं दुःस्थितं वापि भर्त्तारं सा पुणाति वै ॥५०१॥

---

१(*) 'उत्तारणायच, 'अनेकस्वर्गफलदं मुक्तिदञ्च तथैवच ।
जन्मान्तरे च सौभाग्यं धनपुत्राभिवृद्धये' ग्रन्थान्तरे, इत्यधिकः पाठोऽस्ति। पश्चात्कथनेनाव
पुनः कथनं वृथेति मन्ये ।

195. महाभारतेऽपि—

व्यालग्रही यथाव्यालं बलादुद्धरते बिलात्।
तद्वत्पतिं पापकृतं निरयादुद्धरेत सा—॥५०२॥
इत्यादि फलवाक्यमुक्तम्।

196. अत्र कर्त्तव्यमुक्तम् , दिवोदासीय निबन्धे—

तैलाभ्यङ्ग परा भूत्वा धृ (घृ) तमाल्यानुलेपना।
अश्वपृष्ठे समारूढ़ा.........................॥५०३॥
आनमन्ती रविं विप्रान् देवमूर्त्ती गुरूनपि।
हसन्ती ददती वित्तं सर्व्वसाधारणं सती ॥५०४॥
ततः पितृवनं गत्वा स्नात्वा संकल्पपूर्व्वकम्।
सौभाग्यद्रव्यसंयुक्तां च्छूर्पान्दद्यात् प्रयत्नतः ॥५०५॥
लक्ष्मीनारायणं देवं सत्वदं प्रार्थयीत वै।
लक्ष्मीनारायणोदेव बलसत्वगुणाश्रयः ॥५०६॥
गाढ़ं सत्त्वञ्च मे देयाद्धायनैः परितोऽपिच (सः) १(*)।
सोपस्कराणि शूर्पाणि वापणैः संयुतानि वै ।।५०७॥
लक्ष्मीनारायणप्रीत्यै सत्वकामा ददाम्यहम्।
अग्नेः समीपमागत्य पञ्चरत्नानि पल्लवैः ॥५०८॥
नीलाञ्जनं तथा बध्वा मुखे मुक्ताफलं न्यसेत्।

---

१(*) श्रुतिश्च—'इमानारीरविधवा'—इत्यादि।
'कुहस्विद्दोषा कुहव स्तोरश्विना,—विधवेव देवरम्'। इत्यादि च। ऋक्संहि ७, ८, १८, २। पः ३। सं १२। 'अपि वा धव इति मनुष्याणाम्। तद्वियोगाद्विधवा। देवरोद्वीत्यर्तिकर्म्मा'।
" विष्णुसूत्रञ्च—'मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहनंवा' इति।
" व्यालग्राहीति पाठोऽप्यस्ति। 'तद्भर्त्तारमादाय तेनैव सह मोदते' इत्यं पाठान्तरमप्यस्ति।
" 'यानि रोमाणि मानवे' इति भिन्नः पाठः। सहमरणञ्चेति,—मृतपतिसहित जूलज्ज्वलिता-रोहणपूर्व्वकवैधमरणमिति। स्मृतौच—शरीरार्द्धं स्मृताजाया पुण्ये पापफले समा' इति स्मृतेः सपत्नौ एकदेहत्वान्नदोषः। 'विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु। एकत्वमागत भर्त्तुः पिण्डगोत्रेच सूतके'॥
'तत्र सा भर्त्तृं परमां स्तूयमानाप्सरोगणैः। क्रीड़ते पतिना सार्द्धं, यावदिन्द्राश्चतुर्द्दश।'
पितृमातृसुतस्थाद श्वश्रूश्वशुरमातुलैः। हीना न स्याद हीना भर्त्त्रा गर्हणीया ऽन्यथा भवेत्'॥
" 'नो विवाह विधिः प्रोक्तो विधवा वेदन'।पुनः' इति मानवे धर्म्मशास्त्रे च।

ततोऽग्नि-प्रार्थनां कुर्य्यान्मन्त्रेणा नेन निश्चितम् ।
स्वाहा संश्लेषनिर्व्विन्न सर्व्वगोत्रहुताशनम् ॥५०६॥
सत्व( स्वर्ग ) मार्ग प्रदानेन नय मां भर्त्तुरन्तिकम् ।
ततोऽग्नौ जुहुयादाज्यं स्रुवेण श्रद्धयान्विता ॥५१०॥
ततोऽधिपतिमग्निञ्च विष्णुं सत्वपतिं हुनेत् ।
कालं धर्म्माधिपंचैव पृथिवीं लोकधारिणीम् ॥५११॥
अदूभ्योरसाधिष्ठात्रीभ्यो वायुं वलपतिन्तथा ।
सर्व्वाधिपतिमाकाशं धर्म्माधिष्ठातृ-कालकम् ॥५१२॥
अदूभ्यश्च सर्व्वसाक्षिभ्यो ब्रह्माणं वेदनायकम् ।
रुद्रं श्मशानाधिपतिं विष्णुं सर्व्वपतिन्तथा ॥५१३॥
एकादशाहुतीर्हुत्वा कुर्य्यादग्नेः प्रदक्षिणम् ।
शिलामारुह्य पुष्पाणि गृहीत्वाग्निं पुनर्नमेत् ॥५१४॥
त्वमग्ने सर्व्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेव देवजानीषे नाविदुर्यानि मानुषाः ॥५१५॥
अनुगच्छामि भर्त्तारं वैधव्यभय-पीडिता ।
सत्वमार्गप्रदानेन नय मां भर्त्तुरन्तिकम् ॥५१६॥
मन्त्रमुच्चार्य्य शनकैः प्रविशेच्च हुताशनम् ।
तां प्रेतस्योत्तरे सुप्तां विभृयाद्देवरःकरे ॥५१७॥
अथोदीर्ष्केति मन्त्राभ्यां दुर्व्वलान्तां समुन्नयेत् १(*) ।
सत्वाधिकातु सुहृदः समाश्वास्यानलं विशेत् ॥५१८॥
लक्ष्मीनारायणं देवं स्मरन्ती प्राणवल्लभममिति ॥५१६॥
इदं सहगमनं गर्भिणीनां, वालापत्यानां, रजस्वलानाम् , सूतिकानाञ्च निषिद्धम् ।

197. **तदुक्तं अत्रिणा,—**

वालापत्याश्च गर्भिण्यः सूतिकाश्च रजस्वलाः ।
गर्भिणी गर्भवधजं पापं वज्रं समाप्नुयादिति २(†) ॥५२०॥

---

१(*) श्रुति :—'उदक्रमीद्'। शुक्ल यजुः ११, २२, अः मः ।
'उदग्रे तिष्ठ' ,, ,, १२, १२, ,, ,, ।—इति वा संभवतः ।

२(†) अत्र 'पापं वज्रं' 'पापं वर्षप (ध)' माप्नुयात्' इति पाठान्तरद्वयमस्ति । द्वयं पाठे अर्थवोधीनभवेत् ।

रजस्वलायां यदा भर्त्ता मृतः सा देशकालवशात्तदैवानुगन्तु मिच्छति,
198\. न पञ्चमादि दिनं प्रतीक्षते । तदा विधिरुक्तः नारायणभट्टीये,
लौगाक्षिणा,—

यदा स्त्रियामुदक्यायां पतिः प्राणान् समुत्सृजेत् ।
द्रोणमेकं तण्डुलानां अवहन्याद्विशुद्धये ॥५२१॥
मुसलाघाततस्त्वसृक स्रवते योनि मण्डलात् ।
विरजस्का मन्यमाना स्वे चित्ते तदसृक्क्षयम् १(*) ॥५२२॥
दृष्ट्वा शौचं प्रकुर्व्वीत पञ्चमृत्तिकया पृथक् २(†) ।
त्रिंशद् विंशतिदश पञ्चदत्वा त्वहः क्रमात् ॥५२३॥
विप्राणां वचनाच्छुद्धा समारोहेद्धुताशनम् ।
नारीणां सरजस्कानामियं शुद्धिरुदाहृतेति ॥५२४॥

अत्र ब्राह्मण्या एकचित्यारोहणमेव न पृथक्चित्यारोहणम् । क्षत्रियादिस्त्रियाः पृथक् सहवा चित्यारौहणम् । असवर्णायाः स्त्रियाः

199-200-201. पृथक्चितिरेवेतिनिर्णीतं हेमाद्रि-मदनपारिजातमिताक्षरादिग्रन्थेषु ।

202\. **चितिभ्रंशे प्रायश्चित्तमुक्तं, आपस्तम्बेन,—**

चितिभ्रष्टातु यानारी मोहाद्विचलिता भवेत् ।
प्राजापत्येन शुद्ध्येत तस्माद्वै पापकर्म्मणः ॥५२५॥
भर्त्रनुगमन समये चिति भ्रष्टेत्यर्थः ।
मोहाद्विचलिता नारी चितिभ्रष्टा कथञ्चन ।
प्राजापत्यं चरेत् सापि व्यवहार्या भवेदत इति ३(‡) ॥५२६॥
अथैषां वचनाना मेकवाक्यतया प्रयोगः प्रदर्श्यते ।

---

१(*) रजस्वला, पुष्पिता, स्त्रीधर्म्मिणीति । 'भर्त्तुः पिण्डप्रदानेतु भवेन्नारी रजस्वला । वस्त्रं-त्यक्त्वा पुनः स्नात्वा पञ्चगव्येन शुद्ध्यति' । एतत्तु अपराधिकारिणी, अभावे दाहेमन्तव्यम् । इति स्मृतिः । अन्यच्च —'शुद्धाभर्त्तुंश्चतुर्थेऽह्नि दैवे पैत्रेच पञ्चमी' इति । सहमरण विषये आर्षो विधिरन्यः ज्ञेयः ।

२(†) गङ्गा-यमुना-तुलसी-विल्व-चतुष्पथस्था मृत्तिकाः पञ्च विज्ञेयाः ।

३(‡) पापस्य द्वे शक्ती, तयोरेका नरकोत्पादिकाऽपरा व्यवहार विरोधिकाच । नरकोत्-पादिका प्रायश्चित्तेन नश्यति । अपरातु धर्म्मानुष्ठानेन, शिष्टवाक्येन शिष्टाचारेणच पुन नाश्यंयाति ।

सहगमने कृताध्यवसा या नारी सौभाग्यद्रव्य ममुञ्चती मुमुर्षु भर्त्तार-मुपलक्ष्योपवासव्रता सत्वदातारं लक्ष्मीनारायणं स्मरन्ती तिष्ठेत्। ततोभर्त्तरि मृते सति श्मशान भूमिमेत्य स्नात्वा देशकालादि संकीर्त्या-त्मनोभर्त्तुश्चैतत् जन्मजन्मान्तर परम्परार्ज्जित सर्व्वपापक्षयद्वारा लक्ष्मीनारायण प्रीत्यर्थं धर्म्मशास्त्रपुराणोक्तानेकफल-प्राप्त्यर्थं चान्वा-रोहणं करिष्ये ।

तदङ्गतया विहित-हरिद्राकुङ्कुमांजनादि सौभाग्यद्रव्ययुतवंशपात्रदानञ्च करिष्ये इति च सङ्कल्प्य सोपस्कराणि शूर्पाणि दद्यात् ।

**तत्र मन्त्रौ,—**

लक्ष्मीनारायणोदेवो वलसत्वगुणाश्रयः ।
गाढ़ं सत्वञ्च मे दद्याद्वापणैः परितोषितः ॥५२७॥
सोपस्कराणि शूर्पाणि वापणैः संयुतानि च ।
लक्ष्मीनारायणप्रीत्यै सत्वकामा ददाम्यहम् ॥५२८॥

अनेन सोपस्कारशूर्पदानेन लक्ष्मीनारारणौ प्रीयेतामितिवदेत्। ततोऽग्निसमीपमागत्य पञ्चरत्नानि नीलाञ्जनञ्चाञ्चलदेशे वद्ध्वा मुखे ३(‡) मुक्ताफलं निक्षिप्याग्निं प्रार्थयेत् ।

**तत्र मन्त्रः—**

स्वाहासंश्लेषनिर्विष्ट्वा(ण्णः) सर्व्वगोत्रहुताशन ।
सत्वमार्गप्रदानेन नय मांपत्युरन्तिकम् ॥५२९॥

इत्यग्निं सम्प्रार्थ्याज्येनाग्नौ जुहुयात् । ॐ अग्नये तेजोऽधिपतये स्वाहा (१) विष्णवे सत्त्वाधिपतये स्वाहा (२) कालाय धर्म्माधिपतये स्वाहा (३) पृथिव्यै लोकाधिष्ठात्र्यै स्वाहा (४) अद्भ्योरसाधिष्ठात्रीभ्यः

---

१(*) पञ्चरत्नानि---'कनकं हीरकं नीलं पद्मरागञ्च मौक्तिकम्' इति ।
मतान्तरेतु—'मणि-मुक्ता प्रवालञ्च रजतं काञ्चनन्तथा ।
पञ्चरत्न मिदं प्रोक्तमृषिभिः पूर्व्वदर्शिभिः' ॥

,, नीलाञ्जनं,—नीलवर्णं मञ्जनमिति । अञ्चलं व्यवहृत वस्त्राग्रभागः ।

,, नीलरूपं अञ्जनं नीलाञ्जनं सौम्य दर्शनम् । तथाच 'अञ्जनं कज्जलेचाक्षौ सौवीरेऽथ रसाञ्जने' इति कोषः ।

,, 'मुक्ताथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम्' इति कोषकृत् । एतस्यवृत्तं भोजरा जीये युक्तिकल्पतरावस्ति ।

स्वाहा (५) वायवे बलाधिपतये स्वाहा (६) आकाशाय सर्व्वाधिपतयेस्वाहा (७) कालाय धर्म्माधिष्ठात्रे स्वाहा (८) अद्भ्यः सर्व्वसाक्षिणीभ्यः स्वाहा (९) ब्रह्मणे वेदाधिपतये स्वाहा (१०) रुद्राय-श्मशानाधिपतये स्वाहा (११) सत्त्वाधिपतये विष्णवे स्वाहेति केचिज्-जुह्वति । एवमाज्याहुतीर्हुत्वाग्निं प्रदक्षिणीं कुर्य्यात् ।

न्यस्तां शिलां सोपस्करामारुह्य फलपुष्पाञ्जलिं गृहीत्वाग्निं प्रार्थयेत् ।

ॐ त्वमग्ने सर्व्वभूतानामन्तश्चरशि साक्षिवत् ।
त्वमेव देव जानीषे न विदुर्यानि मानुषाः ॥५३०॥
अनुगच्छामि भर्त्तारं वैधव्यभय पीड़िता ।
स्वर्गमार्गप्रदानेन नय मां भर्त्तुरन्तिकमिति ॥५३१॥

एवमग्निं सम्प्रार्थ्य प्रेतस्योत्तरतः स्थितां देवरः शिष्योऽन्योवा नमस्कृत्य-करे धृत्वा 'उदीर्ष्वेति' द्वाभ्यां मन्त्राभ्यां सत्वरहितामुत्थापयेत् १(*) । सत्वाधिकातु स्वयमेव सुहृदः समाश्वास्य—

भर्त्तारं विष्णुरूपं स्मरन्ती, पत्युः साग्निस्त्वे पात्रविन्यासोत्तरकालं पतिवामाङ्गभागे चितिं प्रविशेत् ॥

203. अन्यच्च, संग्रहे—

ग्रामाङ्के विधिवत्काष्ठ-निचये दर्भमन्त्रिते ।
उत्तानशायिनी भुत्वा संस्मरेत जनार्द्दनम् २(†) ॥५३२॥
तदङ्गपञ्चके पुत्रो देवरोवाथ गोत्रजः ।
जुहूयात् सर्पिरादाय गायत्र्याहुतिपञ्चकम् ॥५३३॥
नाभौ वक्त्रे ललाटे च हृदये कर्णयोर्द्वयोः ।
अग्निं प्रजापतिं रुद्रं सूर्य्यञ्च यममेव च ॥५३४॥
यजेदेवमनिमान् पुत्रो नाभ्यादिषु यथा क्रमम् ।
दहेशे च ततोवह्निं तृणैरादीपयेत् सुधी रिति ॥५३५॥
ततः पुत्रादिर्यथाविध्यग्निदानादिकं कुर्य्यात् ३(‡) ॥५३६॥

---

१(*) मन्त्रो—मैन्त्रोऽयं प्रार्थनायां स्वाहेति योध्यः ।

२(†) 'उदीर्ष्वनार्य्यभिजीवलोकम्'—ऋग्वेद—(१०।२।१८।८)। 'इमानारीरविधवा'—ऋग्वेद—(१०।२।१८।९८।७)। 'अन्ते नारायण स्मृतिः' इतिस्मृतेर्जनार्द्दनस्येति 'नमो नारायणाये'ति जपं कुर्यात् ।

३(‡) पद यथा विधि,—विधाने मन्त्र मान्त्रित्य तत् पत्नीइडिसन्दर्भानुसारेण अग्निप्रदानं क्रियतामिति।

204. **सहगमने दशपिण्डे विशेषमाह, रेणुः—**

एवं श्राद्धद्वयं कुर्य्यात् कार्य्यैक्यादेक पाकतः ।
एकोद्दिष्टं पार्वणञ्च शेषं प्रकृतिवद्भवेदिति १(*) ॥५३७॥

205. **ढुंढु (ढु) पद्धतावपि—**

अन्वारोहणेऽव्ययवपिण्डार्थस्तंत्रेणपाकः कार्य्यः पिण्डस्तु पृथक् पृथक् कार्य्य इति २(†) ।

206. **श्राद्धकल्पेऽपि—**

अन्वारोहे कृते पत्न्याः पृथक्पिण्डां स्तिलाञ्जलीन् ।
तन्त्रेणैव तदा दद्याद्दम्पत्योरविशेषतः ॥५३८॥
पृथक्शिलेन कुर्व्वीत दद्यादेकशिले तथा ३(‡) ।
नव श्राद्धानि सर्व्वाणि सपिण्डीकरणं पृथक् ।
नव श्राद्धन्तु दम्पत्योरन्वारोहणे एव तु इति ॥५३९॥

लौगाक्षिवचनमुदाहृत्य व्याख्यातम् । यथा, दम्पत्योरन्वारोहणमृततिथ्येकत्वे पिण्डनिर्वपणम् । श्राद्धञ्च द्विपितृकश्राद्धवत् समासेन स्यात् । नवश्राद्धन्तु पृथगेव न समासेन । अत्र मृताहनीतिविशेषोपादाना न्मृततिथिभेदस्तु क्षयाहादौ न समासः किन्तु पृथगेव । एवमनेकसमण्वारोहणेऽपि ज्ञेयम् ।

207. **यच्च, स्मृत्यन्तरम्—**

एकचित्या समारूढौ दम्पती निधनङ्गतौ ।
पृथक् श्राद्धं तयोः कुर्य्यादोदनञ्च पृथक्पृथगिति ॥५४०॥

---

१(*) प्रकृतिवत् विकृतिः स्यादिति ।

२(†) तन्त्रेणेति,—तन्त्रन्तु अनेकोद्देशेनैकस्य सकृदनुष्ठानम् । पाकमेकमेकस्मिन् भाण्डेपाकं कृत्वा तस्मात् पिण्डदानं पृथक् पृथक् कार्य्यमिति ।

३(‡) 'उञ्छशिलम् ऋतमिति' कोषः । महर्षिमनुराह,—'ऋतमुञ्छशिलं ज्ञेयम्' । 'उञ्छः कणश आदाने कणिशाद्यर्जनं शिलम्' इत्यमरः । शिल उञ्छे, ततः क. । धार्मिकजन्मतो धनुर्वा स्यात् । अन्यत्र शीलं स्वभावचारित्रमिति ।

208 209. तन्नवश्राद्धविषयम्। एवमेव मदनपारिजातकारादयोमेनिरे। हेमाद्रिस्तु, मृताहनीत्यस्य परिसंख्यां परिहाय १(*)। मृताहनीति यथा श्रुतानुरोधेन साम्वत्सरिकश्राद्धमात्रविषयमेतत्। तेन सपिण्डीकरणतीर्थश्राद्धादौ पृथक्देयमिति व्याख्यातवान्।

210. **स्मृत्यर्थसारेतु—**

अन्वारोहणे एकचित्यारोहणे वा स्त्रियाः पृथक्सपिण्डनं नास्ति। भर्त्तुः कृते स्त्रियाः कृतं भवतीति वर्णितम्।

211. **श्राद्धप्रकाशिकायामपि**—२(†)

मृते पितरि मातुस्तु न कुर्य्यात् सहपिण्डनम्।

212. पितुरेव सपिण्डत्वे तस्यामपि कृतं भवेत्-इत्यत्रिवचनमुदाहृतम् ॥५४१॥
तत्रापि भर्त्रैकेनैवेति बहवः। भर्त्रादित्रयेणैवेत्यन्ये।

**अत्रायम्भावः—**

दम्पत्योः परस्परममन्त्रकं पिण्डद्वयमेलनं कृत्वानन्तरं पितामहादित्रयेण सपिण्डनं कार्य्यम्।

पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।
स मृतापि हि तेनैक्यं गतामन्त्राहुतिव्रतैरिति यमस्मरणात्॥

213. अत्रान्योविशेषः। श्राद्धकाशिकायां उशनसोक्तः—३(‡)

अखण्डितो यदा पिण्डः पत्याचैकेन योजितः।
आन्वष्टक्येषु कर्षुणा ४(S) तर्पणेषु (च) पृथक् पृथक् ॥५४२॥
पुनः सपिण्डनं कार्य्यं पितामह्यादिभिः सहेति॥

तेनात्र सपिण्डीकरणद्वयमिति ज्ञायते। क्षयाहश्राद्धन्तु समासेनेत्युक्त मेव। तथा—

---

१(*) तथा च मीमांसकैरवादि—'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते'॥ परिसंख्यायाः—पञ्चैमालम्भञ्चनन्नरसनाश्वतशेष्वाद्युदाहरणम्।

२(†) क्वचित् काशिकायां क्वचवा प्रकाशिकायामित्येवं पाठोऽस्ति।

३(‡) उशनसः स्मृतौ—

४(S) 'अन्वष्टकासु' इति पुस्तकान्तरे धृतः पाठः। कर्युः—क्रुत्या, घटखातोगर्त्तादिः।
अत्र विष्णुसूत्रम्—'कर्षूसमीपे अपितयसुपस्तमादाय परिस्तीर्य्य तत्रैकैकस्मिन्नाहुतित्रयं
" कुर्य्यात्' इति। अष्टका-मांस-शाक-पूपाष्टकाः। अन्यत् सुगमम् पाणिः श्राद्धपितिष्ठन्ति।

एकचित्यधिरो च तिथेरेकैव जायते।
एकपाकेनैकपिण्डे द्वयी गृहीत नामनी ।।५४३।।
देशकालद्रव्यदेव,–कर्त्रैक्ये तान्त्रिको विधिः। इति शातातपस्मरणञ्च।

अत्रैतच्चिन्त्यते—

किमनुगमनमृतानां स्वमृताहे क्षयाहश्राद्धं स्यादुत भर्त्तृमृत्याह इति।

तत्रैके आहुः—

मास पक्ष तिथि पृष्टे यो यस्मिन्म्रियतेऽहनि।
प्रत्यब्दं तत्तथा भूतं क्षयाहन्तस्य तद्विदुः ।।५४४।।
इत्यादि वचनात् स्वमृताह एवेति। तदयुक्तं तस्यान्यविषयत्वात्।
अग्रतः पृष्ठतोवापि यद्भर्त्तुर्म्रियते तु या।
तस्याः श्राद्धं प्रदातव्यं भर्त्तुरेव क्षयाहनि ।।५४५।।

214. इति पुराणससमुच्चयवचनात्।
एकचित्यां समारूढा भर्त्तुरह्नि पतिव्रता।
तस्याः प्रत्याब्दिकं पुत्रः प्रकुर्य्याद्भर्त्तृवासरे इति रेणुकैरुक्तम्।
प्रत्यक्षं वा परोक्षं वा तद्भर्त्रा (र्त्तुः) म्रियते तु या।
तस्याः श्राद्धं प्रकुर्व्वीत भर्त्तुरेव क्षयाऽनीति ।।५४६।।

215. श्राद्धकाशिकाकारलिखित शङ्खवचनाच्चेति सर्व्वमनवद्यम्।

अत्रायमभिसन्धिः—

सहगमनेऽनुगमने वा···पिण्डः षोड़शश्राद्धानि च पृथक्पाकेनैकपाकेनवा पृथक्कार्य्याणि। सपिण्डीकरणन्तु पृथगेकं वा कार्य्यम्। तीर्थश्राद्धादिकन्तु हेमाद्रिमते पृथगेव। क्षयाहश्राद्धन्तु मृततिथ्येकत्वे एकमेव। मृततिथिभेदे तु पितृश्राद्धं कृत्वा तस्मिन्नेवदिने मातृश्राद्धं कार्य्यम्। अन्वष्टकादि श्राद्धे पितामह्यादिभिः सह पार्वणं कार्य्यमितिनिर्गलितार्थः।

216. अन्यत्तु कपर्दिकारिकायाम्—

मृते भर्त्तरि तद्दाहात् प्राक् पत्नी म्रियते यदि।
पत्न्या वा प्राक्प्रमीतायां दाहादर्व्वाक् पतिर्मृतः ।।५४७।।

तत्र तन्त्रेण दाहः स्यान्नात्र वृ(बु)द्धित्वमुच्यते १(*) ।
कीकसानान्तु संस्कारः पृथगेव तयोर्भवेत २(†) ॥
एकाह्न मृत्यो र्युगपत्तत्रश्राद्धादिकन्तयोः ॥५४८॥

217. **प्रचेताश्च—**

एक चित्यां समारुढौ म्रियेते दम्पती यदि ।
तन्त्रेण श्रपणं कुर्य्यात् पिण्डदानं पृथक् पृथगिति ॥५४९॥
इति ३(‡) विधानपारिजाते सहगमनविधानम् ।

—*—

एवं संस्कारमनुसृत्य प्रसक्तानुप्रसक्तमुक्त्वाथेदानीं प्रेतक्रियाधिकारि-निर्णयः प्रस्तूयते ।

218. **अत्र बृहस्पतिः—**

प्रमीतस्य पितुः पुत्रैः श्राद्धंदेयं प्रयत्नतः ।
ज्ञाति भ्रातृ सुतच्छिष्यैः ऋत्विग्भृत्यपुरोहितैः ॥५४९॥
पुत्राभावे इति शेषः ४(§) । पितृग्रहणमत्र मात्रादेरुपलक्षणम् ।

219. **यथाह, सुमन्तुः—**

मातुः पितुः प्रकुर्व्वीत संस्थितस्यौरसः सुतः ।
तदभावे ज्ञातयस्तु कुर्य्यु रेवौर्द्धदेहिकमिति ॥५५०॥

---

१(*) 'दाहः स्यान्नात्र वृद्धित्वमुच्यते' इति ग्रन्थान्तरे पाठः ।

२(†) 'कीकसम्' अथास्थि, इति कोषकृतः ।

३(‡) 'श्रीविधानपारिजाते' इत्यं पाठान्तरमस्ति ।

प्रमीता—प्रकृष्टरूपेणास्माल्लोकाद्दिव्यलोकं गता इति ।

" अत्र 'पुत्राः' इत्यत्र पद्यामिति पाठान्तरमस्ति ।

४(§) "ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथविट्पतिः ।
एभिरेवहुतं यत्तु तद्धुतं स्वयमेवहि" इति स्मृतौ ॥

" सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु निवर्त्तेताचतुर्द्दशात् ।
जन्मनामस्मृतेरेके तत् परं गोत्रमुच्यते " ॥

220. **विष्णुपुराणेऽपि—**

पुत्रः पौत्रः प्रपौत्रोवा भ्रातावा भ्रातृसन्ततिः ।
सपिण्डसन्ततिर्व्वापि क्रियायै नृप जायते ॥५५१॥
तेषामभावे सर्व्वेषां समानोदकतयोर्भवेत् ।
एकाहमृत्यो युगपन्नव श्राद्धादिकन्तयोः ॥५५२॥

221. **प्रचेताश्च,—**

एकचित्तां समारूढौ.................... । १(*)
मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेनवा ॥५५३॥
कुलद्वयेऽपिचोच्छिन्ने स्त्रीभिः कार्य्या क्रिया नृप ।
तत्संघातगतैर्व्वापि कार्य्या प्रेतस्य वैक्रिया ।
उच्छिन्नबन्धुरिक्तस्य कारयेदवनीपति रिति ॥५५४॥

222. **देवजान येऽपि, भविष्ये—**

पुत्रोभ्रातापितावापि मातुलोगुरुरेवच ।
एते पिण्डप्रदा ज्ञेयाः सगोत्राश्चैव बान्धवाः ॥५५५॥
सर्वैरनुमतिं कृत्वा ज्येष्ठेनैवतु यत् कृतम् ।
द्रव्येणवा विभक्तेन सर्वैरेव कृतम्भवेत् ॥५५६॥
पुत्रेषु विद्यमानेषु नान्यं वै कारयेत् स्वधाम् ।
अनुकल्पोह्यपुत्रस्य सगोत्रैश्चैव बान्धवैः ।
प्रेत कार्य्यं हितैः कार्य्यं सर्व्वसम्पत्तिसिद्धये ॥५५७॥

**अकरणे प्रत्यवायोऽपि तत्रैव,—**

प्रेतानां मृतपिण्डं हि नदास्यन्तीह येनराः ।
आत्मानञ्च तथा प्रेतं नयेयुर्नरकं ध्रुवमिति ॥५५८॥

**अन्यत्रापि—**

दौहित्रोवा सगोत्रोवा सपिण्डश्च ततः परम् २(†) ।
स ब्रह्मचारी च सखा शिष्योवा गुरुवान्धवाः ॥
अन्नसम्बन्धिनोवा स्युः प्रेतकार्य्येऽधिकारिण इति ॥५५९॥

---

१(*) 'एकचित्यामिति' प्रागपि प्रोक्तम् ।

२(†) "कृते सपिण्डीकरणे नरः सम्वत् सरात् परम् ।
प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते" इति स्मृतौ ॥

223. **अत्र विशेषो विष्णुपुराणे—**

पूर्व्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ।
त्रिप्रकाराः क्रियाह्येता स्तासां भेदांच्छृणुष्व भोः ॥५६०॥
आद्याह्याद्वादशाह्न मध्ये याः स्युः क्रिया मताः ।
पूर्व्वास्ता मध्यमा मासि मास्येकोद्दिष्ट संज्ञिताः ॥५६१॥
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु १(*) ।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ॥५६२॥
पितृ-मातृ-सपिण्डैर्व्वा समान-सलिलैस्तथा ।
तत् सङ्घातगतैश्चैव राज्ञा वा धनहारिणा २(†) ॥५६३॥
पूर्व्वाः क्रियाः प्रकर्त्तव्याः सपिण्डैरेव चेन्नरैः ।
दौहित्रेण नरश्रेष्ठ कार्य्यास्तत्र नयैस्तथेति ॥५६४॥

224. **ब्रह्मचार्य्यब्रह्मचारिविषये, सुमन्तुः—**

श्राद्धं कुर्य्यादवश्यन्तु प्रमीत-पितृकोद्विजः ।
व्रतस्थोवाऽव्रतस्थोवा एक एव भवेद्यदीति ॥५६५॥

225. **अव्रतस्थोऽनुपनीतः । वृद्धमनुरपि—**

कुर्य्यादनुपनीतोऽपि श्राद्धमेकोऽपि यः सुतः ।
पितृ यज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः ॥५६६॥
कृतचूड़स्तु कुर्व्वीत उदकं पिण्डमेव च ।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं नकारयेत् ॥५६७॥

226. **अकृतचूड़स्तु विशेषमाह, कात्यायनः—**

असंस्कृतेन पत्न्याच ह्यग्निदानं समन्त्रकम् ।
कर्त्तव्यमितरत् सर्व्वं कारयेदन्यमेवहीति ॥५६८॥

---

१(*) "पिण्डंदत्त्वा हरेद्धनम्" इति श्रुतेः। धनहारित्वोऽपि पिण्डदानाधिकारीऽप्यपुत्रेष्वनेक-
संबन्धागधिकारः क्रियासु। तथा च मनुः 'ज्येष्ठेनैव तु पुत्रेण पुत्री भवति मानवः' इति।
२(†) पितुरात्मनः पुत्रात्मा जायते, तथा हि श्रुतिः 'आत्मा वै पुत्रनामासि' इति।
" 'पुत्रस्तु 'पुत्त्राणात् पतनात्' इति मतार्थयाख्यः।
'पुत्रे चायं लोकोऽभयः' इत्यादयश्च।
"अपुत्रस्य गतिर्नास्ति स्वर्गलोकोपलब्धयेच" इति श्रुतेः।

227. असंस्कृतोऽकृतचूडः । सुमन्तुश्च—
अनुपनीतोऽपि कुर्व्वीत मन्त्रवत् पैतृकं विधिम् ।
यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः ॥५६९॥
अयमर्थः, वर्षत्रयानन्तरं चूडाभावेऽपि पित्रोः सर्व्वमेवौर्द्ध्वदैहिकं मन्त्रवत् कुर्य्यात् । वर्षत्रयादर्व्वाक्कृतचूडोऽपि शक्तश्चेत् सर्व्वं मन्त्रवत् कुर्य्यात् । सोऽशक्तश्चेत्तदाग्निदानमात्रं समन्त्रं कृत्वाऽन्येन सर्व्वं कारयेदिति ।

228. मनुरपि,—
नह्यन्यदुच्यते कर्म्म किञ्चिदामौञ्जिबन्धनात् ।
न चाभिव्याहरेद्ब्रह्म स्वधानिनयाद्दते इति ॥५७०॥
अत्र स्वधानिनयं श्राद्धम् । ब्रह्म-वेदः तत्रापि स्वधाशब्दमेवोच्चरेत् नान्यं मन्त्रम् ।
कृतचूडोपनीतः पित्रोः श्राद्धं समाचरेत् ।
उदाहरेत् स्वधाकारं नमुव……… ॥५७१॥
इति विशेषोक्तेः । अपुत्रायाः स्त्रियाः सपत्नीपुत्रः पतिर्व्वा कुर्य्यात् ।

229. यथाह-कात्यायनः,—
विद्धध्या वौरसाः पुत्रा जनन्या और्द्ध्वदैहिकम् ।
तदभावे सपत्नीजः क्षेत्रजाद्यास्तथैव च १(*) ॥
श्वश्र्वाश्चैव स्नुषाचैव तदभावे च सोदरः । इति ॥५७२॥
तदभावे च सोदर इति विशेषोक्ते भर्त्र्यभावात् समवायो भार्य्याया एवाधिकार इति सिद्धम् ।

230. स्त्र्यपि समन्त्रकमेवोर्द्धदैहिकं कुर्य्यादित्युक्तं लौगाक्षिणा ।
यज्ञेषु मन्त्रवत्पत्नी कर्म्मकुर्य्याद यथाविधि ।
तथौर्द्धदैहिके साहि मन्त्रार्हा धर्म्मसंस्कृता इति ॥५७३॥
इदञ्च पुत्राभाव विषयम् ।
अपुत्रायाः पतिर्दद्यात् सपुत्राया ननु क्वचित् ।
एवं पत्न्यपि विज्ञेया पत्युर्वै श्राद्ध कर्म्मणीति ॥५७४॥

---

१(*) 'क्षेत्रजाद्यास्तु तनयाभर्त्तुर्भार्य्यास्तथैव च' इति पुस्तकान्तरधृतः पाठः । प्राक्‌काशीयेनजनाधि षकंजन्याधिकारित्वं विकादीनामाशीर्वादानां औरस-प्रोषितमर्त्तॄणाबाधिकारितिरिति ।

231. इति रेणूक्तेः।

अपुत्रा शयनं भर्त्तुः प्रीणय (लय)न्ती व्रते स्थिता।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेतवै ॥५७५॥

232. इति मनूक्तेश्च।

अपुत्रस्य स्त्रिया कार्य्यं पिण्डंश्राद्धमथोदकम्।
क्रियालोपोनकर्त्तव्यः प्रेतस्य गतिकाङ्क्षिभिः ॥५७६॥
उच्छिन्न बान्धवं प्रेतं पिता भ्राता तथाग्रजः।
जननी वापि संस्कुर्य्यान्महदेनोऽन्यथा भवेत् ॥५७७॥

233. इति बौधायनोक्तेश्च।

यदत्र,—

नच माता नच पिता कुर्य्यात् पुत्रस्य पैतृकम्।
नाग्रजश्च तथाभ्राता त्वनुजश्चैवमेवहि १(*) ॥५७८॥

इति निषेध कथनम्। नतु मृतस्य पुत्राद्यधिकारि-सद्भावे स्वयं-स्नेहेन कुर्य्यादित्येवं परम्।

नपुत्रस्य पिता दद्यान्नानुजस्य तथाग्रजः।
यदि स्नेहेन कुर्व्वीत न प्रेतायोपयुज्यते ॥५७९॥

234. इति व्यासोक्तेः।

पित्रा श्राद्धं न कर्त्तव्यं पुत्राणाञ्च कथञ्चन।
भ्रात्रापैव न कर्त्तव्यं भ्रातृणाञ्च कनीयसा ॥५८०॥
यदि स्नेहेन कुर्वीत सपिण्डीकरणं विना २(†)।
गयायान्तु विशेषेण ज्यायानपि समाचरेत् ॥५८१॥

235. इति बौधायनोक्तेश्च।

अन्यत्रापि,—

पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया।
पुत्राभावेतु पत्नी स्यात् पत्न्यभावेतु सोदरः ॥५८२॥

---

१(*) 'अनुजाचैवमेवहि' इति पाठान्तरम्।

२(†) तृतीयान्त्यस्याम्—'यदि स्नेहाचरेत् श्राद्धं सपिण्डीकरणं विना'। द्रव्यसंकलनस्तादि-विषये। 'पतिपुत्रविहीनानां स्त्रीणां नास्ति सपिण्डता' इति नारीविषये।

सगोत्रोवा सपिण्डोवा प्रेतश्राद्धं समाचरेत् ।
अन्यः प्रेतक्रिया कर्त्ता पुनः संस्कार मर्हति ॥५८३॥
अब्दं न प्रविशेद्ग्राम मरण्यं वा व्रतञ्चरेत् ।
इति राजद्रव्यलोभेन प्रवृत्तस्य वेदितव्यम् ॥
अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदेपदे यज्ञफलमानु पूर्व्याल्लभन्ति ते ॥५८४॥
नतेषामशुभं किञ्चित् पापं वा शुभ कर्म्मणाम् ।
जलावगाहनात्तेषां सद्यः शौचं विधीयते ॥५८५॥

236. इति ब्रह्मपुराणे, पुण्यार्थं प्र:(वृ॑)त्तस्य सद्य शौचविधानात् सर्व्वाभावे (वं) धर्म्मपुत्रः कार्य्यः ।

**तथाहि,—**

अपुत्रेण सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः १(*) ।
पिण्डोदकक्रिया हेतोर्नामसंकीर्त्तनायच ॥५८६॥
इति यमोक्तेः २(‡) ।

237. **नारायण भट्टयामपि—**

अदत्त कन्या यौ पितरौ दत्तः अन्याभावे दत्तानामपि पितैव। दौहित्रमातामहो परस्परं सर्व्वाभावे यः कश्चित्, मातामहश्च दौहित्रो जामातुश्च श्वशुरोमिथः । श्वश्र्वादेः स्नुषाभ्रातरौच मिथोदत्तः । गुरुशिष्यौ परस्परम् । सर्व्वाभावे यः कश्चित् कुर्य्यात्तस्य सर्व्वसम्पत्-प्राप्तिरिति । सन्निहितत्वेऽपि पुत्रादीनां पातित्वादिदोषे, नाधिकारः ३(‡) ।

पतितेनाग्निसंस्कारः न क्रियां नच तर्पणम् ।
238. कुर्य्यादुन्मत्त एवापि नान्यथेत्यब्रवीद्यमः ॥५८७॥

---

१(*) दत्तकचन्द्रे,—'अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा' इति ।
अथं दत्तकतनयः पूर्व्वेषां नामसंकीर्त्तनाय, पिण्डोदकप्रदानाय, देवामयधर्म्मरक्षणाय, पुत्रोत्पादनद्वारा वंशाविच्छेदायच विधेय इति'। 'पुत्रेणार्थमौकोऽनघ्यः ।

२(†) भट्टीयेपि, इत्यपि पाठान्तरमस्ति । अन्यद दत्तक सर्व्वस्व-दत्तकचन्द्रिका—तत्त्व कौमुद्यादिष्वस्ति । अत्र सर्व्वाभावे—अपत्याभावेऽपि बोधतीति ।

३(‡) अक्षिरुद्ध्यनात् प्राग्यदि कुल्याधिकारि-पुत्रः समागतः स्यात् तदा दायाधिकारित्वं विहाय स कर्म्म कुर्य्यादिति ।

इति स्मृतेः। ब्रह्मचारीतु मातापितृ गुरूपाध्यायानामेव क्रियां कुर्य्यान्नान्येषाम्।

239. **यथाह, सुमन्तुः—**

न ब्रह्मचारिणः कुर्य्यु रुदकं श्राद्धमेवच।
यदिमाता यदिपिता गुरुश्चेत् कुर्य्युरेवहि ॥५८८॥ इति

240. **अत्र सम्वर्त्तः—**

ब्रह्मचार्य्यपि कुर्व्वीत अग्निपिण्डोदकक्रियाम् १(*)।
तेनाशौचं न कर्त्तव्यं सन्ध्याकर्म्म समाचरेत्।
अग्निकार्य्यञ्च कर्त्तव्यं सायं प्रातश्च नित्यशः ॥५८६॥

241. **कर्त्त्रन्तर सद्भावेतु, मनुः—**

आदिष्टो नोदकं कुर्य्याद्व्रतानामासमापनात्।
समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत् ॥ ५६०॥ इति

242. **षड्शीतौ—**

स्वीयाचारादपि भ्रष्टाः पतिता येच दूषिताः।
न कुर्य्युरुदकन्ते वै तेभ्योऽप्यन्येन चैवहि ॥५६१॥

243. **मदनरत्ने, हारीतः—**

पतितात्मापविद्धानां चरन्तीनाञ्चकामतः।
दत्तानाञ्चैव कन्यानां न कार्य्या सलिलक्रिया ॥५६२॥ इति

इदन्तु कर्त्तन्तर सद्भावे वेदितव्यम्। तदभावे कुर्य्यादेव ब्रह्मचारी पित्रादेरन्यश्चेत् प्रेतक्रियां करोति (तदा) तदा पुनरुपनेतव्यः।

आचार्य्यं गुरुपाध्यायो निहृत्यापि व्रती·······।
शकव्यन्नं नचाश्नीयान्नच तैः सहसम्विशेत् ॥५६३॥

244. यदि मोहात् स कुरुते पुनः संस्कार मर्हतीति स्मृतेः।
एवं जीवत् पितृ कोऽपि तिलोदकादि कृत्यं न कुर्य्यात्।
ज्ञातिभिः सह ज्ञातीनां प्रेतानाञ्च तिलोकम् ॥५६४॥
न जीवत् पितृकः कुर्य्यादित्याह हरिणी सुतः। इति
पितरि म्रियमाणेतु मातायदि विपद्यते २(०) ॥५६५॥

---

१(०) तवत्तु ब्रह्मचारिणामधिकारः। नतु सर्व्वकर्म्मफलसन्न्यासिनाम्।
२(०) अत्र 'म्रियमाणे' इति पाठान्तरम्।
,, यतीनामप्यद्र यतिधर्म्म समुच्चये, कृष्णानन्दब्रह्मोपनिषद्व वेदान्तकल्पतरुष्वपि। एवमवाप्तिहोविदाहप्रकरणेऽपि।

पुत्रस्तदा कर्म्म कुर्य्याद्दाहादिकं न संशयः । इति

245. निर्हरणाद्यंशमत्र यस्य कार्य्यमित्याह, मनुः—

त्रयाणामाश्रमाणाञ्च कुर्य्याद्दाहादिकाः क्रियाः ।
यतेः किञ्चिन्नकर्त्तव्यं नचान्येषां करोति सः ॥५९६॥
मातापित्र्योरुपरमे सद्यः शौचं यते र्भवेत् ।
स्नात्वा भिक्षाटनं कुर्यादात्मानं परिचिन्तयेत् इति ॥५९७॥

246. यतिमरणे, शातातपः—

एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाः ।
न कुर्य्यात् पार्व्वणादन्यद् ब्रह्मीभूताय भिक्षवे ॥
अहन्येकादशे प्राप्ते पार्वणन्तु विधीयत इति ।५९८॥

247. कौर्म्मे विशेषः—

कुटीचकं सम्प्रदहेत् पूरयेच्च बहूदकम् ।
हंसं जले विनिक्षिप्य परहंसं विकीरेत्तुतत् ॥५९९॥
कुटीचके यथोक्तं स्यात् पार्व्वणन्तु बहूदके ।
हंसे नारायणवलिं विकीरेत्तु न किञ्चनेति १(*) ॥६००॥

248. वृद्धमनुरपि—

यतीनां मरणे जाते ना शौचं नोदकक्रिया ।
नैकोद्दिष्टं षोड़शानि भापिण्ड्यं न च विद्यते ॥६०१॥
नारायणवलिन्तत्र कुर्य्याद्वै द्वादशाहनि ।
तेभ्यश्च विष्णुबुद्ध्या तु यतीन् सम्पूजयेद् द्विज इति ॥६०२॥

249. वायुपुराणे,—

सन्न्यासिनोऽप्याब्दिकादि पुत्रः कुर्य्यान्मृताहनि ।
महालयेतु यच्छ्राद्धं द्वादश्यां पार्व्वणेनत्विति २(†) ॥६०३॥

—*—

१(*) 'विकीरेत्तु' इति पाठान्तरम् । अथ कुटीचकस्य दाहानन्तरं तद्योग्यं कार्य्यं विधेयमिति। कुटीचक-बहूदक-हंस-परमहंसा इति शास्त्रे सन्न्यासिनां भेद उक्तः ।

२(†) 'महालये यतेश्श्राद्धम्' इत्यं पाठान्तरमस्ति । आश्वयुक्कृष्णपक्षे यमपनालाख्यातः श्राद्धयोग्यकालः । पितादीनां महान् आलयः कालः तर्पण-दान-श्राद्धादियोग्योयम् इति । तथाहि 'यमलोकं परित्यज्य आगता ये महालये' इति स्मृतौ ।

## अथ कर्त्रादि विपर्य्यये प्रायश्चित्तम् ।

—*—

250. **गृह्यपरिशिष्टे,—**

असगोत्रः सगोत्रोवा यदि स्त्री यदिवा पुमान् ।
प्रथमेऽनि योदद्यात् स दशाहं समापयेत् ।।६०४।।

**तथा,—**

अन्यगोत्रोह्यसम्बद्धः प्रेतस्याग्निं ददाति यः ।
पिण्डश्चोदकदानञ्च स दशाहं समापयेत् ।।६०५।।

दशाहपर्य्यन्तमेवायं नियमः अतस्तन्मध्ये देशान्तरस्थित पुत्रागमनेऽपि प्रथमदिवसोपक्रान्तेनैव दशपिण्डा दातव्याः न तु पुत्रेणेति मन्तव्यम् ।

251. **अत्र विशेषमाह, मार्कण्डेयः—**

अस्थिसञ्चयनादर्व्वागागतो यदि पुत्रकः ।
ततस्तत् कर्म्म कुर्व्वीत दाहिकोविसृजेत् पुनः १(*) ॥६०६॥
अस्थिसञ्चयनादूर्द्ध मागतो यदि पुत्रकः ।
प्रथमेऽह्नि योदद्यात् स दशाहं समापयेदिति ।।६०७।।

252. **वशिष्ठोऽपि—**

दाह कर्म्म नव श्राद्धं तोयदानन्तथैव च ।
नान्य प्रच्छादनं कर्म्म पिण्डदानं दशाहिकम् ।।६०८।।
पूर्व्वकर्म्मेति विख्यातं कर्त्तैक स्तत्रवोच्यते ।
यदि कर्त्रन्तरं यायात् कृत्स्नं लुप्येत् सवह्निकम् इति ।।६०९।।

**अन्यत्रापि—**

कालेन व्यवधीयेत कर्त्तावा व्यवधीयते ।
कालकर्त्तृ व्यवहितं तत्तत् कार्य्यं पुनर्नवमिति ।।६१०।।

---

१(*) 'पतितेनान्यस्याग्निसंस्कारोनविधेयः ।
तथा पतितस्यचाकृतप्रायश्चित्तस्यचेति ।

253. **अत्राग्निदातृ-विपत्तौ, प्राह-भारद्वाजः—**

अधिकारिषु पुत्रेषु बहुष्वेकस्य चेद्भवेत् ।
विपत्तिरपरः कुर्य्यादेवं ज्येष्ठक्रमेणतु ॥६११॥

254. **कर्म्मप्रदीपेऽपि—**

दाहादिकर्म्मणि यदा परिवर्त्तमाने,
मध्ये भवेद्यदि निवृत्तिरथान्तरायात् १(*) ।
दाहं विना सकलकर्म्म तिलोदकादि ;
सम्वत्सरेऽपि विगमे करणीयमेव इति ॥६१२॥

**तथा,—**

शालिभिः शक्तुभिर्व्वापि शाकैर्व्वाप्यथ निर्व्वपेत् ।
प्रथमेऽहनि यद्द्रव्यं तदेवस्याद्दशाहिकम् ॥६१३॥

**तथा,—**

आद्यपिण्डान्यदेशेषु प्रेते पिण्डो भवेद् यदि ।
पूर्व्वदत्तान् पुनः पिण्डान् दद्यादित्याह गौतमः ॥६१४॥

255. **व्यासः—**

स्थानभ्रंशोनकर्त्तव्यः पिण्डस्यापि तिलाम्बुनः ।
एकदेशे प्रकर्त्तव्यं पिण्डदानतिलोदकम् ॥६१५॥

**तथा,—**

दशाहमध्ये पाषाणं प्रमादाद्यदि नश्यति ।
पाषाणमन्यन्निक्षिप्य पुनरावर्त्तयेज्जलम् ॥६१६॥

**तथा,—**

प्रमादाद् द्वाससोदातुं यदि कर्म्मणि विस्मृतिः ।
कृच्छ्रत्रयं तदा कृत्वा वासः खण्डं समाहरेत् ॥६१७॥
आचार्य्यपात्रयोरेव प्रायश्चित्ति विपर्य्यये ।
श्वचाण्डालादिभिः पिण्डः संस्पृष्टो यदि कुत्रचित् ॥
कृच्छ्रत्रयं ततः कृत्वा दद्यात् पिण्डं पुनस्तथा ॥६१८॥

---

१(*) अन्तरायः—(अन्तरायः) कृत्ये समारब्धे तन्मध्येकार्य्यप्रतिबन्धके विघ्नः ।

256. **संग्रहे,—**

विड़ाल मूषकस्पर्शे पिण्डेच द्विदलीकृते।
कृच्छ्रत्रयं प्रकुर्व्वीत पिण्डदानं पुनश्चरेत् इति ॥६१९॥

**अतिदेशोऽयम्।**

257. **नारायणभट्टीयेऽपि,—**

उत्तरीयशिलापात्रे द्रव्यकर्त्तु र्विपर्य्यये।
कृच्छ्रत्रयं प्रकुर्व्वीत पुनस्तत्त्वं समाचरेदिति ॥६२०॥

258. **देशोपप्लवे, गभस्तिः—**

गृहीत्वा प्रेतपाषाणं गच्छेद्देशविपर्य्यये।
अपक्वस्यापि वा कुर्य्यान्नत्वेतदवशेषयेत् १(*) ॥६२१॥

**तथा,—**

प्रेतक्रियाप्रमादेन चेद्दशाहोर्द्धतोभवेत्।
दाहाद्युदकदानञ्च पुनःकार्य्यं यथाविधि ॥६२२॥

259. **एतदस्थिसञ्चयनात्प्राग् विषयम्—**

अस्थिसञ्चयनात् पूर्व्वं विहितं कर्म्म यस्य तत्।
आशौचादूर्द्धभावाच्चेत् पुनस्तत् सर्व्वमाचरेदिति-कात्यायनपरिशिष्टोक्तेः।

260. **पुनर्दाहे विशेषमाहापस्तम्बः—**

यत्र दाहविधौ वृत्ते पुनर्दहनचोदनम्।
'अस्मात्त्वमभिजातोऽसि'त्वदित्येकाहुतिस्तदेति ॥६२३॥

261. **नष्टशिलाप्राप्तौ, ऋष्यशृङ्गः—**

नष्टा शिला स्यात् पुनरेव दृष्टा, दत्ताञ्जलिश्चैव विधिक्रमेण।
यमेइवेत्यध्मद्वयं प्रपूज्य, तत्रैव सर्व्वं विधिवद्विधेयम् ॥६२४॥

262. **मन्त्रस्तु,—**

यमे इव यन्माने यदेतं पराभव मानुषा देवयन्तः।
आसीदत स्वमुलोकं स्वासस्तेः भवति निन्दनेनेति २(†) ॥६२५॥

---

१(*) देशविपर्य्ययः—उत्पातः दुर्निमित्तमप्लुतादिः।
२(†) ऋग्वेदे—१०।१३।१२।

## अथ नवश्राद्धानि ।

—*—

263. **तत्र सम्वर्त्तः—**

प्रथमेऽह्नि तृतीयेऽह्नि [illegible] मे तथा ।
नवमैकादशे चैव षडनव [illegible] रेदिति ॥६२६॥

**तथा,—**

दैवाद्यदि नवश्राद्धमतीतं प्रथमेऽह्नि चेत्।
तदुत्तरेण कर्त्तव्यं व्याघ्रस्य वचनं यथेति ॥६२७॥

दहनाभावेऽपि नवश्राद्धं यथा कालं कार्य्यमित्याह—

264. **त्रिकाण्डमण्डनः ।**

पञ्चमे सप्तमेवापि दाहकर्म्मणि सत्यपि ।
नवश्राद्धानि सर्व्वाणि कर्त्तव्यानि दिने दिने ॥६२८॥

265. **आपस्तम्बपरिशिष्टेऽपि,—**

नव श्राद्धेषु कृत्तेषु पुनर्दहनकर्म्मणि ।
ऊर्द्धं दशाहादुत्क्रम्य पुनर्दहनमाचरेत् १(*) ॥६२६॥

उक्तकालेऽशक्तिश्चेत्तदा नवमे कार्य्यमि त्युक्तम् ,

266. **स्मृत्यर्थसारे ।**

एकस्मिन् नवमेऽह्नि नवश्राद्धमेकादशेऽह्नि वा कार्य्यमिति । एकादशाहे-करणं यजुर्व्वेदिनाम् ।

नवश्राद्धानि पञ्चाहुराश्वलायन शाखिनः ।
आपस्तम्बाः षड़ित्याहु र्विभाषा तैत्तिरीयिनः ॥६३०॥

267. **इति शिवस्वाम्युक्तेः—**

प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे नवसप्तमे ।
आमश्राद्धानि तत्रस्यु र्मार्कण्डेयोऽब्रवीदिति ॥६३१॥

268. **वृद्धवशिष्ठः—**

नवश्राद्धानि सर्व्वाणि प्रेततृप्तिकराणि तु ।
एकोद्दिष्टानि सर्व्वाणि प्रेतत्वस्य विमुक्तये ॥६३२॥

---

१(*) व्याघ्रपदस्य ऋषेर्वाक्यात् कार्य्यम् । 'पुनर्दाहं समाचरेत्' इति भिन्नः पाठः ।
,, -चत्र 'उत्क्रम्य' इति भिन्नः पाठः ।

अनूदकमधूपञ्च गन्धमाल्यविवर्ज्जितम् ।
नवश्राद्धममन्त्रञ्च स्वधाकारं विना भवेत् ॥६३३॥
पिण्डनिर्व्वपणार्थन्तु चरुश्रपणमत्र तु ।
अन्नं न विकिरेद्भूमौ गृह्णीयादा (द्वा)शिषोनतु ॥६३४॥
पात्रालम्भो न चाक्षय्यमासनादिप्रयोगतः ।
नामगोत्रेण सम्बन्ध-रहितं प्रेतशब्दवदिति ॥६३५॥

269. ब्राह्मणलभे भोजनं देयमित्युक्तं रेणुना—

भुञ्जते ये नवश्राद्धे दीनार्त्ता द्रविणेच्छवः ।
तेभ्यो भोजनपात्राणि पाकभाण्डानि चैव हि ॥६३६॥
दद्यात्तच्छेषमन्नञ्च हिरण्याद्यपि दक्षिणम् १(*) ।
प्रति श्राद्धं नियुञ्जीत ब्राह्मणाश्चैवमेवहि ॥६३७॥
सर्व्वाणि सहवैकस्मिन् दिने स्युरिति वह्वृचाः । इति ।

270 विप्राभावे उक्तं प्रभासखण्डे—

अलाभे ब्राह्मणस्यैव कौशः कार्य्यो वटुः प्रिये ! ।
प्रकल्प्य ब्राह्मणत्वेन सर्व्वं श्राद्धं समापयेत् ॥६३८॥

कुशवटु र्लघुमनुष्य-प्रतिकृतिरिति देवयाज्ञिकः—

271. देवलश्च—

निधाय वा दर्भवटून्-आसनेषु समाहितः २(†) ।
प्रैषानु प्रैष संयुक्तं विधानं प्रतिपादयेत् ॥६३९॥

अस्यार्थः—

स्वागतं श्राद्धं करिष्ये, श्राद्धेक्षणः क्रियताम् । इदन्ते पाद्यमित्यादयः प्रैषाः । एषामुत्तराणि सुस्वागतमित्यादीन्यनुप्रैषाः । तदुभयमुक्तं विधानं श्राद्धेतिकर्त्तव्यताकाण्डस्वरूपमेव कुर्य्यादिति ।

---

१(*) 'हिरण्याद्यपि दक्षिणम्' इत्येवं पाठान्तरमस्ति ।
-बह्वृचो-ऋग्वेदीयाः तच्छाखिन इति ।

२(†) 'दर्भवटुः कुशनिर्म्मितः ब्राह्मणः । सच सार्द्ध षड्भिः कुशैर्भवेत्—तथाहि स्मृतौ,—पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेनतु विष्टरम् । तदर्द्धमोपयमनं तदर्द्धेर्न्मधिजः स्मृतः' इति हलायुधः ।

## तत्र सङ्कल्पितान्नस्य प्रतिपत्तिमाह ।

—*—

**स एव,—**

पात्राभावेऽपरं कृत्वा पितृयज्ञ विधिं नमः १(*) ।
निर्द्दिश्याप्यन्नमुद्धृत्य यत्र पात्रं ततोगतिः ॥६४०॥
पात्राभावे क्षिपेदग्नौ गवे दद्यादथाप्सुवा ।
नतु प्राप्तस्य लोपोऽस्ति पैतृकस्य विशेषतः इति ॥६४१॥

272. **पक्वान्नाभावे, विष्णुपुराणम् ,—**

असमर्थोऽन्नदानस्य धान्यमाशंस्यशक्तितः २(†) ।
प्रदद्यात्तु द्विजाग्रेभ्यः स्वल्पाल्पमपि दक्षिणाम् ॥६४२॥
आमेन वर्त्तयेन्नित्यं ब्राह्मणोऽव्यसनान्वितः ।
आमश्राद्धं यदा कुर्य्याद्विधिज्ञः श्रद्धयान्वितः ॥६४३॥
तेनाग्नौ करणं कुर्य्यात् पिण्डांस्तेनैव निर्व्वपेत् ।

273. **प्रचेताः,—**

आमश्राद्धं यदा कुर्य्यादग्नौकरणपिण्डकम् ।
विकिरंवापि कुर्व्वीत तेनैव श्राद्धिकन्तदेति ॥६४४॥

**तेनैव,—आमेनैव विकिरेणेति । ग्रन्थान्तरे,—**

आमश्राद्धे च वृद्धौ च प्रेत श्राद्धे तथैव च ।
274. विकिरं नैव कुर्वीत मुनिः लाट्यायनोऽब्रवीदिति ॥६४५॥

275. **विशेष माहात्र मरीचिः—**

आवाहने स्वधाकारे मन्त्रा उह्या विसर्ज्जने ३(‡) ।
अन्यकर्म्मण्यनुह्याः स्युरामश्राद्धविधिं स्मरन् इति ॥६४६॥

---

१(*) 'नरः, इति भिन्नः पाठः ।

२(†) धान्यम्—यव गोधूमादीन्यपि ।

३(‡) ॐ विश्वान्देवान् आवाहयिष्ये'. इति पृष्टे, ॐ आवाहय इति विप्रोक्तिः । 'ॐ पितॄण् आवाहयिष्ये' इति प्राग्वत् । ततोहि आवाहनमन्त्रान् पठेत् । 'विश्वेदेवासआगत' ३१ अः ५२ मः । इति शुक्लयजुः ७, अः २४ मः ।
'उशन्तस्त्वा निधीमह्युशन्तः' शुक्लयजुः—१९ अः, १० मः ।
'आयन्तु नः पितरः सोम्यासः' ,, , १९ अः, १८ मः ।

276. **अर्थस्तु,—**

आवाहन मन्त्रे हविषे अत्तव (आत्तव) इत्यत्र स्वीकर्त्तव्य इत्यूहः १(*) स्वधाकारे 'नमोवः पितरः' इष इत्यादिमन्त्रे इष इति पदस्थाने आमायेत्यूहः कार्य्यः। अन्यकर्म्मणि नोहः कार्य्यं इति।

**तथा,—**

आमश्राद्धन्तु पूर्व्वाह्णे कर्त्तव्यं सर्व्वदा बुधैः।
पाकश्राद्धं यथा काल मिति शास्त्रव्यवस्थितिः २(†) ॥६४७॥

277. **आमस्यासंभवे हेमश्राद्धं कर्त्तव्यमित्युक्तं मरीचिना,—**

आमान्नस्याप्यलाभेतु श्राद्धं कुर्य्याच्च बुद्धिमान्।
धान्याच्चतुर्गुणेनैव हिरण्येन सुरोचिषेति ॥६४८॥
आमं ददतु कौन्तेय! दद्यादन्नं चतुर्गुणम्।
सिद्धान्नेतु विधिर्य स्मादामश्राद्धेऽप्यसौ विधिरिति ॥६४९॥

**एतदति समर्थस्य।**

आमन्तु द्विगुणं प्रोक्तं हिरण्यन्तु चतुर्गुणम्।
प्रयच्छत् श्राद्धकालेषु त्वशक्तः सममेववेति—

## संग्रहविशेषोक्तः।

**आमश्राद्धे बर्ज्ज्यानाह, देवलः—**

तृप्तप्रश्नोऽवगाहश्चा क्षय्यप्रैषो यथा सुखम्।
आमश्राद्धे भवेन्नैतद् आपोशानञ्च पञ्चमम् ॥ इति ॥६५०॥

**अवगाहः,—अङ्गुष्ठावगाहः। अन्यत्स्पष्टम्।**

एतद्धेमश्राद्धेऽपिना न्यायसाम्येनापरपदस्यापलक्षणत्वात्।

---

१(*) अन्यत्र अतीच 'आमंयद्द्रव्यपक्वान्नं पक्वमुच्छिष्टमुच्यते। अत्युक्तं नित्यश्राद्धं सुस्पष्टम्। नैमित्तिकं,—निमित्तेन ग्रहणादिनाह्युपस्थितानिश्राद्धानि नैमित्तिकानि इति।

२(†) 'यथाकालं' इति शास्त्रोक्त-पूर्व्वाह्ण-मध्याह्नापराह्णादि।

278. **व्यासः,—**

हिरण्यसामश्राद्धीयं लब्धं यत्क्षत्त्रियादितः १(*) ।
यथेष्टं विनियोज्यं स्याद् भुञ्जीयाद्ब्राह्मणस्त्वय मिति ॥६५१॥

279. **षट्त्रिंशन्मते,—**

आमं शूद्रस्य यत् किञ्चिच्छ्राद्धिकम्प्रतिगृह्यते ।
तत् सर्व्वं भोजनायालं नित्यनैमित्ति के न चेति ।
अत्र कश्चित्, ब्राह्मणादेरपि लब्धं विहिते कर्म्मणि नविनियोज्यम् । देवतोद्देशेन त्यक्तस्य पुनर्देवतान्तरोद्देशेन त्यागायोगादित्याह । तदसद्—वाचनिकत्वादस्यार्थस्य स्तन्नादादित्यग्रहं गृह्णातीति सोमयागे तथा दर्शनात् ।
विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते ॥६५२॥
इति पञ्चरात्रे विनियुक्तस्यान्यत्र विनियोगकथनात् ।
प्रतिग्रहमात्रेण जीवतो द्रव्यस्य साध्यसर्व्वकर्म्मविलोपप्रसङ्गाच्चेत्यलं पल्लवितेन ॥

280. **आमश्राद्धे पिण्डे द्रव्यान्तरमुक्तं, षट्त्रिंशन्मते,—**

आमश्राद्धं यदाकुर्य्यात् पिण्डदानं कथम्भवेत् ।
गृहपाकात् समुद्धृत्यसक्तुभिः पायसेन वा ॥६५३॥
पिण्डान्दद्याद् यथा कालं तिलैः सह विमत्सरः । इति ।

**यत्तु,—**

पक्वेन कुरुते पिण्डमामान्नं यः प्रयच्छति ।
तावुभौ मनुजव्याघ्र ! नरकार्हौ न संशयः २(*) ॥६५४॥ इति
तद्दर्शादिश्राद्धपरमिति ॥

—*—

१(*) 'साम' इत्यत्र नाम इति भिन्नः पाठः ।

२(†) विहित कर्म्म विलोपेतु पतनमित्याह महर्षिः—
'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमिच्छति' ॥

## अथारब्धप्रेतक्रियस्य सूतकादिप्राप्तौ निर्णीयते ।

—*—

281. **देवजानीये, गालवः—**

आरब्धे प्रेतपिण्डेतु मध्ये चेज्जननं भवेत् ।
तथैवा शौचपिण्डांस्तु शेषान्दद्याद् यथाविधि ॥६५५॥

282. **शातातपः,—**

अन्तर्दशाहे जननात् पश्चात् स्यान्मरणं यदि ।
प्रेत मुद्दिश्य कर्त्तव्यं पिण्डदानं यथाविधीत्ति—

283. **हेमाद्रौ—**

अत्र पिण्डपदं नव श्राद्धमात्राभिप्रायम् । तेन सूतकादावैका-दशाहिकश्राद्धे वृषोत् सर्गाद्यपि भवति ।
शावेतु सूतकं चेत् स्यान्निशाशेषे तथैव च ।
इति गौतमोक्तेः । एकादशाह श्राद्धस्य नवश्राद्धत्वात् ।
नवश्राद्धमशुद्धेऽपि कुर्य्यादेकादशेऽहनि ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेवसः ॥६५६॥ इति—

284. **काष्ठाजिन्युक्तेश्च—**

नहन्यात् सूतकं कर्म्म द्वादशैकादशाहिकम् ।
शुद्धोवा यदिवाऽशुद्धः कुर्य्यादेवाविचारयन्निति—

285. **वृद्धवशिष्ठोक्तेश्च—**

तस्मादन्तर्दशाहं सूतके मृतकेवा प्राप्तेऽपि एकादशान्तं कार्य्यमिति निष्कर्षः । वृषोत्सर्गः सूतकान्ते भवतीतिकेचित् । यत्तु, आशौचं प्रकृत्य,—

दानं प्रतिग्रहोहोमः स्वाध्यायश्च निवर्त्तत इति ।
दानादिनिषेधवचनम् , तत्तु विहितद्रव्यातिरिक्तपरं वेदितव्यम् ।
अन्यथा सञ्चयं प्रकृत्य, चतुर्थेऽनि विप्रेभ्योदेयमन्नं हि वान्धवैः ।

286. गावः सुवर्णं वृत्तर्श्च प्रेतमुद्दिश्य भक्तितः, इति—
भविष्य पुराणवचनमनुपपन्नं स्यात् ।
सपिण्डीकरणन्तु कालान्तरसत्त्वादाशौचापगम एव कार्य्यम् ॥

—*—

## अथानेकमरण सन्निपाते निर्णयः ।

—*—

287. माधवीये, कार्ष्णाजिनिः—

पित्रोः श्राद्धेसमं प्राप्ते नवे पर्य्युषितेऽपि वा ।
पितृ-पूर्व्वं ततः कुर्य्यादन्यत्रासति योगत इति ॥६५७॥

अत्र पितुः पश्चान्मरणेऽपि पूर्व्वं पितृश्राद्धं ततोमातृश्राद्धं कार्य्यम्, पितुर्मुख्यत्वात । एवं भ्रात्रादीनामपि ज्येष्ठादिक्रमेण श्राद्धं कार्य्यम् ।

288. ऋष्यशृङ्गः—

भवेद्यदि सपिण्डानां युगपन्मरणन्तदा ।
सम्बन्धासक्तिमालोच्य तत् क्रमाच्छ्राद्धमाचरेत् ॥६५८॥
एककाले गतासूनां वहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कृत्वा कुर्य्याच्छ्राद्धं पृथक् पृथक् ॥६५९॥

यत्तु—

पूर्व्वकस्य मृतस्यादौ द्वितीयस्य ततः परम् ।
तृतीयस्य ततः कुर्य्यात् सन्निपाते त्वयं क्रमः ॥६६०॥ इति

यद्वा पूर्व्वकस्य मुख्यस्य तृतीयस्य तदपेक्षया जघन्यस्येति व्याख्येयम् । एवमेव पित्रादेर्दाहं कुर्य्यादिति, यदि दशाहमध्ये मृतः तदा तत्पुत्रोऽन्योवा, पित्रौर्द्ध्वदैहिकानन्तरं पितामहकृत्यं पुनः संस्कारपूर्व्वकं सर्व्वमावर्त्तयेत् । अतीतेतु—दशाहेनैवमिति । यथाशक्त्या पित्रनुज्ञातेन पौत्रेण पितामहकृत्ये प्रारब्धे सति यदि पितापि तद्दशाहमध्ये म्रियेत तदा पित्राशौचं वहन्नेव स्वकाले पितामहश्राद्धं कुर्य्यात् । उपक्रान्त-

289. त्वादिति मदनपारिजातादौ निर्णीतम्। कर्त्तुस्तात्कालिकीशुद्धिरिति वचनेन शुद्धयभिधानाच्च ।

पत्न्याः पुत्रस्य तत् पुत्र भ्रात्रोस्तत्तनयस्य च ।
स्नुषास्वस्रोश्च पित्रोश्च संघातमरणं यदि ॥
अर्व्वागब्दान्मातृपितृ-पूर्व्वसापिण्ड्यमाचरेत् ॥६६१॥

तत् पुत्रः पुत्र-पुत्रः, तत्तनयोभ्रातृतनयः, पित्रोर्मातापित्रोः, पत्न्यादीनां क्रमेण युगपद्वा सङ्घातमरणं यदिस्यात्तदा सम्बत्सरादर्व्वाक् पितृमातृसापिण्ड्य पूर्व्वकं सम्बन्धविशेषा(न)तिक्रमेण पत्न्यादीनां सापिण्ड्यं कुर्य्यादिति ।

एतदपि परिगणितानामेव कार्य्यं नान्येषामित्याह सएव ।
मातां भ्राताच तत् पुत्रः पत्नीपुत्रः स्नुषा स्वसा ।
एषां मृतौ चरेच्छ्राद्धमन्येषु न पुनः पितुरिति ॥६६२॥

पितुर्मृतौ सत्यामित्यन्वयः । अत्र सापिण्ड्ये विशेषमाह,—

290. **लौगाक्षिः,—**

पत्नी पुत्रः स्नुषा पौत्र भ्रातृ तत पुत्रका अपि ।
पितरोवा यदेकस्मिन् म्रियेरन्नेकवासरे ॥६६३॥

आद्यमेकादशे कुर्य्यात त्रिपक्षेवा सपिण्डनमिति । एकवासरइत्युक्त-भिन्नवासरमृतौ नायं नियमः । किन्तु, पित्रोः पूर्व्वसपिण्डनं विधाय पश्चात् सम्बन्धासत्ति क्रमेणान्येषां सपिण्डनं कुर्य्यादिति । क्रमश्चेत्थम् ,—आदौ पितुस्ततोमातुः ।

पित्रोः श्राद्धैः समं प्राप्ते नवे पर्य्युषितेऽपि वा ।
पितृ-पूर्व्वं सुतः कुर्य्यादन्यत्रासन्नियोगतः ॥६६४॥ इति

कार्ष्णाजिन्युक्तेः । ततः पत्नीत्वलक्षणसम्बन्धस्यासन्नत्वात् पत्न्याः ततउभयं निरूप्य पुत्रत्वलक्षण सम्बन्धभाजः पुत्रस्य ततोव्यवहित-सम्बन्धभाजोभ्रातुः । एवं तत् पुत्रादिष्वप्यूहनीयम् ।

यत्तु, नैकः श्राद्धद्वयं कुर्य्यात् समानेऽहनि कुत्रचिदिति— प्रचेतोवचनम् , तदेकदेवताश्राद्धपरम्। देवताभेदे निमित्तभेदेवैकस्यानेक श्राद्धविधानात ।

291. **तदुक्तंजाबालिना—**

श्राद्धं कृत्वातु तस्यैव पुनः श्राद्धं नतद्दिने ।
नैमित्तिकन्तु कर्त्तव्यं निमित्तानुक्रमोदयमिति ॥६६५॥

292. **कात्यायनेनाप्युक्तम्ः—**

द्वे बहूनि निमित्तानि जायेरन्नेक वासरे ।
नैमित्तिकानि कार्य्याणि निमित्तोत्पत्त्यनुक्रमादिति ॥६६६॥

**यदातु—**

निमित्तानां जुगपत्सम्पातस्तदा कुतपादि श्राद्धकालानतिक्रमेण तन्त्रतया नैमित्तिकानि कार्य्याणि ।
एककाले गतासूनां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कुत्वा श्राद्धं कुर्य्यात् पृथक् पृथगिति भृगूक्तेः । एवं देवता भेदेन भिन्न श्राद्धेष्वपि ज्ञेयम् ।

**यदातु—**

निमित्तानां भिन्नकालता तदा नैमित्तिकानि तत्काले कर्त्तव्यानीत्यलम्प्रपञ्चेन ॥

—*—

## अथ दुर्मरणमृतानां प्रायश्चित्तानि ।

—*—

293. **शातातपः ।**

ऊर्द्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टेषु सत्स्वपि ।
अस्पृश्यस्पर्शमरणे खट्वायां निगड़ादिषु ॥६६७॥
त्रीन् षड्द्वादशवापञ्च दशकृच्छ्रान् विधायतु ।
गृहीत्वा विप्रवचनान्निमित्तस्यानुसारतः ॥६६८॥
शक्तौ तदैव कृच्छ्राणां प्रत्याम्नायं प्रदापयेत् ।
धेनुगोभूहेमधान्य-धनवस्त्रादिकञ्च यत् ॥६६९॥

तदाणीं शुद्धिमासाद्य दहनादि ततश्चरेत् १(*) ।
सर्व्वात्मनांशुद्धिमिच्छेत् पित्रादेः पापकर्म्मणः ॥६७०॥
तं दहेद्विधिना कृत्वा तद्योग्यं सर्व्वमेषजम् २(†) ।
एवमेवात्मनः शुद्धिः कर्त्ता चेत् पापयुग् भवेत् ३(‡) ॥६७१॥
प्रेतस्य चात्मनः शुद्धिमनासाद्योदकादिकम् ।
लोभादिना कृतं सर्व्वं अन्तरिक्षे विनश्यति ॥६७२॥

294. **गृह्यकारिकायाम्—**

प्रमादादपि निःशङ्क स्त्वकस्माद्विधिचोदितः ।
शृङ्गिदंष्ट्रिनखि-व्याल-विषविद्युज्जलाग्निभिः ॥६७३॥
चण्डालैर्ब्राह्मणैश्चोरै र्निहतो यत्र कुत्र चित् ।
चान्द्रायणं तप्तकृच्छ्र-द्वयं तस्य विशुद्धये ॥६७४॥
यद्वा कृच्छ्रान् पञ्चदश कृत्वोक्तविधिना दहेत् ।
बुद्धिपूर्व्वमृतानान्तु त्रिंशतकृच्छ्रं समाचरेदिति देवजानीये ॥६७५॥

295. **विशेषो ब्राह्मे—**

ऊर्द्धोच्छिष्टेऽधरोच्छिष्टे उभयोच्छिष्टके तथा ।
अस्पृश्यस्पर्शने चैव त्वन्तरिक्षे मृतौ तथा ॥६७६॥
खट्टायां मरणे चैव तथानिगड़बन्धने ।
सप्तस्वेतेषु कृच्छ्रांस्तु त्रीन्षट् द्वादश वा क्रमात् ॥६७७॥
पञ्चदशक्रमेणैव यथा संख्यं प्रकल्पयेत् ।
पाषाणैर्लगुडैर्दण्डैर्लूताविस्फोटकादिभिः ॥६७८॥
विषैः प्रपतनाद्यैश्च नवकृच्छ्रं विशोधनम् ।
भित्त्यादावुपघाते च पश्वादिषु तथैवच ४(ऽ) ॥६७९॥
विद्युत्पातमृतानान्तु शकटेन मृतौ तथा ।
उष्ट्रेण वृषभेणापि मृतानाञ्च विशेषतः ॥६८०॥

---

१(*) 'तदादीन्' तदादिष, इति भिन्नः पाठः । अत्र दहनादि,—दहनप्रभृतिमित्यर्थः ।
२(†) 'तदरी विधिना' इति पाठान्तरम् ।
३(‡) 'पापयुग्भवेत्' इति अन्यः पाठः ।
४(ऽ) भित्त्यादिभिः पतनेनमिश्रं तथापि निषम्य निघनं स्यादिति ।

म्लेच्छेन निहता ये च प्रव्रज्यानाशकच्युताः ।
चौरादिभिर्हतानाञ्च त्रिंशत्कृच्छ्रै विशोधनम् ॥६८१॥
जलाग्न्युद्बन्धनैश्चैव विपशस्त्राहिवृश्चिकैः ।
बुद्धिपूर्वमृतानाञ्च (तु) त्रिंशत् कृच्छ्रै विंशोधनम् १(*) ॥३८२॥
प्लीहाभगन्दराभ्याञ्च तथापस्मारदूषिते ।
ग्रहणीराजयक्ष्मभ्यां त्रिंशत्कृच्छ्रै विशोधनम् ॥३८३॥
शवं रात्र्युषितं चेत् त्रीन् कृच्छ्रान् कृत्वा दहेत्तु तम् ।
रजस्वला सूतिकयोः श्वपाकस्पर्शने मृतः ॥६८४॥
अब्देनैव तु कृच्छ्रेण शुद्धिर्वात्स्यायनोऽब्रवीत् ।

296· **अन्त्यजा, यथा—**

रजकश्चर्म्मकारश्च नटो (ड़ो) वरूड़ एवच २(†) ॥६८५॥
कैवर्त्त मेदभिल्लाश्च सप्तैते ह्यन्तजाः स्मृताः ।
एतत् पृष्ठोपरति यदि दैवात् कथञ्च न ॥६८६॥
एकत्रिंशता कृच्छ्रैस्तु शुद्धिरुक्ता मनीषिभिः ।
कुणपे चार्द्धदग्धे च चितास्पृष्टान्त्यजादिभिः ३(‡) ।
त्रिंशत् कृच्छ्रैर्विशुद्धिः स्यात् क्रियासशक्तौत्रिकृच्छ्रतः ॥६८७॥
अतिक्रान्तैकादशाहा मृता ये पापरोगिणः ॥६८८॥
कृच्छ्रत्रयं मासवृद्ध्या तेषां शुद्ध्यैथ व्रतञ्चरेत् ।
निमित्ततारतम्येन प्रायश्चित्तं प्रकल्पयेत् ॥६८६॥ इति

297· **आत्मघाते, स्मृतिरत्नावल्यां, व्यासः—**

आत्मनो घातशुद्ध्यर्थं चरेच्चान्द्रायणद्वयम् ४(०) ।
तप्तकृच्छ्रचतुष्कं वा त्रिंशत्कृच्छ्राणि वा पुनः ॥६६०॥
अर्व्वाक् सम्वत्सरात् कुर्य्याद्दहनादि यथोदितम् ।
कृत्वा नारायणवलि मनित्यत्वात्तदायुषः ॥६६१॥ इति

---

१(*) 'त्रिंशत् कृच्छ्राद्विशोधनम्' इत्यपि पाठोऽस्ति ।
२(†) अस्मादग्रे एकस्मिनर्द्धश्लोकः पतितरूपः । वरुड इत्यस्मिन् बुरुड इति भिन्नः पाठः ।
३(‡) बौधायनीये, निर्णयसिन्धौ, षट्त्रिंशन्मते, स्मृतिरत्नावल्याश्च प्रपञ्चितमस्ति ।
४(०) अथवा 'मिश्रस्त' इति पाठोऽप्यस्ति । अभिशप्त विप्रदेव-गुरूणामभिशापयप्त इति । मतान्तरेतु ब्रह्मदण्डहत इति ।

इदं चात्मवधनिमित्तं प्रायश्चित्तं मृत(ज्ञा)जातिवधनिमित्तप्रायश्चित्तेन समुच्चितं पुत्रादिभिः कार्य्यमित्युक्तं वौधायनेन। नारायण वलिं व्याख्यास्याम इति शप्त-पतित-सुरापात्मत्यागिनां ब्राह्मणादिहतानाञ्च
298. द्वादशवर्षाणि, त्रीणि वा कुर्य्यीतेति मदनपारिजाते ।

299. **स्मृत्यर्थसारेऽपि,—**

ब्रह्महादीनां तद्योग्यं प्रायश्चित्तं कृत्वा नारायणवलिपूर्व्वकं संस्कारं कुर्य्यादित्युक्तम्। एवं म्लेच्छीकृतानामपि इदं सर्व्वं प्रायश्चित्तार्हाणामेव। प्रायश्चित्तानर्हाणां पतितोदकमात्रं कार्य्यमिति केचित्। वस्तुतस्तु—तदर्हानर्हयोर्वचनेऽनुपादानाद्विशेषेण तत्रापि नारायणवलि र्गयाश्राद्धञ्च कार्य्यमिति युक्तम्।

300. **पतितोदकविधिस्तु हेमाद्रौ ब्राह्मे,—**

पतितस्य तु कारुण्याद्यस्तृप्तिकर्त्तुमिच्छति।
स हि दासीं समाहूय सर्व्वगां दत्तवेतनाम् ॥६६२॥
अशुद्धघटहस्तां तां यथावृत्तं ब्रवीत्यपि।
हे दासि! गच्छ मूल्येन तिलानानय सत्वरम् १(*) ॥६६३॥
तोयपूर्णं घटं चेमं सतिलं दक्षिणामुखी।
उपविष्टा तु वामेन चरणेन ततः क्षिपे(त्) ॥६६४॥
कीर्त्तये पातकिन् संज्ञां त्वं पिवेति मुहुर्व्वदेत्।
निशम्य तस्य वाक्यं सा लब्धमूल्याकरोत्ततः २(†) ॥६६५॥
एवं कृते भवेत्तृप्तिः पतितानां न चान्यथेति।

इदं मरणोत्तरं क्रियते चेत् तदा मृताहे कार्य्यम्। पतितस्य दासी,
301. मृताह्नि यदा घटमपवर्ज्जयेदेतावतायमुपचरितो भवतीति विष्णुस्मृतेः। अतो घटस्फोटेन वहिष्कृतस्यापि पित्रादेरब्दान्ते नारायणवलिपूर्व्वकसंस्कारः कार्य्य इति गम्यते। ये आत्मत्यागिनः पतिताश्च ते नाशौचोदकभाज इति। विष्णवादिस्मृतौ यो निषेधः सोऽपुत्रकविषयो ज्ञेयः। तस्य ज्ञातिभिर्जीवद्दशायामेवान्त्यकर्म्मपूर्व्वकं घटस्फोटस्य कृतत्वात्। कृतस्य पुनः करणाभावादिति ॥

---

१(*) भवदासि इत्यस्मिन् नटि, नदि इति च पाठान्तरम्।
२(†) 'लब्धमूल्याकरोच्च तत्' इति पाठान्तरम्।

दुर्मरणमृतानां क्रियायोग्यतार्थं प्रायश्चित्तवद्दानविशेषोऽप्युक्तो विश्व-
302. प्रकाशे शातातपेन,—

व्याघ्रेण निहते विप्रे विप्रकन्यां विवाहयेत् ।
सर्पदंष्टे नागवलिं देयः सार्पश्च काञ्चनः ॥६६६॥
चतुर्निष्कमितं हैमं गजन्दद्याद् गजाहते ।
राज्ञा विनिहते दद्यात् पुरुषन्तु हिरण्मयम् ॥६६७॥
चोरेण निहते धेनुं वैरिणा निहते वृषम् ।
वृकेन निहते दद्याद् यथाशक्त्या तु काञ्चनम् ॥६६८॥
शय्यामृते प्रदातव्या शय्या तूलीसमन्विता १(*) ।
निष्कमात्रं सुवर्णस्य विष्णुना समधिष्ठितम् ॥६६९॥
शौचहीने मृते दद्याद्द्विनिष्कं स्वर्णजं हरिम् ।
संस्कारहीने च मृते कुमारमुपनाययेत् २(†) ॥७००॥
निष्कत्रयं स्वर्णमितं दद्यादश्वं हयाहते ।
शुनाहते क्षेत्रपालं स्थापयेन्निजशक्तितः ॥७०१॥
क्षेत्रपालं देवम् ३(‡) ।
शूकरेण हते दद्यात् महिषन्दक्षिणान्वितम् ।
कृमिभिश्च मृते दद्याद्गोधूमान् पञ्च खारिकाः ॥७०२॥
वृक्षं वृक्षहते दद्यात् सौवर्णवस्त्रसंयुतम् ।
शृङ्गिना निहते दद्याद्वृषभं वस्त्रसंयुतम् ॥७०३॥
शकटेन हते दद्याद् रथं सोपस्करान्वितम् ।
भृगुपातमृते चैव प्रदद्याद्धान्यपर्वतम् ४(०) ॥७०४॥
अग्निना निहते कार्य्यमुदपानं स्वशक्तितः ।
दारुणा निहते चैव कर्त्तव्या सदने सभा ॥७०५॥

---

१(*) शय्यायान्तु—तुली प्रच्छादनं, आस्तरणाम्बरम् , पटीपधानं, शिरःप्रावरणम् , खट्वाचेति द्रव्यान्वितायामिति ।

२(‡) 'उपनाययेत्' इत्यपि पाठान्तरमस्ति । विप्र—कुमारस्योपनयनं कारयेदिति । स्वेच्छयाभृगुप्रपतननिधने यथोक्तं प्रायश्चित्तम् ।

३(‡) शिवविशेषं प्रतिष्ठापयेदित्यर्थः ।

४(०) 'गिरिशिखरापतनेननिधनं भृगुप्रपात इति केचनबुधाः । शाब्दिकास्तु—यस्मात् पतने अवस्थानक्रियाविशेषोनास्ति । अतएव तद् भृगुपतनमिति प्रयोगोऽस्ति । हैमदद्याद्विनिष्क्रियम्' इति भिन्नपाठः ।

अस्त्रेण निहते दद्याद् महिषीं दक्षिणान्विताम् ।
अश्मना निहते दद्यात् सवत्सां गां पयस्विनीम् ॥७०६॥
विषेण च मृते दद्यान्मेदिनीं हेमनिर्म्मिताम् ।
उद्बन्धनेन च मृते कपिं कनकनिर्म्मिताम् ॥७०७॥
मृते जलेन वरुणं हेमं दद्याद्विनिष्कलम् १(*) ।
विसूचिकामृते स्वादु भोजयेच्च शतं द्विजान् ॥७०८॥
घृतधेनुः प्रदातव्या कण्ठान्नकवलै मृते ।
कासरोगेण च मृते त्वष्टकृच्छ्रव्रतञ्चरेत् ॥७०९॥
अतीसारमृते लक्षं गायत्र्याः प्रयतो जपेत् ।
शाकिन्यादिग्रहग्रस्ते जपेद्रुद्रं यथोदितम् ॥७१०॥
विद्युत्पातेन निहते विद्यादानं समाचरेत् ।
अन्तरिक्षे मृते कार्य्यं वेदपारायणं तथा ॥७११॥
सच्छास्त्रपुस्तकं दद्यात् अस्पृश्यस्पर्शतो मृते ।
पतिते तु मृते कुर्य्यात् प्राजापत्यांश्च षोड़श ॥७१२॥
मृते चापत्यरहिते कृच्छाणां नवतिं चरेत् ।
अनुक्तेषु निमित्तेषु धेनुं दद्यात् सदक्षिणाम् २(†) ॥७१३॥
एवं कृते विधानेतु विदध्यादौर्द्ध दैहिकमिति ।
इदं पूर्व्वोक्तप्रायश्चित्तसमकल्पमिति केचित् । समुच्चितमित्यपरे, शक्तस्य समुच्चयोऽन्यस्यान्यतरदिति वयम् ३(‡) ॥
दुर्म्मरण मृताना मौर्द्ध देहिकानन्तरमपि कर्त्तव्यमुक्तम्,—

303. **देवजानीये, ब्राह्मे**—

शृङ्गि-दंष्ट्रि-नखि-व्याल-विष वह्नि-क्रियाजलैः ।
सुदूरात् परिहर्त्तव्यः कुर्व्वन् क्रीड़ां मृतस्तु यः ॥७१४॥
नागानां विप्रियं कुर्व्वन् हतश्चाप्यथ विद्युता ।
निगृहीतः स्वयं राज्ञा चौर्य्यदोषेण कुत्रचित् ॥७१५॥
परदारान् हरन्तश्च, परस्वस्यापहारिणः ।
असमानैश्च संकीर्णैश्चण्डालाद्यैश्च विग्रहम् ॥७१६॥

---

१(*) 'अस्पृश्यस्पर्शने ततः' इत्यं पाठान्तरमस्ति ।
२(†) येषु निमित्तोल्लेखो नास्ति तेषु प्रत्यवायपरिहाराय सदक्षिणांसवत्सां धेनुं प्रयच्छेदिति ।
३(‡) अत्र वयमिति—एतद् ग्रन्थकर्तृबुधप्रवरा इति ।

कृत्वा तैर्निहता स्तद्वच्चाण्डालादीन् समाश्रिताः ।
शस्त्राग्निगरदाश्चैव पाषण्डाः क्रूरबुद्धयः ॥७१७॥

क्रोधात् प्रायं (प्रं) विषं वह्निं शस्त्रमुद्बन्धनं जलम् ।
गिरि-वृक्ष-प्रपातञ्च ये कुर्व्वन्ति नराधमाः ॥७१८॥

कुशिल्पजीविनो ये च सूनालङ्कारधारिणः ।
मुखे भगास्तु ये केचित् क्लीबप्राया नपुंसकाः ॥७१९॥

ब्रह्मदण्डहता ये च ये चापि ब्राह्मणैर्हताः ।
महापातकिनो ये च ये चान्ये चात्मघातकाः १(*) ॥७२०॥

ब्रह्मराक्षस-पैशाचं जन्म संप्राप्नुवन्ति ते ।
कुमारीगामिनः पापाः साध्वीं गच्छन्ति ये बलात् ॥७२१॥

विप्रगोवृत्तिहन्ता च वेद ब्रह्मस्वहारकः ।
श्रुताध्ययनसम्पन्नश्चाण्डालीं योऽभिगच्छति २(†) ॥७२२॥

सर्व्वे ते निर्जनेऽरण्ये जायन्ते ब्रह्मराक्षसाः ३(‡) ।
तद्दोषशान्तये कर्म्म प्रोच्यते शास्त्रदृष्टितः ॥७२३॥

श्रवणद्वादशीयोगे तत्पुत्रः शास्त्रकृद् यदि ।
त्रिस्थलीषु तथा श्राद्धैः पिण्डदानैश्च तर्पणैः ॥७२४॥

जपैर्होमैश्च दानैश्च देवताऽभ्यर्च्चनैरपि ।
गुर्व्वष्टमी-समायोगे श्राद्धेनापि विदोषतः ॥७२५॥

करम्भकरकाद्यैश्च पितॄनुद्दिश्य दुर्गतान् ।
तेऽपि मुक्ता भवन्तीह, ये केचिद्दिगतिङ्गताः ॥७२६॥

कृत्वा नीलवृषोत्सर्गं निपानञ्च शुभावहम् ।
पिशाचत्वं गतान् सर्व्वान् मोचयत्येव नान्यथा ॥७२७॥

---

१(*) महापातकिनश्च, अत्र श्रुतिर्यथा, 'स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोःतल्पमावसन् ब्रह्महाचेति पतन्ति चैते चत्वारः पञ्चमश्चाचरंस्तैः'।
स्मृतिश्च तत्र—'ब्रह्महत्यासुरापानंस्तेयं गुर्व्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह' ॥

२(†) 'चाण्डालींयोभिगच्छति' इति भिन्नः पाठः ।

३(‡) नीलवृषमाह, -स्मृतौ—
'लोहितोयस्तुवर्णेन शङ्खवर्णः खुरस्तथा ।
श्वेतः शिरसि लाङ्गुले सतु नीलवृषःस्मृतः ॥' इति स्मृतौ ।

सहस्रं भोजयेद्विप्राणन्यान्वा दीनदुःखितान् ।
यतीन् सहस्रं संभोज्य कन्यान्दत्वा विधानतः १(*) ॥७२८॥
यात्रां कृत्वा महातीर्थे पैशाच्यान्मोचयेत् पितॄण् ।

304. **बृहन्मनुरपि,—**

गयायां पिण्डदानेन जपहोमार्चनादिभिः २(†) ॥७२९॥
ब्रह्मतर्पणतः सम्यग् जपनादेव नित्यशः ।
देवतानाञ्च सेवाभिः कन्यादानेन चैव हि ॥७३०॥
वापीकूपतड़ागाद्यै रारामारोपणेन च ।
ब्रह्म राक्षसपैशाच्यान्मुच्यते दुर्गतिं गताः ॥७३१॥

305. **तथा तत्रैव, पाद्मे—**

व्याघ्रादिगजभूपाल-चोरवैरिवृकाहताः ।
भृग्वग्निदारु-शस्त्रास्त्र-विषोद्बन्ध-जलाहताः ।
अष्टश( शू )ल्यां मृता ये च शौच-संस्कार-वर्ज्जिताः ॥७३२॥
श्वकीड़कृमिवृक्षैश्च शृङ्गिभिः शकटाहताः ।
विचित्रकान्नकवल-भ्रमातीसारतोमृताः ॥७३३॥
शाकिन्यादिग्रहैर्ग्रस्ता विद्युत्पातहताश्च ये ।
अस्पृश्यस्पर्श-सन्दुष्टाः पतिताऽपत्यवर्ज्जिताः ॥७३४॥
पञ्चत्रिंशत् प्रकारैश्च प्राप्नुवन्त्यगतिं मृताः ३(०) ।
पित्राद्याः पिण्डभाजःस्युःस्त्रयो लेपभुजस्ततः ॥७३५॥
ततो नान्दीमुखाः प्रोक्तास्त्रयोथास्त्रमुखास्त्रयः ।
द्वादशैवं पितृगणा स्तर्पिताः सन्ततिप्रदाः ॥७३६॥
अन्यथा ते सुतादीनां सन्तानं नाशयन्त्युत ( तम् ) ।
दश व्याघ्रादिनिहता गर्भनिघ्नन्त्यनुक्रमात् ॥७३७॥
द्वादशास्त्रादि निहता आवर्षं प्रतिवालकम् ।

---

१(*) "कूपारामप्रपाकारी तथा वृक्षादिरोपकः ।
कन्याप्रदः सेतु प्रदः स्वर्गमाप्नोत्यसंशयम्" इति स्मृतिः । अन्यद्धेमाद्रावस्ति ।

२(†) गयायांपिण्डदानविषये,—'यन्नाम्ना पातयेत् पिण्डं तन्नयेद् ब्रह्मशाश्वतम्' ।
अन्यद्वायुपुराणे पुस्तकमस्ति ।

३(‡) 'निरपत्या नयन्ति ताम्' इति भिन्नः पाठः ।

विषादिनिहता घ्नन्ति दश तेषु कुमारकान् ।
अन्ये कुर्य्युः सन्ततीनां निरपत्यानपत्यताम् १(*) ॥७३८॥
तेषां सद्गतिमिच्छद्भिः कार्य्यं श्राद्धं गयादिके ।
तीर्थयात्रा प्रकर्त्तव्या दद्याद्दानान्यनेकशः । इति ॥७३६॥

**तथा,—**

अज्ञातनामगोत्राय प्रेताय सतिलोदकम् ।
प्रदद्यात् पितृतीर्थेन पिण्डं मन्त्रमुदीरयन् ॥७४०॥
इमं तिलमयं पिण्डमधुसर्पिः समन्वितम् ।
ददाति तस्मै प्रेताय यः पीड़ां कुरुते मम ॥७४१॥
अयं पिन्डदानमन्त्रोऽज्ञातनाम्नः ।
सतिलान् कृष्णकलशान् तिल-पायस-संयुतान् ।
द्वादश प्रेतमुद्दिश्य दद्यादेकञ्च विष्णवे ॥७४२॥
ततस्त्रीन् पिण्डान् विधितः कुर्य्यात्सन्ततिलब्धये २(†) ।
विष्णु-श्राद्धञ्च कर्त्तव्यं दद्याद्दानञ्च शक्तितः ।
ततोऽभिषिञ्चेदाचार्य्यो दम्पती कलशोदकैः ॥७४३॥
रुद्राध्यायगतैर्मन्त्रैरैन्द्रवारुणदैवतैः ३(‡) ।
एष साधारणो धर्म्मो ह्यगतीनामुदाहृतः । इति ॥७४४॥

श्रीमदनन्त भट्टविरचिते विधानपारिजाते
सन्ततिप्रतिबन्धहरविधानम् ॥

—*—

## अथ गरुड़ पुराणे त्रिपिण्डी विधिः ।

—*—

306. **तार्क्ष्य उवाच,—**

देव देव जगन्नाथ लोकानां हितकाम्यया ।
ऊर्द्ध्वदैहिकमाख्यातं प्रेत मोक्षस्य कारणम् ॥७४५॥
नारायणवलिः प्रोक्तस्तथा पुत्तलको विधिः ।

---

१(*) 'ततः त्रिपिण्डीविधिः' इत्थं पाठान्तरमस्ति । त्रिपिण्डीविधिः पश्चादुच्यते ।
२(†) त्रिपिण्डीविधिः पुराणोक्तः पश्चादुच्यते ।
३(‡) रुद्राध्यायस्तु—शुक्लयजुः संहितोक्तः । 'ॐनमस्ते रुद्रमन्यवे' इत्यादि ।
एतदन्यं रुद्रसूक्तं चमकनमकादि चेति । यस्य पाठरीति भट्टभास्करभाष्येऽस्ति ।

विधिहीनन्तु दग्धानां विदेशे मरणे सति ॥७४५॥
वक्तव्यं तत्त्वया ख्यातं तथा दुर्मरणे सति १(*)।

**तथापि—२(†)।**

तथापि जन्तवः केचित् दुर्गतिं समुपाश्रिताः।
स्वकुलेषु प्रजातानां पीड़ां कुर्व्वन्ति दारुणाम् ॥७४६॥
न येषां विद्यते स्वामिन् घृणा वापि तथा दया।
सन्ततिं प्रतिवध्नन्ति घ्नन्त्यपत्यानि दारुणाः ॥७४७॥
कथयस्व प्रसादेन तेषां मोक्षः कथम्भवेत्।
किं कार्य्यं तत् कुलोद्गतैर्मन्त्रैर्व्वा पुरुषोत्तम ॥७४८॥
गयां गन्तुमशक्ता ये तथा वृषभमोक्षणे ३(‡)।
किं कुर्य्युस्ते जगन्नाथ एतन्मे तत्त्वतो वद ॥७४९॥

307. **श्रीभगवानुवाच,—**

शृणु वत्स प्रवक्ष्यामि यत् पृष्टोऽस्मि त्वयानघ ! ॥७५०॥
प्रेतमोक्षकरं कर्म्म लोकानां सुखदायकम्।
यस्य स्मरणमात्रेण प्रेतात् पीड़ा न जायते ॥७५१॥
करिष्यामीति सङ्कल्पात् प्रेतोमोक्षमवाप्नुयात्।
यन्न कस्यचिदाख्यातं गोपनीयमिदं मम ॥७५२॥
रहस्यं परमं ह्येतत् सत्यं सत्यं खगेश्वर !।
पिण्डत्रयात्मकं कर्म्म तव वक्ष्यामि साम्प्रतम् ॥
प्रेतानां तृप्तिजनने लोकानां सुखदायकम् ॥७५३॥

308. **तार्क्ष्य उवाच—**

भगवन् को विधिस्तत्र किं दानं कोऽत्र पूज्यते।
सर्वं विस्तरतो ब्रूहि अस्ति चेद् गरुड़ध्वज ! ॥७५४॥

309. **श्रीभगवानुवाच—**

तीर्थे गत्वा शुचिः स्नातः कृतमाध्याह्निकक्रियः।
स्थलं प्रकल्पयेद् विद्वान् गोमयेनोपलेपयेत् ॥७५५॥

---

१(*) 'वक्तव्यं तत्समाख्यातम्' इत्यपि पाठान्तरं विद्यते।
२(†) 'तथाप्रीतिरित्यधिकः पाठोऽप्येकत्र दृश्यते।
३(‡) वृषभमोचणे, वृषोत्सर्गे।
'वृषोत् सर्गे कृते प्रेतत्वनाशः स्वर्गप्राप्तिश्च स्यात्। एतेनं युवानं पतिं वो ददामि' इत्यादि श्रुत्या।

तत्र पिण्डत्रयं कुर्य्यात् प्रेतान् विष्णुमयान् स्मरन् ।
आदौ संपूजयेद्विष्णुं उपचारैस्तु षोड़शैः ॥७५६॥
आद्यो यवमयः पिण्डो द्वितीयो व्रीहि-सम्भवः ।
तृतीयश्च तिलैः कार्य्यं एवं पिण्डत्रयं खग १(*) ॥७५७॥
यवादिपिष्टप्रभवं कृत्वा विष्णु-मयं स्मरेत् ।
ततो निमन्त्रयेद्विप्रान् सुशीलान् दम्भवर्जितान् ॥७५८॥
सदाचारान् पुत्रवत्तो वेदवेदाङ्ग-पारगान् २(†) ।
उपवेश्य द्विजांस्तत्र प्राणानायम्य यत्नतः ३(‡) ।
श्राद्धं विधिवदातिष्ठेदेकोद्दिष्टविधानतः ॥७५९॥
अज्ञात-नाम गोत्राणां सात्त्विकादित्रिभेदतः ।
'सप्तव्याधे' तिमन्त्रेण प्रोक्षयेदुपचारकम् ४(॥) ॥७६० ॥
'मधुवाता'तृचं जप्त्वा त्रिर्जपेन्मधुमध्विति ।
देशकालौ ततः स्मृत्वा करिष्ये इति कल्पयेत् ॥७६१॥
पिण्डदानार्थं सङ्कल्पं कुर्य्यादित्यर्थः ।
पितृवंशे'ति पठ्येत श्लोकत्रयं विचक्षणः ॥७६२॥

**श्लोका यथा—**

पितृ-वंशे मृता ये च मातृ-वंशे तथैव च ।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवाः स्मृताः ॥७६३॥

---

१(*) व्रीहि—शालिप्रभृतीनां धान्यान्तरभेदोऽस्ति। यवगोधूम-तिल-हैमन्तिकमुद्गकधान्यानाम्। कनीयःशालिनो वा सन्तीयवाः। धान्यानि सप्तदशधा भिन्नानि तेषु त्रयः प्रशस्ताः अतस्त्रिभिर्नि- र्मिताः पिण्डास्त्रिपिण्डा इति।

२(†) वेदाश्चत्वार ऋगादयः, वेदाङ्गानि शिक्षादीनि षट्। एतेषां पारगः अध्येत्तारः। पूता- योग्या यज्ञश्राद्धादिषु नियोज्याः स्युः। अन्यद् हेमाद्रौ पात्रब्राह्मणलक्षणं चास्ति।

३(‡) प्राणानायम्य,—प्राणायामं कृत्वा तद् विधिना कृत्यं आरभेत। प्राणायामरीतिः योग- दर्शने, धर्मशास्त्रे, मन्त्रशास्त्रे चास्ति। स च वायोः पूरक-कुम्भकरेचकरूपः। आयुरा- रोग्यवर्द्धकः।

४(॥) ओं सप्तव्याधा 'दशार्णेषु' इत्यादि स्मार्त्तमन्त्रः।

,, ओं 'मधु वाता ऋतायते' इत्यादि त्रयो मन्त्रा मधुदाने पाठ्याः।

,, पितृसंहिता, तत्सूक्तस्य पाठ्यंस्यात्। यथा—यजुः सं, अः १३, २७—२८—२९।

,, अपरे मन्त्रा गयाचैव मातृ-षोड़शी पितृ-षोड़शी कृत्ये सम्प्रयुक्ताः।

,, मार्कण्डेयपुराणोक्तं रुचि स्तवे अन्यदुक्तमस्ति।

ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ॥
विरूपा आमगर्भाश्च ज्ञाताऽज्ञाताः कुले मम १(*) ॥७६४॥
धर्म्म-पिण्डं प्रदास्यामि ह्यक्षय्यमुपतिष्ठताम् २(†) ।
अवनेज्य ततः पश्चात पिण्डद्रव्ये जपेन्मधु ॥७६५॥

**अत्र मध्विति-मधुसूक्तम् ।**

पिण्डान् दद्यात् प्रयत्नेन मधुरत्रयसंयुतान् ।

**मधुरत्रयम्, दधि-मधु-घृतमिति ।**

कुशानास्तीर्य्य सर्व्वत्र तिलान् प्रक्षेपयेद्बुधः ॥७६६॥
प्रथमं पिण्डमादाय पितृवंशेति पूर्व्ववत् ।
पठित्वा सम्यगेतां स्त्रीन् प्रेतमन्त्रान् विचक्षणः ॥७६७॥

**प्रेतत्वपरिहारार्थं मन्त्रमाह—**

पिण्डं तिल-युतं कृत्वा दद्यात् प्रेतत्वमुक्तये ।
'इमं यवमयं पिण्डं मधुसर्पिः समन्वितम् ॥७६८॥
ददामि तस्मै प्रेताय यः पीड़ां कुरुते मम' ।
ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम ।
यवपिण्डप्रदानेन तृप्तिं गच्छन्तु शाश्वतीम् ॥७६९॥
ये केचिद्दिवि तिष्ठन्ति प्रेताः सात्त्विकरूपिणः ।
सात्त्विकात पिण्डदानेन तृप्तिं गच्छन्तु ते ऽक्षयाम् ॥७७०॥

**इति षड्भिरेकः पिण्डो देयः ।**

पुनः ( ततः ) पितृ-वंशेति त्रीन् पठित्वाऽवनेज्य च ३(‡) ।

---

१(*) कात्यायण श्रौतसूत्र (४।१।१५) 'न मोत्र इत्यञ्जलिं करोतीति'। पिण्डोपरि षडञ्जलीन्दद्यात्। 'नमोवः पितरो रसाय' इत्यादि। शुक्ल, यजुः, अः, २। मः ३२। यजुषां षडञ्जलयः। छन्दोगाणां चतुरञ्जलयः स्युः।

२(†) 'जाता-ज्ञाताः कुले मम' इति भिन्नःपाठोऽस्ति ।

३(‡) इमं पिण्डं धर्मार्थं स्वर्गप्राप्त्यर्थेऽहं ददाति अतः प्रेतत्वमुक्तिपूर्व्वकं अक्षय्यमुपतिष्ठता इति ।

" 'जपेन्मधु' इति मधुमन्त्रत्रयं जपेदिति ।

" अत्र मधुरत्रयं घृतद्रव्यत्रयं दध्यादित्रयमुक्तं । मन्त्रशास्त्रे त्रिमधु तु भिन्नमेवास्ति ।

" षड्भिः मन्त्रैरेकः पिण्डो दातव्यः। षड् मन्त्रान् पठित्वा एकं पिण्डन्दद्यादिति ।

इमं व्रीहिमयं पिण्डं मधुरत्रयसंयुतम् १(*) ।
तन्मुक्तये प्रदास्यामि पीड़ां ये कुर्व्वते मम ॥७७०॥
ये केचिद्वायुरूपेण वर्त्तन्ते पितरो मम ।
तण्डुलैः पिण्डदानेन व्रजन्तु गतिमुत्तमाम् ॥७७१॥
अन्तरिक्षेच ये केचिद् राजसा वायुरूपिणः ।
राजसा पिण्डदानेन ते तृप्यन्तु मुदान्विताः ॥७७२॥

**इति षड्भि र्द्वितीयो देयः ।**

पुनश्च पितृं वंशेति त्रीण् पठित्वाऽवनेनेज्य—
इमं तिलमयं पिण्डं सर्पिषा मधुना युतम् ।
तेभ्यो रूपाश्च ये केचिद् वर्त्तन्ते पितरो मम ॥७७३॥
पिण्याकात् पिण्डदानेन ते तृप्यन्तु क्षुधार्द्दिताः ।

**इति षड्भिः श्लोकैस्तृतीयः पिण्डो देयः ।**

त्रीन् पिण्डान् विधिवद्दत्वा पुनर्द्दत्वाऽवनेजनम् ॥७७४॥
'नमो व' इतिकल्पोक्तो मन्त्रो जाप्यो नरैस्ततः २(†) ।
सूत्राणि निक्षिपेत्तेषु प्रतिपिण्डं विचक्षणः ।
गन्धपुष्पं तथा धूपं दीपञ्चैव प्रदापयेत् ॥७७५॥
नैवेद्यञ्च ततो दद्यात् फलैरर्घ्यं प्रदापयेत् ३(०) ।
मातुलिङ्गैश्च जम्वीरै रुडतीभिर्यथाक्रमम् ॥७७६॥

**सात्त्विकादिक्रमेण,—**

ततः पिण्डप्रदानान्ते विष्णुतर्पणमाचरेत् ॥
वेदोक्तै र्विस्तृतैर्म्मन्त्रैः तथापौराणिकैः शुभैः ।
तर्पणस्यावसानेतु ब्राह्मणान् स्वस्ति वाचयेत् ॥७७७॥

---

१(*). मन्त्रेणावनेजनजलदानं कृत्वा पुनः 'इमं व्रीहिमयम्' इत्यादि पठेत् ।

२(†) आदर्शान्तरेऽन्यः पाठो यथा—'इमं तिल मयं पिण्डं सर्पिषामधुना युतम् ।
तेभ्यो ददामि ये पीडां मम कुले कुरते सदा' (४)। ये केचित्तामसाः प्रेताभूमौ तिष्ठन्ति
" सर्व्वदा। तिलपिण्डप्रदानेन गतिं गच्छन्तु ते ध्रुवाम् (५)। तमोरूपाश्च ये केचित्
वर्त्तन्ते पितरो मम। पिण्याकात् पिण्डदानेन ते तृप्यन्त क्षुधार्द्दिताः (६)।
" इति षड्भिः श्लोकैः तृतीयः पिण्डो देयः। त्रीन् पिण्डान् विधिवद्दत्वा पुनर्द्दत्वाऽवनेजनम।
'नमोव' इति कल्पोक्तो मन्त्रोजाप्यः न रैस्ततः' इत्थं पाठो दृश्यते ।

३(०) इत्ययं श्लोकोनैवेकस्मिन्नादर्शेऽस्ति ।

भोजनञ्च ततो दद्यात् पायसं दधिसंयुतम् ।
माषान्नं कृषरान्नञ्च मिष्टमन्नं प्रकल्पयेत् ॥७७८॥
तान् वै त्रीन् पूजयेद् विप्रान् दक्षिणाभिश्च तोषयेत् ।
सात्त्विकेभ्यो ददेद् वस्त्रं राजसेभ्यः कमण्डलुम् ॥७७६॥
उपार्ज्यजं…… ‥तद्वद् दद्यात्तामसेभ्यः खगेश्वर ! १(*) ।
ततस्तान् प्रार्थयेद्विप्रान् सुतानां शान्तिकारकान् ।
प्रार्थितास्ते प्रयच्छेयुः शान्तिमारोग्यमैश्वरम् ॥७८०॥

**मन्त्रस्तु—**

दिव्यन्तरिक्षभूमिस्थाः(ष्ठाः)सात्त्विका राजसास्तथा ।
प्रेता वै तामसा येऽन्ये शान्तिं यच्छन्तु तर्पिताः इति ॥७८१॥
एवं कृते खगश्रेष्ठ पीड़ा नश्यति तत्कुले ।
आयुष्यं वर्द्धते नित्यं पुत्रपौत्रान्तिकन्ततः ॥७८२॥
न्यूनाधिकं न कर्त्तव्यं कृते कार्य्यं न सिध्यति ।
वित्तशाठ्यं न कुर्व्वीत सत्यमेतन्मयोदितम् ॥७८३॥

310. **श्रीभगवानुवाच,—**

एतत्ते सर्व्वमाख्यातं यत्पृष्टोऽस्मिन्त्वया खग ।
कल्याणन्ते सदा भूयाद् यथास्थानं व्रजाम्यहमिति ॥७८४॥

श्रीगरुड़ पुराणे श्रीविष्णुताक्ष्र्य सम्वादे त्रिपिण्डी-
विधानं समाप्तम् ॥

—*—

## अथाशौचमभिधीयते ।

**तच्च द्वेधा—**

अस्पृश्यलक्षणं, कर्म्मानधिकारलक्षणञ्चेति २(†) ।
तत्र जननिमित्तं मातृवर्जं कर्म्मानधिकाररूपमेव ।
मरणनिमित्तमुभयलक्षणम् ।

311. **यदाह, सम्वर्त्तः—**

जाते पुत्रे पितुः स्नानं सचैलन्तु विधीयते ॥७८५॥
माताशुद्धेदशाहेन स्नानात्तु स्पर्शनं पितुरिति ।

---

(*) 'उपास्य चाम्बरं दद्यात्' इति भिन्नः पाठः ।
२ (†) 'वैदिककर्मानर्हत्वप्रयोजकीभूतसंस्कारविशेषः' ।
'विहित कर्म्माविरोधादृष्टविशेषो वा' इति च ।

**तथा**

स्नानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते ॥७८६॥

सूतके मृतके चैवास्पर्शनं मृतकेऽधिकमिति ।

312. **भृगुस्मृतेः ।**

उभयत्रापि विशेषतया विहितं जातकर्म्म पिण्डदानादिकं भवत्येव ।

313. **तत्रादौ स्रावा धाशौचमुच्यते मरीचिना—**

आचतुर्थाद्भवेत् स्रावः पातः पञ्चमषष्ठयोः ।

अत ऊर्द्ध्वं प्रसुतिःस्याद्दशाहं सूतकं भवेत् ॥७८७॥

स्रावे मातु स्त्रिरात्रं स्यात् सपिण्डाशौचवर्ज्जनम् ।

पाते मातुर्यथामासं सपिण्डानां दिनत्रयमिति ॥७८८॥

यद्यप्यनेन वचनेन चतुर्थमासेऽपि त्रिरात्रं प्राप्नोति—

**तथापि—**

षन्मासाभ्यन्तरं यावद् गर्भस्रावो भवेद्यदि ।

तदा माससमैस्तासां दिवसैः शुद्धिरिष्यत ॥७८९॥

इत्यादित्यपुराणात् १(*) । गर्भस्रावः यथा मासमचिरेतूत्तमे त्रय इति

314. मरीचिस्मृतेश्च चतूरात्रंज्ञेयम् । स्रावेच—

## अत्र सपिण्डानां स्नानमात्रम् ।

सद्यः शौचं सपिण्डानां गर्भस्य पतने सतीति यमोक्तेः । एतन्मास-चतुष्टयपर्य्यन्तम् । पाते सपिण्डानां त्रिदिनस्योक्तत्वात् ।

सद्यःशौचमित्यत्र सद्यः पदं स्नानमात्रपरं ज्ञेयम् ।

गर्भस्रावे सपिण्डानां स्नानमात्रं विधीयते ॥७९०॥

इति वृद्धवसिष्ठोक्तेः । पातेतु त्रिदिनं निर्गुणपरम् । गुणवतस्त्वेकाह-

315. इति मदन पारिजाते यमोक्तेः । सप्तमादिदशमोमासं यावत् सर्व्वेषां दशाहम् । अत ऊर्द्ध्वं प्रसूतिः स्याद् दशाहं सूतकम्भवेदिति

316. मरीच्युक्तेः ।

तुल्यं वयसि सर्व्वेषामतिक्रान्ते तथैवचेति व्याघ्रोक्तेः । जनने तु—

317. पराशरः ।

---

१(*) विषयेऽस्मिन् स्मार्त्त-भट्टाचार्य्याणां मुद्रितत्त्वे पुस्तकं वर्णितमस्ति ।

जातौ विप्रो दशाहेन. द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशानेन शूद्रो मासेन शुद्ध्यति १(*) ॥७६१॥

318. **पुत्रजनने कर्त्तव्यमाह, सम्बर्त्तः—**

जाते पुत्रे पितुः स्नानं सचैलन्तु विधीयते ।
माता शुध्येद् दशाहेन स्नानात्तु स्पर्शनं पितुः ॥७६२॥ इति

**इदमपि चातुर्वर्ण्यसमम् ।**

सूतिका सर्व्ववर्णेषु दशरात्रेण शुध्यति ।
ऋतौ च न पृथक् शौचं सर्व्ववर्णेष्वयं विधिः ॥७६३॥ इति—

319-20. **प्राचेतसोक्तेः । यस्त्वत्र ब्राह्मे—**

ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः ॥७६४॥
गतैः शूद्रास्तु संस्पृश्याः त्रयोदशभिरेव चेति—
शूद्राया स्त्रयोदशाहावध्यस्पृश्यत्वविधायकं वचनं तदसच्छूद्रापरम् ।

**यत्तु—**

'जातौ विप्रो दशाहेन द्वादशाहेन भूमिप' इति वचनं तत्कर्म्मानधिकार-लक्षणाशौचपरम् ।
सूतके सूतिकावर्ज्जं संस्पर्शो न निषिध्यते ।
संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते ॥७६५॥
नाशौचं सूतके पुंसः संसर्गं चेन्न गच्छति ।
रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते ॥७६६॥
321. इत्यङ्गिरसोक्तेः । संसर्गो मैथुनं स्पर्श इत्यन्ये ॥७६७॥

322. **सूतिकायाःकर्म्माधिकारकालमाह, पैठीनसिः—**

सूतिका पुत्रजननीं विंशतिरात्रोर्द्ध्वं कर्म्माणि कारयेत् । मासेन स्त्रीजननीमिति ।

---

१(*) मनुनाप्येवमेवोक्तम्, चतुर्णां वर्णानामाशौचे दिन नियमः ।

323. **व्यासोऽत्र विशेषमाह,—**

प्रथमे दिवसे षष्ठे दशमे चैवसर्व्वदा ।
त्रिष्वेतेषु न कुर्व्वीत सूतकं पुत्रजन्मनीति १(*) ।।७९८।।
आयाति तस्मात्तदहः पुण्यं षष्ठश्च सर्व्वदेति—

324. हेमाद्रौ सम्वर्त्तः । अत्र पुत्रशब्दोऽपत्यमात्रपरः २(†) ।।७९९।।
पुत्रजन्मनि कुर्व्वीत श्राद्धं हेम्नैव बुद्धिमान् ।
न पक्वेन न चामेन कल्याणान्यभिकामयन्—इति ।।८००।।
जन्मदिने एव जातकर्म्मविधानात् ।
एतज्जननाशौचे मरणाशौचे च कार्य्यमित्याह—

325. **मिताक्षरायां प्रजापतिः—**

आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्त्तुस्तात्कालिकी शुद्धिः पूर्व्वाशौचेन शुद्ध्यति ३(‡) ।।८०१।।
इति केचित् ।

**इदन्तु जननाशौचविषयम् ।**

मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत् ।
आशौचापगमे कार्य्यं जातकर्म्म यथाविधि ।।८०२।।

326. इति संग्रहवाक्यादित्याहुः ।

327. **स्मृत्यर्थसारे तु—**

विकल्प इत्युक्त एवं सत्याचारतो व्यवस्था । यत्त्वत्र—
पुंजन्मनि सपिण्डानां दशाहाच्छुद्धिरिष्यते ।
त्र्यहादेकोदकानां स्यादेकाहाद् गोत्रिणान्तथा ।।८०३।।
स्त्रीजन्मनि सपिण्डानां सोदकानां त्र्यहाच्छुचिरिति क्वचिल्लिखितम् ।
तत् सर्व्वेषु हेमाद्र्यादिमहानिबन्धेष्वनुपलम्भादुपेक्ष्यमिति ।

इति जननाशौचम् ।।

—*—

---

१(*) 'पुत्रजन्मनाम्' इति आदर्शान्तरधृतः पाठः ।
२(†) 'आयाति—इत्यादि सम्वर्त्तः' इत्यन्तं आदर्शान्तरेऽधिकः पाठः ।
,, अत्रेति,—भिन्नादर्शे पाठान्तरमस्ति ।
,, पुत्रजन्मनीत्यत्र 'कन्याजन्मनीति' भिन्नः पाठोऽस्ति ।
३(‡) 'कर्त्तुस्तात् कालिकी शुद्धि'रित्यनेन विप्रस्य जनकस्य तदशौच कालमध्ये वैश्वानरीयेष्टिः सूतिका षष्ठीपूजनादिकृत्येऽधिकारोऽस्तु ।

## अथ शावाशौचम् ।

—*—

328. अत्र हारीतः—

जातमृते मृतजाते वा सपिण्डानां दशाहमिति ।

दशाहमित्येतत् क्षत्रियादीनां वर्णानां स्वाशौचपरम् ।

जातो विप्रो दशाहेन द्वादशाहेन भूमिपः १(०) ॥८०४॥

329. इति पूर्व्वोक्तपराशरोक्तेः । सप्तममासप्रभृति मृतजाते जातमृते वा मातुः सपिण्डानां जननिमित्तं पूर्णमाशौचम् ।

वर्णानां जातमृत इति हारीतवचनमुक्त्वा अन्यत्र—

गर्भे यदि विपत्तिः स्याद्दशाहं सूतकम्भवेत् ।

द्वादशाहं पञ्चदश मासं वर्णक्रमेण हि ॥८०५॥ इति ।

330. विज्ञानेश्वरोक्तेश्च—

जीवं जातो यदि प्रेयात् सद्यः शौचं विधीयते, इति वचनं तु तन्मरण-निमित्ताशौचपरम् ।

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।

शावाशौचं न कर्त्तव्यं सूत्याशौचं विधीयते ॥८०६॥

331. इति बृहन्मनूक्तेः—

जातमृते यद्दशाहाशौचमुक्तं तन्नालच्छेदोर्द्ध्वं ज्ञेयम् ।

यावन्न च्छिद्यते नालं तावन्नाप्नोति सूतकम् ॥८०७॥

च्छिन्ने नाले ततःपश्चात् सूतकन्तु विधीयते ॥८०८॥

332. इति जैमिनिस्मृतेः—

च्छिन्ननाभेः शिशोर्मृत्यौ मृतस्य प्रसवेऽपि च ॥८०९॥

मातुश्च गोत्रिणांचैव सर्व्वेषां पूर्णसूतकमिति,—

---

१(०) महर्षिं मनुनाप्युक्तम्—

'शुध्येद् विप्रो दशाहेन द्वादशाहेन भूमिपः ।

वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति'

इति स्व स्व जात्युक्तमशौचम् ।

333. षडशीत्युक्तेः—

334. नाभ्यां च्छिन्नायामाशौचमिति हारीतोक्तेश्च ॥८१०॥

नालच्छेदात् प्राङ्मृते तु बृहन्मनुः—

जीवं(वा)जातो यदि मृतो मृतः सूतक एव तु ।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ॥८११॥ इति ।

इदं वचनं नाभिच्छेदात् प्राक्कालीनमृतिविषयम् ।
नालच्छेदस्यात्रानुक्तेः । इदञ्च प्रसवनिमित्तमाशौचम् ॥८१२॥

शावनिमित्तन्तु स्नानमात्रम् ।

335. जीवञ्जातो यदि प्रेयात् सद्यः शौचं विधीयते ॥८१३॥ इति स्मृतेः ।

प्राङ्नामकरणान्मृते सद्यः शौचमिति शङ्खोक्तेश्च ।

अत्र कश्चिदाह—

नामकरणमाशौचान्तकालोपलक्षणम् ।

336. अशौचव्यपगमे नामधेयमिति विष्णुक्तेः ।

अशौचे तु व्यतिक्रान्ते नामकर्म्म विधीयते ॥८१४॥

337. इति शङ्खोक्तेश्च । नाम्नोनियतकालत्वात्तत्परं शङ्खवचनमिति, तदसत् । चौलवन्नामदन्तजननयोरपि स्वरूपेण निमित्तत्वोपपत्तेः । तद्—विशिष्ट—कालानुवादे वा कालभेदप्रसङ्गात् ।

दन्तजन्मसप्तमे मासीत्युपनिषदि दन्तजननकालस्य प्रायिकत्वकथनेन, क्वचित् सप्तममासादर्व्वाग् दन्तजनने तदभावप्रसङ्गाच ।

तस्मात्

नामधेयं दशम्यान्तु द्वादश्यां वापि कारयेत् ।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥८१५॥

इति शङ्खोक्ते काले, जननादृशरात्रे व्युष्टे शतरात्रे सम्वत्सरे वा नामधेयमिति गृह्यपरिशिष्टोक्तकाले वा, यदि नाम चिकीर्षति तद्दन्तमृतेऽपि । आदन्तजन्मनः सद्य इतिवत् प्राङ्नामकरणात् सपिण्डानां सद्यः शौचमेव । नामकरणानन्तरं दन्तोत्पत्तेः प्राङ्मृतस्य दाहे सत्ये-काहाशौचं कार्य्यम् ।

---

१(क) श्राद्धविवेकतत्त्वं, शुद्धिचिन्तामणौ, शुद्धि कौमुद्याम् ,—
शुद्धवर्णे, मधुसूदनस्याशौचसंक्षेपेचाप्ति ।

अदन्तजाते तनये शिशौ गर्भच्युते तथा ।
सपिण्डानाञ्च सर्व्वेषामहोरात्रमशौचकमिति यमोक्तेः ॥८१६॥
दाहाभावे तु स्नानमात्रम् ।

338. अदन्तजाते प्रेते सद्य एव नास्याग्निसंस्कार इति विष्णुना दाहाभावे सद्यस्त्वोक्तेः १(*) ।

339. आदन्तजन्मनः सद्य इति याज्ञवल्क्योक्तेश्च ।

340. **दाहे विकल्पमाह, लौगाक्षिः—**

तूष्णीमेवोदकं कुर्य्यादग्निसंस्कारमेव च ।
सर्व्वेषां कृतचूड़ानां अन्यत्रापि क्रियाद्वयं ॥ ८१७॥ इति २(†) ।

**अन्यत्र—अकृतचूड़े ।**

अत्र चूड़ाकरणं तृतीयवर्षरूपकालोपलक्षणार्थमिति मेधातिथिहरदत्तावाहतुः ३(‡) ।

341. **मनुरप्याह**—४(§) ।

नात्रिवर्षस्य कर्त्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्य्युर्नाम्नि वापि कृते सति ॥८१८॥ इति ।

## अत्रोदकं दाहस्याप्युपलक्षणम् ।

342. **दन्तजननाभावे ५(०) ब्रह्मपुराणम्—**

अजातदन्तो मासैर्व्वा मृतः षड्भिर्गतैर्बहिः ।
वस्त्राद्यैर्भूषितं कृत्वा निक्षिपेत्तन्तु काष्ठवत् ॥
खनित्वा शनकैर्भूमौ सद्यः शौचं विधीयते ॥८१९॥ इति—

---

१(*) अदन्त इत्यादि,—स्नानमात्रमित्यन्तः पाठोऽत्रांशद्वयं लिखितमस्ति एकस्मिन्नादर्शे ।

२(†) 'अन्यत्रापी तु यद्द्वयमिति' इत्थं पाठोऽस्ति ।
अत्राकृतचूड़े दाहोदकक्रियाद्वयं तूष्णीं विधेयम् ।
कृतचूड़े तु—समन्त्रकमुदकद्वयम् ।

३(‡) मेधातिथिर्मनोः धर्म्मशास्त्रव्याख्याकृत् । हरदत्तस्तु गौतमधर्म्मसूत्रादिटीकाकारः ।

४(§) त्रिवर्षान्न्यूनकालस्य बालस्य क्रियाधिकारि-बन्धुभिरुदकक्रिया नो विधेया । दन्तोद्गतबालस्य-तदेव । जाते नामकरणाख्ये संस्कारे बान्धवाः तत् कृत्यं कुर्य्युरिति मनोः सन्दर्भार्थः ।

५(०) 'दन्तजननानामभावे' इति क्वचित् पाठान्तरमस्ति ।

## शुद्धितत्त्वे १(*) अभिहितम् ।

दन्तोत्पत्त्यनन्तरं प्राक्त्रिवर्षान्तान्मृतेऽप्येकाहमशौचं कार्य्यम् ।

343. दन्तेजातेऽप्यकृतचूड़ेत्वहोरात्रेण शुद्धिरितिविष्णूक्तेः । कृतचूड़ेतु त्र्यहमाशौचं कार्य्यम् ।

निर्वृत्तचूड़कानान्तु त्र्यहाच्छुद्धिरिहेष्यते ।

344. इति कश्यपोक्तेः । त्रिवर्षोर्द्ध्वंकृतचूड़ेवाऽकृतचूड़ेवा मृते प्रागुपनयनात्त्र्यहमशौचं कार्य्यम् ।

यद्यप्यकृतचूड़ो वै जातदन्तस्तु संस्थितः ।
तथापि दाहयित्वेनं अशौचं त्र्यहमाचरेत् ॥८२०॥

345. इत्यङ्गिरसोक्तेः ।

अत्र जातदन्तत्वमुद्दिश्य गतविशेषणत्वादविवक्षितम् । दाहयित्वेत्यप्यनुवादः, उभयविधौ वाक्यभेदापत्तेः २(†) । त्रिवर्षात्प्राक्चूड़ाभावे,

346. अग्निदानाभावेत्वेकाह इति पाराशरीये माधव आह ।
प्रथमवर्षादौ कृतचड़स्य तु त्र्यहमाशौचमित्युक्तं प्राक् । एतत् सर्व्वं प्रागुक्तं सपिण्डानामेव ज्ञेयम् । मातापित्रोस्तु दशाहोर्द्ध्वं मृते पूर्व्वोक्तसर्व्वत्र त्रिरात्रमाशौचम् ।

347. बालानामजातदन्तानां त्रिरात्रेण शुद्धिरिति वशिष्ठोक्तेः ।
वैजिकादभिसम्बन्धादनुरुन्ध्याद्य यंत्र्यहमिति मनुक्तेश्च । अघमशौचं (अघशुद्धिमदशौचं) शुद्धितत्त्वादि ३(‡) गौड़पन्थे तु—
अजातदन्तमरणे पित्रोरेकाहमिष्यते ।
दन्तेजाते त्रिरात्रंस्याद्यदिस्यातान्तु निर्गुणा विति । ८२१॥

---

१(*) आर्त्तभट्टाचार्य्याणां शुद्धितत्त्वाख्यसन्दर्भे ।

२(†), 'अजातदन्ता ये बाला येच गर्भाद्विनिः सृताः ।
नतेषामग्निसंस्कारोनपिण्डं नोदकक्रिया' ॥ इति गारुड़े ।
'सम्भवत्येकवाक्यत्वे वाक्यभेदो नयुज्यते' इतिन्यायात् । तदात्वेऽर्थासङ्गतिः ।

३(‡) शुद्धितत्त्वं, शुद्धिरत्नाकरः, आशौच 'चेपः, अशौचकौमुदी, शुद्धिचिन्तामणिः, कामरूपीयरिपुञ्जयः प्रभृतयः सन्दर्भाअस्मिन् विषये सन्ति ।

४, गौड़ाः पञ्च ते च यथा,—'सारस्वताः कान्यकुब्जाः गौड़मैथिलउत्कलाः ।
पञ्च गौड़ा इमे ख्याता विन्ध्यस्योत्तरवासिनः' ॥

348. कूर्म्मपुराणोक्तं वसिष्ठवचनं शूद्रपरम् ।
अनूढ़ानान्तु (अन्तर्मरणे) कन्यानान्तथा वै शूद्र जन्मनाम् ।

349. **इति व्यवहारानुवृत्तौ शङ्खोक्तेः ।**

त्रिरान्तु भवेच्छूद्रे षन्मासेऽपि शिशौ मृते ।

350. इति मत्स्यपुराणाच्च । दन्तजाते शूद्रेतु पञ्चाहः ॥८२२॥

351. **यथाहांगिराः—**

शूद्रे त्रिवर्षान्न्यूनेतु मृते शुद्धिस्तु पञ्चभिः ॥
अत ऊर्द्धंमृते शूद्रे द्वादशाहोविधीयते ।
षड्वर्षान्तमतीतोयः शूद्रः सम्म्रियते यदि ॥
मासिकन्तु भवेच्छौच मित्याङ्गिरसभाषितमिति ॥८२३॥

यस्त्वनूढ़भार्य्यः शूद्रस्त्विवति शङ्खोक्तमाशौच मुत्तरकालेऽप्युक्तन्तत्-सगुण शूद्रपरम् । निर्गुणेत्वनूढ़भार्य्ये शूद्रेत्विदानीं लोके न प्रचरति ।

**अतएव स्मृत्यर्थसारे,—**

अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्नत्विति ॥८२४॥
मनुना लोकनिन्द्यस्य निषिद्धत्वात् । अनुपनीत विषये किञ्चिदुच्यते ।

**नामकरणात् पूर्व्वं खननमेव ।**

ऊनद्विवर्षं निखने न्नकुर्य्यादुदकन्ततः ।

352. इति याज्ञवल्क्योक्तेः । तदूर्द्धंयावद्वर्षत्रयं चौलाभावेऽन्युदकदान-विकल्पः ।

नात्रिवर्षस्य कर्त्तव्या वान्धवै रुदकक्रिया ।
जातदन्तस्य वा कुर्य्युर्नाम्निवापि कृतेसतीतिमनुक्तेश्च ॥८२५॥

कृतचड़स्यतु त्रिवर्षात्प्रागूर्द्धंचाग्न्युदकदानं नियतम् ।
वर्षत्रयादूर्द्धमकृतचूड़स्यापि तन्नियतम् ।
तूष्णीमेवोदकं कुर्य्यात्तूष्णीं संस्कारमेवचेति—

353. **लौगाक्षिस्मृतेः—**

प्रेतपिण्डं वहिर्दद्याद्दर्भमन्त्रविवर्जितमितिमरीचिवचनमुदाहृत्यै तदनुप –

354. नीत विषयमिति विज्ञानेश्वरोक्तेश्च ।

**अत्र पिण्डदानप्रकारमाह, पारस्करः—**

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः ।
द्वितीये चतुरोदद्या दस्थिसञ्चयनन्तथा ॥८२६॥
त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादीन्क्षालयेत्तथेति—

355. **देवजानीयेऽत्र विशेषः ।**

शिशुरादन्तजनना द्वालःस्याद् यावदाशिखम् ।
कथ्यते सर्व्वशास्त्रेषु कुमारोमौञ्जिबन्धनात् १(*) ॥८२७॥
गर्भे नष्टे क्रिया नास्ति दुग्धं देयं शिशौ मृते ।
परञ्च पायसं क्षीरं दद्याद्वाल विपत्तितः ॥८२८॥
एकादश-द्वादशाह-वृषोत्सर्गविधिं विना ।
सर्व्वतन्त्रं प्रकर्त्तव्यं पिण्डदानं गुडेनवा ॥
तद्वस्त्राणि प्रदेयानि सोपानकानि तत्समे ॥८२९॥ इति—

356. **दिवोदासनिबन्धेऽपि,—**

अव्रते निधनं प्राप्ते विप्रादौ शूद्रजातिवत् ।
क्रियाः सर्व्वाः समुद्दिष्टाः सपिण्डीकरणं विना ॥८३०॥
उदकं पिण्डदानञ्च कृतचूडे विधीयते ।

**स्त्रीणामुद्वाहात्प्रागुदकपिण्डदानविकल्पः ।**

357. स्त्रीणाञ्चैकेऽप्रात्ताना.मितिगोतमोक्तेरितिदिक् ।

**इदं वयोऽवस्थाकृतमशौचं सर्व्वेषां समानमित्याहा-**

358. **ङ्गिराः—**

अविशेषेण वर्णानां अर्व्वाक् संस्कारकर्म्मणः ।

---

१(*) 'कौमारं पञ्चमाब्दान्तं पौगण्डं' दशमावधिः ।
कैशोरं पञ्चदशाब्दान्तं तारुण्यंस्यात्ततः परम्' । इति स्मृती ।
मन्वर्थमुक्तावली 'बालोऽप्याप्रवेशात, बालोपा । इत्यादि ।

संस्कारात् पूर्व्वं मृतानामतिक्रान्ताशौचमपि नेत्याह,—

359. व्याघ्रपात्—

तुल्यं वर्णानां सर्व्वेषां अतिक्रान्ते तथैवच ।
उपनीतेतु विषमं तस्मिन्नेवातिकालजम् ॥८३१॥ इति

अस्यार्थः—

उपनयनादर्व्वाचीने वयसि यदाशौचं विहितं तत्सर्व्वेषां ब्राह्मणादि-चतुर्वर्णानां तुल्यम् ।

यच्च,—

मासत्रये त्रिरात्रं स्यादित्याद्यतिक्रान्ताशौचं तदपि सर्व्वेषां तुल्यम् । उपनीतोपरमे तु दशद्वादशइत्यादिरूपेण विषमं न तुल्यम् । तथा तस्मिन्नेवोपनीतो परम एवातिकालजं अतिक्रान्ताशौचं भवति । एवकारादनुपनीतोपरमे नातिक्रान्ताशौचमस्तीति ॥

—*—

## अथ जातिप्रयुक्ताशौचमुच्यते ॥

—*—

### तच्चोपनयनादि संस्कारोर्द्धं प्रवर्त्तते,

360. तथाच याज्ञवल्क्यः—

त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ।
क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ॥८३२॥
त्रिंशद्दिनानि शूद्रस्य तदर्द्धं न्यायवर्त्तिनः, इति—
स्त्रीशूद्रयोस्तु विवाहोर्द्धं जात्याशौचं ज्ञेयम् ।

वैवाहिकोविधिः स्त्रीणामौपनायनिकः स्मृतः इत्युक्तेः । शूद्राणाञ्चैव सर्व्वेषां विवाह उपनायनमिति गर्गोक्तेश्चः । शूद्रस्यविवाहाभावेऽपि षोड़शवर्षोर्द्धं मासः अनूढ़भार्य्यः ।

शूद्रस्तु, षोड़शाद्वर्षात्परं, मृत्युमधिगच्छेच्चेत,
मासास्तस्यापि वान्धवाः ।
शुद्धिं समधिगच्छन्ति नात्र कार्य्यविचारणा ॥८३३॥
इत्यपरार्के शङ्ख—स्मृतेः ।

**तथा,—**

## महागुरुनिधने द्वादशरात्रम् ।

361. **तथाचाश्वलायनः—**

द्वादशरात्रं महागुरुषु दानाध्यापनेऽववर्ज्जयेदिति १(*) ।

362. **महागुरुश्च,—**

पुत्राणां वेदानध्याप्य यो वृत्तिं विदधाति स पित्रादिः ।

363. **बृहस्पतिः,—**

सपिण्डादि-विभाग विशेषेणाशौचविशेषमाह ।

दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके ॥८३४॥

त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः ॥ इति

364. **तल्लक्षणमाग्नेये—**

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।

समानोदकभावस्तु निवर्त्तेत चतुर्द्दशे ॥८३५॥

जन्मनामस्मृतेर्वैके तत्परं गोत्रमुच्यते । इति २(†)

एकाहाद्ब्राह्मणः शुध्येद्यो।ग्निवेदसमन्वितः ।

अंह्नो (त्र्यहा)त्केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥८३६॥

365. **इति पराशरवचनम् ।**

**तथा,—**

सर्व्वेषामेव वर्णानां सूतके मृतके तथा ।

षड्दश-द्वादशाहाश्च पक्षोमासस्तथैव च ॥

दशाहाच्छुद्धिरेतेषां इति शातातपोऽब्रवीत् ३(‡) ॥८३७॥

---

१(*) 'दानाध्ययनेऽववर्जयेरन्' इत्थं पाठान्तरमस्ति ।

२(†) जन्मदः वेधवेदाध्यापकः माताचेति केचनमहर्षयः । 'विद्यायोनि-सम्बन्धात्' पितृत्वम् ।
अन्याश्रमिणां च ब्रह्मदातैव, पिता महागुरुश्च । सामान्यतश्च—
'जनकश्चोपनेता च यश्च विद्यां प्रयच्छति ।
अन्नदाता भयात्त्राता पञ्चैते पितरः स्मृताः' । भयात्-प्राणादिनाशभयात् । अन्नदाता,—
चिरान्नदानानुगः, भीष्मवत् । भीष्मस्तु श्रीभगवत्पक्षत्यक्तान्नदातुदुर्य्योधनपक्षंगतः ।

३(‡) 'पातितेतु' इति पाठान्तरं दृश्यते ।

,, आदर्शग्रन्थान्तरे इत्यधिकः पाठोऽस्ति ।

366. इत्यङ्गिरोवचनम् ।

तथा,—

सद्यः शौचं तथैकाहस्त्र्यहश्चतुरहस्तथा ॥

षड्दश-द्वादशाहाश्च पक्षो मासस्तथैव च ।

मरणान्तं तथा चान्यद्दश-पक्षास्तु सूतके ॥८३८॥

367. इति दक्षवचनम् ।

तथा,—

ग्रन्थार्थं यो विजानाति वेदमङ्गैः समन्वितम् ।

सकल्पं सरहस्यञ्च क्रियावांश्चेन्नसूतकमिति—ब्राह्मवचनम् ।

तथा,—

त्रिरात्रेण विशुद्ध्येत विप्रो वेदाग्निसंयुतः ।

पञ्चाहे नाग्निहीनस्तु दशाहाद् ब्राह्मणब्रुवः ॥८३९॥

इति बृहस्पतिवचनम् । तथा, ब्राह्मणब्रुवमाह,—

368. पराशरः—१(०) ।

गर्भाधानादिभिर्युक्तः तथोपाकरणेन च ।

नकर्म्मकृन्नचाधीते स भवेद् ब्राह्मणब्रुव इति ॥८४०॥

तथा,—

व्याधितस्य कदर्यस्य (पाप-)ऋणग्रस्तस्य सर्व्वदा ।

क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥८४१॥

विषयासक्तचित्तस्य पराधीनस्य नित्यशः ।

श्रद्धात्यागविहीनस्य भस्मान्तं सूतकम्भवेदिति कौशिकवचनञ्च ॥८४२॥

तानीमानि, आपदनापद्गुणवदगुणवत् कुसूल-कुम्भीधान्य शालीन-गृहस्थादिवृत्तिविषयाणि ज्ञेयानि ।

देशाचारभेदाद्वा व्यवस्थापनीयानि २(†) ।

तत्रापि साग्निवेदत्वादि-गुणोत्कर्षप्रयुक्ताशौचसंकोचः स्तुत्यर्थवादोगुणान्तरविषयो वा द्रष्टव्यः ।

---

१(०) हेमाद्री-वङ्गीयोद्वाहतत्त्वे च कलिवर्ज्ज्यप्रकरणमादित्यपुराणोक्तं यत्तत्र सम्यगस्ति ।

२(†) देशाः—आर्य्यावर्त्त-ब्रह्मावर्त्त-ब्रह्मर्षिप्रभृति संज्ञकाः । अथवा 'आप्राचीनामरूपात्' इति भट्टभास्करोक्ताः ।

वानप्रस्थाश्रमस्यापि प्रवेशो विधिनोदितः ।
वृत्तस्वाध्याय-सापेक्षमघसंकोचनन्तथा ॥८४३॥
प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकम् ।
एतानि लोकगर्ह्याणि कलिकाले विवर्ज्जयेत् ॥८४४॥

369. इत्यादित्यपुराणात् ।

दशाह एव विप्रस्य सपिण्डमरणे सति ।
कल्पान्तराणि कुर्व्वाणः कलौ भवति किल्विषीति हारीतोक्तेः ।
शिष्टविगानान्नादर्त्तव्यानीमानीति विज्ञानेश्वरोक्तेश्च ।
अत्र मरणान्तमपि निन्दार्थवादरूपं न स्वार्थे तत् परम् ।

अन्यथा,—

जन्मकर्म्मपरिभ्रष्टः सन्ध्योपासनवर्जितः ।
नामधारकविप्रस्तु दशाहं सूतकी भवेत् ॥

370. इति पराशर वचनं विरुध्येत ।

यद्वा,—

अन्य पूर्व्वा गृहे यस्य भार्य्या स्यात्तस्य नित्यशः ।
अशौचं सर्व्वकार्य्येषु देहे भवति सर्व्वदेति ॥८४५॥
ब्राह्मयादि वचनादेतादृशपरत्वेन व्यवस्थेत्यपरार्कः १(०) ।

तथा,—

दशाहादित्रिभागेन कृते सञ्चयने क्रमात् ।
अङ्गस्पर्शनमिच्छन्ति वर्णानान्तत्त्वदर्शिनः ॥८४६॥'

371. इति यद्देवलवचनं तदपि युगान्तरविषयम् ।
अस्थिसञ्चयनादूर्द्धमङ्गस्पर्शनमेव चेति ॥८४७॥

372. माधवीये कलिप्रकरणे तन्निषेधात् ।

तथा,—

ये च वर्णसंस्करजाता मूर्द्धावसिक्ताद्यास्तेषामाशौचविशेषः कलौ नोपयुक्त इत्यत्र नोच्यते ।
प्रतिलोमजातानां नाशौचं किन्तु मलापकर्षार्थं स्नानमात्रमिति

373. विज्ञानेश्वरः ।

---

१(०)· अयमपरार्कः, भर्त्तधियाज्ञवल्क्यस्मृतेर्व्याख्याता, व्याख्यानमस्यसुविख्यातमिति ।

374. **माधवाचार्य्यस्तु,—१(०)।**

शौचाशौचे प्रकुर्व्वीरंश्शूद्रवद् वर्णशङ्कराः।

375. **इति ब्राह्मोक्तेः। शूद्रवदित्याह—**

दत्त-क्रीत-कृत्रिमादि पुत्रेषु, अहीनवर्णगासु स्त्रीषु च सपिण्डत्वेऽपि प्रसवे मरणे च पूर्व्वापरपित्रोर्भर्त्रोश्च त्रिरात्रमेवाशौचं न दशाहादि।

अनौरसेषु पुत्रेषु जातेषु च मृतेषु च।

परपूर्व्वासु भार्यासु प्रसूतासु मृतासु चेति त्रिरात्रानुवृत्तौ

376. विष्णुक्तेः ॥८४८॥

**सपिण्डानान्त्वेकाहः।**

परपूर्व्वासु भार्यासु पुत्रेषु कृतकेषु च।

भर्त्तृपित्रोस्त्रिरात्रं स्यादेकाहस्तु सपिण्डतः ॥८४९॥

377. **इति माधवीये हारीतोक्तेः।**

सूतके मृतके चैव त्रिरात्रं परपूर्व्वयोः।

एकाहस्तु सपिण्डानां त्रिरात्रं वै पितुरिति ॥८५०॥

378. **मरीचिस्मृतेः।**

अनौरसेषु पुत्रेषु भार्य्यास्वन्यगतासु च।

379. परपूर्व्वासु च स्त्रीषु त्रिरात्राच्छुद्धिरिष्यत इति शङ्खस्मृतेश्च ॥८५१॥

परपत्नी स्वयं संगृहीता परपूर्व्वेत्यर्थः।

380. **इदमाशौचं सवर्णासु, हीनवर्णासु तु शङ्खलिखितौ—**

परपूर्व्वासु भार्य्यासु पुत्रेषु कृतकेषु च।

नानध्यायो भवेत्तस्य नाशौचं नोदकक्रिया इति, ॥८५२॥

---

१(०) एते वेदव्याख्यातारः पराशरस्मृतेर्भाष्यकृतश्च। स्मार्त्तभट्टाचार्य्यैरपि एतदनुमन्यते।

" 'बभूवुर्ब्रह्मणो वक्त्रादन्या ब्राह्मणजातयः।

ब्रह्मणो बाहुदेशाच्च जाताः क्षत्त्रियजातयः॥

ऊरुदेशाच्च वैश्याश्च पादतः शूद्रजातयः।

तासां सङ्करजातेन बभूवुर्वर्णसङ्कराः'॥

'स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः।

सङ्करो नरकायैव' इत्यादि गीतायाम्।

एवमेव मानवे धर्म्मशास्त्रे, तथैव ब्रह्मवैवर्त्तं पुराणेचास्ति।

381. **ब्राह्ममपि,—**

आशौचन्तु त्रिरात्रं स्यात् समवर्गेषु निश्चितम्।
हीनवर्णेषु तेष्वेव नाशौचं नोदकक्रियेति ॥८५३॥

382. **यदत्र षडशीतौ,—**

अन्यपूर्व्वावरुद्धासु त्रिदिनाच्छुद्धिरिष्यते।
तास्वेवानन्यपूर्व्वासु पञ्चाहोभिर्विशुद्धयतीति ॥८५४॥

**तत्र पञ्चाहे मूलं मृग्यम्।**

383. **यत्तु याज्ञवल्क्यः—**

अनौरसेषु पुत्रेषु भार्य्यास्वन्यगतासु च। इति एकाहमाह,
तदसन्निधानादौ ज्ञेयम्।
यदा पितुरेकाह स्तदा सपिण्डानां स्नानमात्रं ज्ञेयम्।
अन्याश्रितेषु दारेषु परपत्नीसु तेषु च ॥

384. गोत्रिणः स्नानशुद्धाःस्युरेकरात्रेण तत्पितेति प्रजापत्युक्तेः।
पूर्व्वापरभर्त्तुत्पन्नयोः पुत्रयोस्त्वाह,—

385. **मरीचिः—**

मातुरैक्याद्द्विपितृकौ भ्रातरावन्यगोत्रजौ।
एकाहं सूतके तत्र त्रिरात्रं मृतके तयोरिति इति,—दत्त-क्रीतादि
सूतकं अनूढकन्याशौचमुक्तम्।

386. **ऊढकन्यासु तु विष्णुराह—**

संस्कृतासु कन्यासु नाशौचं प्रसवमरणे चेत् पितृगृहे स्यातां तदेकरात्र-
387. ञ्चेति। प्रसवे-एकरात्रं मरणे त्रिरात्रमिति विज्ञानेश्वरापरार्कौ।

388. **माधवस्तु,—**

प्रसवेऽपि त्रिरात्रं पित्रोः एकरात्रं बन्धुवर्गस्य।
दत्ता नारीपितुर्गेहे प्रसूयेत म्रियेत वा ॥८५५॥

389. तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिरिति ब्रह्मपुराणोक्ते रित्याह।
जनकोपाधिपुरस्काराल्लक्षणया जनन्या अपि त्रिरात्रमेव।
बन्धुवर्ग इत्यनेन भ्रात्रादयो गृह्यन्ते।
केचित्तु, (मातुः) (पितुः) स्वगेहेभगिनी प्रसवे सत्येकाहम् १(०)।

---

१(०) पत्र पाठस्य बैकल्यं मस्ति।

## मृतौ तु त्रिरात्रमित्याहुः ।

390. युक्ता तु पक्षिणी भ्रातृ-भिन्नानामेकाहं गर्गोक्तेः ।
इतरेषां यथाविधीति, (व) वीक्ष्यमाणस्मृतेश्च ।
पतिगेहे प्रसवेतु पित्रादीनामा शौचं नास्त्येव, प्रत्तानामितरे कुर्य्युस्ताश्च
तेषामिति कात्यायनसूत्रात् ।
तासां पतिगेहे मृतौ पित्रोस्त्रिरात्रमस्त्येव ।
प्रत्तापत्तासुयोषित्सु संस्कृतासंस्कृतासु च ।
भ्रातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधीति माधवीये
391. कार्ष्णाजिन्युक्तेः ।
वैजिकादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहमित्युक्तेश्च ॥८५६॥

392. यत्त्वत्र षड़शीतौ,—

पितृगेहाद्दतोऽन्यत्र यदि पुत्री प्रमीयते ।
पक्षिणी तत्र पित्रोः स्यान्नान्येषामिति निश्चय इति ग्रामान्तर—
विषयमिति ॥८५७॥

393. स्मृत्यर्थसारे ।

सद्यस्त्वप्रौढ़कन्यायां प्रौढ़ायां वासराच्छुचिः ।
394. प्रदत्तायां त्रिरात्रेणाऽदत्तायां पक्षिणी भवेदिति पुलस्त्योक्तेश्च ॥

## पित्राद्युपरमे तासामशौच माह,—

395. वृद्धमनुः—
भ्रातुस्तु पक्षिणी पित्रोर्मृतौ स्त्रीणां त्रिरात्रकमिति ।
पित्रोरुपरमे स्त्रीणां मूढ़ानान्तु कथम्भवेत् ।
396. त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान् यम इति वृहन्मन्वक्तेश्च ॥८५८॥
397. अत्र विशेषः प्रयोगपारिजाते—

गान्धर्व्वादि विवाहेषु वाग्दानाभावात् पितृपक्षएवैकाहाद्यशौचं
सम्प्रपद्यमन्तरं भर्त्तृपक्षेऽपि, यात्वन्यस्मै पित्रा दत्ता सती
स्वातन्त्र्यादन्यमाश्रयति ।

398. **तस्या विशेषो ब्रह्मपुराणे—**

पित्रा दत्ता तु या नारी स्वातन्त्र्यादन्यमाश्रिता ।
यंयं श्रितवती भूयस्तस्याशौचं भवेदहः १(*) ॥८५९॥

## मृतानामन्येषामितिनिश्चयः ।

कामादक्षतयोनिश्चेदन्यं गत्वा व्यवस्थिता ।
तस्यान्यस्य सगोत्रा सा यन्त्वाश्रितवती स्वयम् ॥८६०॥

**तथा,—**

पदेतु सप्तमे यत्र बलात् काचि (द्ध) द्धृता भवेत् ।
स्वामिगोत्रं भवेत्तस्याः तच्च भूयो विशिष्यते ॥
पैतृकंत्वप्रसूतायां ततः पौर्व्विकभर्त्तृकम् ॥८६१॥

**अयमर्थः,—**

सप्तपद्यन्तं विवाहे जाते या बलात्कारेण हृतान्येन तस्याः स्वामि-गोत्रं पाणिग्राहकगोत्रमेव भवेत् २(†) ।

**तत्र विशेषमाह,—**

तच्च भूयो विशिष्यत इति ।
तमेव दर्शयति,—पैतृकन्त्वप्रसूतायामित्यादिना ।
तस्या यावत् प्रसवं पितृगोत्रमेवावतिष्ठते ।
तदूर्द्ध्वं पौर्व्विक भर्त्तृकं पाणिग्राहकस्यैव गोत्रंभ(म)वति मृते भर्त्तुर्गोत्रं कदापिनेत्यर्थः ।

तथापि भ(ह)र्त्तुस्तत् प्रसव-मरणयोस्त्रिरात्रम् ।
बैजिकादभिसम्बन्धादनुरुन्धादघं त्र्यहमिति स्मृतेः ।
इदमपि सवर्णा श्रयएव नान्यथेत्युक्तं प्राक् ।

399. **शङ्खः,—**

पितृवेश्मनि यानारी रजः पश्येदसंस्कृता ।
प्रसवे ममणे तज्जमशौचं नोपशाम्यति ॥८६२॥

---

१(*) 'भवेदिदम्' इति भिन्नः पाठः ।

२(†) 'सगोत्राद्भ्रष्टनारी विवाहात् सप्तमेपदे' इति स्मृतौ ।

'यत: बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापिविलिखितं, तत् सर्व्वं अकृतं भवेत्' इति स्मृतिश्च ।

पित्रोरिति शेषः।

वेश्मपदोपादानात् सपिण्डानामप्युक्तं ज्ञेयम्।
दौहित्रभागिनेययोरसंस्कृतयोः पक्षिणी॥

400. संस्कृतयोस्त्रिरात्रमित्याह वृद्धमनुः,—
संस्थिते पक्षिणींरात्रिं दौहित्रे भगिनीसुते।
संस्कृतेतु त्रिरात्रंस्यादिति धर्म्मोव्यवस्थित इति॥८६३॥
दुहितुरपत्यं दौहित्रः। पक्षीणीतु—अहर्द्वययुक्ता रात्रिः।
'आगामिवर्त्तमानाहर्युक्तायां निशि पक्षिणी' इत्यभिधानात् १(*)।

401. त्रिंशच्छ्लोक्यां च,—
प्रेतेष्वाचार्य्य-मातामह-दुहितृ-सुत-श्रोत्रियर्त्विक-स्वयाज्य,-
स्वस्त्रीयेषु त्रिरात्रं दिवसमशुचिः सोदकस्तूभयत्र।
पक्षिण्यशौच मृत्विग्दुहितृ-सुत-सहाध्यायि-बन्धु-प्रयान्ते-
वासि-श्वश्रूसु-मित्र श्वशुर-भगिनीक-भागिनेय-प्रयाणे;
मातामह्यांचपित्रोः स्वसरिच, विरतेमातुले मातुलान्या
श्चाथोसज्योतिरेव स्वविषयनृपतौ ग्रामनाथेच नष्टे॥८६४॥ इति।
समानं ज्योतिरादित्यो नक्षत्रंवा यस्मिन् काले सःसज्योतिरिति
विग्रहः। दिवानष्टे यावत् सूर्य्य दर्शनं कालोऽशुद्धिहेतुः।
रात्रिनष्टे यावद्रात्र्यवसानमशुद्धिः। ततोज्योतिर्दर्शने शुद्धिरित्यर्थः।
अत्रश्लोके येषां त्रिरात्रंपक्षिणीचोक्तं तद्देशकालसंस्कृतासंस्कृतादिभेदेन-
व्यवस्थापनीयम्॥

यथा,—

402. शिष्योपाध्यायबन्धुत्रयगुरुतनयमा,—२(†) चार्य्यभार्य्यासगोत्राऽ,—
नूचानश्रोत्रियेषु स्वगृहपरमृतौ, मातुलेचैकरात्रम्।
रात्रिसब्रह्मचारिण्यथतु कथमपि स्वल्पसम्बन्धमुक्ते।
स्नानं वासोयुतं स्यादिदमपि सकलं सर्व्ववर्णेषु तुल्यम्॥८६५॥ इति—

---

१(*) पक्षिणीतु—'आगामिवर्त्तमानाहर्युक्तायां निशि पक्षिणी' इत्यमरः।
२(†) अत्र, 'गुरुतनयं चार्य्यभार्य्या' इति भिन्नः पाठोऽस्ति।

उपाध्यायोमन्त्रब्राह्मणयो रन्यतराध्यापकः । बन्धुत्रयमात्मबन्धवः, पितृ-बन्धवः, मातृबन्धवश्च । गुरुतनयोगुरुसुतः । आचार्य्यभार्य्या-गुरुपत्नी । अनूचानोऽगंप्रवक्ता, साङ्गवेदाध्ययनशीलोवा १(*)। 'सोऽनूचानः प्रवचने साङ्गेऽधीती गुरोश्च यः' इत्यभिधानात् ।

**सगोत्रः,—**

चतुर्द्दशपुरुषानन्तरमेकविंशतिपुरुषावसानः ।

अन्यत् स्पष्टम् । स्वगृहपरमृतौ,—स्वगृहे परस्यासपिण्डादेः मरणे सब्रह्मचारी एकाचार्य्योपनीतः । तस्मिंश्च मृते एकरात्रमशौचम् । अत्र श्रोत्रियःसमानग्रामवासी ग्राह्यः ।

एकाहं सब्रह्मचारिणि श्रोत्रिये स ( ब्रह्म चारिणि ) मानग्राम-वासिनि इत्येवं आश्वलायनः स्मृतेः ।

अत्राचार्य्य पत्नीपुत्रावसवर्णौ ग्राह्यौ । सवर्णयोस्तु त्र्यहम् ।

आचार्य्य तत्पुत्र-स्त्री-याज्यशिष्येषु चैवमितित्र्यहानुवृत्तौ गोतमोक्तेः ।

आचार्य्यादाविदं त्रिरात्रम् , पितृमेधकर्त्रन्तरसद्भावे स्वयं चेत् पितृमेधं करोति तदा दशरात्रम् ।

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् ।
प्रेताहारैः समं तत्र दशरात्रेन शुध्यतीति—
मिताक्षरायां मनूक्तेः ॥८६६॥
निरन्वये सपिण्डे तु मृते सति दयान्वितः ।
तदशौचं पुरा चीर्त्वा कुर्य्यात् तु पितृवत् क्रियाम् ॥८६७॥
इति ब्राह्मोक्तेश्च ।
यत्तु मातृष्वस्रादिषु प्रचेतसा त्रिरात्रं अभिहितं
मातृष्वसामातुलयोः श्वश्रू श्वशुरयोर्गुरौ ।
मृते च त्रिर्झेयाज्ये च- त्रिरात्रेन विशुध्यतीति ॥८६८॥

---

— उपाध्यायः—उपसमीपेवेधं शास्त्रमधीते यस्मात् स उपाध्यायो गुरुः ।

१(*) 'योऽनूचानः सनो महान्' इति श्रुतिः । 'विप्रवालोब्रह्मचारी साङ्गवेद विचक्षणः' । षढ़ङ्ग वेद वेत्ताच इति कोषकृत् । 'श्रोत्रियः छन्दोऽधीते' । एकां शाखां सकल्पां वा

" षड्भिरङ्गैरधीतवान् । षट्कर्म्मनिरतो विप्रः सवे श्रोत्रिय उच्यते' इति ।

" 'उपनीयतु यः शिष्यं वेदमध्यापयन् द्विजः ।
सकल्पं सरहस्यंवा तमाचार्य्यं विदुर्बुधाः' इति स्मृतौ ।

स्वगृहे तन्मरणे वेदितव्यमिति दिवोदास निबन्धे ।
युक्तं चैतत् ......
मातुले पक्षिणीं रात्रिं शिष्यर्त्विग् बान्धवेषु च ।
प्रेते राजनि सज्योतिर्यस्य स्याद् विषये स्थितिः ॥८६९॥
इति मनु वचनं निर्विषयं स्यात् ।
एवं श्रोत्रियस्यापि स्वगृहमृतौ त्रिरात्रमेव ।
श्रोत्रिये तूपसन्ने वै त्रिरात्रमशुचिर्भवेदिति माधवीये गालवोक्तेः ।
एवं बान्धवानामपि,—
बान्धवेषूपसन्नेषु त्रिरात्रमशुचिर्भवेदिति स्मृतेः ॥

403. **बान्धवत्रयस्वरूपमुक्तं स्कान्दे—**

आत्मपितृस्वसुः पुत्रा आत्ममातृस्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥८७०॥
मातुर्मातुः स्वसुः पुत्रा मातुः पितुः स्वसुः सुताः ।
मातुर्मातुल पुत्राश्च विज्ञेया मातृबान्धवाः ॥८७१॥
पितुः पितुः स्वसुः पुत्राः पितुर्मातुः स्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥८७२॥ इति
अथ केनापि प्रकारेण स्वल्पेनापि सम्बन्धिनि भगिन्यादौ वासो युतं :—
सचैलं स्नाने शुद्धिः स्यात् , नान्यत्त ।

**तथाच याज्ञवल्क्यः—**

भगिन्यां संस्कृतायां तु भ्रातर्य्यपि च संस्कृते ।
मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥
श्यालके तत् सुते चैव सद्यः स्नानेन शुध्यतीति ॥८७३॥
इदमुक्तं सकलाशौचं सर्व्ववर्णेषु तुल्यम् ।
अत्र दौहित्रादौ पूर्व्ववद् व्यवस्था ज्ञेया ।
यदत्र भ्रातृदौहित्रादौ स्नानमात्रेण शुद्धिकथनं तद्देशान्तरादिविषयम् ।
अन्यत्र पक्षिणी एकरात्रं च विज्ञेयम् ।

404. **तथा च स्मृत्यर्थसारे—**

याज्यर्त्विग्दौहित्रसहाध्यायिसहोपनीतात्मबन्धुपितृबन्धुमातृबन्धुमातुल-
शिष्योपाध्यायानूचानगुरुपुत्राचार्य्यपुत्रभागिनेयश्वश्रूश्वशुर-भगिनीमाता-

मह्यीमांतृष्वसृमातुलानां गुर्व्वाचार्य्यपत्नीनां च मरणे सत्येकग्रामे पक्षिणी, ग्रामान्तरे त्वेकाहो देशान्तरे स्नानमात्रमिति ।

**यत्तु,**

जामातरि मृते शुद्धिस्त्रिरात्रेणोभयोः स्मृता ।

405. पक्षिणी श्यालकानां स्यादिति शतातपोऽब्रवीत् ॥८७४॥

इति यमस्मरणमिति केनचित् पठितम् , तन्मिताक्षरादिनिबन्धेष्वनुपलम्भादुपेक्ष्यम् । साकरत्वे तु स्वगृहमृतिविषयमिति वेदितव्यम् । असपिण्डेषु स्ववेश्मनि मृतेषुचैकरात्रमिति विष्णुस्मृतावसपिण्डोक्तेः सपिण्डस्य च तिरात्रज्ञापनाद् ।

**तथा—**

ग्राममध्यगतो यावच्छवस्तिष्ठति कस्यचित् ।

406. ग्रामस्य तावदाशौचं निर्गमे शुचितामियात् ॥८७५॥

इति वृहद्विष्णुः ।

ग्राम इत्युक्ते नगरस्य चेति चवोध्यम् । गृहे पश्वादौ मृतेऽप्येवमेवेति

407. मदनपारिजाते ।

**तथा,—**

408. वानप्रस्थेयत्राशौचपरमिति कुलजे
षण्डके चाप्लवः स्याद् ।
यो गोविप्रप्रगुप्त्यै मृतवति तु दिनं
युद्धविद्धे तु सद्यः ॥८७६॥

## षण्डकः क्लीवः, षण्ढकोवा ।

409. अत्र सर्वत्र मूलवचनानि मिताक्षरादौ ज्ञेयानि ।

ग्रन्थभूयस्त्वभीत्या अत्र नोच्यन्ते ।

सद्यः तदैव सर्व्वं कार्य्यमित्यर्थः ।

यत्तु आहवेषु विपन्नानामेकरात्रमशौचकमिति मनुवचनं तत्तु शुद्धक्षतेन कालान्तरमृते ज्ञेयम् । १(+)

410. **शवस्पर्शे तु हारीतः—**

शवस्पृशो ग्रामं न प्रविशेयुरानक्षत्रदर्शनाद्रात्रौ चेदादित्यस्येति ।

यत्तु, अह्वाचैकेन रात्र्याच त्रिरात्र्या, चैव च त्रिभिः ।

शवस्पृशो विशुध्यन्ति अह्वा तूदकदायिनः ॥८७७॥

---

१(+) 'युद्धचतेन' इति पाठान्तरम् ।

इति मनुवचनं तत्तदन्नाशनादौ ज्ञेयम् १(*) ।
अह्ना रात्र्याचेत्यहोरात्रमुक्तम् ।
त्रिभिस्त्रिरात्रैरिति नवरात्रमेवं दशरात्रमित्यर्थः ।
यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यतीति मनूक्तेः ।

411. **अङ्गिराः,—**

अशौचं स्पर्शसंसर्गादापतेद्गृहमेधिनः ।
क्रियास्तस्य नलुप्यन्ते गृहाणां च नतद्भवेत् ॥८७८॥ इति ।

**अथ निर्हाराद्यशौचम् ।**

सवर्णनिर्हारे तदन्नाशने तद्गृहवासे च दशाहमशौचम् ।
तदन्नानशने तद्गृहवासे त्र्यहं तूभयाभावेत्वेकाहम् ।
मृतिगृहेणनिर्हारे दाहे च स्वाशौचम् ।

412. **तथा च मनुः,—**

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥८७९॥
यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति ।
अनदन्नन्नमह्नैव न चेत् तस्य गृहे वसेत् ॥८८०॥ इति
यदि निर्हरति प्रेतं प्रलोभाक्रान्तमानसः ।
दशाहेन द्विजः शुध्येद्द्वादशाहेन भूमिपः ।

413. मासार्द्धेन तु वैश्यश्च शूद्रो मासेन शुध्यति ॥८८१॥

**इति कूर्मपुराणम् ।**

विज्ञजातीयनिर्हारे शवजातीयमशौचम् । २(+)
अवरश्चेद्भवेद्वर्णः पूर्ववर्णमुपस्पृशेत् ॥
पूर्वोवाऽवरं तत्र तच्छवोक्तमशौचकमिति ॥८८२॥

**गोतमोक्तेः ।**

अवरश्चेद् वरं वर्णं वरो वाप्यवरं यदि ।
वहेच्छवं तदाशौचं दृष्टार्थे द्विगुणं भवेत् ॥८८३॥

---

१(*) 'तद-भक्ष्यशनादौच' इति भिन्नः पाठः ।
२(+) 'भिन्नजातीय' इति पाठान्तरम् ।

414. **इति व्याघ्रोक्तेश्च ।**

दृष्टार्थे द्रव्याद्यर्थे तद्विगुणं कार्य्यमित्यर्थः । दाहेऽप्येवं ज्ञेयम् ।

415. **यत्तु ब्राह्मे—**

योऽसवर्णं तु मूल्येन नीत्वाचैव दहेन्नरः ।
अशौचं तु भवेत् तस्य प्रेतजातिसमं नृप ! ॥८८४॥
इति तदापरिज्ञेयम् ।

416. **सोदक निर्हारे तु दशाह इति माधवीये ।**

417. **प्रेतालङ्करणे तु शङ्खः,—**

कृच्छ्रपादोऽसपिण्डस्य प्रेतालङ्करणं कृते ।
अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते ॥८८४॥ इति
धर्मार्थमनाथसवर्णनिर्हरणदाहादि क्रियाकरणे च
द्विजस्यानन्तयज्ञफलं स्यात्, स्नानं प्राणायामोऽपि पर्शश्चेति ।

418. **तथा च पराशरः,—**

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफलमानु पूर्व्याल्लभन्ति ते ॥८८५॥
न तेषामशुभं किं चित् पापं वा शुभकर्मणाम् ।
जलावगाहनात्तेषां सद्यः शौचं विधीयते ॥८८६॥ इति ।

419. **अपरार्के वृद्ध पराशरश्च,—**

प्रेतसंस्पर्शसंस्कारे ब्राह्मणो नैव दुष्यति ।
वोढा चैवाग्निदाता च सद्यः स्नात्वा विशुध्यति ॥८८७॥ इति ।

420. **स्नेहेनासपिण्डनिर्हारे तु त्रिरात्रमित्युक्तं प्राग्विष्णुः,—**

मृतं द्विजं न शूद्रेण हारयेन्न शूद्रं द्विजेनेति ।
द्विजं निर्हरतः शूद्रस्य तज्जात्युक्तमशौचं स्यात् ।
अवरश्चेति गोतमोक्ते इति निर्हाराशौचम् ॥८८८॥

—•—

# अथानुगमनाशौचम् ।

—*—

421. **देवलः,—**

विहितं हि सपिण्डानां प्रेतनिर्हरणादिकम् ।
तेषां करोति यः कश्चित्तस्याधिक्यं न विद्यते ॥८८९॥

422. **समोत्कृष्टवर्णयोरनुगमने कण्वः,—**

अनुगम्य शवं बुद्धा स्नात्वा स्पृष्ट्वा हुताशनम् ।
सर्पिः प्राश्य पुनः स्नात्वा प्राणायामैर्विशुध्यति ॥८९०॥ इति
हीनवर्णानुयानेन क्षत्रिये त्वेकाहः,
वैश्ये पक्षिणी, शूद्रे त्रिरात्रम् ।
क्षत्रियस्य तु वैश्येऽहः शूद्रे पक्षिणी ।

423. वैश्यस्य तु शूद्रेऽहरिति विज्ञानेश्वराः ।

424. माधवाचार्य्यास्तु विप्रस्य वैश्ये द्व्यहः क्षत्रियस्य शूद्रेऽप्येवम्,
अन्यत् पूर्ववदित्याहुः ।
अत्र स्नानाग्निस्पर्शनादिसर्वत्रेत्याह त्रिंशच्छ्लोकीकारः ।
तुल्योत् कृष्टानुयानेन वसनसहितकोऽम्भस्यवाप्लुत्य वह्निं
स्पृष्ट्वाज्यं प्राश्य शुध्येत् ।
अथ दिनमशुचिर्हिहीनवर्णानुयाने
पक्षिण्येकान्तरानुव्रजन इह भवेद्व्यन्तरत्वे त्रिरात्रम् ।
कृत्वा स्नात्वा सुनद्यामसुयमनशनं सर्पिराशं च कुर्य्युरिति ॥८९१॥
इदमनुगमनादिसपिण्डेनापि ब्रह्मचारिणा न कार्य्यमित्याह—

425. **देवलः ।**

ब्रह्मचारी न कुर्व्वीत शववाहादिसत्क्रियाम् ।
यदि कुर्य्याच्चरेत् कृच्छ्रं पुनः संस्कारमेव च ॥८९२॥ इति

426. **पित्रादौ प्रतिप्रसवमाह, याज्ञवल्क्यः,—**

आचार्य्यपित्रुपाध्यायान्निर्हृत्यापि व्रते व्रतीति ॥

---

१(०) मृतस्य वहिर्निर्गमनं सतप :, तद्वहनम्, श्मशानेनयनं दाहादिच [illegible]यम् । तेष्वशौचादि ।

427. **गर्भिणीपतिविषये वृद्धमनुः—**

दहनं वहनं चैव प्रेतस्यान्यस्य गर्भवान् ।
न कुर्य्यादुभयं मातुः कुर्य्यादेव पितुः सदा ॥८६१॥

ज्येष्ठस्य वानपत्यस्य मातुलस्य तु तस्य चेति हीनस्य दाहादिकरणे—

428. **मनुः—**

व्रात्यानां याजनं कृत्वा परेषां मृत्युकर्म्म च ।
अभिचारमहीनां च त्रिभिः कृच्छ्रैश्च शुध्यति ॥८६२॥ इति ।१(*)

—*—

## अथ रोदनाशौचम् ।

—*—

सञ्चयनात् पूर्व्वंसवर्ण रोदने सचैलस्नानं तदूर्द्ध्वमाचमनं हीनवर्णेष्वे-
429. काहं स्नाने इति माधवीये ।

**तथा च ब्राह्मे,—**

अस्थिसञ्चयने विप्रो रौति चेत् क्षत्रवैश्ययोः ।
तदा स्नातः सचैलस्तु द्वितीयेऽहनि शुध्यति ।
कृते तु सञ्चये विप्रः स्नानेनैव शुचिर्भवेदिति ॥८६३॥

विज्ञानेश्वरास्तु सर्व्वत्रैक-रात्रमाहुः ।

430. **तथा च पारस्करः,—**

मृतस्य बान्धवैः सार्द्धं कृत्वा तु परिवेदनम् ।
वर्जयेत्तदहोरात्रं दानं श्राद्धादिकर्म च ॥८६४॥ इति ।

इदं सपिण्डादिव्यतिरेकेणेत्युक्तं प्राक् ॥

## अथ दासादेः २(†) ।

स च द्वेधा, गृहदासोभक्तदासश्चेति, तत्र स्वदास्युत् पन्नस्य गृहदासस्य सपिण्डमृतौ स्नानोत्तरं स्वामिकार्य्ये स्पृश्यत्वम् ।

अन्नेनोपात्तस्य भक्तदासस्य तु अहोऽर्द्धमिति ३(‡) ॥

---

१(*) अत्र 'अहीनञ्च' इति भिन्नः पाठः ।

२(†) देवदासास्तु सर्व्वा देवकार्य्यसदारताः देवभक्तवत् सदैव सन्ति । देवदासः, वैतनिकदासः, राजक्रीतदासः, पूर्व्वपुरुषात् भूमिलब्धदासः, सर्व्व एते दासाः । तद्वत् दासास्तु सर्व्वा-ज्ञेयाः ।

३(‡) अहोऽर्द्धमिति पाठान्तरमस्ति ।

431, सद्यःस्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिरिति नारदोक्तेः ।
एतदनन्यसाध्यस्वामिकार्ये, स्वकार्य्ये तु जात्याशौचमस्त्येव ।
दासी दासश्च सर्व्वो वै यस्य वर्णस्य यो भवेत् ।
तद्वर्णस्य भवेच्छौचं दास्यामासक्तसूतकम् १(*)॥८९५॥

432. इत्याङ्गिरसोक्तेः ।

433. दासादेः स्वामितत्सपिण्डमरणे तु विष्णुः,—
पत्नीनां दासानामानुलोम्येन स्वामितुल्यमशौचम् ॥८९६॥
मृते स्वामिन्यात्मीयमिति प्रतिलोमदासानामशौचम् ।
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः—

434. इति याज्ञवल्क्यस्मृतेः ।

435, दासास्तु पञ्चदशोक्ता नारदेन ।
गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अन्नाकालमृतस्तद्वदाहितः स्वामिना च यः ॥८९७॥
मोक्षितो महतस्त्वर्णाद् युद्धप्राप्तः पणेजितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥८९८॥
भक्तदासश्च विज्ञेयस्तथैव वड़वाहृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥८९९॥ इति
वड़वा दासी तयाहृतः । तामुद्वाह्य तन्निमित्तं दासो जात इत्यर्थः ।
एतेषु गर्भभक्तदासौ विनान्ये दासाः स्पृश्याः ।
दासान्तेवासिभृतकाः शिष्याश्चैकत्र वासिनः ।
स्वामितुल्येन शौचेन शुध्यन्ति मृतसूतकाः ॥९००॥ इति

436. बृहस्पत्युक्तेः—
अत्रैकत्रवास एवास्पृश्यत्वे हेतुः । तेषां तदभावात् । दासादिप्रसवः—
437. मरणसंबन्ध्य शौचं न स्वामिनः इत्याह देवलः २(†) ।
कारणाद् गच्छति प्रेष्यं तदाशौचं न तान् व्रजेदिति ॥९०१॥

---

१(*) भिवेदशौचमिति च पाठान्तरम् ।
२(†) 'सम्बन्धाशौचम्' इति च भिन्नः पाठः ।

कारणादिकत्र वासरूपहेतोः तदशौचं प्रेष्याशौचं तान् भर्त्तृन् न गच्छतीति पूर्वेणान्वयः ॥

अथ रात्रौ जनने मरणे वा रात्रिं त्रिभागां कृत्वा आद्यभागद्वये चेत्।

438. **पूर्वदिनं ग्राह्यम्। अन्येतूत्तरदिनमितिमिताक्षरायाम्।**

यत्तु प्रागर्द्धरात्रात्। प्राग्वा सूर्य्योदयात् पूर्वदिनमिति दिवोदास—निबन्धे उक्तम्, तत्र देशाचारतो व्यवस्था ज्ञेया।

सर्व्वं चाशौचमाहिताग्नेर्दाहमारभ्य तद्भिन्नस्य तु मरणमारभ्य ज्ञेयम्।

अनग्निमत उत्क्रान्तेराशौचादि द्विजातिषु।

दाहादग्निमतोत्रिया द्विदेशस्थे मृते सति ॥६०२॥

439. **इति पैठीनसीस्मृतेः।**

**अथ प्रोषिताशौचमुच्यते। तत्राशौचमध्ये जननादौ**

440. **ज्ञाते सति १(*)तच्छेषेणैव शुद्धिरित्याह मनुः,—**

विगतं तु विदेशस्थं शृणुयाद्योह्यनिर्दशम्।

यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥६०३॥ इति।

441. **प्रोषिते कालशेषःस्यादिति याज्ञवल्क्यश्च।**

दशरात्रमिति स्वाशौचोपलक्षणं क्षत्रादेः इदं मातापितृव्यतिरिक्त—विषयम्। तेषामशौचमध्ये श्रवणेऽपि तदादि दशाहादि कार्य्यम्।

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः।

श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥६०४॥

**इति केचिदाहुः २(०)।**

---

१(*) 'जाते सति' इति भिन्नः पाठः।

२(०) अत्र केचिदिति—'नाशीमुनिर्टस्य मतं न भिन्नमिति' केचन महर्षयः नतु निवन्धकृत इति। बोध्यम्। —अन्येतु निवन्धकृतः इति च।

अन्ये तु,—

ज्ञातमरणस्याशौचनिमित्तत्वादनग्निमत उत्क्रान्तेरित्यादिवचनविरोधाच्च
पुत्रस्यापि कालशेषेणैव शुद्धिः, वचनं तु दशाहोर्द्धकालपर-
442. मित्याहुः । स्मृत्यर्थसारेऽप्येवम् । जनने मरणे वा प्रथमदिनादूर्द्धं
443. पुत्रादीनां शेषेणैव शुद्धिरिति षट्त्रीतावपरार्के चैवम् ।
एवं सति देशाचारतो व्यवस्थेयम् ।
सापत्नमातुस्तु त्रिरात्रमित्युक्तं—

444. देवलेन ।

पितृपत्न्यामपेतायां मातृवर्जं द्विजोत्तमः ।
संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेत् ॥६०५॥

इति स्मृत्यर्थसारे तु स्त्रीपुरुषयोः परस्परं चैवं सवर्णोत्तमवर्णमातृषु
पुत्रस्य सपत्न्याः परस्परं चैवमिति दशाहातिदेशः कृतः । तत्र
पूर्ववचनं कर्त्तन्तरसद्भावविषयः दूरदेशस्य विषयो वेति ज्ञेयम् ।
इदमपि दशाहोर्द्धं विषयं दशाहे तु शेषेण शुद्धेरुक्तत्वात् ।

445. हीनवर्णसपत्नमातृषु षत्नीषु चैवमिति स्मृत्यर्थसारे
हीनवर्णमातृष्वप्येवमित्युक्तम् ।

446. केचित्तु—

'पितृपत्न्यां प्रमीतायामौरसे तनये तथे'ति
ब्राह्मोक्ते नौरसपुत्रेऽप्येवमित्याहुः ।
एतत् सर्व्ववर्णतुल्यम् ।
तुल्ये वयसि सर्वेषामतिक्रान्ते तथैव च ॥६०६॥

447. इति व्याघ्रोक्तेः ।

448. दशाहादूर्द्धं सपिण्डमरणे ज्ञाते वृद्धवशिष्ठः,—

मासत्रये त्रिरात्रं स्यात् षन्मासे पक्षिणी तथा ।
अहस्तु नवमादर्व्वागूर्द्धं स्नानेन शुध्यति ॥६०७॥ इति ।
यत्तु श्रुत्वोर्द्धं दशम्याः पक्षिणीति गौतमवचनम् ।
व्यतीते त्वशौचे संवत्सरान्तस्त्वेकरात्रेणातः परं स्नानेनेति

449. विष्णुवचनञ्च तत् षण्मासादि परत्वेन व्याख्येयम् ।
जनने त्वतिक्रान्ताशौचं नास्त्येव ।

450. नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपीति देवलोक्तेः ।
पितुस्तु तत्रापि स्नानमात्रमस्त्येव ।

451. निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म चेति मनूक्तेः ।
माधवीये तु त्रिपक्षमध्ये श्रवणे एव त्रिरात्रमित्युक्तम् ।
आत्रिपक्षात् त्रिरात्रं स्यात् षण्मासात् पक्षिणी ततः ।
परमेकाहमावर्षादूर्द्ध्वं स्नातो विशुध्यति ॥६०८॥

452. इति देवलस्मरणात्, तदापद्विषयत्वेन व्यवस्थेयम् ।
आपदि त्वसङ्कोच इत्युक्तेः ।
इदं सर्वमेकदेशे ज्ञेयं । देशान्तरे तु स्नानमात्रमुक्तम् ।

453. **पराशरेण,—**

देशान्तरमृतं श्रुत्वा क्लीवे वैखानसे पतौ ।
मृते स्नानेन शुध्यन्ति गर्भस्रावे च गोत्रिणः ॥००६॥ इति ।

454. **देशान्तरलक्षणमाह बृहस्पतिः,—**

महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः १(*) ।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥
देशान्तरं वदन्त्येके षष्टियोजनमायतम् ।
चत्वारिंशद् वदन्त्यन्ये त्रिंशदन्ये तथैव च ॥६१०॥ इति ।

**एतत् सर्वं मातापितृभिन्नविषयम् ।**

तयोस्तु पितरौ चेदिति पूर्वोक्तवाक्यात् स(त)दा पूर्णं दशाहादि ज्ञेयम् । स्मृत्यर्थसारेऽपि मातापितृमरणाद्दूरदेशेऽपि संवत्सरोर्द्ध्वमपि पुत्रो— दशाहादिकं पूर्णमशौचं कुर्यादित्युक्तमिति ।

---

१(*) 'गिरिर्वाव्यवधानतः' इति भग्नः पाठः । देशभाषाविषये प्राकृतग्रन्थे सरस्वतीकण्ठाभरणेऽप्यस्ति । 'देशेदेशे नरेन्द्राणां जनानाञ्चस्वके स्वके ।
भाषाविभिद्यतेयस्मात् त[illegible]ाद्देश्यं प्रकीर्त्तितम्' ।
यथा, 'वाचो यत्रविभिद्यन्त गिरिर्वाव्यवधानतः ।
महानद्यन्तरं यत्र तद्देशान्तरमुच्यते' इति ।

**—प्रोषिताद्यतिक्रान्ताशौचम् ।**

**अथाशौचसंपाते निर्णयः ।**

तत्र शावे शावं सूतके सूतकं शावे सूतकं सूतके शावं चेति चतुर्द्धा भवति । तत्राप्युत्तरं कालतः पूर्व्वेण समं न्यूनमधिकं चेति द्वादशभेदाः सम्पद्यन्ते । यदेकदिने समं न्यूनमधिकं वा अशौचद्वयं प्राप्नोति तत्र शुद्धिः । यदा तु द्वितीयादिदिनेषु नरं सजातीयं विजातीयं वा समकालं न्यूनकालं वा परं स्यात्तदा षट्सु पक्षेषु पूर्वशेषेण शुद्धिः ।

**अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यतीति**

455. **याज्ञवल्क्योक्तेः ।**

जनने जननं च स्यान्मरणे मरणं तथा ।
पूर्वशेषेण शुद्धिः स्यादुत्तराशौचवर्जनम् ॥६११॥

456. **इति यमोक्तेश्च ।**

**अत्र केचित्,—**

अन्तर्दशाहे स्यातां चेत् पुनर्मरणजन्मनी ।
तावत् स्यादशुचिर्विप्रो यावत्तत् स्यादनिर्दशम् ॥६१२॥

**तथा,—**

दशाहाभ्यन्तरे स्यातां पुनर्मरणजन्मनी ॥११३॥
तावत् स्याद् शुचिरिति प्रागवत् ।
इति पूर्ववदिति मनुपराशराद्यैर्दशाह-ग्रहणात् पूर्णाशौच एव पूर्वशेषेण शुद्धिः ।
त्र्यहाद्यशौचसंपाते तूत्तरेणैव शुद्धिरित्याहुः ।
गौड़ीया अप्येवं वदन्ति ।
तन्त्र याज्ञवल्क्यादिवचनवशेन दशाहस्य तुल्यकालाशौचोपलक्षण-त्वात् १(*) ।
समानाशौचसंपाते प्रथमेन समापयेत् ।
असमाने द्वितीयेन धर्म्मराजवचो यथा ॥६१५॥

457. **इति माधवीये शङ्खस्मृतेः ।**

अपरार्कमिताक्षरादिग्रन्थविरोधाच्चेति दिक् ।

यदा तु सूतके शावं समं न्यूनमधिकं वा पतति तदा न पूर्वशेपाच्छुद्धिः ।

---

१(*) 'उपलक्षकत्वात्' इति पाठान्तरम् ।

458. **तदाहाङ्गिराः,—**

सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम् ।
तत्राधिकृत्य मृतकं शौचं कुर्य्यान्न सूतकम् ॥६१६॥ इति ।

459. **षट्‌त्रिंशन्मतेऽपि ।**

शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् ।
शावेन शुध्यते सूतिर्न सूतिः शावशोधिनी ॥६१७॥ इति ।

460. **चतुर्विंशतिमतेऽपि ।**

मृतेन शुध्यते जातं न मृतं जातकेन तु ।
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ॥६१८॥ इति ।
इदमपि समदिनाशौचपरं समानाशौचसंपात इति—
पूर्व्वोक्तस्मृतेः ।
स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद् यदि ।
न पूर्व्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यति ॥६१९॥

461. **इति देवलस्मृतेश्च ।**

स्व (श्वो) भावे बहुसूतिस्तु न्यूनस्य च विशोधिनी ।

462. **इति षड्शीतिसूक्तैश्च ।**

तेन अहाद्यल्पशावाशौचमध्ये पतितं सजातीयं वा दशाहाशौचं न

पूर्वशेषेण शुध्यतीति भावः ।
अद्यवृद्धिमदाशौचं पश्चिमेन समापयेत् ।
यथा त्रिरात्रे प्रक्रान्ते दशाहं प्रविशेद् यदि ।
अशौचं पुनरागच्छेत् तत्समाप्य विशुध्यति ॥६२०॥

463. **इति माधवीये यमवचनम् ।**

आद्यानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसी ।
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ॥६२१॥

404. **इति कौर्मादिवचनञ्च ।**

तत्तु शावाशौचस्यास्पृश्यत्वमप्यस्तीत्यभिप्रायगुरुत्वे ज्ञेयम् । यद्वाऽसम्पूर्णसमानजातीयसमानदिनव्यापकाशौचविषयं मन्तव्यम् । सम्पूर्णाशौचसङ्करे पूर्वोक्तवचनैर्व्यवस्थापितत्वात्, एतद्वचनस्य तद्विरुद्धार्थकत्वाच्चेति केचिदाहुः । वयन्तु, आद्यं भागद्वयं यावत् सूतकस्य तु सूतके ।

द्वितीये पतिते चाद्यात् सूतकाच्छुद्धिरिष्यते ॥
अत ऊर्द्धं द्वितीयाच्च सूतकान्ताच्छुचिः स्मृतः ॥६२२॥

एवमेव विचार्य्यं स्यान्मृतके मृतकान्तर इति हेमाद्रौ ब्राह्मवचनात् । स्याच्चेत् पञ्चतमादह्नः पूर्वेणाप्यनुशिष्यत इति देवलवाक्येन समानार्थत्वाच्च । यत्र ज्ञातिमरणनिमित्ताशौचे वर्त्तमाने यदि कस्यचित् पुनरस्पृश्यत्वाघवृद्धिमदशौचान्तरापातस्तदाद्यभागद्वयात् प्राक् पूर्वेणैवाशौचेनास्पृश्यत्वलक्षणाशौचनिवृत्तिः । यदित्वग्रे तदापतेत्—

तदा, परतः परतोऽशुद्धिरघवृद्धौ विधीयते ।
स्याच्चेत् पञ्चतमादह्नः पूर्वेणैवानुशिष्यते ॥६२३॥

इति देवलोक्तयाऽघवृद्धिमदस्पृश्यत्वलक्षणमशौचं परतः स्वकालेनैव निवर्त्तते इति ।

अ(स)घवृद्धिमदशौचमूर्द्धं चेत्तेन शुध्यति ।
अथ चेत्पञ्चमीं रात्रिमतीत्य परतो भवेत् ॥६२४॥

405. इति कौर्मवचनमप्येतदर्थकमित्येतद्विषयमिदमिति ब्रूमः । परः परत इत्यस्यायमर्थः । अघवृद्धौ दीर्घाशौचे विद्यमाने परतोऽशुद्धिः परमाशौचं स्यात् । यदि च पूर्वाशौचमुत्तराशौचस्य पञ्चमदिनात्परतोऽनुवर्त्तते तदा पूर्वेणैव शुद्धिः, पूर्वस्योत्तराशौचार्धाधिकव्यापित्वे तु पूर्वशेषाच्छुद्धिरिति प्रकृतमनुस्रियते । क्वचित् पूर्वशेषेण शुद्धेरपवादमाह गोतमः ।

रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिरिति प्रभातशब्दोऽन्त्ययामपरः । रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहादिति—शातातपोक्तेः । इदं शावान्ते सूतकपाते सूतकान्ते शावपाते वा तुल्यं वेदितव्यमिति विज्ञानेश्वराचार्य्याः ।

अत्रैके रात्रिशब्दोऽहोरात्रपरः । अहः शेषे सति द्वाभ्यां प्रभाते तिसृभिः स्मृतेति शङ्खलिखितोक्तेः प्राहुः ।

अथ यदि दशरात्राः सन्निपतेयुराद्यं दशरात्रमशौचमानवमदिवसादत ऊर्द्धं द्विरात्रेणाऽव्युष्टायां त्रिरात्रेणेति बौधायनोक्तेश्च ।

नवमदशमशब्दौ चोपान्त्यदिनपरो तेन क्षत्रियादावपि तथैवेत्याहुः । पाराशरमाधवीयेऽप्येवम् ।

मिताक्षराकारास्तु रात्रिमात्रावशिष्टे पूर्वाशौचे पुनराशौचसंपाते दिनद्वयमधिकं रात्रेरन्त्ययामेऽन्यसंपाते तु दिनत्रयमधिकमित्याहुः । एवं सत्यत्र गुणवन्निर्गुणपरत्वेनापादनापत्परत्वेन देशान्तरयुगान्तरपरत्वेन वा व्यवस्था कार्य्या ।

एतदिव सवर्द्धनं समानदिनाशौचसंपात एवेति मिताक्षरायाम् । षड़शीतौ तु दशाहमध्ये त्र्यहाशौचसंपातेऽपि द्वित्रिदिनवृद्धिरुक्ता ।

रात्रिशेषे यदाशौचं पूर्वानधिकमापतेत् ।
ऊर्द्धं दिनद्वयं पूर्वादूयामशेषं दिनत्रयम् ।।६२५।।

466. **इति, अनधिकं समं न्यूनं चेत्यर्थः ।**

पूर्वाशौचान्तवर्द्धितत्रिदिनमध्येऽप्यधिकाशौचान्तरसंपाते तु वर्द्धितस्याल्पत्वात् स्वकालेनैव शुद्धिरित्यादिः स्वबुद्ध्या विवेचनीयम् ।

467. **अपवादान्तरमाह शङ्खः,—**

मातर्य्यग्रे प्रमीतायामशुद्धौ म्रियते पिता ।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्य्यात्तु पक्षिणीम् ।।६२६।। इति ।

**अयमर्थः ।**

मातुरशौचमध्येपतितस्य पितुरशौचस्य न पूर्वशेषेण शुद्धिः । किन्तु पितुरुपरतिदिनमारभ्य दशरात्रं कार्य्यम् । पितुरशौचमध्यपतितस्य मातुरशौचस्यापि न पूर्वशेषेण शुद्धिः । किन्तु, पित्रशौचानन्तरं पक्षिणीमधिकां कुर्य्यादिति । इयञ्च पक्षिणी तृतीयादिदिनपरा, नाद्यदिनद्वये प्रतिनिमित्तम्, नैमित्तिकावृत्तिन्यायापवादपूर्वशेषापवादत्वादिति प्राञ्च आहुः । इयं च पक्षिणी दशमदिनात् पूर्वं मातृमरणविषया ज्ञेया ।

दशम्यां रात्रौ तत्प्रभाते वा मातृमरणे द्व्यहत्र्यहसमुचितपक्षिणी
कार्य्येति कश्चिदाह।
अत्र गुरूणी लघोरन्तर्भावस्योक्तत्वात्,
गुरुणा लघु शुद्ध्येतेति वचनाच्च।
एवं मातुरन्वारोहणेन पक्षिणी कार्य्या।
यदा नारी विशेदग्निं प्रियस्य हितकाङ्क्षया (वाञ्छया)।
तदाशौचंविधातव्यंभर्त्तुः शौचं क्रमेण हि ॥६२७॥

468. **इति पृथ्वीचन्द्रोदये लघुहारीतोक्तेः।**

मृतं पतिमनुव्रज्य पत्नीचेदनलङ्गता।
न तत्र पक्षिणी कार्य्या पैतृकादेव शुध्यतीति षड़शीत्युक्तेश्च।
सपिण्डाशौचेन मातापित्रोराशौचापगमो मातुस्येचेति ध्वनितम्।
एवं भर्त्तुरपि पूर्व्वं गृहीताशौचानां पुत्राणां पितुः संस्कारे तु क्रियमाणे,
यदि मातुः सपिण्डस्य वा मरणं स्यात्तदा नायं निर्णयः।
अतिक्रान्तकालात् पूर्व्वाशौचादुत्तरनिमित्तस्य बलवत्त्वात्।
तथा द्वादशादिवर्षोत्तरकालं संस्काराशौचे प्रत्यक्षमरणं चेत्तदाप्येवं
469. ज्ञेयम्। पूर्वशेषेणाशुद्धेरपवादान्तरमुक्तं षड़शीत्याम्।
पुर्वाशौचेतु याशुद्धिः सूतके मृतके च सा।
सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि ॥६२८॥

470. **इति निर्णयामृतसंग्रहे।**

इयं विशुद्धिरुदिता सूतिकामग्निदं विनेनि।
तथा शौचसंपातेऽपि न शावजनननिमित्तकार्य्यप्रतिबन्धः।
अन्तर्द्शाहे जननात् पश्चात् स्यान्मरणं यदि।
प्रेतमुद्दिश्य कर्त्तव्यं पिण्डदानं यथा विधि ॥६२९॥

471. **इति शातातपोक्तेः।**

**तथा,**

प्रारब्धे प्रेतपिण्डेतु मध्ये चेज्जननं भवेत्।
तथैवाशौचपिण्डांस्तु शेषान् दद्याद्‌ यथा विधि ॥६३०॥

472. **इति गालवोक्तेश्च ।**

तथा मातुः पक्षिणीमध्ये पितुरेकादशाहं कुर्य्यादेव ।
आद्यं श्राद्धमशुद्धोऽपीत्यादिना पूर्वमेवोक्तमिति ।
इति श्रीविधानपारिजाते अशौच संपात निर्णयः ॥

—*—

## अथाशौचापवादः ।

—*—

स च पञ्चधा कर्तृकर्मद्रव्यमृत्युदोषविधानभेदात् ।
तत्राद्यो (यं) ब्रह्मचारियित्यादिषु ज्ञेयः ।
नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।
नाशौचं कीर्त्तितं सद्भिः पतिते च तृशान्मते १(*) ॥६३१॥

473. **इति कौर्मोक्तेः ।**

अत्र चतुर्थपादे शावे वापि तथैव चेति देवलस्मृतिपाठः ।
पादत्रयं समानं अशौचमित्यत्रकर्मोपलक्षणम् ।
ब्रह्मचारी न कुर्वीत शववाहादिकाः क्रियाः ।
यदि कुर्य्याचरेत् कृच्छ्रं पुनः संस्कारमेव च ॥६३२॥

474. **इति देवलोक्तेः ।**

**इदमपि पित्राद्यतिरिक्त विषयम् ।**
आचार्य्यं स्वमुपाध्यायं मातरं पितरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतं व्रतेन न वियुज्यते ॥६३३॥

475. **इति मनुस्मृतेः ।**

**निर्हरणंमन्त्रकर्मणोऽप्युपलक्षकम् ।**
यथा, व्रतस्थोऽपि सुतः पितुः कुर्य्यात् प्रेत-क्रियां नृप २(†) ।
तथा मातामहस्यापि दौहित्रः कर्त्तुमर्हति ॥६३४॥

---

१(*) पतितेच हृयाम्हते' इति भिन्नः पाठः ।
अत्र हृचान्मृतिः अवैधहचायात् पतनेन मृत्युः ।
२(†) अनेन न व्रतलोपः गुरूणां धर्मकृत्यानुष्ठानादिति ।

476. इति भविष्योक्तेः ।

मातापित्रोरुपाध्यायाचार्य्ययोरौर्द्ध्वदैहिकम् ।
कुर्वन् मातामहस्यापि व्रती न भ्रश्यते व्रतात् ॥६३५॥

477. इति कालादर्शाच्च ।

तथाप्यन्तकर्मकर्त्तृत्व निमित्तत्वनिमित्तमस्पृश्यत्वं दशाहमस्त्येव ।
सगोत्रमेव ( निर्हृत्य ) योऽग्निं दद्याद् व्रती नरः ।
सोऽपि कुर्य्यान्नवश्राद्धं शुध्येद् भूतसमेऽहनि ॥६३६॥

478. इति दिवोदासनिबन्धोक्त वचनात् ।

अतएव ब्रह्मचारिणः शवकर्मिणः व्रतान्निवृत्तिरन्यत्र मातापित्रोर्गुरो-
479. श्चेति गोतमस्मृतौ ।

व्रतनिवृत्तेरेव पर्य्युदासो नाशौचस्यापि ।
सन्ध्यादि कर्मलोपस्तु नास्ति ।
नत्यजेत् सूतके कर्म्म ब्रह्मचारी स्वकर्म्मकृत् ।

480. इति छन्दोगपरिशिष्टात् ।

पित्रोर्गुरोर्विपत्तौ तु ब्रह्मचार्य्यपि यः सुतः ।
स व्रतश्चापि कुर्वीत त्वग्निपिण्डोदकक्रियाम् ॥
तेनाशौचं न कर्त्तव्यं सन्ध्या चैव न लुप्यते १(०) ॥६३७॥
अग्निकार्य्यं च कर्त्तव्यं सायं प्रातश्च नित्यशः ।

481. इति चन्द्रिकायां संवर्त्तोक्तेश्च ।

अत्र कर्मानधिकाररूपाशौच निषेध इति ज्ञेयम् ।

482. अपरार्के माधवादि पुस्तके एकाहमशौच माहुः ।

---

१(०) 'व्रतिव्रती' इति प्रागप्युक्त' व्रतलोपोनास्ति इति ।
ब्रह्मचारी—त्रिविधः । उपकुर्व्वाणः, आतुरः, नैष्ठिकः ।
उपनयनात् परं स्नातककालं यावत्त्र्येकः । पर्य्यंत् व्रती नास्ति ।

आचार्य्यं चाप्युपाध्यायं गुरुं वा पितरं च वा ।
मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्रभोजनम् ॥६३८॥
कृत्वा पतति नैतस्मात् प्रेतान्नं तत्र भक्षयेत् ।
अन्यत्रभोजनं कुर्य्यान्नचैतैः सह संवसेत् ॥
एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यति ॥६३९॥

483. **इति ब्राह्मोक्तः ।**

प्रथमेऽह्नि सन्ध्यादिकर्मलोपः ।

484. **इति तदन्नभोजने प्रायश्चित्तं पुनरुपनयनमाशौचं च दिवोदासादयस्तु पूर्व्वोक्त ब्राह्मोक्तेः ।**

ब्रह्मचारी यदा कुर्य्यात् पिण्डनिर्वपनं पितुः ।
तावत् कालमशौचं स्यात् पुनः स्नात्वा विशुध्यति ॥६४०॥

485. **इति प्रजापति वचनात् ।**

द्वितीयदिनादौ पिण्डदानकाल एवास्पृश्यत्वमात्रं नान्यदित्याहुः कर्त्तन्तर सद्भावे नान्त्य कर्म्मकरणे तु ब्रह्मचारिणः पित्रादिमरणेऽप्याशौचाभाव एव च ।

सोऽपि ब्रह्मचर्य्यकालावच्छिन्न एव ।
समावर्त्तनोत्तरं तु पूर्वमित्राणां सपिण्डानां त्र्यहमशौचं कार्य्यम् ।
आदिष्टी नोदकं कुर्य्यादाव्रतस्य समापनात् ।
समाप्य तूदकं दद्यात् त्रिरात्रमशुचिर्भवेत् ॥६४१॥

486. **इति मनूक्तेः ।**

**छन्दोगपरिशिष्टे तु विकल्प उक्तः ।**

पितर्य्यपि मृते नैषां दोषो भवति कर्हिचित् ।
अशौचं कर्म्मणो नस्यात् यतीनां ब्रह्मचारिणाम् ॥६४२॥ इति ।

—*—

## अथ कर्म्मतः अशौचाभाव उच्यते ।

—*—

487 **तथा च त्रिंशच्छोकयाम् ।**

तत्तत् कार्य्येषु सत्रिव्रतिनृपनृपवद्दीक्षितर्त्विक् स्वदेशभ्रंशापत्स्वप्यनेकं-श्रुतिपठनभिषक्कारुशिल्पातुराणां संप्रारब्धेषु दानोपनयनयजनश्राद्ध-युद्धप्रतिष्ठाचूड़ातीर्थार्थयात्रा जयपरिणयनायुत्सवेष्वेतदर्थेनाशौचमिति शेषः १(*) ।

सत्रीत्यत्र सत्रवान् । अन्यस्य दीक्षितपदात् सिद्धेः । व्रती अनन्त-व्रतादिनियमवान् । व्रतिनां व्रत इति विष्णुस्मृतेः । नृपो राजा, नृपवान्मन्त्र्यादिः । एषामशौचं कार्य्येम् । आतुरस्य व्याधिनाशार्थे दानादौ तु पुरुषादीनां प्रारम्भ भक्तादीनां श्राद्धं सङ्कल्पो वा ज्ञेयः २(†) । प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।

नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ।।६४३।।

**इति स्मृतेः ।**

## यजनं तड़ागोत्सर्गः लक्षकोटि होमादिच ।

**तथा च लघुविष्णुः—**

व्रतयज्ञ विवाहेषु श्राद्धे होमेऽर्चने जये( पे ) ।
आरब्धे सूतकं नास्ति त्वनारब्धेतु सूतकम् ।। इति ।६४४।।

**तथा,—**

अशौचे सत्याकस्मिकतीर्थप्राप्तौ नाशौचम् ।
विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्म्मणि ।
नतत्र सूतकं तद्वत् कर्म्म यज्ञादि कारयेत् ।।६४६।।

488, **इति पैठीनसिस्मृतेः ।**

अत्र विशेषस्तृतीयस्तवके तीर्थयात्राप्रकरण-उक्तः ।

---

१(*) सत्रवाण्—यागकर्त्ता.
'सत्र' स्वर्गायलोकाय सहस्रसममासत'
इति भागवते । व्रतं—ब्रह्मचर्य्योपनयनानन्तव्रतादि ।

२(†) चात्र, एषु चर्येषु कार्येषु अशौचं नस्या त्तदाषक्त बोधेषुच ।

तथा श्राद्धे प्रारब्धे सति नाशौचम् ।
प्रारम्भश्च पाकपरिक्रिया, पाकस्य सम्पूर्ण निष्पत्तिरिति निवन्ध कृतः ।
पाकपरिष्क्रिया, प्रोक्षणान्तक्रियेति ।

489. **श्राद्धप्रदीपकारः—**

पाकस्य परिक्रियाऽन्नदानरूपेति केचिदाहुः ।
तत्र यथाचारं व्यवस्था । जपःपुरश्चरणादिः ।
अविच्छेदेन सङ्कल्पितभारतश्रवणादिश्च ।

490. **तथा हि ब्राह्मे,—**

गृहीत नियमस्यापि नस्यादन्यस्य कस्यचित् ॥६४७॥ इति
तत्रादिपदाद् देवार्चनादिसंगृहीतम् ।

**तथाच मदनपारिजाते,—**

491. **यमः—**

शिवविष्ण्वर्च्चनंदीक्षा यस्यवा नपरिग्रहः १(*) ।
श्रौतकर्म्माणि कुर्व्वीत स्नातः शुद्धिमवाप्नुयात् इति ॥६४८॥
कालनियमाभावे त्याज्यमेव गत्यन्तर सद्भावात् ।
उत्सवोरथयात्रादिः । अयञ्चाशौचाभावोऽनन्यगतित्वेआर्त्ते च ज्ञेयः ।

492. **अत्रमूलं याज्ञवल्क्यः—**

ऋत्विजांदीक्षितानाञ्च यज्ञि(ज्ञी)यं कर्म्मकुर्व्वताम् ।
सत्रिव्रतिब्रह्मचारि-दातृ-ब्रह्मविदान्तथा ।६४६॥
दानेविवाहेयज्ञेच संग्रामे देशविप्लवे ॥
आपद्यपिच कष्टायां सद्यः शौचं विधीयते ॥६५०॥

493. **प्रचेताश्च—**

कारवः शिल्पिनो वैद्या दास्यो(दासी)दासास्तथैवच ।
राजानोराजभृत्याश्च सद्यशौचाः प्रकीर्त्तिताः ॥६५१॥
निमन्त्रितस्य विप्रस्य स्वाध्यायादिरतस्य च ।
दे(गे)हेपितृषुतिष्ठत् सुनाशौचं विद्यते क्वचित् ॥६५२॥
प्रायश्चित्त प्रवृत्तानां दातृ-ब्रह्मविदान्तथेति ।
ब्रह्मविदः—सन्नयासिनः । दातृणाञ्चपूर्व्वसङ्कल्पितदेये नाशौचम् ।

---

१.०) अत्र 'यस्यवाव्रतपरिग्रहः' 'काल, ध्यान' इत्यादिपाठान्तरमस्ति ।

खल-क्षेत्र-स्थितं धान्यं वापीकूपे स्थितं जलम्।
पूर्व्वसंकल्पितं वित्तं सूतके नैव दूष्यतीति ॥६५३॥

**क्रतु स्मृतेः—**

अन्नं चेत् परहस्ते नदेयम्।
विवाहोत्सव यज्ञादि ष्वन्तरामृतसूतके।
शेषमन्नं परैर्देयं दातॄन् भोक्तॄंश्च नस्पृशेत् ॥६५४॥

494. इति यमस्मृतेः। तथा प्रतिष्ठादावपि नाशौचम्।
तदेव, प्रतिष्ठोत्सवविवाहादिषुच देशविप्लवे १(*)।
495. आपद्यपि कष्टायां नाशौचमिति विष्णुक्तेः ॥६५५॥

**क्वचिच्च,—**

अङ्कुरापर्णतः पश्चादपि चौलादौ नाशौचमित्युक्तम् २(†)।

**तथाहि,—**

चौलोपनयनेचैव देवानामुत्सवेऽपि च।
अङ्कुरार्पणतः पश्चात् अशौचेऽपि न दोषभागिति ॥६५६॥
इति स्मृत्यन्तरादूनान्दीमुखानन्तरं ना शौचमिति पूर्व्वमुक्तम् ॥
तत्र देशतोव्यवस्था।

**अन्यत्र विशेषः,—**

एक विंशत्यहर्यज्ञे विवाहे दशवासरात्।
चूड़ोपनयने त्रीणि श्राद्धे पाकपरिक्रिया ॥६५७॥ इति।
दीक्षितस्यावभृतात् पूर्व्वनाशौचम्। तदादौत्वशौचमस्त्येव, प्रागवभृतात्करोति स्नातायामवभृत इति पत्न्यां रजसि विशेषोक्तेः। उभयात्राशुचित्वस्य तुल्यत्वात्, तैनचवैतानोपासनाः कार्य्या इति स्मृत्या वैतानेत्व ३(‡) वभृतादिनभवतीति गम्यते।

---

१(*) 'देशविभ्रमे' इति पाठान्तरम्।
२(†) अत्र पाठः द्वयोरादर्श पुस्तकयोः सन्दिग्धः।
३(‡) अनतु 'वैतानत्वेथ(त्व वभृआदि' एवं पाठोऽप्यस्ति।
४ (०) उत्सवा :—देवयात्रोत्सवः, दोलोत्सवः, रासोत्सवः, सारस्वतोत्सवः, नवरात्रोत्सवादयः।
" चौलोहि—चूड़ा कार्य्यं कर्णवेधः।
" देशत :—गौड़ादि देश भेदेव्यवस्थास्यात्।
" अवभृतात्,—अवभृतस्नानात् प्रागिति।

**अतएवोक्तं माधवीये, ब्राह्मे,—**

तद्वागृहीत दीक्षस्य त्रैविद्यस्य महामखे ।
स्नानंत्ववभृथं यावत्तावत्तस्य न सूतकमिति ॥६५७॥

वैतानोपासनाः कार्य्या इत्यनेनैव सिद्धे ऋत्विजां दीक्षितानां चेति पुनर्दीक्षितपद ग्रहणं यजमाने स्वयं कर्त्तव्यार्थे स्नानप्राश्यार्थे चेति

496. विज्ञानेश्वरा आहुः । ऋत्विजां नु मधुपर्के चिरं नाशौचम् ।
गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः ।
पश्चाद शौचे पतिते न भवेदिति निश्चयः ॥६५८॥

497. **इति ब्राह्मोक्तेः ।**

एवं स्मार्त्तेऽपि तुल्यम् । कोटिहोमादौ मधुपर्कान्तरं न दोप इति ज्ञेयम् । यत्तु, प्रारम्भोवरणं यज्ञ इति तत्रापि मधुपर्कान्तरं वरणं ज्ञेयम् । तथा निमित्तज्ञानाभावेऽपि नाशौचम् ।
अपि दातृग्रहीत्रोश्च सूतके मृतके तथा ।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कदाचन ॥६५९॥

498. **इति ब्राह्मोक्तेः ।**

एतेन तदानीं कृतेन श्राद्धादिना एव क्रियासिद्धं नाशौचानन्तरे पुनस्त-क्रियेति सिद्धम् ।

499. **अपवादान्तरमाह याज्ञवल्क्यः—**

वैतानोपासनाः कार्य्याः क्रियाश्च श्रुतिचोदनात् । इति वितानेऽग्नीनां विस्तारः, तत्रभवाः वैताना अग्निहोत्रदर्शपौर्णमासाद्याः श्रौतक्रियाः तथा प्रतिदिनमुपास्यत इत्युपासनोगृह्याग्निस्तत्रभवाः उपासनाः । सायं प्रातर्होमस्थालीपाकाद्याः स्मार्त्तक्रियाः । तदुभयक्रिया प्रत्यहं कार्य्या । कुत इत्याकाङ्क्षायामाह श्रुतिचोदनादिति । 'यावज्जीव-मग्निहोत्रं जुहुयात्' इत्यादिश्रुतिरग्निहोत्रादिचोदना स्पष्टैव प्रतीयते ।
इदमपि तत्र त्यागमात्रपरम् ।
स्मार्त्तकर्म्मपरित्यागोराजावेन्यत्र सूतके ।
श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् ॥६६०॥

500. **इति व्याघ्रपादुक्तेः ।**

त्यागातिरिक्ते तु श्रौते स्मार्त्ते वा कर्मण्यन्यस्यैव कर्तृत्वम् ।

सूतके मृतके चैवह्यशक्तौ श्राद्धभोजने ।
प्रवासादिनिमित्तेषु दापयेन्नतु हापयेत् ॥६६१॥

501. **इति बृहस्पत्युक्तेः ।**

नित्यानि निवर्त्तेरन् वैतानवर्जशालाग्नौ चैके, अन्ये एतानि कुर्य्युरिति मिताक्षारायां पैठीनसिस्मृतेश्च प्रकरणग्रहणं पूजार्थम् । तेन स्मार्त्तमपि कर्म्मौपासनादि कार्यमेवेति श्राद्धलतायाम् । दाक्षिणात्यास्तु विकल्पमाहुः । अपरार्कादिनिबन्ध कारास्तु श्रौतं सर्व्वमपि स्वयं कर्त्तव्यम् , स्मार्त्तन्तु त्यागातिरिक्तमनेन कार्य्यम् ।
त्यागमात्रन्तु स्वंकार्य्यं स्नात्वोपस्पर्शनात स्वयम् ।
जन्महान्योर्वितानस्य कर्म्मत्यागो न विद्यते ॥६६२॥

502. **इति हारीतस्मृतेः ।**

शालाग्नौ केवलो होमः कार्य्य एवान्यगोत्रजैरिति जाबालिस्मृतेश्चेत्याह ।

503. **याज्ञिका अप्येवमाहुः,—**

सूतकेतु समुत्पन्ने स्मार्त्त कर्म्म न सन्त्यजेत् ।
पिण्डं यज्ञं चरुं होममसगोत्रेण कारयेत् ॥६६३॥

504. **इति कात्यायनोक्तेश्च ।**

पिण्डं पितृयज्ञे , चरुं स्मार्त्तस्थाल्या पाकं श्रवणकर्म्मादिकं चेति विज्ञानेश्वरः । त्यागे मरीचिना दोष उक्तः ।
दर्शं च पौर्णमासं च कर्म्म वैतानिकं च यत् ।
सूतकेऽपि त्यजन् मोहात्प्रायश्चित्तीयते द्विजः ॥६६४॥ इति ।
वैश्वदेवस्यत्वग्निसाध्यत्वेऽपि निवृत्तिः ।
विप्रोदशाहमासीत वैश्वदेवविवर्जितः ॥६६५॥
कात्यायनसूत्रेऽपि, नित्यानि निवर्त्तेरन् वैतानिकवर्जं शालाग्नौ चैक इति ।

505. इति संवर्त्तोक्तेः ॥६६६॥

नित्यानि वैश्वदेवादीनि , शालाग्निरौपासनाग्निस्तत्साध्या क्रिया विकल्पेनेति सूत्रार्थः ।

यदा करणपक्षस्तदान्येन कारयेत् न स्वयं कुर्य्यादिति कर्काचार्य्योऽपि विकल्पं मन्यते । एतेन निवृत्तिपक्षेण दशाहानन्तरं पुनराधानं शास्त्राभ्यनुज्ञानादिति गम्यते ।

यत्तु, होमद्वयापत्तौ तु पुनराधानमिष्यत इत्यादि स्मृतिवचनं तदशौचान्यकालपरम् ।

अधिकारी यदा विप्रोनित्यहोमं नचाचरेत् ।
द्विरात्र्याहूयमानोऽग्नि लौकिकत्वं प्रपद्यते ॥६६७॥

506. **इति ऋष्यशृङ्गोक्तेः ।**

507. **होमकर्म्मान्तराभावे त्वाश्वलायनो विशेषमाह,—**

स्मार्त्ताग्निरात्मनोऽन्येषामभावे सूतकादिषु ।
समारोप्य तदन्ते तु विहृत्य जुहुयात्स्वयम् ॥६६८॥ इति ।

**वैश्वदेवस्य अग्निसाध्यत्वेऽपि नित्यत्वमेव १(*) ।**

होमं तत्र तु कुर्वीत शुष्कान्नेन फलेन वा ।
पञ्चयज्ञ विधानं तु न कुर्य्यान्मृत्यु जन्मणोः ॥६६९॥

508. **इति संवर्त्तोक्तेश्च ।**

**अत्र होमः अग्निहोत्रादिरिति ज्ञेयम् ।**

अग्निहोत्रादि होमार्थं शुद्धिस्तात्कालिकी स्मृता ।
पञ्चयज्ञं न कुर्वीत ह्यशुद्धः पुनरेव सः ॥६७०॥

509. **इति गोभिलोक्तेश्च ।**

510. **हरदत्तस्तु,—**

अशौचेऽपि बह्वृचैर्वैश्वदेवः कार्य्य एव । तस्य द्वावनध्यायौ । यद्यात्माऽशुचिर्यदिशरीरं वा इति ब्रह्म यज्ञस्यैव विशिष्य तत्सूत्रे निषेधाद् अशौचे इत्याह ।

---

१(*) वैश्वदेव बलिकर्म्म पारस्कर गृह्यसुत्रे हरिहरभाष्येचास्ति । तत्र पाकं विधाय समुक्षृत्याभिघार्य्य पश्चादग्नेः प्राङ्मुख उपविश्य ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम इत्यादि । पञ्च महायज्ञस्तु,—तैत्तिरीय आरण्यकेऽस्ति । (१) यदग्नौ जुहोति । (२) यं पितृभ्यः स्वधा । (३) यत् भूतेभ्योबलिम् । (४) यत् ब्राह्मणेभ्यः । (५) यत् स्वाध्यायम् । पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति सन्तिष्ठन्ते, इत्यादि ।

511. सन्ध्यादीनामप्यपवादमाहापरार्के कात्यायनः ।

सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते ।
होमः श्रौतस्तु कर्त्तव्यः शुष्कान्नेन फलेन वा ॥६७१॥
अकृतं हावयेत् स्मार्त्ते तदभावे कृताकृतमिति ।
अत्राकृतं,—व्रीहियवादि, कृताकृतं तण्डुलादीत्यपरार्कः ।

यत्तु,—

सूतके मृतके चैव सन्ध्याकर्म्म समाचरेत् ।
न त्यजेद् ब्राह्मणः क्वापि त्यजनाद्वेदधागतिः ॥६७२॥

512. इति यमवचनम् ।

तत् किञ्चित् सन्ध्यापरम् १(*) ।
कथिता मानसी सन्ध्या कुशवारिविवर्जितेति शुद्धिप्रदीपे च्यवनोक्तेः ।
पैठीनसिस्त्वर्घ्ये मन्त्रोच्चारणमाह ।
सूतके सावित्र्या जलं प्रक्षिप्य सूर्य्यं ध्यायन् नमस्कुर्य्यादिति ।

513. भारद्वाजोऽपि,—

सूतके मृतके कुर्य्यात् प्राणायाममन्त्रकम् ।
तथामार्जनमन्त्रांस्तु मनसोच्चार्य्य मार्जयेत् ॥६७३॥
गायत्रीं सम्यग् उच्चार्य्य सूर्य्यायार्घ्यं निवेदयेत् ।
मार्जनं तु न वा कार्य्यमुपस्थानं न चैव हि ॥६७४॥ इति ।
ग्रहण स्नानश्राद्धादावप्यशौचापवादमाह व्याघ्रः,—
स्मार्त्तकर्म्मपरित्यागो राहोरन्यत्र सूतके—

514. इति ब्राह्मेऽपि ।

आशौचं जायते नृणां ग्रहणे चन्द्रसूर्य्ययोः ।
राहुस्पर्शे तयोः स्नात्वा दानादौ कल्पते नरः ॥६७५॥ इति ।
यत् पुनर्दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तत इति सूतकं प्रकृत्य

515. मनुवचनं तत् स्वस्य दानादिपरम् इति ।

---

१(क) 'उद्यन्तमस्तंयान्तमादित्य मुपास्य ब्राह्मणः सकलभद्रमश्नुते भाग्यमेति विधूत पाप्मा' इति श्रुतिः । सन्धौ सन्ध्यामुपासीत इति स्मृतिश्च । सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्व कर्मसु इत्यपि ।

## श्रीविधान पारिजाते कर्म्मत अशौचापवादः।

—*—

516. **अथ द्रव्यतः अशौचापवादः।**

517. **तत्र मरीचिः,—**

लवणे मधुमांसे च पुष्पमूलफलेषु च।
शाक काष्ठतृणेष्वथो दधिसर्पिः पयःसु च ॥६७६॥
तिलौषधाजिनेचैव पक्कापक्के स्वयंग्रहः।
परान्नेषु च सर्व्वेषु नाशौचं मृतसूतके ॥६७७॥ इति।

स्वयंग्रह इति स्वयमेव द्रव्यस्वाम्यनुज्ञया ग्राह्यमित्यत्र तद्धस्तादित्यर्थः। क्रये तु तद्धस्तादपि ग्रहणे न दोषः। पक्वं लड्डुकादि, अपक्वं तण्डुलादि, एतदन्नसत्रप्रवृत्तविषयम्।

अन्नसत्रप्रवृत्तानामामान्नमविगर्हितम १(*)।
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु व्रती भवेत् ॥६७८॥

518. **इत्यङ्गिरःस्मृतेः।**

519. **पक्वमन्नमोदनादिकं न तु लड्डुकादिभक्ष्यम्।**

**षडशीतावपि,—**

संसर्गाद् यस्य चाशौचं यस्यातिक्रान्तकालतः।
तृतीयस्य पदार्थस्य नाशौचं विद्यते क्वचित् ॥६७९॥

520. **इति द्रव्यतः अशौचापवादः।**

—*—

## अथ मृतदोषतः अशौचापवादः।

—*—

521. **हेमाद्रौ षट्त्रिंशन्मते—**

व्यापादयेद्य आत्मानं स्वयमग्न्युदकादिभिः।
विहितं तस्य नाशौचं नापि कार्य्योदकक्रिया ॥६८०॥

---

१(*) सत्रान्नसत्रम्—सदान्नदानशाला, नतुयाग.। अन्यत्र स्मृतौ,
'कन्दुपक्वं पयःपक्वं पक्वं केवलवह्निना।
तदन्नं फलवद् ग्राह्यं यच्चाम्बुलवणं विना, इति।

522. शवस्य नेतृविषयतावधित्वाशौच मस्त्येव १(*) ।

हतानां नृप गोविप्रैरन्वक्षं चाल्प(त्म)घातिनाम् ।

523. इति याज्ञवल्क्योक्तेः ।

524. भविष्येऽपि—

स्वेच्छया मरणं विप्राः शृङ्गिदंष्ट्रिसरीसृपैः ।
अन्त्यान्त्यजविषोद्बन्धैरात्मना चैव ताड़नैः ॥६८१॥
पाषण्डमाश्रिताश्चैव महापातकिनस्तथा ।
स्त्रियश्च व्यभिचारिण्य आरूढ़पतितास्तथा ।
न तेषां स्नानसंस्कारौ न श्राद्धं न सपिण्डनम् ॥६८२॥ इति ।

525. ब्राह्मेऽपि,—

शृङ्गिदंष्ट्रिनखिव्याल विषवह्नि क्रियाजलैः ।
स दूरात् परिहर्त्तव्यः कुर्व्वन् क्रीड़ां मृतश्च यः ॥६८३॥

अत्र व्यालो दुष्टगजः पूर्व्वंसरीसृप इत्युक्तेः ।

नागानां विप्रियं कुर्व्वन् हतश्चाप्यथविद्युता ।
निगृहीतः स्वयं राज्ञा चौर्य्यदोषेण कुत्रचित् ॥६८४॥
परदारान् हरन्तश्च द्वेषात्तु यतिभिर्हताः ।
असमानैश्च संकीर्णैश्चण्डालाद्यैश्च विग्रहम् ॥६८५॥
कृत्वा तैर्निहतास्तद्वच्चण्डालादीन् समाश्रिताः ।
शस्त्राग्निगरदाश्चैव पाषण्डाः क्रुरबुद्धयः ॥६८६॥
क्रोधात् प्रायन् विषं वह्निंशस्त्राद्युद्बन्धनं जलम् २(†) ।
गिरिवृक्षप्रपातं च ये कुर्व्वन्ति नराधमाः ।
कुशिल्पजीविनो ये च सूनालङ्कारधारिणः ॥६८७॥
मुखे भगास्तु ये केचित् क्लीवप्राया नपुंसकाः ।
ब्रह्मदण्डहता ये च येचापि ब्राह्मणैर्हताः ॥६८८॥
महापातकिनो ये च ते सर्व्वे पतिताः स्मृताः ।
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ॥६८९॥

---

१(*) शवस्रनेतृ विषयता इति भिन्नः पाठः ।

२(†) 'क्रोधात् प्रायन् विषम्' इति भिन्नः पाठः ।

एतानि पतितानां तु यः करोति विमूढधीः ।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा ॥६६०॥ इति ।
एतत् सर्व्वं कृच्छ्रद्वयमबुद्धिपूर्व्वकृतिविषयम् ।

526. **बुद्धिपूर्व्वकृतौ तु, माधवीये वशिष्ठः—**

य आत्मत्यागिनां स्नेहात् प्रेतक्रियां द्विजः स्वयं् १(*) ।
स तदा कृच्छ्रसहितं चरेच्चान्द्रायणव्रतम् ॥६६१॥ इति ।

**एतदनाहिताग्निप्रेतविषयम् । आहिताग्नेस्तु,**

527. **छन्दोगपरिशिष्टे कात्यायनो विशेषमाह—**

महापातकसंयुक्तो दैवातस्यादग्निमान् यदि ।
पुत्रादिः पालयेदग्नीन् मृतस्य दोष संक्षयात ॥६६२॥
प्रायश्चित्तं न कुर्य्यादूयः कुर्व्वन् वा म्रियते यदि ।
गृह्यं वानिर्व्वपेच्छ्रौतं विहितंस परिच्छदम् ।
पात्राणि दद्याद्विप्राय दहेद् वा वारिणिक्षिपेत ॥६६३॥ इति ।

528. **माधवीये पराशरोऽपि,—**

आहिताग्निर्मृतोविप्र श्चण्डालेनात्मघातकः ।
दहेत्तं ब्राह्मणं विप्रो लौकि ग्नौ अमन्त्रकम् २(†) ॥६६४॥
प्राजापत्यं चरेत् पश्चाद्विप्राणामनुशासनात् ३(‡) ।
दग्धास्थीनि पुनर्गृह्य क्षीरेण क्षालयेत्ततः ॥६६५॥
स्वेनाग्निना स्वमन्त्रेण पृथगेवं पुनर्दहे, दिति ।

529. **हेमाद्रौतु—**

दाहयित्वा शवं तेषां शूद्रैरविधिपूर्व्वकम् ॥६६६॥
प्राजापत्यानीत्यादि-पूर्व्ववदित्युक्तम् । तदेतच्चण्डालम्लेच्छादिहतविषयम्,
अस्यास्पृश्यत्वात् । इदं सर्व्वं सर्पादिना मरणेऽपि ज्ञेयम् ।

---

१(*) आत्मघातिनाम्, इति पाठान्तरम् ।
२(†) लौकिकाग्नौ मन्त्रवर्जितम्' इति पाठान्तरम् । लौकाग्नौ चाध्वन्दोऽनुरोधात् स्यात् ।
३(‡) 'प्राजापत्यांचरे'दिति पाठान्तरम् ।

प्रमाद मरणेत्वशौचादिकं भवत्येव ।

अथ कश्चित् प्रमादेन म्रियेताग्न्युदकादिभिः ।

तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया, इत्यङ्गिरः स्मृतेः ॥६६७॥

इदन्तु पूर्व्वं बहुप्रपञ्चितमित्युपरम्यते ।

अत्र पतितादीनां यो दाहादिनिषेधः स मरणान्तरक्रियमाणविषयः ।

वत्सरान्तादौ तु कार्य्य एव ।

गोब्राह्मणहतानान्तु पतितानान्तथैव च ।

ऊर्द्ध्वं सम्वत्सरात् कुर्य्यात् सर्वमेवौर्द्ध्वदेहिकमिति षड्विंशमतोक्तेः १(*) ।

नारायणवलिः कार्य्यो लोकगर्हाभयान्नरैः ।

तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥६६८॥

530. इति मिताक्षरायां छागलेयोक्तेश्च । नारायणबलिरपि स्वात्मघातादि-

531. प्रायश्चित्तं कृत्वा कार्य्यमित्युक्तम्, हेमाद्रौ षट्त्रिंशन्मते ।

कृत्वा चान्द्रायणं पूर्व्वं क्रिया कार्य्या यथाविधि २(†) ॥६६६॥

पिण्डोदकक्रियाः पश्चाद् वृषोत्सर्गादिकञ्च यत् ।

एकोद्दिष्टानि कुर्व्वीत सपिण्डीकरणन्तथा इति ॥१०००॥

532. वृद्धशातातपीयेतु प्रायश्चित्ताधिक्यमुक्तम् ।

**तथाहि—**

पतीते च मृते शुद्धौ प्राजापत्यांस्तु षोड़श ।

मृते वा यत्परहिते कृच्छ्राणां नवतिं चरेदिति ॥१००१॥

**इदन्तु प्रायश्चित्तार्हपित्रादि विषयेद्रष्टव्यमिति ।**

इन्द्रियैरपरित्यक्ता ये च मूढा विषादिनः ।

घातयन्ति स्वमात्मानं चण्डालादिहताश्च ये ॥१००२॥

तेषां पुत्राश्च पौत्राश्च दयया समभिप्लुताः ।

यथा श्राद्धं प्रतन्वन्ति विष्णुनामप्रतिष्ठितम् ॥

तथा ते सम्प्रवक्ष्यामि नमस्कृत्य स्वयम्भुवे ॥१००३॥

---

१(*) 'दर्श्याग्निमरणे' इति भिन्नः पाठः ।

„ 'वत्सरान्तरादौ, इति पाठभेदोऽस्ति ।

२(†) 'षड्विंशन्मतोक्तेः' इत्यं पाठान्तरमस्ति । अत्र षड्विंशमतोक्तिसन्दर्भः प्रसिद्धः ।

३(‡) अत्र तु 'नारायणबलिः कार्य्योलोकगर्हाभयान्नरै' इति पुनरुक्तिर्दृश्यते ।

533. **इति हेमाद्रौवृद्धशातातगोक्तेः ।**
**तत्रैवाह बौधायनोऽपि ।**

## अथ नारायणबलिं व्याख्यास्यामः ।

—*—

अभिशप्त(स्तं)पतित-सुरापात्मत्यागिनां ब्राह्मणहतानाञ्च द्वादशवर्षाणि-त्रीणि वा कुर्वीतेति ।

534. **मदनरत्ने ब्राह्मेऽपि,—**

प्रमादाद् वै हतस्य कृच्छ्र द्वयं तस्य विशुद्धये ।
यद्वा कृच्छ्रान् पञ्चदश कृत्वा तु विधिना दहेत् ॥
बुद्धिपूर्व्वमृतानां तु त्रिंशत् कृच्छ्रान् समाचरेत् ॥१००४॥ इति ।

535. **स्मृतिरत्नावल्यां तु,—**

द्विगुणं प्रायश्चित्तं कृत्वा संवत्सरात् प्रागपि सर्व्वमौदुर्ध्वदेहिकं कार्य्य-
536. मित्युक्तं भृगुणा ।

आत्मनोघातकशुध्यर्थं चरेच्चान्द्रायणद्वयम् ।
तस्य कृच्छ्रचतुष्कं वा त्रिंशत् कृच्छ्राणि वा पुनः ॥१००५॥
अर्वाक् संवत् सरात् कुर्य्याद् दहनादि यथोदितम् ।
कृत्वा नारायण बलिमनित्यत्वात् तदायुषः ॥१००६॥ इति ।

एतानि प्रायश्चित्तानि शक्ति कालाद्यवेक्षया प्रयोज्याणि ।
इदं चात्मघातिनिमित्तं प्रायश्चित्तं मृतजा(ज्ञा)तिवध प्रायश्चित्तेन समुच्चितं कार्य्यम् १(*) ।
अन्तरा बोधायनेनोक्तं द्वादशवर्षाणि त्रीणिवेति ।
एवं म्लेच्छीकृतानामपि ज्ञेयम् ।
न्यायसाम्यात् पतितादीनां गयाश्राद्धं कार्य्यम् ।
ब्रह्महा च कृतघ्नश्च गोघाती यश्च पातकी २(†) ।
सर्व्वे ते निष्कृतिं यान्ति गयायां पिण्डपातनात् ॥१००७॥

---

१(*) 'यज् जातिवध' इति पाठान्तरम् ।

२(†) यन्नाम्नापातयेत् पिण्डं तन्नयेद् ब्रह्मशाश्वतम्'
इति वायुपुराणे । यत्र पातयेत् गयायान्त्वादिति । यस्य फलं ब्रह्मलोक प्राप्तिश्च ।

537. इत्यग्निपुराणात् ।

538. तदपि संवत्सरे कार्य्यमित्युक्तं ब्राह्मे ।

क्रियते पतितानां तु गते संवत्सरे क्वचित् ।
देशधर्म्मप्रमाणत्वान्निर्वपेत स्वबन्धुभिः ।
मार्त्तण्डपादमूले वा श्राद्धं हरिहरं स्मरन्निति ॥१००८॥
मार्त्तण्डपादः सूर्य्यपादः । दक्षिणादित्यचरणे वेति ।
अत्र केचित् । पतितादिषु नारायणवलौ कृतेऽप्यन्यकर्म्मसपिण्डन-वर्ज्जं कार्य्यम् ।

अन्येतु,—

गो-ब्राह्मणहतानां च पतितानां तथैव च ।
व्युत् क्रमाच्च प्रमीतानां नैव कार्य्यं सपिण्डनम् ॥१००९॥
इति वचनादित्याहुः ।

539. ते हेमाद्रिस्थसपिण्डीकरणं तथेति पूर्व्वोक्तवचनविरोधादुपेक्ष्याः । गो-ब्राह्मणेति वचनं तु निरपत्यविषयं वृद्धिश्राद्धविषयं चेति सर्व्वं समञ्जसमिति मृतिदोषप्रयुक्ताशौचापवादः ॥

—*—

## अथविधानादाशौचापवादः ।

## स च पतितयुद्धमृतादिषु ।

—*—

540. तथा च दत्तात्रेयः,—

त्रयाणामाश्रमाणां च कुर्य्याद्दाहादिकाः क्रियाः ।
यतेः किञ्चिन्न कर्त्तव्यं सर्व्वान्येषां सुतादिभिः ॥
त्रिदण्ड ग्रहणादेव प्रतत्वं नैव जायते ॥१०१०॥
एकोद्दिष्टं जलं पिण्डमाशौचं प्रेत सत्क्रियाम् ॥
न कुर्य्यात् पार्वणादन्यद् ब्रह्मीभूताय भिक्षवे ॥१०११॥ इति ।

## त्रिदण्ड पदमेकदण्डस्याप्युपलक्षणम् ।

541. **युद्धहते मनुः,—**

ब्राह्मणार्थे विपन्नार्थे योषितां गोग्रहे तथा ।
आहवे च हतानां चेदेकरात्रमशौचकम् ॥१०१२॥
उद्यतैराहवे शस्त्रैः क्षत्रधर्म्महतस्य तु ।
सद्यः सन्तिष्ठते यज्ञस्तथाशौचमिति स्थितिः ॥१०१३॥

542. **इति एकरात्रं युद्धक्ष(ह)तस्य ।**
**कालान्तरमृतिविषये वृद्धमनुः—**

वृद्धःशौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक् क्रियः ।
आत्मानं घातयेद् यस्तु भृग्वग्न्यनशनाम्बुभिः ॥१०१४॥
तस्य त्रिरात्रमाशौचं द्वितीयेऽस्थिसञ्चयः ।
तृतीयेतूदकं दत्त्वा चतुर्थे श्राद्धमाचरेत् १(*) ॥१०१५॥

543. **इत्यपरार्के ब्रह्मगर्भः ।**

यो जीवितुं न शक्नोति महाव्याध्युपपीड़ितः ।
अग्न्युदकमहायात्रां कुर्व्यन्नाम नदुष्यति ॥१०१६॥

544. **इति माधवीयेऽप्यादित्य पुराणे ।**

दुश्चिकित्स्यैर्महारोगैः पीड़ीतस्तु महानपि ।
प्रविशेज्वलनं दीप्तं कुर्य्यादनशनं तु वा ॥१०१७॥
अगाधतोयराशिं वा भृगोः पतनमेव वा ।
गच्छेन्महापथं वापि तुषारगिरिमादरात् ॥१०१८॥
प्रयागेवटशाखाग्राद् देहत्यागं समाचरेत् २(†) ।
स्वयं देहविनाशस्य काले प्राप्ते महामतिः ॥१०१९॥
उत्तमं प्राप्नुयाल्लोकं नात्मघाती भवेत् क्वचित् ।
एतेषामधिकारोऽस्ति पर्व्वेषां सर्व्वजन्तुषु ॥१०२०॥

---

१(*) अत्र 'आरभेत्' इति पाठान्तरम् ।
२(†) 'देहत्यागं करोति यः' इति पाठान्तरम् ।

नराणामथ नारीणां सर्व्ववर्णेषु सर्व्वशः १(*) ।
ईदृशं मरणं येषां जीवतां कुत्रचिद् भवेत् ॥१०२१॥
अशौचं स्यात् त्र्यहं तेषां वज्रानल हते तथा ।
वाराणस्यां मृयेद् यस्तु प्रत्याख्यात भिषक्क्रियः ॥१०२२॥
काष्ठपाषाणमध्यस्थो जाह्नवीजलमध्यगः ।
अविमुक्तोन्मुखस्तस्य कर्णमूलगतो हरः ॥
प्रणवं तारकं ब्रूते नान्यथा कुत्रचित् क्वचित् २(†) ॥१०२३॥

545. **इति, हेमाद्रावप्येवम् ।**

अत्र कालमाप्त इत्युक्तेरप्राप्तमरणकालाये प्रयाता म्रियन्ते याश्च स्त्रियोऽन्वारोहणं कुर्व्वन्ति तेषां सम्पूर्णमेवाशौचमिति ध्वन्यते ।

एतच्च प्राप्तकाले वृद्धादीनां मरणं युगान्तरविषयम् ।
भृग्वग्निपतनैश्चैव वृद्धादिमरणन्तथा ॥१०२४॥

546. **इति माधवीये कलिवर्ज्येषूक्तेः ।**

'ये वै तनुं विसृजन्ति धीराः' ।

547. **इति श्रुतेः ।**

न लोकवचनात्तात ! न वेद वचनादपि ।
मतिरुत् क्रमणीया ते प्रयागमरणं प्रति ॥१०२५॥

548. **इति, मातृस्योक्तेश्च । काश्यामप्येवं तत्रैव ।**

अग्निप्रवेशं ये कुर्य्युरविमुक्ते विधानतः ३(‡) ।
प्रविशन्ति मुखं ते मे निःसन्दिग्धं वरानने ॥ १०२६॥
इति गौरीं प्रति शिवेनोक्तत्वात् । हेमाद्रावपि ,—

549. **प्राह, विवस्वान् ,—**

धनार्जनासमर्थस्य कर्त्तुः पापाङ्कितस्य च ।
ब्रह्मणास्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणमिति ॥१०२७॥

---

१(*) 'सर्व्ववर्णेषु सर्व्वदा' इति भिन्नः पाठः
२(†) 'कस्यचित् क्वचित्' ,, ,,
३(‡) अविमुक्ते, वाराणसी चैव काश्यामिति । अन्यत् काशी मुक्तिविवेके । काशीखण्डपुराणे च ।
,, जाबालोपनिषदिय 'वरणायां नाश्याश्च मध्येति प्रतिष्ठितः इति । एतद्दीपिकायाञ्च— 'उत्तरं वरणायां नाश्याश्चेति' ।
,, जीवच्छ्राद्धप्रयोगः हेमाद्रावपि ।

एवमन्येऽपि तत्र, तत्रोक्तामरणविधयो ज्ञेयाः ।
तथा कृतजीवच्छ्राद्धमरणे सपिण्डानामशौचं कृताकृतमित्युक्तम् ।

550. **हेमाद्रौ लिङ्ग पुराणे,—**

मृते कुर्य्यान्नवा कुर्य्याज्जीवन्मुक्तो यतः स्वयम् ।
कालं गते द्विजे भूमौ खनेद्वापि दहेत वा ।
पुत्रकृत्यमशेषं च कृत्वा दोषी भवेन्न च ॥१०२८॥
जीवच्छ्राद्धे कृते चापि पुनः सर्व्वं समाचरेत् । इति ।

551. **तस्मिन् जीवति विशेषः पुनस्तत्रैवोक्तः ।**

नित्यं नैमित्तिकं यत्त कुर्य्याद्वा सन्त्यजेत वा ।
बान्धवेऽपि मृते तस्य नैवाशौचं विधीयते ॥१०२९॥
सूतकञ्च न सन्देहः स्नानमात्रेण शुद्ध्यतीति ।
एतद्योगिविषयम् । योगमार्गरतोऽपि वेति, तत्रैवोक्तेः । जीवच्छ्राद्ध-विधिस्तु चतुर्थस्तवके द्रष्टव्यः १(*) । तथाहिताग्नौ प्रोषितमृते सति तदस्थिदाहात् पूर्व्वं पुत्रादीनामशौचं सन्ध्यादिकर्म्म नास्ति ।
अनग्निमत उत् क्रान्तेरशौचादि द्विजादिषु ।
दाहादग्निमतो विद्याद् विदेशस्थे मृते सति ॥१०३०॥

552. **इति स्मृतेः ।**

अशौचाभावादेवाग्निहोत्रहोमादिकमपि तदग्नौ पुत्रादिभिः कार्य्यम् ।
तत्र प्रकारस्तु पूर्वमेव संस्कारप्रकरणेऽभिहितः ।
अत्र तद्देहस्यसाक्षात् सम्भवे तस्यैव दाहः ।
आहिताग्नौ विदेशस्थे मृते सति कलेवरम् ।
निधेयं नाग्निभिर्यावत्तदीयैरेव दह्यते ॥१०३१॥

553. **इति हेमाद्रौ ब्राह्मोक्तेः ।**

**तदसम्भवे तु छन्दोगपरिशिष्टे,—**

विदेशमरणेऽस्थीनिं आहृत्याभ्यज्य सर्पिषा ।
दाहयेद्वर्हिषाच्छाद्य पात्रन्यासादि पूर्व्ववत् ॥१०३२॥

---

१(*) प्रागुक्तचतुर्थस्तवके, तथा विश्वनाथ पद्धतिसन्दर्भेचास्ति ।

अस्थ्नामलाभे पर्णानि शकलान्युक्तया धृता ।
दाहयेदस्थिसंख्यानि न ततुप्रभृतिसूतकम् ॥१०३३॥

554. **इति हेमाद्रौ । षट्त्रिंशन्मतेऽपि,—**

कुर्य्याद्दर्भमयं प्रेतं कुशैस्त्रिशतषष्टिभिः ।
पालाशीभिः समिद्भिर्वा संख्या सैव प्रकीर्त्तिता ॥१०३४॥

अत्रत्यः सर्व्वो विशेषः प्रागेवाभिहितः ।
अत्र प्रोषितमृत आहिताग्निश्चेत् तस्य सम्पूर्णाशौचं कार्य्यम् ।

555. **दाहादग्निमत इति स्मृतेः ।**

556. **अनाहिताग्नेस्तु त्रिरात्रम् ।**

एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेदिति ब्रह्मपुराणात् ।
इदं च त्रिरात्रं न दशाहमध्ये संस्कारे ।
तत्र प्रोषिते कालशेषः स्यादित्युक्तेः । किन्तु दशाहादूर्द्ध्वं दाहे तत्रापि पत्नीपुत्रयोः पूर्व्वमकृताशौचस्य दशरात्रमेव, पूर्व्वकृताशौचत्वे तु पुनः संस्कारे त्रिरात्रमेव । दम्पत्योश्चैवमिति स्मृत्यर्थसारे पुत्राशौचातिदेशात् । अन्यसपिण्डानां तु सर्व्वत्र पर्णशरदाहे त्रिरात्रम् १(*) ।

557. **तदाहाङ्गिराः,—**

देशान्तरमृतं श्रुत्वा नाशौचे चेत् कथञ्चन ।
कालात्ययेऽपि कुर्व्वीत दाहकाले दिनत्रयम् ॥१०३५॥

558. इति कालात्ययेऽपीत्युक्ते मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी भवेदित्यादेरपवादो ज्ञेयः ।

स्मृत्यर्थसारे तु पूर्व्व गृहीताशौचानां स्नानमात्रमेवेत्युक्तम् । अत्र देशाचारतो व्यवस्था ज्ञेया । द्वादशवर्षादिप्रतीक्ष्योत्तरकालं दाहे तु पुत्रादीनां सर्व्वषां त्रिरात्रमिति कल्पतरु-दिवोदासादिनिबन्धकृत आहुः ।

---

१(*) 'पर्णनरदाहे' इति भिन्नः पाठः । पर्णनरदाहे तु,—पलाशपत्रैः शरैश्च नरमूर्त्तिं विधाय तत्रैव दाहः कार्य्यः प्रागुक्त संख्याकैः ।

559. **पुनः संस्कारे हेमाद्रौ गार्ग्यः, कालविशेषमाह ।**

प्रत्यक्ष शवसंस्कारे दिने नैव विशोध्यते ।
अशौचमध्ये संस्कारे दिनं शोध्यन्तु सम्भवे ॥१०३६॥
अशौच-विनिवृत्तौ चेत् पुनः संस्क्रियते मृतः ।
संशोध्यैव दिनं ग्राह्यमूर्द्ध्वं संवत्सराद् यदि ॥१०३७॥
प्रेतकार्य्याणि कुर्व्वीत श्रेष्ठं तत्रोत्तरायणम् ।
कृष्णपक्षश्च तत्रापि वर्जयित्वा दिनक्षयम् ॥ १०३८॥

560. **वाराहे,—**

चतुर्थाष्टमगे चन्द्रे द्वादशे च विवर्जयेत् ।
प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा ॥१०३९॥
करणे विष्टिसंज्ञे च शनैश्चरदिने तथा ।
त्रयोदश्यां विशेषेण जन्मताराত्रये तथा ॥१०४०॥

561. **जन्मदशमैकोनविंशानि जन्मताराः । भारतेऽपि,**

न प्रौष्ठपदयोः कार्य्यं तथाग्नेये च भारत ।
दारुणेषु च सर्व्वेषु प्रत्यरिश्च विवर्जयेत् ॥१०४१॥

562. **काश्यपः,**

भरण्यार्द्रामघाश्लेषा मूलं द्विचरणानि च ।
प्रेतकृत्येऽतिदुष्टानि धनिष्ठाद्यत्रयं च यम् १(*) ॥१०४२॥

563. **ज्योतिर्नारदः** २(†) ।

चतुर्दशीतिथिं नन्दां भद्रां शुक्रारवासरौ ।
सितेज्ययोरस्तमयं द्व्यङ्घ्रिकं विषमाङ्घ्रिकम् ३(‡) ॥१०४३॥
शुक्लपक्षं च सन्तज्य पुनर्दहनमुत्तमम् ।
वसूत्तरार्द्धतः पञ्च नक्षत्रेषु त्रिजन्मसु ॥१०४४॥
पौष्ण ब्रह्मर्क्षयोश्चैव दहनात् कुलनाशनम् ॥

---

१(*) 'धनिष्ठा पञ्चकत्रयत्' इति पाठान्तरम् ।
धनिष्ठादिपञ्च न चलाणां प्राङ्निषेधात् ।

२(†) ज्योतिषे नारदर्षिःप्राह ।

३(‡) द्विपादऋक्षं त्रिपादऋक्षञ्च त्यजेदिति ।

564. **अस्यापवादमाह वैजवापः,—**

प्रेतस्य साक्षाद्दग्धस्य प्राप्ते त्वेकादशेऽहनि ।
नक्षत्रतिथिवारादिशोधनीयं न किञ्चन ॥१०४५॥
युगमन्वादि संक्रान्तिदर्शेऽप्रेतक्रिया यदि ।
दैवादापतिता तत्र नक्षत्रादि न शोधयेत् ॥१०४६॥
गुरुभार्गवयोर्मौढ्ये पौषमासे मलिम्लुचे ।
नातीतः पितृमेधः स्याद्गयां गोदावरीं विना ॥१०४७॥ इति ।

565. **दानमपि तत्रैवोक्तम् ।**

भद्रायां भूमिदानं स्यात् त्रिपादर्क्षे हिरण्यदः ।
त्वारेषु तत्तद्वर्णं तु वासो दद्याद् विचक्षणः ॥१०४८॥
धनिष्ठापञ्चकमृते पञ्चरत्नानि हापयेत् ।
एकाशीतिपलं कांस्यं तदर्द्धं वा तदर्द्धकम् ॥
नव षट्त्रिपलं वापि दद्याद् विप्राय शक्तितः ॥१०४६॥

566. **इत्यलं प्रपञ्चेन । किञ्च, हेमाद्रौ वृद्ध मनुः,—**

अमृतं मृतमाकर्ण्य कृते यस्यौर्द्धदेहिके ।
प्रायश्चित्तमिदं स्मार्त्तं कृत्वाग्नीन् आदधीत च ॥१०५०॥
जीवन् यदि समागच्छेद् घृतकुम्भे निमज्ज्य च ।
उद्धृत्य स्नापयित्वास्य जातकर्म्माणि कारयेत् ॥१०५१॥
द्वादशाहं ब्रह्मचर्य्यं त्रिरात्रमथवास्य तु ।
स्नात्वोद्वहेत तां भार्य्यामन्यां वा तदभावतः ॥१०५२॥ इति ।

तथा, दुर्मरणमृतस्य क्रियायोग्यतासिद्ध्यर्थं नारायणवलौ कृते त्रिरात्रमशौचं कर्त्रा कार्य्यमित्युक्तमपरार्के नारदेन ।

तदैव शुध्यति प्रेतो नारायणवलौ कृते ॥१०५३॥
यो ददाति क्रियां पिण्डं तस्मै प्रेताय वै सुतः ।
तस्यैवाशौचमुद्दिष्टं त्र्यहमेव न संशयः ॥१०५४॥
विष्णुश्राद्धसमाप्तौ तु त्रयोदश्यां दिनत्रयम् ।
अशौचं पिण्डदः कुर्य्यान्न तु तद्वन्धु गोत्रजाः ॥१०५५॥ इति ।

तथा, सर्पसंस्कारे कृते सति त्रिरात्रमशौचं कार्य्यमित्युक्तम्

567. शौनकेन । अथ वक्ष्यामि सर्पस्य संस्कारविधिमुत्तममित्यभिधायोक्त ।

ब्रह्मचर्य्यादिकं कार्य्यं त्रिरात्राशौचमिष्यत इति ।
तद्विधिं तु प्रथमस्तवकेऽभिहितः । कचित्तु जीवतोऽप्यन्त्य कर्म्माशौचं च कार्य्यमित्युक्तम् । यथा, प्रायश्चित्तानिच्छोः पतितस्य घटस्य स्फोटे कृते सति तत्रैकाहमशौचम् ।

दासीघटमथापूर्णं पर्य्यस्येत् प्रेतवत्पदा ।
अहोरात्रमुपासीरन्नाशौचं वान्धवैः सह १(*) ॥१०५६॥

568. इति मनुस्मृतेः ।

## तद्विधिस्तु चतुर्थस्तवकेऽभिहितः ।

569. अथेदानीं कृतघटस्फोटस्यापि प्रायश्चित्तार्हस्य संग्रहविधिरुच्यते । गौतमः प्राह, यस्तु, प्रायश्चित्तेन शुद्धः तस्मिन् शुद्धे शातकुम्भमयं पात्रं पुण्यह्रदात् पूरयित्वा श्रवन्तीभ्यो वा तत एनमुपस्पर्शयेयुरथास्मै तत् पात्रं दद्यात् । स प्रतिगृह्य जपेच्छान्ता द्यौः शान्ता पृथिवी शान्तं विश्वमन्तरिक्षं यो रोचनस्तमिह गृह्णामीत्येतैर्यजुर्भिः पावमानीभिस्तरत्समन्दीभिः कुष्माण्डीभिश्चाज्यं जुहुयाद्धिरण्यं दध्याद्गां वाद्धर्यां यः, यस्य तु प्राणान्तिकं प्रायश्चित्तं स्मृतम् ।

शुध्येदेतदेव शान्त्यु दकंसर्व्वेषूपपातकेष्विति, यथा जीवच्छ्राद्धे कृते त्रिरात्रमित्याह । पावमान्यस्तरत् समन्द्यश्च उक्ताः । ताश्च ऋग्वेद २(†) प्रसिद्धाः, कुष्माण्डयो यजुर्वेदस्थाः । एवं यत्र यत्र विशिष्य त्रिरात्राद्य-शौचमुक्तं, तत्र तत्र कार्य्यमित्यलं प्रपञ्चेन ॥ इति श्रीमन्नागदेव भट्टात्मज-श्रीमदनरत्न भट्टेन विरचिते विधानपारिजाते अशौच विधानानि समाप्तानि ।



---

१(*) अत्र 'यथा पूर्व्वम्' अपेतवत्सदा' 'उपासीत'—एतानि पाठान्तराणि सन्ति ।
„ अहोरात्र मशौचं वान्धवैः पालयेदित्यर्थः ।
१(†) ऋग्वेदे एतानि सूक्तानि उक्तानि, यजुर्व्वेदे च कुष्माण्डी सूक्तानि कथितानि ।
शुक्ल यजुः २०।१४ ।

# अथ रजस्वलाशौचमुच्यते ।

—*—

570. **तत्र मनुः—**

रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला । इति

571. **शुद्धेति शेषः ।**

—इयं शुद्धिः स्पर्शे चतुर्थेऽहनि संशुद्धा भवति व्यवहारिकीति—

572. **वृद्धमनूक्तेः ।**

शुद्धा हि स्त्री चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ।
दैवे कर्म्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति १(*) ॥१०५७॥

573. **इति स्मृत्यन्तरेणोक्तेश्च ।**

यदा रजोदर्शनादारभ्य सप्तदशदिनाभ्यन्तरे पुनारजोदर्शनं
तदात्वशुद्धि २(†) र्नास्त्येव ।

574. **तदूर्द्धंत्वत्रिः,—**

रजस्वला यदा स्नाता पुनरेव रजस्वला ।
अष्टादश दिनादर्वागशुचित्वं न विद्यते ॥१०५८॥
एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम् ।
विंशप्रभृत्युत्त रेषु त्रिरात्रमशुचिर्भवेत् ॥१०५९॥

यत्तु, चतुर्दशदिनादर्वागशुचित्वेन विद्यते इति स्मृत्यन्तरं तदत्रिवचनैकवाक्यतया स्नानादुत्तरकालपरमित्यन्योन्यविरोधः । अयं चाशौचप्रतिषेधो यस्या विंशतिदिनोत्तरकालमेव रजोदर्शनं भवति तद्विषयः । यस्याः पुनरारूढयौवनायाः प्रागेवाष्टादशदिनात् प्राचुर्य्येण रजोदर्शनं तस्यास्त्रिरात्रमशौचं भवत्येव । त्रिरात्रं स्नानादिरहितया स्थातव्यम् । रजस्वला त्रिरात्रमशुचिर्भवति । सा च नाञ्जनेनाभ्यञ्जती नाप्सु स्नायान्न दिवा स्वप्यान्न ग्रहान्निरीक्षेन्नाग्निं स्पृशेन्न रज्जुं स्पृशेन्न च दन्तान् धावेन्न हसेत्किञ्चिदाचरेदखर्वेण पात्रेणन-

---

१(*) 'शुद्धा भर्त्तुश्चतुर्थेऽह्नि दैवे पैत्रे च पञ्चमे' इति स्मृत्यन्तरेष्वस्ति ।
२(†) 'तदाऽशुद्धिर्नास्त्येव' इति भिन्नः पाठः ।
,, 'तदाह' इतिच ,, ,,

575. पिवेदञ्जलिमात्रेण, पात्रेण लोहितायसेन वेति वसिष्ठेन नियमपूर्वं त्रिरात्रमाम्नानात् ।

**अत्रखर्वं मृन्मयपात्रम्, लोहितायसं ताम्रम् १(*)।**

हस्तेऽश्नीयान्मृन्मये वा हविर्भुक्क्षिति शायिनी ।
रजस्वला चतुर्थेऽह्नि स्नात्वा शुद्धिमवाप्नुयात् ॥१०६०॥

576. **इत्यङ्गिरसः स्मृतेश्च ।**

577. **तस्यां नैमित्तिकस्नान प्रकारमाह पराशरः,—**

स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥१०६१॥
सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथञ्चन ।
न वस्त्रपीड़नं कुर्य्याद् नान्यद्वासश्च धारयेत् ॥१०६२॥ इति ।

**निमित्तं ग्रहणादि ।**

न सूतकादि दोषोऽस्ति ग्रहे होमजपादिषु ।
ग्रस्ते स्नायादुदवापी तीर्थादुद्धृत्य वारिणा ॥१०६३॥

578, **इति सूर्य्योदयनिवन्धोक्तेः ।**

579. **व्रतमाह, स्मृतिरत्नावल्यां दक्षः,—**

उदक्योर्द्धेसगोत्रे वा सवर्णे चैक भर्तृके २(†)।
तयोः स्नानं मिथः स्पर्शे पञ्चगव्यं ततः पिवेत् ॥१०६४॥
सवर्णोयोनिसम्बन्धे सगोत्रे च रजस्वले ।
मिथः स्पर्शेतु दम्पत्याः स्नानमात्रेण शुध्यति ॥१०६५॥
मत्यैकरात्रं नाश्नीयात् पञ्चगव्यं पिवेत् ततः ।
उदक्ययोर्यदान्योन्यमसम्बन्धः सवर्णयोः ॥१०६६॥
स्पर्शो दम्पत्याः स्नात्वातु तस्मिन्नाद्याच्छुचिर्भवेत ॥

---

१(*) खर्व्व मव, कांस्य पात्रमिति कै(च)न विदः ।
२(†) 'उदक्यर्द्धे सगोत्रे' इति पाठान्तरम् ।

**तस्मिन् (अत्र) स्पर्शदिने।**

मत्यातु नाद्यादाशुद्धेर्भुंक्ते चेत् प्रतिवासरम्।
उपोषणं तदा केचिदाहुस्तद्दिन संख्यया ॥१०६७॥
उपवासेत्वशक्ताचेत् तत समं दानसमाचरेत्।
संभाषेतां स्पृशेतां वा ब्राह्मणि च रजस्वले १(०) ॥१०६८॥
आस्नानकालान्नाश्नीत शुभेमत्या मिथः कचित्।
स्नात्वोपवासं कुर्य्याच्च पञ्चगव्येन शुध्यति ॥१०६९॥
एवमभ्यासतश्चाब्दप्रायश्चित्तं समाचरेत्।
मत्या रजस्वलान्योन्यं वृषलीं ब्राह्मणी स्पृशेत्।
ब्राह्मण्याः कृच्छमेकं तु शूद्री पादेन शुध्यति ॥१०७०॥

580. **इति काश्यपः।**

रजस्वला सूतिका वा चण्डालं यदि संस्पृशेत्।
आस्नानकालान्नाश्नीयादति कृच्छ्रं समाचरेत् ॥१०७१॥
चण्डालं सार्त्तवा नारी संस्पृशेद् योजनान्तरे।
वाग्यता वहिरासीना स्नानकालादुपोषयेत् ॥१०७२॥
प्राजापत्यं चरेत् पश्चात् पञ्चगव्यं ततः पिवेत्।
विप्रान् द्वादशसंख्याकान् भोजयित्वा विशुध्यति ॥१०७३॥
पुष्पिणी संस्पृशेन्मोहादशुद्धं वा नरं स्त्रियम् २(†)।
स्नानादर्वाङ् न भुञ्जीत भुक्त्वा कृच्छ्रं समाचरेत् ॥१०७४॥
स्पृष्ट्वोदक्यं पञ्चनखान् द्विशफैकशफान् स्पृशन्।
अण्डजानि च सर्व्वाणि नाद्यादास्नान वासरात् ॥१०७५॥

581. **पराशरः,—**

रजस्वला यदा दष्टा शुना जम्बुकरासभैः।
पञ्चरात्रं निराहारं पञ्चगव्येन शुध्यति ॥१०७६॥
ऊद्र्ध्वं तु द्विगुणं नाभेर्वक्त्रे तु त्रिगुणं तथा।
चतुर्गुणं स्मृतं मूर्द्ध्नि दशाऽन्यत्रा व्रती भवेत् ॥१०७७॥ इति।

---

१(०) 'ब्राह्मण्येच रजस्वले' इति भिन्नः पाठः।
२(†) 'पतिता' इति भिन्नः पाठोऽस्ति।

582. **उशनाः,**

ज्वराभि भूता या नारी रजसा च परिप्लुता ।
कथं तस्या भवेच्छौचं शुद्धिः स्यात् केन कर्म्मणा ॥१०७८॥
चतुर्थेऽहनि संप्राप्ते स्पृशेदन्यातुरां स्त्रियम् ।
सा सचैलावगाह्याप: स्नात्वा स्नात्वा पुनः स्पृशेत् ॥१०७९॥
दश द्वादशकत्वो वा आचामेत् तु पुनः पुनः ।
अन्ते च वाससां त्यागस्ततः शुद्धा भवेत् तु सा ॥
दद्याच्छक्त्या ततो दानं पुण्याहे न विशुध्यति ॥१०८०॥ इति ।

**इदमातुरमात्रपरम् ।**

आतुरस्नान उत्पन्ने दशकृत्वोह्यनातुरः ।
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत् स आतुरः ॥१०८१॥

583. **इति पाराशरोक्तेः ।**

अन्योऽत्र विशेषः प्रथमस्तवकादौ तत्र तत्र द्रष्टव्यः ।

**इति रजस्वला शौचम् ॥**

## अथदाहाङ्गकृत्यम् ।

—*—

एवं संस्कारप्रसङ्गेन प्रसक्तानुप्रसक्तमुक्त्वा तदुत्तरकर्त्तव्यमुच्यते ।
एवं शवं संस्कृत्य १(*) कर्त्ता स्वशिरसि स्कन्धे वा जलपूर्णं सच्छिद्रं
कुम्भमादाय चितेः प्रदक्षिणत्रयं कृत्वा प्रेतपादसमीपे कुम्भं पातयित्वा
एकस्मिन् कपाले जलमादाय सकृत् प्रदक्षिणं कृत्वा तेन जलेन चितिं
584. प्रोक्ष्याभ्युपेयादित्युक्तं स्मृतिदर्पणे ।

विवाहे च श्मशाने च यदा प्रेतक्रिया भवेत् ।
स्कन्धे शिरसि वा कुम्भं कुर्य्यादिति विनिर्णयः ॥१०८२॥
ततश्चैवोर्द्ध्वं कुम्भस्य धारया परिवर्त्तयन् ।
सव्येन तु त्रिरेव स्यात्तं भिन्द्यादश्मना सकृत् ॥१०८३॥

---

१(*) व्वीक्तकथित प्रमाणेनेति । अवन्यायात् प्रदक्षिण कुर्य्यात् । सयसतृक्कारात्परं प्रदक्षिण-
मित्यर्थः ।

अधः शिरोगतं कुम्भमन्त्रगभेदाय पातयेत् ।
कपालोदकमादाय चित्यादीनि प्रतर्पयेत् ॥
मुक्तकेशाः कनिष्ठाश्चागच्छेयु र्वृद्धपूर्व्वकाः ॥१०८४॥ इति ।

585. **रेणुरपि ।**

उदधारामविच्छिन्नां सिञ्चन् न्यायात् प्रदक्षिणम् ।
स्कन्धावसक्तकुम्भेन पादतः परितश्चितिम् ॥१०८५॥

तं भिन्द्यादश्मनान्यैर्वा तिष्ठन्नेवोत्सृजेत्ततः ।
चेत् पुरः पतितः श्रेयान् पापीयान् पश्चिमे भवेत् ॥१०८६॥ इति ।

**इदं सर्व्वमुत्तरीयधारणादि-पूर्वं कुर्य्यादित्युक्तं स्मृति—**

586. **संग्रहे** १(+) ।

मुण्डयित्वा शिरः पुत्रः कुर्य्यात् प्रेतक्रियां यमी ।
प्राजापत्यं त्रिकृच्छ्रं वा प्रायश्चित्तं समाचरेत् ॥१०८७॥

प्रेतमाच्छाद्य वस्त्रेण नूतनेन यथाविधि ।
उत्तरीयं तृतीयेन भागेन परिकल्पयेत् ॥१०८८॥

587. **इति आपस्तम्ब कारिकायाम् ।**

कण्ठसूत्रं कर्णपत्रे त्यक्त्वात्र पतिसन्निधौ ।
पश्चात् संगाहयेत् कर्षरात्रौ वा दशमेऽहनि २(‡) ॥१०८९॥

मृते भर्त्तरि या नारी उदक्या यदि विद्यते ।
श्राद्धशेषं प्रकुर्व्वीत स्नात्वा सूत्रं विमुञ्चति ॥१०९०॥ इत्यादि ।
इति श्रीमद्विद्वज्जन कृपापात्रीभूतेन श्रीमदनरत्नभट्टेन विरचिते विधानपारिजातेऽग्निसंस्कारविधानम् ॥

—*—

१(+) 'उत्तरीय धारणादिः' इति भिन्नः पाठः ।

२(‡) 'करीषाग्निः पुमान् कर्षूः कुल्यायामपि च स्त्रियाम्' इति रभसः । अथवा कर्षूरिमित कुल्यादिजले संगाहनम् ।

# अथोदकदानविधानम् ।

—*—

588. **तत्र वजवापः,—**

प्रेतमरण्यं नीत्वा यथोक्तमग्निं गमयित्वा अनवेक्षमाणा आयान्त्येकवाससो रीतीभूताः कनिष्ठपूर्व्वाः यमगाथां गायन्तो यमसूक्तं च १(०) जपन्तोऽहरहर्नीयमानोऽपि गामश्वं पुरुषं पशुम् २(†) वैवस्वतो न तृप्येत सुरया इव दुर्मतिरित्युदकान्तं गत्वा सकृद्दुर्म्मज्ज्या अप्सु सव्यस्य पाणेः कनिष्ठिकयावलिखन्ति, कनिष्ठया यमिति तस्मिन्नेकमुदकाञ्जलिं प्रेताय दद्युरमुष्मै स्वधेति सव्याङ्गुष्ठिना कङ्कनरूपेण लिखन्तश्चलिखन्तः पापमिति ।

अस्यार्थः । अनवेक्षमाणाः श्मशानमितिशेषः । रीतीभूताः पंक्तीभूताः अरोतीभूता इति पाठे उद्विग्ना इत्यर्थः । कनिष्ठः पूर्वो येषामिति बहुव्रीहिणा कनिष्ठानग्रे कृत्वेत्यर्थः । दुर्मतिर्मद्यपः, कनिष्ठं पापमिति मन्त्रेण स्थले रेखायामुदकं दद्युः । सव्याङ्गमवलिखन्ति कङ्कनस्वेरूपेण प्रसारिताङ्गुलिना कण्डूयन्ति । तत्र मन्त्रोऽवलिखन्तः पापमितिव्याख्ये पारस्करोऽपि । संयुक्तं मैथुनं वोदकं याचेरन्नुदकं करिष्यास्यह मति कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते कुरुध्वमेवेतरस्मिन् सर्व्वज्ञातयोभ्यवयन्त्यासप्तमात् पुरुषाद्दशमाद्वा, समानग्रामवासे यावत् सम्बन्धमप्यनुस्मरेयुरेकवस्त्राः प्राचीनावीतिनः सव्यस्यानामिकयाऽपनोद्य, अपनः शोशुचदघमिति दक्षिणमुखा निमज्जन्ति । प्रेतायोदकमि ओतिं । सकृत् प्रसिञ्चन्त्यञ्जलिनाऽसावेतत्ते उदकमिति । संयुक्तं विद्यया उत्तरदानाभिज्ञमिति यावत् । मैथुनं श्यालकं कुरुध्वमित्यादि याचितस्योत्तरं यावत्सम्बन्धमनुस्मरेयुरिति । यावति स्ववंशजत्वं नाम च ज्ञायते तावति प्रेतीभूते निमज्जन्ति । आसप्तमादित्यादिकं तु संबन्धज्ञानोपयोगितयोक्तम् । सव्यानामिकया

---

१(०) यमसूक्तं ऋग्वेदे दशममण्डलेऽस्ति ।

भगवतोरामचन्द्रस्य श्मशाननयनकाले यमगाथाः पठिताः यमसूक्तान्यपि ।

अत्र 'सुरापइवदुर्मदः' इति भिन्नः पाठः ।

२(†) वचनमिदं पारस्करगृह्यसूत्रभाष्येऽस्ति ।

वामहस्तानामिकयाऽपनोद्योदकमित्यनुपज्यते। अपन इति स्नानमन्त्रः स्त्रीं विना पठणीयः। अमन्त्रा हि स्त्रियो मता इति बौधाय—
589. नोक्तेः शङ्खलिखितस्मृतिश्च॥

—*—

## अथोदक क्रिया।

—*—

प्रेतस्य बान्धवोऽपसव्ये वासोयज्ञोपवीते कृत्वाऽसावैतत्त इति। नोद्धर्षये त्र्यङ्गमिति शेषः १(+)। प्राग्दक्षिणमुखाः आग्नेयाभिमुखाः। राजन्यवैश्या २(०) अप्यपसव्ये वासोयज्ञोपवीते कृत्वेत्यनेन
590. क्षत्रियवैश्ययोरुत्तरीयाधिक्यं दर्शयति, ब्राह्मणानां त्वेकवस्त्रत्वं पारस्करेणोक्तत्वात् ३(†)।

591. आश्वलायनगृह्यमपि सव्यावृत्तयो व्रजन्त्यनवेक्षमाणा यत्रोदकमवहद्भवति तत् प्राप्य सकृदुन्मज्य एकाञ्जलिमुत्सृज्योत्तीर्य्यान्यानि वासांसि परिधाय सकृदेव निपीड्योदकदेशान् विसृज्यासते।
प्राङ्नक्षत्रदर्शनादादित्ये दृश्यमाने प्रवेश्यापूर्व्वाह्मणानामनुमत्या वेति
592. स्मृतिमञ्जर्य्युक्तं वलित्रयमुक्तम्।

तद्यथा,—

प्रेतं च मनसा ध्यात्वा दद्यात्तानुदकाञ्जलीन्।
शवाय प्रत्यहं दद्याद्दशाहाद्विरमेत्ततः॥१०६१॥
तत्र मुक्तशिखाः सर्व्वे यावत् सम्बन्धसंस्मृतिः।
स्नात्वा सचैलमाबध्य शिखामाचम्य वाग्यताः॥१०६२॥
स्थले तस्योदकं दद्युर्नामगोत्रेण वाश्मनि।
सव्योत्तराभ्यामासीनाः सिञ्चेयुः पितृदिङ्मुखाः॥१०६३॥
सकृद् दूर्वातिलैर्युक्तं सर्व्वे तेऽप्यार्द्रवाससः।
पाषाणे तत्र चाधाय तत्र दद्युः समाहिताः॥१०६४॥

---

१(+) "उद्ववर्त्तयेदङ्गमिति' भिन्नः पाठः।

२(०) पञ्चराजन्याः क्षत्रियाः, वैश्यावनिजः विश इति। लक्षणात्पुमाध्यास्त्रनियमेन।

३(†) पारस्करगृह्यसूत्रे तद्दमाध्ये टीकायाञ्चास्ति।

ब्राह्मणस्य शिला श्वेता क्षत्रियस्य तु लोहिता ।
विट्शूद्रयोः पीतकृष्णा प्रशस्ता च शिला मता ॥१०६५॥
दशाहादित्यशौचादिलक्षणम् ।
तेन क्षत्रियादेर्यावदशौचं जलाञ्जलिदानं स्यात् ।

593. **तथा हि ब्राह्मे,—**

कर्त्तव्यं तैः सचैलं तु स्नानं सर्व्वमलापहम् ।
ततः पाषाणपृष्ठे तु सर्व्वैर्देयं तिलोदकम् ॥१०६६॥
एकेनैकेन देयास्तु विप्रायाञ्जलयो दश ।
राज्ञे द्वादश देयास्तु वैश्याय दश पञ्च च १(‡) ॥
त्रिंशच्छूद्राय देयास्तु प्रेतभूमिगताय च ॥१०६७॥
इति विशेषश्रवणात् एकत्रिसंख्ययोर्यथेच्छं वा व्यवस्था द्रष्टव्या ।

594. **याज्ञवल्क्योऽपि,—**

सप्तमाद् दशमाद् वापि ज्ञातयोऽभ्युपपत्तयः ।
आपो नः शोशुचदघमनेन पितृदिङ्मुखाः ॥१०६८ इति ।
अत्र सप्तमाद् दशमाद् वाऽध इति क्वचित् पाठः । तत्र सप्तमात् पुरुषाद् दशमाद् वाऽध इति व्याचक्षते २(+) ।

**अन्ये त्वेवमाहुः—**

सप्तमाद्दिवसादधः प्रथमतृतीयसप्तमदिनेषु मिलिता ज्ञातयो येऽभ्युपयन्तीति । ज्ञातयः सपिण्डाः समानगोत्राश्च सप्त दश वा दिनानि-
595. स्नात्वा प्रेताय तिलाञ्जलिं दातुं चापोऽभ्युपेयुरिति हेमाद्रिः ।
596. प्रथम तृतीयसप्तमनवमेषूदकक्रियेति गौतमस्मृतेरेते वापोऽभ्युपेयुरिति ।

**केचित्तु,— अत्र यथा सम्भवविकल्पव्यवस्था ।**

597. **इदं कामोदकमित्याह याज्ञवल्क्यः,—**

कामोदकं सखिप्रोक्त स्वस्रीयश्वशुरर्त्विजः ।
सकृत् प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः ॥१०६९॥ इति ।

---

१(‡) 'शुध्येद्विप्रोदशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रोमासेन शुध्यति' इति मनुः । एतत् संख्यानुसारेणाञ्जलयः ।

२(+) 'सपिण्डता पुरुषेसप्तमे विनिवर्त्तते । समानोदकभावस्तुनिवर्त्तताचतुर्दशात् ।
जन्मनामस्मृतेरेवि तत्परं गोत्रमुच्यते' ॥
इति विधाद चिन्तामणि-मिताक्षरायाञ्च स्मृतः ।

598. **बौधायनोऽत्र विशेषमाह,—**

पिण्डेष्वासप्तमाद्दानं त्रिवर्षेषु विधीयते ।
आद्यं तु जननाच्चापि नाद्यान्तं तस्य कारयेत् ॥११००॥
अत्रत्यासु च कन्यासु प्रोक्तास्वेकाहं कुर्वते इति ।

599. **प्रचेतास्तु,—**

दिने दिनेऽञ्जलीन् पूर्णान् प्रसिञ्चेत् प्रेतकारणात् ।
तावद्वृद्धिश्च कर्त्तव्या यावत् पिण्डः समाप्यते ॥११०२॥

**इत्यन्तर्जलिवृद्धिरुच्यते १(*) ।**

600. **कुशविषये विष्णुपुराणेच ,—**

सपिण्डीकरणं यावद्दृजुदर्भैः पितृक्रिया ।
सपिण्डीकरणादूर्ध्वं द्विगुणै र्विधिवद् भवेत् ॥११०३॥ इति ।

**द्विगुणैर्भुग्नैःकुशैरित्यर्थः ।**

601. **बृहस्पतिः,—**

प्रथमेऽह्नि तृतीयेऽह्नि सप्तमे नवमेऽपि ताः ।
तेन व्रात्या विधर्म्मिण्यः कुर्व्वन्त्येव यथाविधि ॥
गर्भभर्त्तृद्रुहश्चैव स्युर्याश्चैव योषितः ॥११०४॥

**इति सम्प्रदान(घ)विशेषेऽपि प्रतिषेधमाह ।**

पाषण्ड्योनाश्रिताःस्तेन भर्त्तृघ्न्यः कामगादिकाः २(†) ।
सुरापा आत्मघातिन्योनाशौचोदकभाजनम् ॥११०५॥

**तथा,—**

चण्डालादुदकात् सर्पाद्ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्म्मणाम् ॥११०६॥
उदकं पिण्डदानं च प्रेतेभ्यो यत् प्रदीयते ।
नोपतिष्ठति तत् सर्व्वमन्तरीक्षे विनश्यति ॥११०७॥
नाशौचं नोदकं नाश्रु न दाहाद्यं न कर्म्म च ।
ब्रह्मदण्डहतानां च न कुर्य्यात् करधारणम् ॥११०८॥ इति ।

---

१(*) अत्र पाठान्तरं—'इत्यनेनाञ्जलिवृद्धि रुच्यते' ।

२(†) अत्र कामगाः—स्वेच्छाचारिण्यः सुरापाः मद्यपानरताः ।
उद्बन्धनादिना स्ववधकारिण्य-श्चात्मघातिन्यश्च ।

**प्रमादादिना करणे प्रायश्चित्तमुक्तम्, तेनैव १(०) ।**

कृत्वाग्निमुदकं स्नानं स्पर्शनं वहनं कथम् ।
रज्जुच्छेदाश्रुपातं च तदा कृच्छ्रेण शुध्यति ॥११०९॥ इति ।

**इदं सर्व्वमकृतनिष्कृतिविषयं महापातकमुक्तम् ।**

दवात् स्यादग्निमान् यदि, पुत्रादिः पालयेदग्नीनित्युक्ते आदोषसंक्षयात् ।
प्रायश्चित्तं न कुर्य्याद् यः कुर्व्वन् वा म्रियते यदि ।
गृह्यं निर्वापयेच्छ्रौतमखस्यास्य परिच्छदम् ॥१११०॥

**तथा,—**

प्रक्षिपेदप्सु वैतानमावसथ्यं चतुष्पथे ।
पात्राणि च दहेदग्नौ यजमाने वृथामृते २(†) ॥११११॥

**इत्यादिविशेषस्मृतेः ॥**

—*—

602. **अथ शोकापनोदः । तत्र याज्ञवल्क्यः ।**

—*—

कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान् ।
स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥१११२॥
मानुष्ये कदलीस्तम्भेनिःसारे सारमार्गणम् ।
यः करोति ससंमूढोजल वुद् वुद सन्निभे ॥१११३॥
मा शोकं कुरुतानित्ये सर्वस्मिन् प्राणधर्मिणि ।
धर्मं कुरुत यत्नेन यो वः साह्यं गमिष्यति ३(‡) ॥१११४॥
सर्व्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥१११५॥
पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ।
कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥१११६॥

---

१(०) बृहस्पतिना इति ।

२(†) प्रागप्युक्तं साग्निविषये दाह प्रकरणे ।

३(‡) 'स्वर्गं गमिष्यति' इति पाठान्तरम् ।

,, अनित्यानि शरीराणि, अनित्याश्चाम्भाः सर्व्वे, वाताभ्रविभ्रममिदं वसुधाधिपत्यम्, इत्यादीनि संसारस्यानित्यत्वसूचकानि वाक्यानि सन्ति शास्त्रेषु ।

गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्त्यलोको न यास्यति ॥१११७॥

श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः ॥१११८॥

इति संश्रुत्य गच्छेद्गृहं बालपुरः सराः १(*) ।
एवमस्मिन्निरालम्बे काले सततयायिनि ॥१११९॥

न त······स ·····भिस्थितिर्यस्य भवेदुत ।
गङ्गायाः सिकताधारास्तथा वर्षति वासवे ॥११२०॥

शक्या गणयितुं लोके न व्यतीताः पितामहाः ।
चतुर्दश विनश्यन्ति कल्पे कल्पे सुरेश्वराः २(†) ॥११२१॥

सर्व्वलोकप्रधानश्च मनवश्च चतुर्द्दश ।
वहूनीन्द्रसहस्राणि दैत्येन्द्रनियुतानि च ॥११२२॥

विनष्टानीह कालेन मनुष्यस्यच का कथा ।
राजर्षयश्च वहवः सर्व्वे समुदिता गुणैः ॥११२३॥

देवर्षयश्च कालेन सर्व्वे ते निधनं गताः ।
ये सर्व्वथा जनत्राण सृष्टि संहृति कारिणः ॥११२४॥

तेऽपि कालेन लीयन्ते कालोहि वलवत्तरः ।
अस्मिश्च सर्व्वं कालेन परलोकाय नीयते ॥११२५॥

कर्मपथ्यौदनं जन्तुस्तत्रका परिदेवना ।
जातस्य हि ध्रुवोमृत्यु ध्रुवं जन्म मृतस्य च ॥११२६॥

अर्थे दुष्परिहारेऽस्मिन्नास्ति शोके सहायिता ।
शोचन्तो नोपकुर्वन्ति मृतस्येह जना यतः ॥११२७॥

अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः ।
सुकृतं दुष्कृतं यस्य सहाये तस्य गच्छतः ॥११२८॥

---

१(*) संस्मृत्य इति भिन्नः पाठः । शास्त्रवाक्यं सुहृद्भिः स्मरण् श्रीपरेशमाश्रयेच्चिन्तयेच्च ।

२(†) सुरेश्वराः, चतुर्द्दश संख्यकाइन्द्राः । 'इन्द्राश्चतुर्द्दश' इति । मनवश्च— स्वायम्भुवादयः ।

**एवं विदित्वा च,—१(*) ।**

बान्धवैस्तस्य किं कार्य्यं शोचद्भिरथवा तथा ।
बान्धवैर्नाम शोचद्भिः ख्यातिं प्रेतो न विन्दति ॥११२९॥
आक्रन्दन्तोऽश्रु पाताश्च मृतस्यानुपकारकाः ।
एवं विदित्वा मतिमान् कश्मलं परिवर्जयेत् ॥११३०॥
नाक्रन्दितं भवेच्छ्राद्धं तदा शोके कदाचन ।
क्रियाभिः कुरुते साह्यं नास्ति शोके सहायता २(†) ॥११३१॥
तस्मात् सपिण्डैः साकुल्यैः सुहृत्सवन्धिवान्धवैः ।
मृतस्य सलिलं देयमुपकाराय तस्य तत् ॥११३२॥ इति ।

603. **रामायणेऽपि,—**

रामायणेऽपि शोचमानाश्च सस्नेहा वान्धवाः सुहृदस्तथा ।
पातयन्ति गतस्वर्गमश्रुपातेन राघव ॥११३३॥
श्रूयते हि रघुव्याघ्र पुरा परमधार्म्मिकः ।
भूरिद्युम्नो गतः स्वर्गं राजा पुण्येन कर्म्मणा ॥११३४॥
स पुनर्वन्धुवर्गस्य शोकवाष्पेण राघव ।
नष्टो वै क्षत्रिये धर्म्मे पुनः स्वर्गान्निराकृतः ॥११३५॥ इत्यादि ।

604. **श्रीमद्भगवद्गीतायामपि,—**

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनि धनान्येव तत्र का परिवेदना ॥११३६॥
देहिनोऽस्मिन् यथादेहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिः धीरस्तत्र न मुह्यति ॥११३७॥ इति ।

**अन्यत्रापि,—**

यथा काष्ठस्य काष्ठे न समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद् भूत समागम इति ॥११३८॥

**इति श्रीविधान पारिजाते शोकापनोदः ॥**

—*—

---

१(*) एवं शास्त्रवाक्यं ज्ञात्वा स्वर्गजनकं कृत्यमनुष्ठेयम् ।

२(†) साम्यं इति पाठान्तरम् ।
साह्यमिति पाठे स्वर्गाय, स्वर्गार्थं सहायत्वं कुर्य्यादिति च ।

# अथ गृहप्रवेशन विधानम्।

—*—

605. **तत्र याज्ञवल्क्यः,—**

इति सञ्चिन्त्यगच्छेयुर्गृहं लघुपुरः सराः १(*)।
विदश्य निम्बपत्राणि दशनैर्द्वारि वेश्मनः ॥११३९॥

आचम्याग्निं च सलिलं गोमयं गौरसर्षपान्।
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ॥११४०॥

606. प्रवेशनादि कङ्कृतसंस्पर्शिनामपि। प्रचेताः,—उत्तीर्य्य प्रेतसंस्पृष्टान्युत्सृज्य वासांसि परिधायेतराणि। गृहद्वारे तस्मै प्रेताय पिण्डं दत्वा पश्चाद् दूर्व्वाप्रवालान् गोमयमग्निं वृषभं चालभ्य प्रविशन्ति। घृतगौरसर्षपैर्मूर्द्धान मङ्गानि चालभेरन्। शस्त्रपाणयो यथोक्तकालंनियतावश्यकान्युभय कालं कुर्य्यु र्भूमौ माल्यं पिण्डं पाणीयं प्रेताय वा दस्युरिति।

उभयकालमिति पूर्व्वाह्णे पिण्डदानं रात्रावाकाशे पयस उदकस्य च दानमित्यर्थः।

607. **हारीतोऽपि,—**

अथ कणीयांसो ज्येष्ठ प्रथमाः प्रत्यायन्ति। न प्रेतस्पर्शिनो ग्रामं प्रविशेयुरानक्षत्र दर्शनाद्ब्राह्मणानुमत्या वा। काष्णार्यस पाणयोऽधः शायिन उपवेशिन एकं पिण्डमुदकाञ्जलिं च निरस्येयुस्त्रिषु पर्णपुटेषु अश्नीरन्निति।

अत्र काष्णार्यसं खड्गादि, पिण्डोदकादि प्रतिदिनं भवति। शमीमालम्भते शमी पापं शमयत्वित्यश्मानमालम्भतेऽश्मवत्स्थिरो भूयासमित्यग्निमालम्भते'ऽग्निर्णः शर्म यच्छत्वि'त्यन्तरा गामजं च स्पृशति। क्रीत्वा लब्ध्वा वान्यगृहादेकान्नमलवणमेकां रात्रिं भुञ्जीरंस्त्रिरात्रं च कर्म्मोपरमणमिति।

---

१(*) लघुपुरःसराः—बाल—कनिष्टादि पूर्व्वकाः।

अन्तराशब्दो मध्यवचनः । मध्यश्च गृहप्रवेशापेक्षया । एकान्नमेक-
भक्तम् । एकं च तदन्नं चेति कर्म्मधारयमाश्रित्यै कान्नं व्रीहिमयं
608. वेति हरिहरो व्याचख्यौ १(*) । एकां रात्रिम्, अहोरात्रं
प्राप्येतिशेषः । तेन गृहं प्राप्य यद्युपवासः कर्त्तुं न शक्यते
तदा क्रीत्वाऽन्यगृहाल्लब्ध्वा वाऽलवणमेकवारं दिवा सहभुञ्जीरन् ।
609. प्राप्यगृहानिति कल्पतरौ पाठः । अन्येत्वेकां रात्रिमिति तदोपोष्येति
शेषः । नैतस्यां रात्रावन्नं पचेयुरिति भुक्तिसाधनपाकनिषेधादर्थाद्भो-
610. जनस्यापि निषेध इत्याहुः । एतच्चाश्वलायनसूत्रे स्फुटं प्रतीयते ।
611. त्रिरात्रं कर्म्मोपरमणमिति अङ्गसंवाहनतैलाभ्यङ्गादि भोगहेतुतया
कर्म्मत्याग इत्यपरे पारस्करसूत्रेऽपि २(†) । प्रेतस्पर्शिनो ग्रामं
न प्रविशेयुरानक्षत्रदर्शनाद्रात्रौ चेदादित्यस्येति ब्राह्मणानुमत्या वेति
612. हारीतः ।

अयमर्थः । यदि नक्षत्रादित्योदयप्रतीक्षणेऽशक्तिर्भवति तदा ब्राह्मणा-
613. नुमतिं गृहीत्वा पूर्वमेव गृहं प्रवेष्टव्यमिति वसिष्ठः ।

अथ प्र(स्र)स्तरे त्र्यहमनन्तरमासीरन् । क्रीत्वोत्पन्नेन वा
वर्त्तेरन्निति । अत्र प्रस्तरे-तृणमयशयनीये ३(‡) ।

614. पारस्करश्च,—उत्तीर्णाच्छुचौ देशे शाद्वलवत्युपविष्टांस्तत्रैनानपवदेयुरन-
पेक्षमाणा ग्राममायान्ति, रीतीभूताः कनिष्ठपूर्व्वा निवेशनद्वारे, पिचुमर्द-
पत्राणि विदश्याचम्योदकमग्निं गोमयगौरसर्षपांस्तैलमालभ्याश्मानमा-
क्रम्य प्रविशन्ति, त्रिरात्रं ब्रह्मचारिणोऽधःशायिनो न किंच कर्म्म
कुर्य्युर्नप्रकुर्व्वीरन् । क्रीत्वा लब्ध्वा वा दिवान्नमश्नीयुरमांसम् प्रेताय
पिण्डं दत्वाऽवनेजनदानप्रत्यवने जनेषु नामग्राहमिति ।

---

१(*) पारस्कर गृह्य सूत्र भाष्ये ।

,, अन्येतु—धर्म्मशास्त्र निबन्ध कृतः ।

२(†) आश्वलायन सूत्रं पारस्कर सूत्रञ्च, तद्भाष्य इत्यादिकमपि ।

,, आदित्यस्याद र्शनेच, ब्राह्मणाना मनु मत्यावेति गृहं प्रविशेत् ।

३(‡) कुशकाशमयेच ।

615. आश्वलायनोऽपि, ज्येष्ठपुरः सराः कनिष्ठजघन्या निःसृत्य कनिष्ठपुरः सराः ज्येष्ठजयन्याः प्रविशेयुः । प्राप्यसद्योऽग्निमश्मानं गोमयमक्षतान् तिलमप उपस्पृशन्ति । नैतस्यां रात्रावन्नं पचेयुस्त्रिरात्रमक्षारलवणाशिनः स्युर्द्वादशरात्रं महागुरुस्थितिः १(*) ।

सदोगृहम् । एतस्यां रात्रावन्नापचनमुपवासपरम् । उपवासाशक्तौ क्रीतलब्धान्नभोजनं, महागुरवो मातापितरावाचार्य्यश्चेति ।

616. **लवणविशेषो ब्रह्माण्डे,—**

सैन्धवं लवणं चैव तथा मानससम्भवम् ।
पवित्रे परमे ह्येते प्रत्यक्षमपि नित्यशः ॥११४१॥

**तथा सद्युत्पन्ननियमः ।**

सोमो मांसं यच्चानुपस्कृतम् , अक्षारलवणं चैवप्रकृत्या हविरुच्यते—

617. **इति मनुः ।**

अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् ।
मांसं स्याच्चानुपस्कृतम् २(†) ॥११४२॥
अक्षारलवणं चैव प्रकृत्या हविरुच्यते ॥ इति ।
स्त्रियः शयीरंश्च पृथक् क्षितौ ।

618. **इति बृहस्पतिः ।**

अधः शय्यासना दीना मलिना भोगवर्जिताः ।
अक्षारलवणान्नाःस्युः क्रीतलब्धाशनास्तथा ॥११४३॥

अधःशय्यासना इत्यनेन खट्टापीठादिनिवृत्तिः । दीनाः हर्षशून्याः । मलिनाः मलापकर्षविमुखाः । भोगवर्जिताः स्रक्चन्दन ताम्बूलगीतनृत्यादिशून्याः ।

619. **ब्राह्मे.—**

अशौचमध्ये यत्नेन भोजयित्वा स्वगोत्रजान् ।
तेन चाप्यायते जन्तुर्यच्चाश्नन्ति स्व बान्धवाः ॥११४४॥

---

१(*) महा गुरुष्विति भिन्नः पाठः ।

२(†) 'अनुपाकृत मांसानि' इति मनुराह ।

,, देवाद्युद्देशेन नानीतानि मांसानीति ।

620. **दशाहाशक्तौ मनुः,—**

प्रथमेऽह्नि तृतीयेऽह्नि सप्तमे नवमे तथा ।
ज्ञातिभिः सह भोक्तव्यमेतत् प्रेतेषु दुर्लभम् ॥११४५॥ इति ।

621. **गृह्यकारिकायां,—**

तत्र प्रेतोपकृतये दशरात्रमखण्डितम् ।
कुर्य्यात् प्रदीपं तैलेन वारिपात्रं च मार्त्तिकम् १(*) ॥११४६॥
भोज्याद्भोजन कालेषु भक्तमुष्टिं च निर्वपेत् ।
नामगोत्रेण संमन्त्र्य धरिन्यां पितृयज्ञवत् ॥११४७॥ इति ।

**इदं पिण्डनिर्वपनं प्रेतोद्देशेन भोजनकाले ।**

622. **तत् प्रकृत्याह शौनकोऽपि,—**

तस्मिन्नऽनि शिक्यादावाकाशे मृन्मये जलम् ।
प्राचीनावीतिना स्थाप्यं प्रेतात्र स्नाहिमन्त्रतः ॥११४८॥
पात्रान्तरे तथा क्षीरं प्रेतेदं पिव मन्त्रतः २(†) ।
न पचेयुर्गृहे तस्मिन्नन्नं वै नापि किञ्चन ॥११४६॥
अयाचिता हृतेनान्य गृह पक्वेन गोत्रजाः ।
क्रीतान्ने नापि वर्त्तेरं स्त्रिरात्रं साग्निका अपि ॥११५०॥
लवणक्षारमाषान्ना पूपमांसानि पायसम् ।
वर्जये दाहृतान्नेषु वालवृद्धातुरैर्विना ॥११५१॥
उपवासो गुरौ प्रेते पत्न्याः पुत्रस्य वा भवेत् ।
मद्दा गुरुमृतौ तद्वदक्षारालवणाशनाः ॥११५२॥
द्व्यधिकं दशरात्रं स्युर्दानाध्ययन वर्जिताः ।

623. लब्धक्रीताशनास्तस्मिन्नहनीत्युशनोवचः ।
दशरात्रमधः शय्यासनास्ते ब्रह्मचारिणः ॥११५३॥
परस्परम संस्पर्शा दिवैव लघुभोजनाः ।
भवेयुर्मलिना दीनाः सर्व्वभोगविवर्ज्जिताः ॥११५४॥

---

१(*) अत्र मार्त्तिकं—मृत्तिकयानिर्मितं जल पात्रम् ।

२(†) मन्त्रेण क्षीरं दत्वा इदं पिवेति वदेत् ।

,, मेन जलं दत्वा अयं स्नाहि, इत्यातिवाहिकदेहाय वदेत् ।

अतैजसेषु पात्रेषु पाणौ वा मृन्मयेषु वा ।
पर्णपत्रेषु कुर्व्वाणा वान्धवाः स्वर्गमाप्नुयुः ॥
नाल्पायुषः कुले तेषां भवेयुश्च कथञ्चन ॥११५५॥ इति ।

624. **रेणुरपि.—**

दानं प्रतिग्रहः पञ्चयज्ञाः स्वाध्याय तर्पणम् ।
नित्यं नैमित्तिकं श्राद्धं देवतापूजनं तथा ॥११५६॥
परान्नमुपवासं च ताम्बुलं कांस्यभोजनम् ।
भूषणं लेपनं भारं मृत्पिण्डं दन्तधावनम् ॥११५७॥
वर्ज्यानीमानि कर्म्माणि मृताशौचे विशेषतः १(*) ॥११५८॥ इति ।

**इति श्रीमदनन्त भट्टविरचिते विधानपारिजाते**
**गृहप्रवेशनविधानम् ॥**

—*—

## अथ पिण्डोदकदानम् ।

—*—

625. **याज्ञवल्क्यः,—**

पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् २(†) ।
जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृन्मये ॥११५९॥

626. इति पिण्डयज्ञावृ(कृ)ता ।

पिण्डं पितृयज्ञस्येति कर्त्तव्यतया देयमित्यर्थः। दिनत्रयमिति त्र्यहाशौचम्। यत्ते एकाहमित्येकाहाशौचम्। यत्ते प्रेतमुद्दिश्यान्नं जलं क्षीरं च पृथक् पृथगपक्के मृन्मयपात्रे स्थापयेत् ३(‡) ।

627. **गारुडे,**

अपक्के मृन्मये पात्रे क्षीरं दद्याद्दिनत्रये ।
काष्ठत्रये गुणैर्बद्धे प्रतिरात्रं चतुष्पथे ॥११६०॥

---

१(*) विशेषः मृताशौचे, नतु जाताशौचे ।
२(†) 'पिण्ड पितृयज्ञः, इति । पिण्डा यस्मिन् पितृयज्ञेऽसौ पिण्ड पितृयज्ञ इति ।
३(‡) आमं—अपक्क मृन्मयपात्रं, तस्मिन् जलं तिलाक्तं क्षीरं नीरञ्च देयम् ।

प्रथमेऽह्नि द्वितीये च तृतीये च तथा खग।
आकाशस्थः पिबेद्दुग्धं प्रेतो वायुवपुर्धरः ॥११६१॥ इति ।

**अत्रापि दिनत्रयमिति त्र्यहाशौचं यज्ञे ।**

628. **मात्स्ये,**

प्रेतस्य पिण्डदानन्तु द्वादशाहे समापयेत् ।
पाथेयं तस्य तत् प्रोक्तं यतः प्रीतिकरं महत् ॥११६२॥
तस्मात् प्रेतपुरं प्रेतो द्वादशाहेन नीयते ।
गृहादिकं कलत्रञ्च द्वादशाहं स पश्यति ॥११६३॥
तस्मान्निधेयमाकाशे दशरात्रं पयस्तथा ।
सर्व्वतापोपशान्त्यर्थमखदोष विनाशनम् ॥११६४॥

अतो दशरात्रं दशाहाशौचं यज्ञे मृन्मयगतान्न क्षीरोदकनिधानं कार्य्यमिति भावः । अत्र द्वादशाहं पिण्डदान कथनमेकादशाह द्वादशाह—श्राद्धाङ्गभूतपिण्डाभ्यां सहेत्येके व्याचक्षते ।

द्वादशाहा शौचंयज्ञ इत्यन्ये । जलमेकाहमाकाशे स्थाप्यं क्षीरं च
629. मृन्मये इति प्रचेतोवचनम् । तदेकाहाशौच विषयमशक्ति विषयं वेति
630. ज्ञेयम् । अत्र पिण्डदानविधिरुक्तो ब्राह्मे,

प्रथमेऽहनि यो दद्यात् प्रेतायान्नं समाहितः ।
यत्नेनाहःसु चान्येषु तस्मै दद्यात् स एव हि ॥११६५॥
पथि, मृन्मयं भाण्डमादाय नवस्नातः सुसंयतः ।
लकुटं सर्व्वदोषघ्नं गृहीत्वा तोयमानयेत् ॥११६६॥

लकुटग्रहणं कर्त्तुः पुरुषान्तरस्याभावे । तत्सद्भावे तु नैव धार्य्यम् ।

631. **तथा च गोविन्दराज लिखितवृद्ध प्रचेताः,—**

तोयार्थं तु ततो गच्छेद् गृहीत्वा पुरुषं नरः ।
गृहीतलकुटं यत्नात् सर्व्वदुष्टनिवारणम् ॥११६७॥

**ततश्चोत्तर पूर्व्वस्यामग्निं ज्वालयेत्—१(*) ।**

तण्डुलप्रभृतीं स्तत्र प्रक्षाल्य वै पचेत् स्वयम् ।
सुपवित्रैस्तिलैर्मिश्रान् केशकीट विवर्जितान् ॥११६८॥

---

१(*) उत्तरस्यान्दिशि, पूर्व्वस्यां वा दिशि मन्त्रेणवह्निं ज्वालयेदिति ।

तीर्थोपान्ते ततः क्षिप्त्वा विशुद्धां गौरमृत्तिकाम् ।
तत्पृष्ठे संस्तरेद्दर्भान् याम्याग्रांस्तीर्थसम्भवान् ॥११६९॥
ततोऽत्रने जनं दद्यात् संस्मरन् गोत्रनामनी ।
तिल सर्पिर्मधुक्षीरैः संसिक्त मिदमेव हि १(*) ॥११७०॥
दद्यात् प्रेताय पिण्डं तु दक्षिणाभिमुखस्थितः ।
ततः प्रत्यवनेज्याथ पिण्ड पूजां समाचरेत् ॥११७१॥
अर्घ्यैः पुष्पैस्तथा धूपै दीपैस्तोयैश्च शीतलैः ।
ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिण्डमर्चयेत् ॥११७२॥
प्रयाति यावदाकाशं पिण्डाद् वाष्पमयी शिखा ।
तावत्तत् सम्मुखस्तिष्ठेत् सर्वतोऽपक्षिपेत्ततः ॥११७३॥
दिवसे दिवसे पिण्डो देय एव क्रमेण तु ।
सद्यः शौचे प्रदातव्याः सर्व्वेऽपि युगपत्तथा ॥११७४॥
त्र्यहाशौचे प्रदातव्यः प्रथमेऽह्नि एक एव हि ।
द्वितीयेऽह्नि च चत्वारस्तृतीये पञ्च चैव हि ॥११७५॥
एवं दशाञ्जलीन् पक्ष उदपात्रं तथैव च ।
शताञ्जलौ त्रिंशदाद्ये चत्वारिंशत्तु मध्यमः २(†) ॥
त्रिंशच्चान्त्येऽञ्जलीन् दद्यादेवमञ्जलयः शतम् ॥११७६॥ इति

632. **शातातपस्तु प्रकारान्तरमूचे,—**

यथा शौचस्य ह्रासेऽपि पिण्डान् दद्याद्दशैवतु ।
प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः ॥११७७॥
द्वितीये चतुरो दद्यादस्थि सञ्चयनं तथा ।
त्रींस्तु दद्यात्तु तीयेऽह्नि वस्त्राणि क्षालयेत्तथा ॥११७८॥ इति ।

633. **रेणुकारिकापि,—**३(‡) ।

यत्र त्रिरात्रमाशौचं द्वितीयेऽह्न्यस्थि सञ्चयः ।
नव श्राद्धं वृषोत्सर्गं चतुर्थेऽह्नि समाचरेत् ॥११७९॥
त्रयश्चत्वार एव स्युस्त्रयः पिण्डाः क्रमेण हि ॥११८०॥ इति ।

---

१(*) पित्रादीनां नाम गोत्रे उच्चार्य्यावनेजनादिकं दद्यादिति ।
२(†) अत्राशौच ह्रासेऽप्येव पिण्डदानसंख्या नियमउक्तः ।
३(‡) अत्र रेणुः सन्दर्भ प्रणेता धर्म्मशास्त्रे । तदीयकारिका ।

684. **अत्र विशेषमाह ऋष्यश्रृङ्गः,—**

यत्र त्रिरात्रं विप्राणामाशौचं संप्रदृश्यते ।
तत्र शूद्रे द्वादशाहं षट्नवक्षत्रवैश्ययोः ॥११८१॥
सद्यः शौचे प्रदातव्याः सर्व्वेऽपि युगपत्तथा ॥११८२॥ इति ।

635. **उशनास्तु,—**

अशौचेऽपि च कर्त्तव्यमाद्यमेकादशेऽहनि ।
अतीतविषये सद्यस्त्र्यहोर्द्धं वा तदिष्यते ॥११८३॥ इत्याह ।

अत्र देशाचारतो व्यवस्था ज्ञेया १(*) । एकाहाशौचे तु दशाह कृत्यं तस्मिन्नेवाहनि भवति ; द्वितीयेऽह्नि चैकादश कृत्यमिति ढु ण्ढु पद्धतिकारः ।

636. **शङ्खस्तु,—**

सद्यः शौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि ।
स एव दिवसस्तस्य श्राद्ध पिण्डोदकादिषु ॥११८४॥ इति ।

तेनात्र यथादेशाचारं व्यवस्था । पञ्चाशदञ्जलि पक्षेऽपि एवं ज्ञानीयात् ।

637. **ब्राह्मे,—**

एकस्तोयाञ्जलिस्त्वाद्ये पात्रमेकं च दीयते ।
द्वितीये द्वौ तृतीये त्रींश्चतुर्थे चतुरस्तथा ॥११८५॥
पञ्चमे पञ्च षट् षष्ठे सप्तमे सप्त चैव हि ।
अष्टमेऽष्टौ च नवमे नवैव दशमे दश ॥११८६॥
येन स्युः पञ्चपञ्चाशत्तोयस्याञ्जलयः क्रमात् ।
तिलपात्राणि तावन्ति संयुक्तानि तिलादिभिः ॥११८७॥ इति ।
क्षत्रियादेश्च पिण्डाहि दशमे दशमे दश ।

---

१(*) 'यस्मिन् देशे यः आचारःपारम्पर्य्यं क्रमागतः । वर्णानां सान्तरालानां सदाचारः स उच्यते' महर्षिमनुः ।
अत्र पारम्पर्य्यक्रमागः,—आचार्य्य परम्परागतः सः शिष्टाचारः ।
" 'आचारः प्रभवोधर्म्मः' । 'आचारहीना न पुनन्ति वेदाः' ।
अपराचार व्यवस्था याज्ञवल्क्यस्मृतौ वाचस्पतीयेऽस्ति ।

**यः पिण्डादिदाने विशेषस्तत्र,—**

जात्युक्ताशौचतुल्यांस्तु वर्णानां केचिदेव हि ॥११८८॥
देशधर्म्मान् पुरस्कृत्य प्रेतपिण्डान् वपन्ति हि ।
देयस्तु दशमः पिण्डो मासे पूर्णे हि दीयते ॥११८९॥ इति ।

638. **पैठीनसिरपि ।**

अशौचान्त्येऽह्नि वर्णानां दशमं पिण्डमुत्सृजेत् ।
श्राद्धान्ते पिण्डदानान्ते शुद्ध्यर्थं स्नानमाचरेत् ॥११९०॥ इति ।

**यत्तु,—**

ब्राह्मणे दशपिण्डाः स्युः क्षत्रिये द्वादश स्मृताः ।
वश्ये पञ्चदश प्रोक्तास्त्रिंशच्छूद्रे प्रकीर्त्तिताः ॥११९१॥

639. **इति हेमाद्रौप्रचेतोवचनम् ।**

तत्तु प्रेतस्यात्यन्ततृप्ति कामनया न तु नियमेनेति तत्रैवोक्तम् । एतेन दशमपिण्डोत् कर्षपक्षेऽव्यव पिण्डोपदेशमादौ, कथमेकादशाहे श्राद्धमिति कस्यचिदुक्तं परास्तम् । क्षत्रियादिभिरपि सहैकोद्दिष्ट-मेकादशेऽहन्येव कुर्य्यान्न तु सूतकान्त इत्युक्तं—

640. **वृद्धवसिष्ठेन,—**

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
चतुर्णामपि वर्णानां सूतकं तु पृथक् पृथक् ॥११९२॥

641. **लौगाक्षिरपि,—**(१*) ।

आद्यश्राद्धमशुद्धेऽपि कुर्य्यादेकादशेऽहनि ।
कर्त्तुस्तात् कालिकी शुद्धिः पुनरेव स एव सः ॥११९३॥ इति ।
रुद्रगण श्राद्धं तु क्षत्रियादिः सूतकान्ते कुर्य्यादित्युक्तम् ।

---

१(०) लौगाक्षिस्तु,—मीमांसा धर्म्मशास्त्रयोर्निबन्धकारः । धर्म्मसंहिताप्रद वृद्धवसिष्टो वसिष्ठश्च। 'शातातपो वसिष्ठश्च धर्म्मशास्त्र प्रयोजकाः' इति स्मृतौ । अपरे वसिष्ठाः ज्योतिः शास्त्र—रामायण-धनुर्व्वेद प्रयक्तारः आसन् ।

" अथ 'शुद्धोऽपि' इति पाठान्तरम् ।

**642. मात्स्ये,—**

एकादशेऽहनि तथा विप्रा नेकादशैव तु ।
क्षत्रियादिः सूतकान्ते भोजयेदपरान् द्विजान् ॥११९४॥ इति ।

**643. इदं रुद्रगणश्राद्धपरमिति व्याख्यातं मदनपारिजाते ।**

**644. पिण्डप्रमाणं पिण्डदानफलं चोक्तं नारदीये,**

एकोद्दिष्टे सपिण्डे च कपित्थं तु विधीयते ।
नारिकेल प्रमाणं तु प्रत्यब्दे मासिके तथा १(*) ॥११९५॥

तीर्थदर्शे च संप्राप्तः कुक्कुटाण्ड प्रमाणतः ।
महालये गयाश्राद्धे कुर्य्यादामलकोपमम् ॥११९६॥

प्रथमेऽहनि पिण्डेन मुखमस्य प्रजायते ।
चक्षुः श्रोत्रं नासिका च द्वितीयेऽहनि जायते ॥११९७॥

भुजौ वक्षस्तथा ग्रीवा तृतीयेऽहनि जायते ।
ऊरू च पञ्चमे ज्ञेयौ षष्ठे मर्म्मसमुद्भवः ॥११९८॥

सप्तमे त्वक् शिरोऽस्थीनि दन्तलोमानि चाष्टमे ।
नवमे वीर्य्यसम्पत्तिर्दशमे क्षुत्पिपासिके ॥११९९॥

**645. इति बालपिण्डदानं कुशवर्जमुक्तं मरीचिना ।**

प्रेतपिण्डं वहिर्दद्यान्मन्त्रदर्भ विवर्जितम् ।
प्राग् उदीच्यां चरु कृत्वा सुस्नातः सुसमाहितः ॥१२००॥

अकृतचूड़ा वाला ये वाला गर्भाद्विनिः सृताः ।
ये मृताश्चाप्यसंस्कारास्तेभ्यो भूमौ प्रदीयते ॥१२०१॥ इति ।

---

१(*) चादौ पिण्डस्य परिमाणं विल्व कपित्थादिमान मुक्त्वा यथा—
द येन पिण्डेण प्रेतादेः यदङ्गं जायते तदुच्यते ।

२(†) चस्मिन् भट्ट हला युधेनापि निगदितं 'चिरस्थायी न पिण्डं न प्रेतस्य क्रियते सदा'
इत्यादि प्रामाण सर्व्वत्रै ।

तथा,—

शालिना सक्तुना वापि गुड़मूल फलादिभिः।
प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम् ।।१२०२।।

646. **गृह्यकारिकापि,—**

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्।
प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत् ।।१२०३।।
प्रथमेऽहति यो देश आचार्य्यः पात्रमेव च।
उत्तरीयं शिला चैव तदेव स्याद्दशाहिकम् ।।१२०४।। इति।

**विपर्य्यये प्रायश्चित्तमपि। तत्रैवोक्तम्,—**

उत्तरीयशिलाद्यत्र कर्त्तृद्रव्यविपर्य्यये।
पूर्व्वदत्तं जलं दद्यात् पिण्डदानं तथैव च ।।१२०५।। इति।

तथा,—

एकादशाहिकं श्राद्धं पुत्रो वान्यः समाचरेत्।
647. अन्यथा कुर्वतां दोष इति शातातपोऽब्रवीत् ।।१२०६।। इति।

648. **प्रेतपिण्डदान कालस्तु वाराहे,—**

स्थण्डिले प्रेतभागं तु दद्यात् पूर्व्वाह (ह्ण) एव तु।
कृत्वा तु पिण्डसंकल्पं नामगोत्रेण सुन्दरि ।।१२०७।।
पश्चादश्नन्ति गोत्राणि स्वकुल्यास्त्वेकभोजनाः।
न दद्यादन्यगोत्राय भुञ्जते यत एकतः ।।१२०८।। इति।

649. **पिण्डदेश उक्तः ब्राह्मे,—**

ग्रामाद्बहिश्च कर्त्तव्यं पिण्डदानं दशाहनि।
जलाशयसमीपे तु न गृहेषु कदाचन ।।१२०९।। इति।

650. **नद्यादि प्रशस्तदिग्भागे तु गृह्यपरिशिष्टम्,—१(०)**

द्वारस्थ (स्य) दक्षिणोद्देशे पिण्डस्थानं विधीयते।
ग्रामाद्बहिः प्रदद्याद्वा पिण्डदानं च पाक्षिकम ।।१२१०।। इति।

651. **पिण्डदानाकरणे दोषमाह भृगुः,—**

मृतपिण्डास्तु प्रेतानां न दास्यन्ती ह येनराः।
आत्मानं च तथा प्रेत नरक ध्रुवमेष्यति ।।१२११।।

---

१(०) 'पश्चिम दिग्भागे' इति पाठान्तरम्।

क्लिन्नो वा दग्धदेहो वा श्वादिभिर्भक्षिताश्च ये ।
अङ्गमुत् पादयेत्तेषां पिण्डदाने दशाहि के ॥१२१२॥ इति ।

652. **अन्योऽपि विशेषो भविष्ये,—**

प्राग् उदीच्यां चरुं कृत्वा स्नातः प्रयतमानसः ।
पितृशब्दं स्वधा चेह न प्रयुञ्जीत कर्हिचित् ॥
अनुशब्दं तथा चेह प्रयत्नेन विवर्जयेत् ॥१२१३॥
अत्रानुशब्दम् । ये च त्वामन्विति शब्दम् ।
उपतिष्ठतामयं पिण्डः प्रेतायेति समुच्चरेत् ।
उद प्रत्येकं पुष्पं च धूपं दत्त्वा तथैव च ।
अशुद्धिस्त्रिषु वर्णेषु पिण्डं दद्यान्नसंशयः ॥ १२१४॥ इति ।

653. **अन्योऽत्र विशेषो हेमाद्रौ पाद्मे,—**

आशिषो द्विगुणा दर्भा जपाशीः स्वस्तिवाचनम् १(*) ।
पितृशब्दः स्वसम्बन्धः शर्म्मशब्दस्तथैव च ॥१२१५॥
प्रदक्षिणं विसर्गश्च सीमान्तगमनं तथा ।
पात्रासनावगाहश्च उल्मुकोल्लेखनादिकम् ॥१२१६॥
तदा प्रश्नश्च विकरः शेषः प्रश्नस्तथैव च ।
अष्टादश पदार्थाश्च प्रेतश्राद्धे विवर्जयेत् ॥१२१७॥
सपिण्डी करणं यावदृजु दर्भः पितृक्रिया ।
सपिण्डीकरणा दूर्द्धं द्विगुणैर्विधिवद्भवेत् ॥१२१८॥ इति ।
उत्तानं स्थापयेत्पात्रमेकोद्दिष्टे सदा बुधः ।
विकिरंश्चाग्नौ करणमेकोद्दिष्टे विवर्जयेत् ॥१२१९॥

654. **इति शातातपः ॥**

655. **अथ नवश्राद्धानि अङ्गिराः,—**

—०—

प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव नवश्राद्धं प्रकीर्त्तितम् ॥१२२०॥ इति ।

---

१(*) यत्र प्रेतकृत्ये आद्य श्राद्धमारभ्य स पिण्डी करणं यावदुक्तानि यानि वर्ज्यानि तानिच सर्व्वाणि आशीः प्रार्थनादीनि संभाविचोक्तानि । पिण्ड समन्वयात्परं तानिस्युरेव इति ।

656. **शिवस्वाम्यत्र विशेषमाह,—**

नवश्राद्धानि पञ्चाहु राश्वलायन शाखिनः ।
आपस्तम्बाः षड़ित्याहु र्विभाषा तैत्तिरीयिणः ॥१२२१॥

**पञ्च एकादशाहिक श्राद्धव्यतिरेकेणेर्थः ।**

657. **अत्रिः,—**

अलब्ध्वा तु नवश्राद्धं प्रेतत्वान्न विमुच्यते ।
तस्माद्यत् तत्प्रदातव्यं नवश्राद्धं सुतेन वै ॥१२२२॥ इति ।

658. **भविष्यपुराणे वर्णतोऽपि व्यवस्थोक्ता ।**

नवसप्तविशां राज्ञां नवश्राद्धान्यनु क्रमात् ।
आद्यन्तयोर्वर्णयोस्तु षड़ित्याहुर्महर्षयः ॥१२२३॥

**इति विशां नव, राज्ञां सप्तेति क्रमः ।**

659. **मरीचिः,—**

प्रेतश्राद्धे तु यत् मात्रमर्घ्यार्थं हि प्रकल्पितम् ।
तस्यै वोत्तानता प्रोक्ता शेषेषु न्युब्जता मता ॥१२२४॥ इति ।

**अशौच ह्रासे सुतेन नवश्राद्धे विशेषमाह,—**

660. **गृह्यकारिकाकारः ।**

यश्च त्रिरात्र माशौचं द्वितीयेह्न्यस्थि सञ्चयम् ।
नवश्राद्धे वृषोत्सर्गं चतुर्थेऽह्नि समाचरेत् ॥१२२५॥

अशौचं तु यदा सद्यो भवेदत्र कदाचन ।
यथा कालं नवश्राद्धमिति सत्यव्रतोऽब्रवीत् ॥१२२६॥

वृषोत्सर्गादि यत्तत्र कुर्य्यादेकादशेऽहनि ।
संग्रामे विद्युता चैव राजगोविप्रघातने ॥
सद्यः शौचं मृतस्याहुस्त्र्यहं चान्ये महर्षयः ॥१२२७॥ इति ।

**राजगोविप्राणां घातने, घातनाद्रक्षणार्थं मृतस्येत्यर्थः**

661 **भारतेऽपि,—**

दातव्योऽनुदिनं पिण्डः शरीराबयवार्थतः ।
अशौच संख्यया केचित सर्व्वेषां वा दशैवतु ॥१२२८॥
पुत्रो वापि भ्राता वापि मातुलो गुरुरेव च ।
एते पिण्डप्रदा ज्ञेयाः सगोत्राश्चैव वान्धवाः ॥१२२९॥
सर्व्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।
द्रव्येण वा विभक्तेन सर्व्वैरेव कृतं भवेत् ॥१२३०॥
पुत्रेषु विद्यमानेषु नान्यो वै कारयेत् स्वधा ।
अनुकल्पः स्वपुत्रस्य सगोत्राश्चैव वान्धवाः ॥१२३१॥
तिलैः सर्पिर्मधु क्षीरैः फलमूल गुड़ैरपि ।
अर्घ्यैरूर्णामयैः शुद्धैर्वासोभिः पिण्डमर्चयेत् ॥१२३२॥
प्रयाति यावदाकाशं पिण्डाद्वाष्पमयी शिखा ।
तावत्तत् सम्मुखस्तिष्ठेत् सर्व्वतोऽपक्षिपेत्ततः ॥१२३३॥
पाषाणपुरतः पिण्डपूरकं तु दिने दिने ।
दद्यादेकैकमश्मानं पिण्डवत् पूजयेत् सदा ॥१२३४॥
तोयपूर्णाञ्जलीन् दद्यात् पाषाणेऽपि तथा दश ।
श्राद्धान्ते पिण्डदानान्ते शुद्ध्यर्थं स्नानमाचरेत् ॥१२३५॥ इति ।

662. **आपस्तम्बः,—**

न चात्र श्येन काकादीन् पक्षिणः प्रतिषेधयेत् ।
तद्रुपा पितरस्तस्य प्रचरन्ति द्विवैश्रुतिः ॥१२३६॥ इति ।

663. **भृगुः,—**

कृतसूक्तस्तु कुर्वीत सोदकं पिण्डमेव च ।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत् ॥१२३७॥
यस्य न ज्ञायते गोत्रं नाम्ना पिण्डं च निर्वपेत् ।
भार्य्यापिण्डं पतिर्दद्याद् भर्त्तुर्भार्य्या त्वपुत्रिणः ॥१२३८॥
पिण्डपूर्वं मृतस्यादौ द्वितीयस्य ततः परम् ।
तृतीयस्य ततः कार्य्यं सन्निपाते त्वयं विधिः ॥१२३९॥ इति ।

664. **नवश्राद्धमासिकयोर्विधने कण्वः,—**

नवश्राद्धं मासिकं च यच्छ्राद्धं विहितं भवेत् ।
ततो दत्तश्च स्वातन्त्र्यादनुष्ठेयं प्रचक्षते ॥१२४०॥

665. **दशाहान्तर्दर्शप्राप्तौ निर्णयो भविष्य-पुराणे ।**

प्रवृत्ताशौच तन्त्रस्तु यदि दर्शं प्रपद्यते ।
समाप्य चोदकं पिण्डान् स्नानमात्रं समाचरेत् ॥१२४१॥

666. **ऋष्यशृङ्गः,—**

अशौचमन्तराशौचं यदि स्यात् सर्ववर्णिनाम् ।

667. समाप्तिं प्रेतपिण्डानां कुर्य्यादित्याह गौतमः ॥१२४२॥

668. **मातापित्रोस्तु विषये विशेषमाह श्लोके गौतमः ।**

अन्तर्दशाहे दर्शश्चेत्तत्र सर्व्वं समापयेत् ।
पित्रोस्तु यावदाशौचं दद्यात् पिण्डांस्तिलाञ्जलीन् ॥१२४३॥ इति ।

669. **यत्तु गालवः,—**

पित्रोराशौचमध्येऽपि यदि दर्शः समापतेत् । १(*)
तावदेवोत्तरं तन्त्रं पर्य्यवस्येत् त्र्यहात् परम् ॥१२४४॥ इति ।
तदनौरसपुत्रो यदा करोति तद्विषयम्, आपदादिविषयं वेति प्रयोग-पारिजाते, पाराशरमाधवीये, निर्णया मृते तु त्र्यहानन्तरदर्शपाते पातापितृतन्त्रस्यौरसपुत्रेणापि कृतविषयं वेति प्रयोगपारिजाते प्रमाणस्य समाप्तिनं तु त्र्यहमध्ये दर्शपाते तद्विषयमेव गौतमवचनमिति व्याख्यातम् । अन्येषां तु प्रेतानां यदा कदाचिद् दशाहमध्ये दर्शपाते दशाहतन्त्रस्य समाप्तिरिति । एवं सत्यत्र देशाचारतो व्यवस्था ज्ञेया २(†) ।

670. **हेतुमाह पैठीनसिः,—**

आद्ये दैवे च कर्त्तव्या प्रेतपिण्डोदकक्रिया ।
द्विवैन्दवे तु कुर्वाणः पुनः शावं समश्नुते ॥१२४५॥ इति ।

---

१(*) अत्र 'समापयेत्' इति पाठान्तरम् ।

२(†) देशाचार विषये, श्रुतौ, मीमांसाहोलाकाधिकरणे, नीलकण्ठमयुखेचास्ति ।

अन्यो विशेषः स्मृतिदाये । दशाहं प्रेतपिण्डं दत्त्वा अज्ञानभुक्तौ असपिण्डस्य त्र्यहोपवासः सपिण्डस्यैकाहोपवासः । इदं प्रायश्चित्तमकामतः कृतौ मत्या च द्विगुणं भवति १(*) ।

671. मत्या च द्विगुणं द्वयोरिति मिताक्षरायाम् ।

तथा प्रेतकर्म्म कुर्व्वतां सञ्चयनादर्व्वाक् स्त्रीसङ्गमे सति चान्द्रायणं प्रायश्चित्तम् । ऊर्द्ध्वं तु प्राजापत्यत्रयम् । अन्येषां प्रेताशौचिनां सञ्चयनात् पूर्व्वं स्त्रीसङ्गे त्रिरात्रं पश्चाच्चेदुपवास इत्यादि ग्रन्थान्तरादवसेयम् । तथा पित्रादेर्दशाहं कुर्व्वन् यदि दशाहमध्ये मृतः सोऽपि तदा तत्पुत्रो वान्यो वा तस्यौदूर्ध्वदेहिकानन्तरं पितामहकृत्यं पुनः संस्कारं कृत्वा सर्व्वमावर्त्तयेत् । अतीते दशाहे

672. तु नैवमिति नारायण भट्टाः ।

तथा अशक्त्या पित्रनुज्ञातेन पौत्रेण पितामहकृत्ये उपक्रान्ते सति पितापि तद्दशाहमध्ये म्रियेत तदा पित्राशौचं वहन्नेव स्वकाले पितामहश्राद्धं पौत्रः कुर्य्यात् प्रक्रान्तत्वादिति मदनपारिजाते निर्णीतम् ।

**उक्तं च,—**

पिण्डं पूर्व्वमृतस्यादौ द्वितीयस्य ततः परम् ।
तृतीयस्य ततः कार्य्यं सन्निपाते त्वयं विधिः ॥१२४६॥ इति ।

इत्यनन्तभट्टकृते विधानपारिजाते दशाहपिण्डोदकदानविधानम् ॥

—*—

673. **अथास्थिसञ्चयनविधानम् । देवजानीये रेणुः,—**

—*—

प्रथमेऽह्नि तृतीयेऽह्नि सप्तमे नवमेऽपि वा ।
अस्थिसञ्चयनं कृत्यं दिवा तद्गोत्रजैः सह ॥१२४७॥

इति वैतानिकस्यास्थिसञ्चयनं कार्य्यं नान्यस्य उपदेशातिदेशयोर-

674. भावादिति कर्काचार्य्याः ।

675. **अत्र निषिद्धकालः स्मृति संग्रहे,—**

एकादश्यां त्रयोदश्यां पञ्चदश्यामथापि वा ।
फल्गुनीद्वयमाषाढद्वयं प्रौष्ठपदीद्वयम् ॥१२४८॥

---

१(*) मत्यातु,—ज्ञानपूर्व्वककरणे इति ।
अत्र द्विगुणं प्रायश्चित्तमाचरे दित्यर्थं ।

षड्भ्यस्त्वन्यत्र कालेऽस्थिसञ्चयनं भवेत्।
अङ्गारके मन्दवारे शुक्रवारेऽर्के बृहस्पतौ॥
त्रिजन्मपुष्यहस्तासु नराणामस्थिसञ्चयः॥१२४६॥ इति।

तथा,—

त्रिपादर्क्षे तथा भद्राकुजार्कार्कसुते दिने।
अस्थिसञ्चयनं कर्त्तुः कुलक्षयकरं भवेत्॥१२५०॥ इति।

अयं कालनिषेधो निरग्निपरः साग्नयस्थिसञ्चयनस्य नियतकालत्वात्।

676. यथाह वैजवापः,—

चतुर्थेऽहनि संप्राप्ते साग्नेः सञ्चयनंस्मृतम्।
प्रथमेऽह्नि द्वितीयादौ निरग्नेरस्थिसञ्चयः॥१२५१॥ इति।

तथा वर्णपरत्वेनापि स एवाह,—

चतुर्थे ब्राह्मणानां च पञ्चमेऽहनि भूभृताम्।
नवमे वैश्यजातीनां शूद्राणां च त्रयोदशे॥१२५२॥ इति।

677. गौतमोऽपि,—

ब्राह्मणस्य चतुर्थे पञ्चमे क्षत्रियस्य नवमे वैश्यस्य त्रयोदशे शूद्रस्य, त्र्यहाशौचे द्वितीयेऽह्नि, सर्व्वेषां सद्यःशौचे तु दाहानन्तरमेवास्थिसञ्चय इति।

678. पालाशे चास्थिदाहे च सद्यः सञ्चयनं भवेदिति शौनकः। कात्यायनसूत्रे ब्राह्मणभोजनमुक्तम्।

सञ्चयनं चतुर्थ्यां मन्दे युग्मान् ब्राह्मणान् भोजयित्वा पलाशवृन्तेनास्थीनि परिवर्त्याङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे प्रास्यति····कर्दमं चेत्याह।

679. तदपि सञ्चयनश्राद्धं निरग्नेर्नवश्राद्धानन्तरं कार्य्यमित्याह ऋष्यशृङ्गः १(*)।

यथोक्तकाले पूर्व्वाह्णे नवश्राद्धं विधाय च।
कुर्य्यात् सञ्चयन श्राद्धमित्याह हरिणीसुत इति॥

---

१(*) अस्थि सञ्चयने साग्नेर्निरग्नेश्च नियमः कथितः। एव मद्योक्तेऽपि, निरग्ने संस्कारात्परं साग्नेस्तु दाहात् परमशौचं स्यादिति।

680. **प्रयोगस्तु स्वस्वशाखातोऽवगन्तव्यः १(*) ।**

अत्र भोक्तॄणां प्रत्यवायो दातॄणामभ्युदयः ।

681. **भोगप्रायश्चित्तमाह मनुः,—**

चान्द्रायणं नवश्राद्धे पराकौ मासिके मतः २(†) ।
पक्षत्रये त्रिकृच्छ्रं स्यात् षण्मासे कृच्छ्र एव तु ॥१२५३॥
आब्दिकं पादकृच्छ्रः स्यादेकाहः पुनराब्दिके ।
अत ऊर्द्ध्वं न दोषः स्यादेकाहं केचिदूचिरे ॥१२५४॥ इति ।

682. **हारीतस्तु,—**

अन्नमेकादशे भुक्त्वा भुक्त्वा सञ्चयने तथा ।
उपोष्यं विधिवत् तत्र कुष्माण्डैर्जुहुयाद् घृतम् ॥१२५५॥

इदं त्वापद्विषयम् । तदभावे चान्द्रायणमेव सञ्चयनश्राद्धस्य नवश्राद्धत्वात् । अत्र श्मशानदेवता पूजोक्ता ।

683. **संग्रहे,—**

स्नानं तु पूर्व्ववत् कृत्वा घृतक्षीरादिसंयुतम् ।
अन्नपात्रं कुशानां च माल्यंदीप धूपा दिकम् ॥१२५६॥
शवमादाय गच्छेयुरनीक्षित्वा तु पृष्ठतः ।
श्मशानं बान्धवाः सर्व्वे प्राचीनावीतिनोऽपि च ॥
स्नानैः सुधूपवस्त्रैस्तैर्यथाशक्ति समाहृतैः ।
मृन्मयेषु तु भाण्डेषु हृद्येषु च नवेष्वपि ।
सुपक्वैर्भक्ष्यभोज्यैश्च पायसैः पानकैस्तथा ।
फलमूलैः स्वदेशोत्थैः पूज्या क्रव्यादिदेवताः ॥१२५७॥
कैश्चिदर्घ्यं प्रदातव्यं कैश्चित् पुष्पं सुशोभनम् ।
धूपदीपं तथान्नं च कैश्चिद्देयं त्वरान्वितैः ॥१२५८॥
ततः पात्राणि पूर्णानि श्मशानाग्नेः समन्ततः ।
कैश्चिद्देयानि सर्व्वाणि पानीयानि कृतानि च ॥१२५९॥
निवेदयन्निर्वक्तव्यं तैः सवरनहङ्कृतैः ।
नमः क्रव्यादमुखेभ्योदेवेभ्य इति सर्व्वदा ॥१२६०॥

---

१(*) पितानां शाखामात्र हस्तं परपव्यूढे तन्नाप्ये च मार्कण्डेय कौर्म्म-ब्रह्मवैवर्त्तपुराणादिषुवर्त्तते ।

२(†) 'पराकौ मासिके ततः' इति पाठान्तर मस्ति ।

यस्मिन् श्मशाने देवाः स्युर्भगवन्तः सनातनाः ।
तेऽस्मत् सकाशाद् गृह्णन्तु बलिमष्टाङ्गमक्षयम् ॥१२६१॥
प्रेतस्यास्य शुभान्लोकान् प्रयच्छन्त्ववतिशाश्वतान् ।
अस्माकमायुरारोग्यं सुखं दद्यादथाक्षयम् ॥१२६२॥

इति प्रार्थ्य कुशोपरी पिण्डत्रयं दक्षिणासंस्थं दद्यात् । तद् यथा एकं श्मशानवासिभ्यः मध्ये प्रेताय द्वितीयं प्रेतशवेभ्यस्तृतीयं दद्यात् ।

684. उक्तं हि,—१(*)

एवमुक्त्वा वलिं दत्त्वा दद्यात् पिण्डत्रयं ततः ।
एकं श्मशानवासिभ्यः प्रेतायैव तु मध्यमम् ॥१२६३॥
तृतीयं तच्छवेभ्यश्च दक्षिणासंस्थमादरात् ।
क्षीराज्येन वलीन् सिक्त्वा विसृजेद्देवतास्ततः ॥१२६४॥
अथास्थिसञ्चयः कार्य्यः स्वशाखोक्तविधानतः ॥ इति ।

685. अत्रेति कर्त्तव्यतामाह रेणुः,—

श्राद्धं कृत्वा निषिच्यैतमद्भिरङ्गारचयं ततः ।
यज्ञीयवृक्षोत्थां शाखामादाय वाग्यतः ( भवन् ) ॥१२६५॥
अथ सव्यं क्रमाद्वस्त्रं कृत्वा कर्त्ताथ गोत्रजः ।
प्रेतस्यास्थीनि गृह्णीयात् प्रधानाङ्गेन तानि च ॥१२६६॥
अस्थीनि परिवृत्यापि शाखया बाहुमात्रया ।
पलाशवृन्तेनास्थीनि परिवृत्याग्निहोत्रिणः ॥१२६७॥
गृहीत्वोपकनिष्ठेनाङ्गुष्ठेन पितृदिङ्मुखः ।
निक्षिपन् मृन्मये भाण्डे नूतने क्षालिते शुभे ॥१२६८॥
प्रास्येत् पर्णपुटेऽस्थीनि विशेषस्त्वग्निहोत्रिणः ।
शिरसा वक्षसा पाणिभ्यां पार्श्वाभ्यां च पादतः ॥१२६९॥

686. अप्रदक्षिणमस्थीनि गृह्णातीत्याह गोभिलः ।

स्नापयेत् पञ्चगव्येन तानि गोपयसाथवा २(†) ।
अंशुकेनास्थीनि तेनाप्यथ कर्पूराद्यैर्विलेपयेत् ॥१२७०॥

---

१(*) पद्मं श्राद्ध संग्रहे ।

२(†) पयगोपयसा,—गव्यक्षीरेण प्रक्षालयेदिति ।

आहिताग्नेर्निवापः स्याच्छुचौदेशे जलान्तिकम् ।
अञ्जनादिविले यातमस्थिपर्णपुटे भवेत् ॥१२७१॥

अरणि मात्रिकां कर्षूं खात्वा यद्यग्निदिङ्मुखान् ।
दर्भानास्तीर्य्य हारिद्रं वस्त्रखण्डं प्रसार्य्य च ॥१२७२॥

तस्मिन् वाचेति मन्त्रेण निर्वपेदस्थिसंग्रहम् ।
आरामे वृक्षमूले वा शुचौस्थाने निधापयेत् ॥१२७३॥

पूरयित्वाऽष्टं पञ्चपिण्डशैवाल संयुतम् ।
687. दत्त्वोपरि समं शेषं कुर्य्यादित्याह गोभिलः ॥१२७४॥

**इति वाचेति मन्त्रः ।**

688. **कात्यायन सूत्रे उक्तम्—,**

वाचा मनसानार्त्तेन ब्रह्मणा त्रय्या विद्यया पृथिव्यामक्षतायामपां रसेन निर्वपाम्यसाविति ।

689. **अन्यत्र तु,—**

पिण्डत्रयं पूजयित्वा रुद्रप्रेतयमात्मकम् ।
पिण्डोदकं च निक्षिप्य ततः प्राच्छेज्जलाशयम् १(*) ॥१२७५॥

690. **गालवोऽपि—**

त्रयः पूज्यास्तु पाषाणा मध्ये प्रेतस्य निर्द्दिशेत् ।
उत्तरे रुद्रमुद्दिश्य दक्षिणे यममुद्दिशेत् ॥
ततश्चितागतं भस्म वलिं तोये विनिक्षिपेत् २(†) ॥१२७६॥

चिताभूमिं गोमयेनोपलिप्य तत्र पक्षपिण्डं निधाय तस्मिन्नुदकुम्भं भक्ष्यभोज्यसहितं निधाय क्रव्यादमुखेभ्यो देवेभ्यो नम इति मन्त्रेण चतुर्द्दिक्षु वलिं दत्त्वा पुष्पादिभिः पूजां कृत्वा तद्दक्षिणभागे शमीशाखां निखनेदिति ।

केचित्तु, भस्मना पुरुषाकृतिं कृत्वा श्मशानदेवताभ्यो वलिदानमिच्छन्ति ।

---

१(*) ततीगच्छेत् जनाश्रयम् इति पाठान्तरम् ।
२(†) 'भस्मावलिंतोये' इति भिन्नः पाठः ।

691. **अथाह बौधायनः,—**

एवं सुसंस्कृतं कुर्य्युः पञ्चभिस्त्रिभिरेव वा ।
समूह्य भस्म तेनापि कुर्य्युर्देहाकृतिं ततः ॥
गन्धादिभिश्च संस्कृत्य निक्षिपेदन्नमम्बु च ॥१२७७॥ इति १(*) ।

692. **श्वचण्डालादिभिरस्थ्यादिस्पर्शे प्रायश्चित्तमाह प्रचेताः**

श्वचण्डालसृगालाद्यैः स्पृष्टमज्जास्थिभस्मसु ।
पञ्चगव्येन तत् प्रोक्ष्य ततः कृच्छ्रद्वयं चरेत् ॥१२७८॥ इति ।

693. **अत्र दानविशेषमाह बृहस्पतिः—**

सञ्चयाहनि विप्रेभ्यो देयमन्नं हि बान्धवैः ।
गावः सुवर्णं धान्यं च प्रेतमुद्दिश्य शक्तितः ॥
यदिष्टं जीवतश्चासीत्तच्च दद्यात् प्रयत्नतः ॥१२७९ ॥इति ।

694. **सञ्चयनादूर्द्धमशौचिनामङ्गस्पर्श उक्तो देवलेन ।**

दशाहादित्रिभागेन कृते सञ्चयने क्रमात् ।
अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्त्वदर्शिनः ॥१२८०॥ इति ।

तदेतद् युगान्तरपरम् । अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव चेति स्मृत्यर्थसारे कलौ तन्निषेधात् ।

695. **अन्यो विशेषो विष्णुपुराणे,**

शय्यासनोपभोगश्च सपिण्डानामपीष्यते ।
अस्थिसञ्चयनादूर्ध्वं संभोगो न तु योषिताम् २(†) ॥१२८१॥ इति ।

696. **सञ्चयनानन्तरं पाथेयश्राद्धमुक्तं रेणुना ,—**

कृते सञ्चयने प्रेतः प्रेतलोकं हि गच्छति ।
मनुष्यलोकात् पाथेयमामेन प्रथमाहवत् ॥१२८२॥ इति ।

स्मृत्यर्थसारेऽपि सञ्चयने कृते मनुष्यलोकात् प्रेतलोकं गच्छत आमेन पाथेय श्राद्धमेकोद्दिष्टविधानेन कार्य्यमिति ।

—*—

---

१(*) 'चान्नमप्सु च' इति भिन्नः पाठः ।

२(†) अत्र शय्यासनवसनानां व्यवहारः कार्य्यः, न तु योषितां सङ्गमः ।

## अथ प्रसङ्गादगङ्गादावस्थिनिक्षेपविधिः ।

—*—

697. **बृहस्पतिः,—**

अस्तंगते गुरौ शुक्रे तथा मासि मलिम्लुचे ।

गङ्गायामस्थिनिक्षेपं न कुर्य्यादिति गौतमः ॥१२८३॥

**तथा,—**

अस्थिक्षेपं गया श्राद्धं श्राद्धं चापरपक्षिकम् ।

प्रथमाब्दे न कुर्व्वीत कृतेऽपि च सपिण्डने ॥१२८४॥ इत्यादि

698. **तदेतद्दशाहादूर्द्ध्वकालविषयम् ।**

दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति ।

गङ्गायां मरणं यादृक् तादृक्फलमवाप्नुयात् ॥१२८५॥

699. **इति स्कान्दोक्तेः ।**

कावेरी तुङ्गभद्रा च कृष्णवेणी च गौतमी ।

भागीरथी च विख्याताः पञ्चनद्यः प्रकीर्त्तिताः ॥१२८६॥

अथास्थि मज्जते यस्य तस्य मोक्षो न संशयः ॥१२८७॥ इति ।

अत्रत्यः सर्व्वोऽपि निर्णयविशेषोऽस्थिक्षेपप्रयोगश्च तृतीयस्तबके तीर्थयात्राविधाने द्रष्टव्यः । इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते सञ्चयनविधानम् २(†) ॥

—*—

## अथ दशाहमध्ये संक्रमणप्राप्तौ निर्णयः ।

—*—

700. **हेमाद्रौ दक्षः,—**

दर्शः संक्रमणं वापि दशाहान्तः समापयेत् ।

तत एवोत्तरं तन्त्रं समाप्यमिति निश्चयः ॥१२८८॥

---

१(०) इत्यं गौतमर्षिः स्वीय-स्मृतौ प्रोवाचेत्यर्थः ।

२(†) तीर्थकृत्ये तीर्थ-यात्रा प्रसङ्गे श्राद्धादि कृत्ये प्रागुक्तः तृतीयस्तबके नेदपुनरुच्यते ।

701. **ब्राह्मेऽपि,—**

दर्शसंक्रमणं वापि त्र्यहादूर्द्धं पतेद् यदि ।
तत्र स्यादुत्तरं तन्त्रं स्नानमात्रं दिने दिने ॥१२८९॥ इति ।

702. **व्यतीपातेऽप्येवमेवोक्तं स्मृतिदाये ।**

दशाहमध्ये दर्शश्चेद् व्यतीपातश्च वैधृतिः ।
मातापित्रोर्विनान्येषां दशाहान्तं समापयेत् ॥१२९०॥

703. **अमावस्यायां मृतस्य विशेषस्तत्रैव ।**

अमायां मरणं यस्य तस्य पिण्डोदकक्रिया ।
आदशाहं प्रतिदिनं कारयेत् स्मृतिशासनात् ॥१२९१॥
यदि चतुर्द्दशीक्षणे कश्चिन्मृतस्तदुत्तरममावास्या चेत्तदा तत्रैव दशाहं
704. समापयेदित्युक्तं गृह्यपरिशिष्टे ।

चतुर्द्दशीक्षणमृतिस्ततः प्राप्नोत्यमातिथिम् ॥
पिण्डोदकं दशाहान्तं तस्मिन्नेव निवापयेत् ॥१२९२॥ इति ।

705. **इदमौरसपुत्रादिव्यतिरिक्तविषयम् ।**

दशाहमध्ये यदि दर्शपातो-दद्युर्दशाहं तिलवारिपिण्डान् ।
पुत्रीसुतोदत्तक औरसश्च अन्ये सुतास्तत्र समापयेयुः ॥१२९३॥

706. **इति कपर्द्दिनो विशेषोक्तेरिति दिक् ॥**

## अथ दशाहविधानम् ।

—*—

उपभुक्तवाससां त्यागः प्रक्षालनार्थम्, उपभुक्तमृन्मयभाण्डत्यागः, यदि गृहे मृतस्तदा गृहस्थसर्व्वमृद्भाण्डत्यागः मृद्गोमयाभ्यां मृतिगृहोदर-वीथीप्राङ्गणलेपनं पूर्व्ववत्, स्नानादि पिण्डदानतिलतोयाञ्जलितिलपात्र-दानादि कर्म्म समाप्य कर्त्ता प्रेतकनिष्ठैः सह केशश्मश्रुनखं वापयित्वा तिलामलककल्केन गौरसर्षपपिष्टेन वा शिरः प्रक्षाल्य वासोयुग्मं परिधाय गृहमागत्य गो-सुवर्णदधिदूर्व्वागौरमृत्तिकादि मङ्गलद्रव्यं स्पृष्ट्वा

सदाचारात् पञ्चगव्यं प्राश्य स्वस्ति ब्राह्मणान् वाचयित्वा नूतनभाण्ड-
कृतपाकं भुञ्जीत । १(०)

707. **तथा हि रेणुः,—**

उपभुक्तानि भाण्डानि त्यक्त्वा संमार्जयेद् गृहम् ।
पिण्डदानादि निर्वर्त्य तिलपात्रं प्रदाय च ॥१२६४॥
कनिष्ठैः सह वाप्येत केशश्मश्रुनखादिकम् ।
तिलामलककल्केन शिरः प्रक्षालनं चरेत् ॥१२६५॥
अन्यद्वासः परीधाय स्पृशेन्मङ्गलवस्तुकम् ।
पञ्चगव्यं ततः प्राश्य ब्राह्मणान् स्वस्तिवाच्य च ॥
पक्त्वा नूतन भाण्डेषु भुञ्जीयाद्बन्धुभिः सह ॥१२६६॥ इति ।

708. **वपनविषये देवलोऽपि,—**

वापनीयाश्चते सर्व्वे कनिष्ठा दशमेऽहनि ।
ज्ञातयः समयादर्व्वाक् कर्त्तृभिः सह सर्व्वथा ॥ १२६७॥ इति ।

709. **अन्यत्रापि,—**

मातामहपितृव्यानां मातुलाग्रजयोर्मृते ।
स्वसुः श्वशुरयोश्चैवं विपन्नानां पितृस्वसुः ॥
मातृस्वसुर्गुरोश्चैव गर्भवानपि वापयेत् ॥१२६८॥ इति ।
इदमजीवत् पितृकविषयम्, वपनं कनीयसां चैव न कार्य्यं जीवतः
पितुरिति विशेषोक्तेः ।

710. **अकरणे प्रत्यवायः स्मृतिसमुच्चये,**

यस्य केशाः शिरोजाता दशमेऽह्न्यवापिताः ।
भ्रूणहत्यासमं पापं केशश्मश्रुनखेषु च ॥१२६९॥

---

१(०) अत्र शिष्टाचारात्,—शास्त्रीयाचाराद्वा, मङ्गलजनक पूतद्रव्यम् । तच्छास्त्रोक्तं मङ्गलद्रव्यं, स्पृशेत् । 'पञ्चगव्य मिदं प्रोक्तं महापाप प्रणाशनम्' । तानिव गोमूत्र-गोमय-क्षीरदधि-सर्पिः सकुशोदकानिपञ्च । स्मृतौ पाप हराणि उक्तानि ।

711. **लीयत इत्यनुषङ्गः ।**

**अन्यत्रापि,—**

वपनं यो न कुरुते सूतके दशमेऽहनि ।
मृतौ वा पितरस्तस्य मज्जन्ति नरके सद ॥१३००॥ इति ।

712. **अत्राश्वलायननानां विशेष उक्तः स्मृत्यन्तरे,**

षष्ठंचैव नवश्राद्धं पथि पिण्डास्थिरोमकम् ।
दशाहे वपनं चैव वर्जयेदाश्वलायनः ॥१३०१॥ इति ।

713. **अत्र काकवलिरुक्तः पद्धतिकारैः ।**

714. **तथाहि रामायणं उत्तरकाण्डे,—**

सूतकान्ते वलिं तुष्टा भुञ्जते यस्य वायसाः ।
सर्व्वे प्रेतत्वनिर्मुक्ताः शाश्वतीं गतिमाप्नुयुः ॥१३०२॥
यमेन निर्म्मिताः पूर्व्वं नृणां कर्म्मविमोचने ।
विचरन्तीदृशा लोके साक्षात्ते यमकिङ्कराः १(*) ॥१३०३॥ इति ।

715. **वलिदानमन्त्रास्तु,—**

यमोऽसि यमदूतोऽसि वायसोऽसि नमोऽस्तु ते ।
अन्नपिण्डो मया दत्तो वायस प्रतिगृह्यताम् ॥१३०४॥
ऐन्द्रवारुण वायव्याः सौम्या नैर्ऋतिकास्तथा ।
काकाः पञ्चदिशास्थास्तु वाह्यकर्म्मणि पूजिताः ॥१३०५॥
दक्षिणाभिमुखाः काका नभःस्थाश्च शुभावहाः ।
ऐशान्यां क्रौञ्चरूपेण विद्यन्ते पितृमुक्तये ।
ते काकाः प्रतिगृह्णन्तु भूम्यां पिडं मयार्पितम् २(†) ॥१३०६॥ इति ।

---

१(*) अपर मन्त्रो यथा,—
'काक त्वं यमदूतोऽसि गृहाण बलिमुत्तमम् ।
यमलोकगतं प्रेतं त्वमाप्यायितु मर्हसि' ॥
'काकाय काक पुरुषाय वायसाय महात्मने ।
तुभ्यं' बलिं प्रयच्छामि कथ्यतां धर्म्म राजनि' ॥ इति

२(†) ॐ नाना-दिग्देशस्थ-वायसेभ्यः एषबलिर्नमः ।
'वायसेभ्योबलिन्दद्यान्मन्त्रं पाठन्तु कारयेत्' इतिच ।

716. **अन्यत्र विशेषः, पैठीनसिनोक्तः,—**

कर्त्ता च प्रार्थिताः सन्तो ज्ञाति सम्वन्धि वान्धवाः ।
दद्युरभ्यागताः पूर्व्वं त्रींस्त्रीन् कामोदकाञ्जलीन् ॥१३०७॥
पूर्व्ववन्नाम गोत्राभ्यां नियमेनेह चाश्मनः ।
प्रविशेयुः सुवासिन्योऽभ्यङ्गस्नाताः सितांशुकाः ॥१३०८॥
वालपूर्व्वाः पूर्णघटाः स्वगृहान् सुविभूषिताः ।
शन्नोमित्रश्चत्तुर्णान्तु कुर्य्याच्छान्त्युदकं गृहे ॥१३०६॥
जयोऽप्रतिरथस्यात्र निर्द्दिष्टोऽशुभमुक्तये ।
दानं स्वस्त्ययनं शान्तिः ब्राह्मणानां च पूजनम् ॥१३१०॥
उत्तीर्ण दुःखास्तु ततः कुर्य्युस्ते शाव वर्जिताः ।
तत्कालानीततोयैस्तु पाकं कुर्युरतन्द्रिताः ॥१३११॥ इति ।

717. **पत्नीविषये गार्ग्यः १(*) ।**

लवणं मधुमांसं च क्षीरद्रव्यं च वर्जयेत् ।
संवत्सरं प्रेतपत्नी शयीताधस्तु तत्परम् ॥
दशमे वपनं कुर्य्यादिति व्यासेन भाषितम् ॥१३१२॥ इति ।

**इति श्रीविधानपारिजाते पञ्चमस्तवके**
**दशाहविधानम् ॥**

—*—

## अथैकादशाह विधानम् ।

—*—

तत्र स्नात्वा कृतप्रातः सन्ध्यावन्दनः कर्त्ता सस्त्रीकं ब्राह्मणं समभ्यर्च्य यथाशक्ति सुवर्णरचितविष्णु प्रतिमायुक्तां तूलीप्रच्छादनास्तरण पटोपधानसमेतां शय्यां प्रेतस्वर्ग कामनया दद्यादित्युक्तम् मात्स्ये । २(+)

718. **अन्यत्रापि,—**

शय्या प्रेताय दातव्या वस्त्रतूलसमन्विता ।
निष्कमात्रं सुवर्णस्य विष्णुनासमधिक्तमिति ॥१३१३॥

---

'शन्नोमित्र: संवरुण:' इति चत्वार: शान्तिमन्त्रा: । शुक्ल, यजु:, ३६ अ:, ५ म: ।

१(*) ... सस्य स्त्री प्रेतस्वर्गाय व्यासपिंप्रोक्तमिव नियमं कुर्य्यादिति ।

२(+) अत्र 'सस्त्रीक:' इत्यं पाठान्तरमस्ति

दानमन्त्रस्तु,—

शुभ्रवस्त्रावृता शुद्धा मृदुतन्तुपरिच्छदा ।
शय्या सुखप्रदा नित्यमतः शान्तिं प्रयच्छ मे ॥१३१४॥ इति ।

ततः षष्ठं नवश्राद्धं कुर्य्यात् ।

प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमेऽपि च ।
नवमैकादशे चैव नव श्राद्धं समाचरेत् ॥१३१५॥

719. इति स्मृतेः ।

720. विश्वादर्शे तद्विधिरुक्तः १(†)। एकोद्दिष्टं तु पुत्रानुजगुरुसुहृदां मातुलेयस्वसृणांच वा ।
अब्दानामादिवर्जं हविरिहतु करे तस्यनामार्थवत्स्यात् ।
एतच्चैकादशाहावधिषु खलुनवश्राद्ध संज्ञेषु मध्ये ।
पञ्चस्वाद्येषु तु स्मृतमसमदिने षष्ठमेतत् समन्त्रमिति ॥१३१६॥
अन्यत्र च श्राद्धानि चामन्त्रकर्म्मकाणि यानि दशाहमध्ये विहितानि ।
अन्यानि सर्व्वाणि समन्त्रकानीत्युक्तं विधिज्ञै र्विवेक श्चैषामिति ।
ततः स्वस्तिवाचनं कृत्वा वृषोत्सर्गं कुर्य्यात् ।

721. यथाह रेणुः,—

दद्यादादौ नवश्राद्ध कृत्वा पुण्याहवाचनम् ।
यथोक्तवृषमुत्सृज्य स्यादाद्यस्य क्रिया ततः ॥१३१७॥ इति ।

722. अत्राह शङ्खः—

एकादशाहे प्रेतस्य यस्यचोत्सृज्यते वृषः ।
मुच्यते प्रेतदेहात्तु स्वर्गलोकं स गच्छति २(*) ॥१३१८॥
एकादशेऽह्नि संप्राप्ते यस्य नोत्सृज्यते वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥१३१९॥ इति ।

---

१(०) तद्विधिः—षष्ठ श्राद्ध विधान पद्धतिः। षन्यत्रं ति ।

२(†) श्रुत्यन्तरेच,—

षष्ठीचान्ताद्द द्वितीयेऽह्नि यस्तनोत् सृज्यते वृषः ।
पिशाचत्वं ध्रुवन्तस्य दत्त श्राद्धशतैरपि ॥

साङ्ख्यायन गृह्य सूत्रेच वृषोत्सर्गउक्तः ।
मत्स्य पुराणेच, वृषोत्सर्गेय कर्त्तव्योदेयाच कपिला शुभा ।
'एष्टव्या बहवः पुत्रा यद्ये कोऽपि गयां व्रजेत् ।
गौरीं वाप्युद्वहेम् भार्य्यां नीलं वा वृषमुत् सृजेत्' इति तत्रैव पुराणे। षन्यद्द वृषोत्सर्ग-तत्त्व विद्यते।

एकादशेऽह्नि षण्मासे त्रिपक्षेवा तथैव च ।
वृषोत्सर्गं प्रकुर्व्वीत परस्तादुक्तकालिकम् ॥१३२०॥ इति ।
शुक्रमौढ्यादिदोषेऽपि कुर्य्यादेकादशेऽहनि ।
प्रेतकार्य्ये वृषोत्सर्गे मौढ्यदोषो न विद्यते ॥१३२१॥
एकादशाहादन्यत्र प्राप्तकाले यदा तदा ।
वृषोत्सर्गे शुक्रगुर्व्वोर्मौढ्यबाल्यादि दोषदम् ॥१३२२॥
पतिपुत्रवती नारी म्रियते चोभयाग्रतः १(*) ।
वृषं नैवोत्सृजेत् पुत्रः पिता यावद्धि जीवति ॥१३२३॥ इति ।
पुत्रहीनातु यानारी भर्त्तुरग्रे मृता यदि ।
वृषोत्सर्गो नैव कार्य्य एका गौस्तत्र दीयते ॥१३२४॥ इति ।
यावन्ति रोमकूपानि वृषभाङ्गे भवन्ति वै ।
गवां चैव तु रोमाणि यावत्तिष्ठन्ति वै मुने ॥१३२५॥
तावन् कोटिसहस्राणि रुद्रलोके महीयते ।
उत्सृष्टो वृषभो यस्मिन् पिबेच्चापो जलाशये ॥१३२६॥
जलाशयः समफलः पितॄंस्तस्योपतिष्ठति ।
शृङ्गेणोल्लिखते भूमिं यत्र यौवन दर्पितः ॥१३२७॥
पितॄणामन्नपानं तत् प्रभूतमुपतिष्ठति ॥ इत्यादि ।

वृषस्तु, जीववत्सायाः पयस्विन्याः पुत्रस्त्रिहायणो द्विहायन एकहायनो-वा नीलो, बभ्रुः, कपिलः, पिङ्गलः, पिङ्गल-कृष्णलोहितः, श्वेतो वा, एकवर्णोऽनेकवर्णोवा, अव्यङ्गाङ्गो जीवन्मातृकः। यथा सम्भवे वा, यो वा यूथं छादयति यं वा यूथं छादयेत् स उत्स्रष्टव्यः ।
लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलोवृषभ उच्यते ॥१३२८॥
चरणास्तु मुखं पुच्छं यस्य श्वेतानि गोपतेः ।
लाक्षया समवर्णश्च स नीलोवृषभ उच्यते ॥१३२८॥
चैत्र्यां कार्त्तिक्यां वैशाख्यां वा पौर्णमास्याम् , आश्वयुज्या रेवत्यां वा अष्टकासु चन्द्रसूर्य्यग्रहे विषुवति तुलामेषयोर्गयादिपुण्यक्षेत्रेषु च क्रियमाणे काम्यवृषोत्सर्गे मातृकास्थापनं भवत्येव ।

---

१(*) 'म्रियते भर्तुरग्रतः' इति भिन्नः पाठः ।
,, 'वृषं नैवोत् सृजेत्तस्मादद्यादगां चन्दनाङ्कितास्' इत्यन्यः पाठः ।

एकादशे वृषोत्सर्गे न मातृस्थापनं भवेत् ।
तदन्यत्र वृषोत्सर्गे मातॄणां पूजनं भवेत् ॥१३३०॥
नन्दा सुमनसा चैव सुभद्रा च तृतीयका ।
सुशीला सुरभिश्चेति संपूज्याः पञ्चमातरः १(*) ॥१३३१॥ इति ।
क्षत्रियादीनां स्वस्वाशौचानन्तरदिने वृषोत्सर्गः शुचिना कर्म्म कर्त्तव्यम् इति शुद्धेरपेक्षितत्वात् २(†) । यत् पुनरेकादशेऽह्नि संप्राप्ते यस्यनोत्सृज्यते वृष इत्यादि वचनं तत्तु ।
अहण्येकादशे नाम अस्थितेश्च शरीरतः । तच्च,—
आनन्त्यात् कुलधर्म्माणां पुंसाञ्चैवायुषः क्षयात् ।
अस्थिरत्वाच्छरीरस्य द्वादशाहः प्रशस्यते ॥१३३२॥
तस्मात् क्षत्रियादीनां त्रयोदशषोड़शैक त्रिंशत्तमेष्वहःसु वृषोत्सर्गो भवतीति निष्कर्षः ।
साग्निरपि प्रेतवृषोत्सर्गहोमो लौकिकाग्नावेव भवति ।
कालान्तरे क्रियमाणकाम्यवृषोत्सर्गहोमस्तु साग्नेः साग्नावेव भवति ।
निरग्नीनां सर्व्वोऽपि लौकिकाग्नावेव भवति, इति विवेकः ॥

—०—

## अथ वृषोत् सर्ग प्रयोगः ।

—*—

अथोत्सर्गः, शूलगववत् कार्त्तिक्यां पौर्णमास्यां वैशाख्यां वा रेवत्यां वाश्वयुज्यां दशाहे गते सम्वत्सरे अतीते वेति । गोर्जीवत् पुत्रायाः पयस्विन्याः सुतं श्रेष्ठं स्वस्ययूथस्या कुष्ठिनमपृषत मेकहायनं द्विहायनं त्रिहायनं वा, नीलं वभ्रुं पिङ्गलं लोहितं वा सुलक्षणमप्येके । काममलोहित मष्टाभिः सहवत्सतरीभिश्चतसृभिर्व्वा, व्रीहियवमयीभिरद्भिरापोहिष्ठीयाभि ऋ ग्भिर्वामदेव्याभिश्च । गाश्चाभिषिच्यालङ्कृत्य च ३(‡) । गोष्ठे चतुष्पथेवाग्निमुपसमादाय ।

---

१(*) अन्यत्रोक्तम्, अथ वृषोत्सर्गं व्याख्यास्यामः । 'कार्त्तिक्यां पौर्णमास्यां रेवत्यामाश्वयुज्यां दशाहे गते सम्वत्सरे अतीते वेति' ।

२(†) इत्यदः पाठोऽस्ति । अत्र षोड़श मातृका पूजा, तास्तु गौरी पद्मा शची मेधा इत्यादयः । 'शुचिस्तत् कालजीवी कर्म्म कुर्य्यात्' इति ।

३(‡) अत्र 'ताम्र, ताम्र, प्राच्य' इति पाठान्तराण्यपि सन्ति । प्राच्यम्, प्रथमं पूर्व्वदिक संस्थं वेति ।

रौद्रं स्थालीपाकं सर्व्वंहूतं हुत्वा, सौम्यं पायसं पौष्णं यावकञ्च, पूर्णपात्रोदकेन निर्णीतेन कुशेनवा मार्जयित्वा, वृष मग्निं त्रिःप्रदक्षिणं पर्य्यानीयं, कद्रुद्राय, इमारुद्राय, याते पितरिमारुद्राय स्थिरधन्वन-इति सूक्तैः १(*)। चतस्रोदिश उपस्थाय, प्राच्वं प्रागुदच्वं वा, वत्सतरीसमेतमूतसृजेत् , एनं युवानं पतिं वोददानि तेनक्रीड़न्तीश्चरथ प्रियेण मानः, शाप्तजनुषा सुभगा राय स्पोषेण समिधा (षा) मदेमेति, शान्ता पृथिवी। शिव मन्तरिक्षं द्यौर्नो देव्यभयं कृणोतु शिवादिशः प्रदिश उद्दिशेने, आपोविद्युतः परिपान्तु सर्व्वतः इत्यष्टभि र्वृषभं मासमाना मिति च सूक्तेन, स यत् पिवति खादति लाङ्गलं चोदूयच्छते तेन देवान् ऋषीन् पितॄण् प्रीणाति सप्त सप्तचोभयतः परावरानुद्धरति, यः प्रेतार्थमृत्सृष्ट स्तं महतोनरका-दुत्तारयति। तस्मा देकादशेऽह्नि प्रेताय वृषमुत्सृजेत्। आद्य-मासिकञ्च दद्यात्॥ इत्याश्वलायनमतानुसारी—

## वृषोत्सर्गप्रयोगः २(†) ॥

—*—

723. **अथ वौधायनोक्त उच्यते।**

—*—

सम्वत्सरे सम्वत्सरे कार्त्तिक्यां पौर्णमास्या माश्विन्यां वैशाख्याम्वा, गवां मध्ये क्रियेतैकवर्णो द्विवर्णोवा, योवा यूथंच्छादयति लोहितवर्णायाः जीववत्सायाः पुत्रोयूथेषु मुख्यतमो योभवति, तमलङ्करोति गन्ध-माल्याक्षतादिभिर्वस्त्रैश्च शिवस्येष्टः पिशंगरुप इति द्वाभ्यां, यूथ मुख्याश्चतस्रोवत् सतरीश्च समीपे, देवयजन उल्लेखनाद्यग्नि प्रतिष्ठान्तं कृत्वा, प्राणानायम्य तत्र वृषोत्सर्ग होमं करिष्ये। तत्र वृषोदेवता, चरुर्हविः, आघारवत्तन्त्रं इत्यादि सङ्कल्प्याग्निमुखान्ते पक्कं जुहोति। 'पूषागा अन्वेतुनः', 'शुक्रन्तेऽन्यत्' इति द्वाभ्यां आज्या हुतीरूप-

---

१(*) यजुः शतरुद्रीये अन्यतैव एते मन्त्राः सन्ति। रुद्र सूक्तं चमक नमकेच।

जुहोति १(*)। इह धृतिः स्वाहेति चतसृभिरुप सृजन्धरुणन्मात्रे( वत्सं धारय )धरुणो धयन् राय स्पोप अस्मासुदीधरत्स्वाहेत्येतया ऋचा ।……अगावा अग्नन्नुत भद्र मक्रन्निति एते नाष्टत्यृचा सूक्तेन प्र त्यृचेन नतासन्तिर्बेनता अर्व्वागिति····द्वौ प्रतीकौ, नमस्ते रुद्र इति २(†)। पञ्चदशभिरष्टाभिः स्त्रिभिरार्द्धर्चैश्च। ततः स्विष्टकृदादि वरदानान्तं कृत्वा विल्वपर्णेषु योरुद्रः अग्नाविति हुतशेषं निधाय, अतिरुद्रं जपित्वा गोमिथुनं लाजामन्त्रण त्रिःप्रदक्षिणमग्निं पर्य्याणीयाङ्कयित्वा ऋचां प्राचीमिति ३(‡) तिलोदकं नियाय, सं-वत्सतरीश्च पाययित्वोत्सृजति। एनं युवानमिति द्वाभ्यां गच्छन्तमनुमन्त्रयते। त्वां गावोवृणुत राज्यायेति, गवां मध्येतिष्ठन्तमनुमन्त्रयते, मयोभूर्व्वात इत्यनेनानुवाकेन।

अथ तासां पयसि पायसं श्रपयित्वा ब्राह्मणान् भोजयित्वा आशिषो वाचयित्वा अश्वमेधफलमाप्नोतीत्याह भगवान्बौधायन इति ॥

—*—

## अथ कात्यायनोक्त उच्यते।

—*—

724. **अथ वृषोत्सर्गो गो यज्ञेन व्याख्यातः।**

कार्त्तिक्यां पौर्णमास्यां चैत्र्यां रेवत्यां चाश्वयुजस्य मध्ये गवां सुसमिद्धमग्निं कृत्वाज्यं संस्कृत्येह रति रिति षड्जुहोति ४(+)। प्रतिमन्त्रं पूषागा अन्वेतुनः पूषारक्षत्वर्व्वतः पूषावाजमुसनोतु नः स्वाहेति पौष्णस्य जुहोति। रुद्रान् जपित्वैक वर्णोवा योवा यूथं च्छादयति यं वा यूथं च्छादयेद्। रोहितोवा स्यात् सर्व्वाङ्गे श्वेतो जीववत्सायावा पयस्विन्याः पुत्रो यूथे चलितः रूपस्वित तमः स्यात्तमङ्कृत्य यूपे

१(*) शुक्ल यजुः ८ अः। ५१ मः। 'उपसृजन्'—ऋक्, १।१४।८।१२५, ७, १८९, १०।२।१२।२, १०।

२(†) ,, ,, ,, ,, ,, ,,।

३(‡) शुक्ल यजुः २८ अः। १—१५मः। एषते, साम, उः ६।२।३। एनमिति.—साम, पूः, ३।३।१०। आथर्वणी, १।९३।३०।

४(+) ,, ,, १७ अः। ६६मः। "चैत्राम्' इत्यत्र चैत्' इत्यं भिन्नः पाठः।

मुख्याश्चतस्रोवत्सतर्य्यः । ताश्चालङ्कृत्य एनं युवानं पतिंवो ददानि तेन क्रीड़न्तीश्चरथ प्रियेण मानः साप्न जनुषा सुभगा राय स्पोषेण समिषा मदेमेत्येतयैव यंवीत्सृजेत् । तमभ्यर्थ्याभि मन्त्रयते ।
मयो भूरित्यनुवाकशेषेणं१(*) सर्व्वासां पयसि पायसं श्रपयित्वा ब्राह्मणान्भोजयेत् । पशुमप्येके कुर्व्वन्ति । तस्य शूलगवकल्पो व्याख्यात इति । एवं स्वस्व सूत्रानुसारेणान्येऽपि प्रयोगा ज्ञेयाः२(†) ॥

725. वृषोत्सर्गे लाज होमः कार्य्य इत्युक्तं देवजानीये,
लाज होमादिभिर्म्मन्त्रै र्होमं कुर्य्याद्विचक्षण इति पुराणान्तरा दिति ।

726. **अङ्कन विषये रेणु :—**

ततोऽस्य दक्षिणे भागे त्रिशूलाकृति मालिखेत् ।
वामभागे तथा चक्रं प्रतदो नायसेनत्विति ॥१३३३॥

727. **गोवृषयोः प्रार्थनोक्ता पुराणे—**

धर्म्मस्त्वं वृषरूपेण गवा मानन्द कारकः ।
अष्टमूर्त्तेरधिष्ठान मतः पाहि सनातनः ॥१३३४॥
तीक्ष्नश्रृङ्गाय विद्महे वेद पादाय धीमहि तन्नोवृषः प्रचोदयात् ।
इयं (एवं) वृषभ गायत्री पूजायां विनियुज्यते ।
वृषोऽसि भगवान् धर्म्मश्चतुष्पादः प्रकीर्त्तितः ॥१३३५॥
वृणोमि तमहं भक्त्या समां रक्षतु सर्व्वतः ।
गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्टतः ३(‡) ॥१३३६॥

---

१(*) 'तमभ्यर्च्याभिमन्त्र येत्' इत्यन्यः पाठः । मयोभूरभिमावाहि स्वाहा इति पञ्चमन्त्राः ।
अन्यत् सर्व्वं वह्वृचानां वृषोत्सर्गसन्दर्भे विद्यते ।
यजुषां वृषोऽत्सर्गे पद्धतौ च ।

२(†) अनुवाक—प्रागुक्तः ।

३(‡) स्वं सूत्रम्, यथा—गोभिल गृह्य सूत्रं च्छन्दोगाणाम् ।
पारस्करगृह्यसूत्रं—यजुषाम् ॥
आश्वलायन गृह्यसूत्रं कात्यायणञ्च ऋग्वेदिनाम् । तथैव स्व स्व ब्राह्मणाः ५-- धर्मि :
'धर्मेण विधृताः प्रजाः' इति भिन्नः पाठः ।

गावोमे हृदये सन्तु गवां मध्ये वसाम्यहम्।
पञ्चगावः समुत्पन्ना मथ्यमान-महोदधौ॥१३३७॥
तासां मध्येतु या नन्दा तस्यै देव्यै नमोनमः।
या लक्ष्मीः सर्व्वं देवानां याच देवेष्ववस्थिता॥१३३८॥
धेनुरूपेण सा देवी मम पापं व्यपोहतु।
अयंहि वोमया दत्तः सर्व्वासां पतिरुत्तमः॥१३३९॥
तुभ्यं चैता मया दत्ताः पत्न्यः सर्व्वा मनोरमाः।
धारणाद्धर्म्ममित्याहु धर्म्मिणा विधृताः प्रजाः १(*)॥१३४०॥
चरत्वं कर्म्मभूमौहि वृषः वत्सतरी युतः।
धर्म्मं पुत्रान् यशः कामान् महादेह्यनु सम्पदः॥१३४१॥
एकोत्तर शतश्चैव कुलानां तारस्व मे।
प्रत्तास्तु रुद्ररूपाय पत्न्यस्ते च वृषोत्तमः २(†)॥१३४२॥
पितॄणां तारणार्थाय पर्य्यटस्व महीमिमाम्।
श्रृङ्गाग्रक्षेपणैः सर्व्वं तस्य पापं विनाशय॥१३४३॥

**तस्य प्रेतस्य इति।**

पितरस्तृप्ति मायान्तु पुच्छाग्रजलशीकरैः।
यस्त्वां हिंस्यात्तु पापात्मा नरकं यातु चाक्षयम्॥१३४४॥
यस्त्वां रक्षति धर्म्मिष्ठः स्वर्गं यातु निरामयम्।
वृषोऽहि भगवानीशो वत्सिका मुक्तिरूपिणी॥१३४५॥
इमाश्च सुरूपाः पत्नीत्वे गृहाण त्वं हि गोपते!
कल्पिताः क्रीड़नार्थाय मयोत्सृष्टः सुखं व्रजेति॥१३४६॥

एते मन्त्रा वृषोत्सर्गकाले पठनीयाः।

उत्सर्गात् पूर्व्वं यवतिलयुतं कुश जलं कस्मिंश्चित्ताम्रपात्रे कृत्वा
728. वत्सतरी पुच्छमिलिते वृषपुच्छे तर्पणं कुर्य्यादित्युक्तं वाराहे।

गवां लाङ्गुल मुद्धृत्य ब्राह्मणोहस्त आददेत्।
पात्रे औदुम्वरे कृत्वा तत्र दद्यात्तिलोदकम् ३(‡)॥१३४७॥

---

१(*) प्रागपिगोदान प्रसङ्गे एते स्तवमन्त्रा उक्ताः।

२(†) पुत्रास्तु रुद्ररूपा...ये पत्नीः स्तव वृषोत्तमः' इति भिन्नः पाठः।

३(‡) प्रागपिगोदान प्रकरणे एते स्तवा उक्ताः। पात्र औदुम्बरं ताम्रम्, ताम्रपात्रमित्यर्थः।

**तर्पणमन्त्रो यथा—**

स्वधा पितृभ्यो मातृभ्यो बन्धुभ्यश्चापि तृप्तये ।
मातृपक्षाश्च ये केचिद् येचान्ये पितृपक्षजाः ॥१३४८॥
गुरु श्वशुर बन्धूनां ये कुलेषु समुद्भवाः ।
ये प्रेतभावमापन्ना येचान्ये श्राद्धवर्ज्जिताः ॥१३४९॥
वृषपुच्छोदकेनैते लभन्तां तृप्तिमुत्तमामिति ॥१३५०॥

729. **ब्रह्माण्डेऽपि—**

अपसव्यन्ततः कृत्वा गवां पुच्छेषु तर्पयेत ।
ब्रह्माद्या देवताः सर्व्वा ऋषयो मुनयस्तथा ॥१३५१॥
असुरा यातुधानाश्च मातरश्चण्डिकास्तथा ।
दिक्पाला लोकपालाश्च ग्रहदेवाधि देवताः ॥१३५२॥
ते सर्व्वे तृप्तिमायान्तु नीलपुच्छेषु तर्पिताः १(*) ।
विश्वे देवा स्तथादित्याः साध्याश्चैव मरुद्गणाः ॥१३५३॥
क्षेत्रपीठोपपीठानि नदा नद्यश्च सागराः २(†) ।
पातालस्था नागपत्न्यः नागाश्चैव सपर्व्वताः ॥१३५४॥
पिशाचा गुह्यकाश्चैव ( प्रेताः ) गन्धर्व्वगणराक्षसाः ।
पृथिव्यापश्च तेजश्च वायुराकाशमेव च ।
दिवि भुव्यन्तरिक्षे च येच पातालवासिनः ॥१३५५॥
शिवा शिव स्तथा विष्णुः सिद्धिर्लक्ष्मीः सरस्वती ।
तपोधनाश्च भगवान् अव्यक्तः परमेश्वरः ॥१३५६॥
क्षेत्रौषधिलतावृक्षा वानस्पत्याश्च देवताः ।
कपिलः शेषनागश्च तक्षकोऽनन्तएव च ॥१३५७॥
अन्ये जलचरा जीवा असंख्यातास्त्वनेकशः ।
चतुर्द्दशयमाश्चैव ये चान्ये यमकिङ्कराः ॥१३५८॥

---

१(*) 'वृषोत्सर्गेण ते सर्व्वे लभन्तां प्रीतिमुत्तमाम्' इति भिन्नः पाठः। अन्यद मत्स्य पुराणे, देवीपुराणे, ब्रह्म पुराणे, वृषोत्सर्गतत्त्वे चास्ति। पृथास्तु रुद्ररूपा ये (प्रत्न) पत्न्यश्च वृषोत्तमः' इत्यं अधिकमेव पाठान्तरमस्ति ।

२(†) नीलवृषलक्षणं यथा,—'चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः ।
,, लाक्षारस सवर्णश्च तं नीलमिति निर्द्दिशेत्' इति मात्स्ये ।
'क्षेत्र पीठादि पीठानि' इति पाठान्तरमस्ति ।

सर्व्वेऽपि यक्षराजानः पक्षिणः पशवस्तथा ।
स्वेदजोद्भिज्जा जीवा अण्डजाश्च जरायुजाः १(*) ॥१३५९॥
अन्येऽपि वनजीवाश्च( ये )दिवानिशं विहारिणः ।
अजागोमहिषीरूपा ये चान्ये पशवस्तथा ॥१३६०॥
शान्तिदाः शुभदास्तेस्युर्नीलपुच्छेषु तर्पिताः ।
आब्रह्म स्तम्बपर्य्यन्तं ये चान्ये गोत्रिण स्तथा ॥१३६१॥
ते सर्व्वे तृप्तिमायान्तु नीलपुच्छेषु तर्पिताः ।
सर्प( त्र )व्याघ्रहता ये च शृङ्गि-द्रंष्ट्रिघनिलादिभिः ॥१३६२॥
अपुत्रा अक्रिया येच अदारा धर्म्म वर्ज्जिताः ।
आमगर्भा मृता येच शस्त्रघातै र्मृताश्च ये ॥१३६३॥
संस्काररहिता येच रौरवादिषु गामिनः ।
आब्रह्मस्तम्बपर्य्यन्तं इत्यादि तिलोदकमित्यन्तास्तर्पणमन्त्राः ।
एवन्तर्पणं कृत्वा पुत्रकामश्चेद्यजमानस्तर्हि सत्नीकयजमानमुपवेश्य-सप्तधान्यहिरण्यादि पूतवंशपात्रेपु तान्येकीकृत्य तदुपरि रुद्रकलशोदक-दानेन, वारुणैमन्त्रैरापोहिष्ठेत्यादिभिश्च वैदिकैराचार्य्योऽभिषिच्य पौराणिकैरभिषिञ्चेत् ।

**पौराणिकाः ते मन्त्रा यथा,—२(†)**

सुवास्त्वामभिषिञ्चन्तु ब्रह्मविष्णु महेश्वराः ।
वासुदेवोजगन्नाथस्तथा सङ्कर्षणोविभुः ( प्रभुः ) ॥ १३६४॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमोवैनिर्ऋतिस्तथा ॥१३६५॥
वरुणः पवनश्चैव धनाध्यक्ष स्तथाविभुः ( शिवः ) ।
ब्रह्मणा सहिताः सर्वे दिकपालाः पान्तु ते सदा ॥१३६६॥
कीर्त्तिर्लक्ष्मी धृतिर्मेधा बुद्धिश्रद्धाक्षमामतिः ।
पुष्टिर्लज्जा वपुः शान्तिः तुष्टिः कान्तिश्च मातरः ३(‡) ॥१३६७॥

---

१(*) जीवा—चत्वारोमनुष्यादयः । 'जरायुजाण्डजोद्भिज्जस्वेदजाः । ते मानवः-पक्षि-मशक-तरु गुल्मादयः । सांख्यदर्शनेऽप्यस्ति । अवानिलादिभिः-प्रबलवायुाघात निर्घातादिभिः ।
२(†) एते मन्त्रा वसिष्ठसंहितोक्ता इति दीचायन्थेऽस्ति ।
३(‡) 'बुद्धिर्लज्जा' इति भिन्नः पाठः ।

एतास्त्वामभिषिञ्चन्तु सर्व्वकामार्थ सिद्धये १(*) ।
आदित्यश्चन्द्रमा भौमोबुधजीव सितार्कजाः ॥१३६८॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।
देवदानवगन्धर्वा यक्ष राक्षसपन्नगाः ।
ऋषयोमुनयोगावोदेव मातर एव च ।
देवपत्न्योद्रुमा नागा दैत्याश्चाप्सरसांक्षणाः ॥१३६९॥
अस्त्राणि सर्व्वशस्त्राणि राजानोवाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥१३७०॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिसिञ्चन्तु सर्व्वकामार्थसिद्धये २(†) ॥ १३७१॥

**अन्येच मन्त्राः—**

सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ३(†) ।
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ।
भगन्ते वरुणोराजा भगं सूर्य्यो वृहस्पतिः ॥१३७२॥
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयोविदुः ।
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि ।
ललाट कर्णरक्षणैरापः शुद्धन्तु सर्व्वदेति ॥१३७३॥

ललाटे कर्णयोरक्षणेरक्षन्तु वालधि कर्णयोर क्षणेन यस्तद्रक्षतु सर्व्वदेति । एवमभिषिक्तोयजमानः, स्नानवस्त्रं परित्यज्य वस्त्रान्तराणि धृत्वा, वृषभस्य दक्षिण खुर समीपे श्राद्धं कृत्वा पायसादिद्रव्येण सर्व्वपितृभ्यः पिण्डान्दत्वा वृक्ष्यमाणश्लोकैरपि, पिण्डान्दद्यात् ।

---

१(*) 'सर्व्व' इत्यत्र धर्म इति क्वचिद ग्रन्थ भिन्नः पाठः । मन्त्रशास्त्रेच एते शान्ति पाठमन्त्राः ।
शुक्ल, यजुः—४।१६ ।
" " २६।१४ ।

२(†) 'पावनं घृतम्' इति भिन्नः पाठः । शुक्ल यजुः १४:, मः २।३ ।

" पावमानी सूक्तानि प्रागुक्तानि । एतानि सूक्तानि वह्वृचानां हवीत्सर्गपद्धति सन्दर्भे सन्ति ।

३(‡) भगं षड्गुणाः, ऐश्वर्य्यस्य समग्रस्य धर्म्मस्य यशसः श्रियः ।
ज्ञान वैराग्ययोश्चैव षण्णां भग इतीरणा'। इति स्मृतौ ।
यथापरञ्च,—उत्पत्तिञ्च विनाशञ्च भूतानामगतिं गतिम् ।
वेत्ति विद्या मविद्याञ्च सवाच्यो भगवानिति' इति स्मृतौ ।
सायणभाष्येच ।

पितृवंशे मृता ये च मातृवंशे च ये मृताः ।
गुरु श्वशुर वन्धूनां ये चान्ये वान्धवाः स्मृताः ॥१३७४॥
वृक्षयोनिं गता येच पशुयोनिङ्गताश्च ये ।
पङ्गुत्वंश्च गता येवै येच मूकत्वमागताः ॥१३७५॥

**ते यथा,—**

येमे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
क्रियालोपगता येच तिर्य्यग् योनिगताश्च ये १(*) ॥१३७६॥
पङ्गुत्वंश्च गता ये वै येच मूकत्वमागताः ।
खुरदत्तेन पिण्डेन तृप्ता यान्तु परां गतिम् ॥१३७७॥
आब्रह्मणो ये पितृवंशजाताः,
मातुस्तथावंशभवा मदीयाः ।
कुलद्वये ये ममदासभूताः ;
भृत्यास्तथैवाश्रित सेवकाश्च ॥१३७८॥
मित्राणि सख्यः पशवश्च कीटाः,
दृष्टाह्य दृष्टाश्च कृतोपकाराः ।
जन्मान्तरे ये मम दासभूताः,
तेभ्यः स्वधा (सदा) पिण्डमहन्ददानि २(†) ॥१३७९॥
अस्मत् कुले मृता ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥१३८०॥
वन्धुवर्ग कुले येच गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥१३८१॥
मातामहकुले येच गतिर्येषां न विद्यते ।
तेपामुद्धरणार्थाय इमं पिण्डं ददाम्यहम ॥१३८२॥

---

१(*) अत्र पाठ-व्यतिक्रमोऽस्ति । षोडश पिण्डदान सन्दर्भे मन्त्रोऽयं अवसानेऽस्ति । गयाश्राद्ध सन्दर्भे मातृषोड़शी, पितृषोड़शी प्रकरणेच एतेमन्त्राः वर्त्तन्ते ।

'क्रियालोपगता येच जात्यन्धाः पङ्गवस्तथा ।
विरूपाणामगर्भाश्च ज्ञाताज्ञाता कुक्षौ मम' ॥
इति च पाठान्तरमस्ति ।

२(†) एष मन्त्रः परिशिष्टे विद्यते । अत्र पाठान्तरमप्यस्ति । 'अस्मत्कुले' इत्यारभ्य षोड़शी पिण्डदान मन्त्राः ।

अजातदन्ता येकेचिद् येच गर्भप्रपीड़िताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥१३८३॥
अग्निदग्धाश्च ये केश्चिन्नाग्निदग्धा स्तथापरे ।
विद्युचौरहता ये च तेभ्यः पिण्डं ददाम्यहम् ॥१३८४॥
दावदाहे मृता येच सिंहव्याघ्र हताश्च ये ।
दंष्ट्रिभिः शृङ्गिभिर्वापि तेभ्यः पिण्डन्ददाम्यहम् ॥१३८५॥
उद्बन्धन मृता येच विषशस्त्र हताश्च ये ।
आत्मोप (आत्माप) घातिनो येच तेभ्यः पिण्डन्ददाम्यहम् ॥१३८६॥
अरण्ये वर्त्मनि वने क्षुधया तृष्णया हताः ।
भूतप्रेतपिशाचाश्च तेभ्यः पिण्डं ददाम्यहम् ॥१३८७॥
रौरवेचान्धतामिस्रे कालसूत्रेच येस्थिताः १(*) ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥१३८८॥
अनेक यातनासंस्था ये नीता यमकिङ्करैः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥१३८९॥
नरकेषु समस्तेषु यातनासुच ये स्थिताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥१३९०॥
पशुयोनि गता येच पक्षिकीट सरीसृपाः २(†) ।
अथवा वृक्षयोनिस्थाः तेभ्यः पिण्डं ददाम्यहम् ॥१३९१॥
जात्यान्तर सहस्रेषु भ्रमन्तः स्वेन कर्म्मणा ।
मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम् ॥१३९२॥
दिव्यन्तरीक्षभूमिस्थाः (ष्ठा) बान्धवाः पितरस्तथा ३(‡) ।
मृता असंस्कृता येच तेभ्यः पिण्डं ददाम्यहम् ॥१३९३॥

---

१(*) 'असिपत्र वने घोरे कुम्भी पाके चये गताः' इति भिन्नः पाठः ।

२(†) 'अन्ये दुर्म्मरणैर्येच' इत्यपि पाठान्तरम् ।

३(‡) 'दिव्यन्तरिक्ष भूमिस्थाः पितरो बान्धवादयः' ,, ,, ,,

,, अयं पञ्चदश मन्त्रस्थः पाठः । आदर्श पुस्तकान्तरे षोड़शपिण्डदान मन्त्राणां नाना-

,, विधाःपाठभेदाः सन्ति ।

जन्मान्तर विषये शास्त्रप्रमाणमसंख्यमस्ति तथाहि.—'बहूनि मे व्यतीतानि जन्मानि तवचार्जुन'। ति । अन्यत् कठोपनिषदि ।

'जन्म जन्मपदभ्यस्तं दानमध्ययनन्तपः'। 'शरीरजैः कर्म्मदोषैः याति स्थावरतां नरः। कायिकैः पक्षि मृगतां मानसैरन्त्य जातिताम्' इति मनुः ।

ये केचित् प्रेत रूपेण वर्त्तन्ते पितरोमम ।
ते सर्व्वे तृप्तिमायान्तु पिण्डदानेन सर्व्वदा ॥१३९७॥
येऽवान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
तेषां पिण्डोमया दत्तो ह्यक्षय्यमुपतिष्ठतां (तु) ॥१३९८॥
एवं पिण्डदानं समाप्य श्राद्धशेषं समापयेत् ।

तर्पणाभिषेक-पिण्डदानानि काम्यवृषोत् सर्गे एव भवन्ति, शिष्ट-समाचारात् । प्रेतवृषोत सर्गेतु तर्पणं कृताकृतमिति केचित् ।

एवं वृषोत्सर्गं कृत्वा ऐशान्यां दिशि वृषं चालयेदित्युक्तं, वैष्णवे ।
वृषं वत्सतरी युक्तं ऐशान्यां चालयेद्दिशि ।
लोहकारं प्रयत्नेन तोषयेद् वस्त्र गन्धतः ॥१३९९॥ इति ।

730. **ब्राह्मेऽपि,—**

अनेन विधिना यस्तु लक्षण्यं वृषमुत्सृजेत् १(*) ।
सोऽनन्तफलमाप्नोति पितॄणां मुक्तिकृद्भवेत् ॥१४००॥ इति ।

731. **वृषलक्षणं, मात्स्ये,—**

उन्नतकन्धककुद ऋजु लाङ्गुलभूषणः ।
महाकटितटस्कन्धो वैदूर्य्यमणि लोचनः ॥१४०१॥
प्रवालगर्भशृङ्गाग्रः सुदीर्घऋजुवालधिः ।
नवाष्टदशसंख्यैस्तु तीक्ष्नाग्रैर्दशनैः शुभैः ॥१४०२॥
मल्लिकाक्षश्च भोक्तव्य स्तथा वर्णस्तु ताम्रकः ।
श्वेतोदरः कृष्टपृष्ठो ब्राह्मणस्य प्रशस्यते ॥१४०३॥
पक्षप्रागायते शृङ्गे स्वमुखाभि मुखे सदा ।
सर्वेषामेव वर्णानां स च सर्व्वार्थ साधकः ॥१४०४ ॥ इति ।

---

१(*) 'वृषोत्सर्गश्च कर्त्तव्योदेयाच कपिलाशुभा' इति यज्ञिवतत्त्वे ।
'अशौचान्नाद द्वितीयेऽह्नि यस्य नोत्सृज्यते वृषः ।
पिशाचत्वं ध्रुवन्तस्य दत्तैः श्राद्ध शतैरपि' ॥ इति स्मृती ।
'एनं युवानं पतिं वोददामि' इत्यादि श्रुतिश्च वृषदानेऽस्ति । एवमेव सांख्यायन गृह्य सूत्रे विद्यते ।

**वर्ज्योऽपि वृषउच्यते,—**

कृष्णताल्वोष्ठदशनोरुक्षश्रृङ्गशफश्च यः ।
अव्यक्तदन्तो ह्रस्वश्च व्याघ्रभस्मनिभश्च यः ॥१४०५॥
ध्वांक्षगृध्र सवर्णश्च तथा मूषक सन्निभः ।
चण्डाक्षश्चैव काणश्च केकरोगौर्न दीयते ॥१४०६॥

**एतल्लक्षणा धेनुरपि नदेयेति** १(*) ।

ततोवै कपिलाधेनुं सालङ्कारां विधानतः ।
प्रेतस्वर्गस्य कामेन ब्राह्मणाय समुत्सृजेत् ॥१४०७॥ इति

732. **ब्रह्मपुराणात् ।**

वृषोत्सर्गं प्रकुर्व्वीत देयाच कपिला शुभेतिमत्स्यपुराणाच्च ।

**अन्यच्च—**

शतमर्द्धं तदर्द्धं वा ब्राह्मणान् भोजयेत्ततः ।
प्रेतमुक्ति-वृषोत्सर्गे भोजयेद् ब्राह्मणाष्टकम् । २(†)
लोमत्वग्दाहजनित-दोषनिर्हरणायतु ।
ब्राह्मणान् भोजयेदष्टावेकोद्दिष्टविधानत इति ॥१४०८॥

इदमेव वसु श्राद्धमित्युच्यते । इदं वसु मात्रोद्देशपक्षे सव्येन भवति । उभयत्रापि पिण्डदानं कृताकृतमिति पद्धतिकाराः प्राहुः ।

733. **तत्र वसुनामानि, भारते—**

ध्रुवोधरश्च सोमश्च आपश्चैवानिलोऽनलः ।
प्रत्युषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥१४०९॥ इति ।

---

१(*) एतल्लक्षणा, उक्त निषिद्धलक्षणावेति ज्ञेया ।

२(†) 'गर्भाधानादि कार्य्येषु ब्राह्मणान् भोजयेद्द्वय' इति स्मृतौ ।

,, 'विप्राणां भोजनैर्होमैः प्रोचणीये रहनिंशम्' इति मार्कण्डेय पुराणम् । 'यावतीर्वा देवताः सर्वा स्ता वेदविदि ब्राह्मणेचसन्ति' इति श्रुतिः । षण्वदहानसंख्ये चतुर्थ खण्डे गोदान प्रसङ्गे प्रोक्तम् । मतान्तरे, चेदिराज वसु प्रभृतयो महाभारतोक्ताः ।

734. **कालिकापुराणे,—**

अरण्ये चत्वरेवापि गोष्ठेवा मोचयेद् वृषम् ।
न गृहे मोचयेत् विद्वान् कामयेत् पुष्कलं फलम् ॥१४१०॥ इति

**वृषमुत्स्रष्टुं यदि न शक्नुयात्तदाह, रेणु :—**

न शक्यते वृषोत्सर्गं कर्त्तुं होमन्तु कारयेत् ।
न करोति यदा होमं तत्रान्नं प्राप शोणितमिति १(*) ॥१४११॥

735. **पा[द्मे]ण्ड्येऽपि,—**

वृषोत्सर्जन वेलायां वृषाभावे कथं भवेत् ।
हिरण्येनाथवा दर्भैः कृत्वा तंवृषमुत्सृजेत् ॥१४१२॥
अस्योपलक्षणत्वाद् मृन्मयादिरप्युत् स्रष्टव्यः ।

**अन्यत्र विशेष उक्तः ।**

असमर्थः समर्थोवा वृषाभावे कथं भवेत् ( चरेत् ) ।
गोष्ठाद् वृषं गृहं नीत्वा मुद्रा(द्रा)न्तं भोजयेत्ततः ॥१४१३॥

इति श्रीमदनन्त भट्ट विरचिते विधानपारिजाते
वृषोत्सर्ग विधानं समाप्तम् ।

—*—

## अथ षोड़शश्राद्धानि ।

—*—

आद्यं (श्राद्धं) एकोद्दिष्ट मूनमासिकं त्रैपाक्षिकं द्वितीयं (तृतीयं) चतुर्थ पञ्चमं षान्माषिक मूनषान्मासिकं सप्तममष्टमं नवमं दशमंमेकादशं द्वादशमूनाब्दिकञ्चेति ।

736. **तथाच जातूकर्णः—**

द्वादशप्रति मास्यानि आद्यषान्मासिके तथा ।
त्रैपाक्षिकाब्दिकेचेति श्राद्धान्येतानि षोड़शेति ॥१४१४॥
अत्राद्यषान्मासिकाब्दिक शब्दाः सम्प्रदायानुसारेण व्याख्येयाः ।

---

१(*) 'पापशोणित' मिति भिन्नः पाठः ।

737. **एषां कालमाहतु, वृद्धयाज्ञवल्क्यशातातपौ,—**

मृतेऽहनितु कर्त्तव्यं प्रतिमासन्तु वत्सरम् ॥१४१५॥

एवमाद्यमेकादशेऽनि, आद्यमिहैकोद्दिष्टमित्यर्थः ।

एतच्च क्षत्रियादेरशौचमध्य एकादशेऽहन्येव कुर्य्यादित्युक्तं—

738. **वृद्धवसिष्ठेन,—**

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।

चतुर्णामपि वर्णानां सूतकन्तु पृथक् पृथक् ॥१४१६॥ इति ।

739. **लौगाक्षिरपि,—**

आद्यशाद्धमशुद्धोऽपि कुर्य्यादेकादशेऽनि ।

कर्त्तुःतात्कालिकी शुद्धि रशुद्धः पुनरेव स इति ॥१४१७॥

**एकादशाहे श्राद्ध विघ्नेसति कालमाह, हेमाद्रौ,**

740. **वौधायनः—**

एकोद्दिष्टं (श्च) एवं स्यादू द्वादशेऽहनि वा पुनः ।

अतऊर्द्ध्वमयुग्मेषु कुर्व्वीताहः स्व (सु) शक्तितः १(*) ॥१४१८॥

अर्द्धमासेऽथवामासि पाकेनैव समाचरेत् ।

अभावे पाकपात्राणां तदहः समुपोषणम् ॥१४१९॥ इति ।

741. **यत्तु मात्स्ये,—**

एकादशेऽनि तथा विप्रानेकादशैवतु ।

क्षत्रियादिः सूतकान्ते भोजयेदर्चयेद्द्विजान् ॥१४२०॥

इत्यादिवचनं तद्रुद्रगणश्राद्धपरमिति मदनपारिजातादौ व्याख्यातम् ।

742. **स्मृत्यर्थसारेऽपि—**

सूतकान्ते प्रेतरूप रुद्रोद्देशेनैकादश ब्राह्मणभोजनं कार्य्यमिति ।

रुद्रगणश्राद्धं षोड़शश्राद्धेभ्यः पूर्व्वमभावि ।

आदौ रुद्रगण श्राद्धं षोड़शस्युरनन्तरम् ॥१४२१॥ इति स्मृतेः ।

---

१(*) चवे कोदिष्ट' 'श्च एव' इति पाठान्तरमिति ।

743. **रुद्रनामानि, भारते,—**

हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ।
वृषाकपिश्च शम्भुश्च कपर्द्दी भैरवस्तथा ।
मृगव्याधश्च शर्व्वश्च कपाल्येकादश स्मृताः ॥१४२२॥ इति ।

**आद्यमासिकं द्विरावृत्त्या कार्य्यमित्याह,—**

744. **गोभिलः—**

ब्राह्मणं भोजयेदाद्ये होतव्य मनलेऽथवा ।
पुनश्च भोजयेद् विप्रं द्विरावृत्तिर्यतोभवेदिति ॥१४२३॥

745. **अतएव नारायण भट्टोऽप्याह,—**

मासिकानि दशैकञ्च आद्ये द्वेऽत्यर्द्ध (द्धयर्ष) मासिकम् ।
ऊनार्द्धं मूनषन्मासं प्रेतश्राद्धानि षोड़श इति १(†) ॥१४२४॥
अत्यर्द्धमासिकं तु त्रैपाक्षिकमित्यर्थः ।

**इदं सद्यः शौचेऽप्येकादशाहे कार्य्यमित्याह, शङ्खः,—**

सद्यः शौचेऽपि दातव्यं प्रेतस्यैकादशेऽनि ।
स एव दिवसस्तस्य श्राद्धपिण्डोदकादिष्विति ॥१४२५।

746. **रुद्र (ढुंढु) पद्धतिकारस्तु—**२(†) ।

सद्यःशौचे····द्वादशमासिकानामाद्यश्राद्धं कृत्वा द्वितीयेऽन्त्यैकादशाह-कृत्यमित्याह । प्रमाणन्तु नोक्तवान् । तेन यथाचारं व्यवस्थेयम् । त्रिरात्राशौचे तच्चतुर्थदिने एकादशाहकृत्यमिति नारायण भट्टीये ।

747. **अत्र रेणुरपि,—**

तत्र त्रिरात्रमाशौचं द्वितीयेनास्थि सञ्चयः ।
नवश्राद्धं वृषोत्सर्गमाद्यं तुर्य्ये समाचरेदिति ॥१४२६॥

---

१(*) 'अत्यर्द्धं मासिकं' इत्यं पाठः क्वचित् ।
२(†) 'आद्यान्यूनाब्दिकादीनि कुर्य्यादित्याह गौतमः' इत्यं पाठस्तु विद्यते ।

अन्येषां द्वादशमासिकानां कालाः द्वादशमासिकेषु द्वादशमृताह्यानि ।
मृतेऽनि तु कर्त्तव्यं प्रतिमासन्तु वत्सर, मिति पूर्व्वोक्त स्मृतेः ।
ऊनमासिक कालस्तु द्वादशाहं ऊनमासोवा ।
मरण द्वादशाहे स्यान्मास्यूनं वोनमासिकमिति—

748. **गोभिलोक्तेः ।**

ऊनषान्मासिककाल ऊनषष्ठमासः ।
ऊनाब्दिककाल ऊनद्वादशोमासः ।
त्रैपाक्षिक स्तृतीयः पक्षः ।

**तद् यथा—**

ऊनषाण्मासिकं षष्ठे मास्यूनेप्यूनमासिकम् ।
त्रैपाक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथेति ॥१४२७॥

749. **हेमाद्रौ गालवोक्तेः ।** १(*)

**अत्र विशेषमाह कार्ष्णाजिनिः—**

श्राद्धात्यूनाब्दिकादूने न कुर्य्यादित्याह गौतमः ।
कुर्य्यात्त्रैपाक्षिकं श्राद्धं त्रिपक्षे विषमेऽनि ॥१४२८॥ इति ।
ढुण्ढु—नाम्ना धर्म्मशास्त्र निवन्धकारः ।

750. **ऊनश्राद्धेऽन्यविशेष माह, गार्ग्यः—**

नेक्षणं भार्गवदिने चतुर्दश्यां त्रिपुस्करे २(†) ।
ऊनश्राद्धं नकुर्व्वीत गृही पुत्र धन क्षयाद् ॥१४२९॥ इति ।

---

१(*) चतुर्वर्ग चिन्तामणी धर्म्म शास्त्रनिवन्धे । महर्षिगालव आदित्यर्थः ।

२(†) त्रिपुष्कर योगमाह, ज्यौतिषे—
'वाराः क्रूरास्तिथिर्भद्रा नक्षत्रंभद्र-पादुकम्' ।
पुनर्वसूत्तराषाढ़ा कृत्तिकोत्तर फल्गुणी ।
पूर्व्वभाद्रविशाखाच रवि भौमशनैश्चराः ॥
द्वितीया सप्तमी चैव द्वादशी तिथिरेवच ।
एतेषामेव योगेतु भवन्तीति त्रिपुष्कराः' ॥

751. **मरीचिरपि,—**

त्रिपुष्करेषु नन्दासु सिनीवाल्यां भृगोर्दिने ।
चतुर्द्दश्यां तु नो तानि कृत्तिका सु त्रिपुष्करे ॥१४३०॥ इति

**भद्रायां (तु) न कार्य्यमित्युक्तं स्मृत्यन्तरे,—**

भद्रायान्तु न कर्त्तव्यं न्यून श्राद्धं त्रिपुष्कर इति ।
यदि तत्र साम्वत्सरेऽधिमासस्तदा श्राद्धद्वयं स्यात् ।
श्राद्धीयेहनि सम्प्राप्तेत्वधिमासो भवेद यदि ।
श्राद्धद्वयं प्रकुर्वीत एवं कुर्व्वन् फलं लभेदिति—

752. **वृद्ध वसिष्ठोक्तेः ।**

अब्दमम्बुघटं दद्यादन्नं वारि समन्वितम् ।
सम्वत्सरे विवृद्धेऽपि प्रतिमासन्तु मासिकमिति कौथुमोक्तेश्च ।
इमानि श्राद्धानि लौकिकाग्नि-सम्पाद्यानि ।
सपिण्डीकरणान्तानि प्रेतश्राद्धानि यानिवै ।
तानिस्यु लौंकिके वह्ना वित्याहा(श्रा)श्वलायनः ॥१४३१॥

753. **इति स्मृतेः । आहिताग्नेरत्रविशेषमाह, कात्यायनः—**

श्राद्धमग्निमतः कार्य्यं दाहादेकादशेऽहनि ।
न्यूनानि न प्रकुर्वीत प्रमी (ता) तेऽहनि सर्व्वदा ॥१४३२॥
ध्रुवानि त्रिपक्षादूर्द्धानि श्राद्धानि । प्रमीते, मृततिथौ १(*) ।
ऊर्द्धं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत् ।
अधस्तु कारयेद्दाहा दाहिताग्नेर्द्विं जन्मनः ॥१४३३॥ इति—

754. **जातु कर्णोक्तेः ।**

इमानि श्राद्धानि स्वस्वकालेन कृतानि चेत्तत्राह—

755. **ऋष्यश्रृङ्ग :—**

एकोद्दिष्टे तु संप्राप्ते यदि विघ्नं प्रजायते ।
मासेऽन्यस्मिंस्तिथौ तस्यां कुर्य्यादन्तरितं सदेति ॥१४३४॥

---

१(*) अत्र 'ध्रुवाणि' इति पाठान्तर मन्यत्र ।

„ 'प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्' इति स्मृत्यन्तरे ।

756. **कण्वोऽत्र विशेषमाह,—**

नवश्राद्धं मासिकञ्च यद् यदन्तरितं भवेत् ।
तत्तदुत्तर स्वातन्त्रथा दनुष्ठेयं प्रचक्षते ॥१४३५॥ इति

757. **पैठीनसिः—**

सपिण्डीकरणा दर्व्वाग् यानि श्राद्धानि षोड़श ।
एकोद्दिष्ट विधानेन कुर्य्यात् सर्व्वाणि तानितु ॥१४३६॥
सपिण्डी करणादूर्द्ध्वं यदा कुर्य्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्य्यात्तथा कुर्य्यात् स तान्यपीति ॥१४३७॥
पुत्र बहुत्वे विभक्तत्वेऽपि ज्येष्ठे नैवेमानि कार्य्याणीत्याह—

758. **प्रचेताः ।**

एकादशाद्याः क्रमशो ज्येष्ठस्य विविधाः क्रियाः ।
कुर्य्युर्नै कैकशः श्राद्ध माब्दिकन्तु पृथक् पृथगिति ॥१४३८॥
अत्राब्दिकं पृथक् पृथगिति,—विभक्त विषयम् १(*) ।
अविभक्तेषु ज्येष्ठेनैवतुकार्य्यमितिवक्ष्य माणत्वात् ॥१४३९॥

759. **मरीचिरपि,—**

सपिण्डीकरणं यावत् प्रेतश्राद्धानि षोड़श ।
पृथग् नैव सुताः कुर्य्युः पृथग् द्रव्येष्वपि क्वचित् ॥१४४०॥
सर्व्वस्यानु मतिं कृत्वा ज्येष्ठेनैवतु यत्कृतम् ।
द्रव्येणचा (वा) विभक्तेन सर्व्वैरेव कृतम्भवेदिति ॥१४४१॥

760 **प्रचेताः,—**

अर्व्वाक् सम्वत्सरात् सर्व्वे कुर्य्युः श्राद्धं समेत्यवै ।
सम्वत्सरे व्यतीतेतु कुर्य्युः श्राद्धं पृथक् पृथगिति ॥१४४२॥

761. **षोड़श श्राद्धाकरणे दोष उक्तः परिशिष्टे,—**

द्वादश प्रतिमास्याणि आद्यं षाण्मासिके तथा ।
सपिण्डीकरणञ्चेति प्रेत श्राद्धानि षोड़श ॥१४४३॥

---

१(*) 'ज्येष्ठेनैवतु पुत्रेण पुत्री भवति मानवः' इति मनुवचनात् प्रेतकृत्येषु ज्येष्ठस्यैव श्रेष्ठत्वं, अशक्तस्य ज्येष्ठस्यानुमत्या तद्वचनेन तत् कनिष्ठेनापि कर्त्तुं शक्यम् ।

यस्यैतानि नदीयन्ते प्रेत श्राद्धानि षोड़श ।
प्रेतत्वं हि स्थिरं तस्य दत्तैः श्राद्धशतैरपीति ॥१४४४॥

एतेषां षोड़श श्राद्धानां स्व स्व कालेऽनुष्ठानम्, पूर्णे सम्वत्सरे—सपिण्डीकरणपक्षे देदितव्यम्। यदि त्रिपक्षे १(*) सपिण्डीकरणं क्रियते तदा सपिण्डीकरण दिनात् प्रागपकृष्य षोढ़शसु दिनेषु कर्त्तव्याणि ।

सपिण्डीकरणात् पूर्व्वं षोड़श श्राद्धमाचरेत् ।
ततः सपिण्डनं कुर्य्यात् त्रिपक्षेवा [illegible] ॥१४४५ ॥

**इति रेणुक्तेः ।**

मुख्य श्राद्धं मासि मासि अपर्य्याप्तावृत्तुंप्रति ।
द्वादशाहेषु या भोज्या (भाज्या) एकाहे द्वादशेऽपिवेति—

762. **हारीतोक्तेश्च** २(†) ।

ऋतुं प्रतीति द्वेद्वे इत्यर्थः ३(‡) ।

अथ यदि वृद्धि सम्भावनया सम्वत्सरात् पूर्व्वमेव करोति तदाप्येव—मेव कुर्य्यात् ।

प्रेत श्राद्धानि सर्व्वाणि सपिण्डीकरणन्तथा ।
अपकृष्यापि कुर्व्वीत कर्त्तुं नान्दी मुखं द्विजः ॥१४४६॥ इति—

763. **शाङ्खायनोक्तेः ।**

—*—

अथ यद्यग्नि मान् पुत्रः पिण्ड पितृयज्ञ-पार्वण श्राद्धार्थं द्वादशाहे सपिण्डनं चिकीर्षति । तथा सर्व्वाण्येकादशाहे तानि कुर्य्यात् ।

द्वादशाहे यदा कुर्य्यात पितुः पुत्र सपिण्डनम् ।
एकादशेऽह्नि कुर्व्वीत प्रेत श्राद्धानि षोड़शेति द्वादशाहे षोड़श श्राद्धानि कृत्वा त्रयोदशाहे सपिण्डीकरणं कुर्य्यात् ।

आनन्त्यात् कुल धर्म्माणां पुंसां चैवायुषः क्षयात् ।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ।

---

१(*) अत 'त्रिपच' इति पाठः अस्ति ।

२(†) एक पुत्र स्थाने प्रवलवाधक सम्भावने च 'आनन्त्यात्कुल धर्म्माणां पुंसाञ्चैवायुषः क्षयात' इति युक्तियुक्तं पूर्व्वमुक्तम् ।

३(‡) द्वौ द्वौ मासावृतु ऋतुः इति ।

इत्येक दिन कृत्ये एषा द्वादशा हस्तुति रित्याह १(*) ।
अत्र यथा कुलाचारं व्यवस्था ज्ञेया ।
एतच्छ्राद्धं पोड़शकं सपिण्डी करणानन्तरमपि कर्त्तव्याणीत्युक्तं—

764 **देवलेन ।**

पक्ष-सम्वत्सरादर्व्वाक् सपिण्डीकरणं कृतम् ।
पोड़शानां द्विरावृत्तिं कुर्य्यादित्याह गौतमः ॥१४४७॥ इति ।

765. **पैठीनसिरपि,—**

सपिण्डीकरणादर्व्वाग् यानि श्राद्धानि षोड़श ।
एकोद्दिष्ट विधानेन कुर्य्यात सर्व्वाणि तानितु ॥१४४८॥
सपिण्डीकरणादूर्द्धं यदा कुर्य्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्य्यात् तथा कुर्य्यात स तान्यपि ॥१४४९॥ इति ।

766. **अङ्गिराश्च,—**

यस्य सम्वत्सरादर्व्वाक् सपिण्डीकरणं कृतम् ।
मासिकं चोदकुम्भश्च देयन्तस्यापि वत्सर मिति ॥१४५०॥
वत्सर मिति श्रवणात पूर्व्वभा विनामपकर्षेऽप्युत्तरभाविनां नापकर्षः । किन्तु स्वस्व कालेऽनुष्ठान मिति गम्यते । वृद्धिनिमित्तक-सपिण्डीकरणापकर्षे उत्तर भात्रि न्यपि प्रतिवृद्धेः पूर्व्वमपकृष्य कर्त्तव्याणी-
767. त्याह, शाङ्खायनिः ।
सपिण्डीकरणादर्व्वा गपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्यन्तर निषेधना दिति ॥१४५१॥
वृद्धि श्राद्धानन्तरं तन्निषेधा दित्यर्थः ।

---

१(*) महर्षिः शाङ्ख्यायनः इत्यब्रवीत् । सर्व्वमेतत् शुद्धितत्त्वे चास्ति ।
,, 'देशानुशिष्टं कुलधर्म्ममग्र्यं' इति शास्त्रात् । अन्यच्च 'आचार प्रभवो धर्म्मः धर्म्मस्यप्रभुः रच्युतः' । 'आचारहीना न पुनन्ति वेदाः ।'
'यद् यदाचरति श्रेष्ठः तत्तदेवेतरो जनः' ।
'एता महाः शिष्टाचारा ग्राह्या विप्रैः सदा, भुवि' । इत्यादयः श्रुतयः प्रमाणम् ।
अतः शिष्टाचारः, देशाचारः, कुलाचारः, प्रामाणिकः ।
अत्र, 'पूर्व्वैराचरितं च यत्' इति स्मृतेः ।

768. **कात्यायनोऽपि—**

निवर्त्त्य वृद्धिं तन्त्रन्तु मासिकानि नतन्त्रयेत ।
अयात यामं मरणं न भवेत् पुनरस्यत्विति ॥१४५२॥
यदि कुर्य्यात्तदा पुनर्मरणं भवे दित्यर्थः ।
वृद्धिमन्तरेणापकर्षे दोषमाह,—

769. **अङ्गिराः,—**

अन्तरेण च योवृद्धिं मासिकान्यपकर्षति ।
स श्राद्धी नरके घोरे पितृभिः सह मज्जतीति ॥१४५३॥

**अत्र विशेषमाह, जातूकर्ण्य :—**

पितुः पितृगणस्थस्य कुर्य्यात् पार्व्वणमादरात ।
प्रत्यब्दं प्रतिमासञ्च विधिर्ज्ञेयः सनातनः ॥१४५४॥ इति ।

770. **कात्यायनोऽपि,—**

सपिण्डीकरणादूर्द्धं नदद्यात् प्रति मासिकम् ।
एकोद्दिष्ट विधानेन दद्यादित्याह शौनकः ॥१४५५॥ इति ।
एकोद्दिष्ट विधानेन दद्या दिति सम्बन्धः । यदि प्रत्याब्दिकमेकोद्दिष्ट-
विधिना करोति तदेमान्यप्येकोद्दिष्ट विधिना कुर्य्यात् ।
प्रत्यब्दं यो यथा कुर्य्यात्तथा कुर्य्यात् स तान्यपीति । पैठीनसिवचना-
771. दिति केचिदाहुः । अत्र यथाचारं व्यवस्था ।

772. **एकोद्दिष्टविधिः, वाराहे,—**

श्वः करिष्ये इति ज्ञात्वा ब्राह्मणामन्त्रण क्रिया १(*) ।
गतोसि दिन लोकत्वं कृतान्त विदितान्यथ ॥१४५६॥
मनसा वानुभूतेन विप्रेक्ष्याहं निमन्त्रये ।
पूजयिष्यामि भोगेनेत्येवं विप्रं निमन्त्रयेत् ॥१४५७॥
अस्तं गते तथादित्ये गत्वा विप्रनिवेशनम् ।
दत्वा उपायं विधिवन्नम स्कृत्य द्विजोत्तम् ॥१४५८॥

---

१(*) इति श्राद्धाङ्गविप्रामन्त्रण नियमः श्राद्धे स्वविधि वक्तः। यक्षते धर्म्मज्ञानं प्रत्यवायश्च स्यात् ।

पादौ प्रक्षाल्य तैलेन प्रेतस्य हितकाम्यया ।
प्रभातायान्तु सर्व्वर्य्यामुदितेतु दिवाकरे ॥१४५९॥
कारयित्वा श्मश्रुकर्म्म नखानां च्छेदनं ततः १(*)।
स्नापनाभ्यञ्जने दद्याद्विप्राय विधि पूर्व्वकम् ॥ १४६०॥ इति ।

773. **निमन्त्रण विषये वर्णतो विशेष माह, प्रचेताः—**

दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा ।
पादावादाय वैश्योद्वौ शूद्रः प्रणति पूर्व्वक मिति ॥१४६१॥

एवं पूर्व्वेद्युस्तदहर्व्वा निमन्त्र्य श्मश्रुकर्म्म कारयित्वा, स्नानाभ्यञ्जन-संस्कृतान् मध्याह्ने आहूय प्राचीनावीती भूत्वा मुकगोत्रस्यामुकशर्म्मणः प्रेतस्य प्रेतत्व निवृत्त्यर्थं मरणदिनादारभ्यैकादशेऽनि महैकोद्दिष्ट संज्ञ-माद्यमासिकमेकोद्दिष्ट विधानेन करिष्य इति सङ्कल्प्य, स्वसूत्रोक्त-विधिना तत् कुर्य्यात् ।

ततः षोड़शश्राद्धान्या चरेत् । तत्रैवं सङ्कल्पः कार्य्यः ।

देश-काल-वैपरीत्यशङ्कायाः(या)स्वशरीरस्यानित्यत्त्वेन हेतुना द्वादशाहे२(†) सपिण्डी करणं कर्त्तुकाम आद्यमासिकं ऊनमासिकं, त्रैपाक्षिकं, द्वितीयं, तृतीयं चतुर्थं पञ्चममूनषाण्मासिकं, षष्ठं सप्तममष्टमं नवमं दशममेका-दशकं, ऊनाब्धिकमाब्दिश्चैकोद्दिष्टविधिना करिष्य इति सङ्कल्प्य यथा-वदाचरेदिति ३(‡) ।

774. **अत्र विशेष धर्म्मा उच्यन्ते, तत्र भरद्वाजः—**

नवश्राद्धं सपिण्डत्वं श्राद्धान्यपिच षोड़श ।
समारभ्य विधानेन यद्वान्नेन (पक्वान्नेन) समाचरेत् ॥१४६२॥
यद्वामेन हिरण्येन शूद्रस्त्वामेन कारयेदिति ।
अन्नमेकमेव सर्व्वश्राद्धेषु कालकर्त्तृत्वे तत्रैक्यादिति बहवः ।

---

१(*) 'नखच्छेदं ततः परम्' इत्यपि पाठान्तरम् ।

२(†) द्वादशाहेति,—'आनन्त्यात् कुलधर्म्माणां पुंसां चैवायुषः क्षयात् । अस्थिरत्वाच्छरीरस्य द्वादशाहः प्रशस्यते' ॥ इति । प्रागप्युक्तम् । विप्राणांपिण्डश्चमन्वयपक्षे श्रीचनप्राहुः ।

३(‡) यथावदिति—विधागपद्धत्यनुसारेण । स्वसूत्रानुसारेणच ।

775. **नारायणभट्टास्तु,—**

काल देशयोरैक्येऽपि प्रतिप्रधानत्वादोदनश्च पृथक् पृथक् इति स्मृतेः पृथगित्याहुः ।

एकोद्दिष्टं दैवहीन मेकार्घ्यैकपवित्रकम् ।

आवाहनाग्नौकरण सहितन्त्वपसव्यवत् ॥१४६३॥

776. **एक पवित्र लक्षणश्च च तुर्व्विंशतिमते,—**

द्वेद्वे शलाके देवानां तिस्रस्तिस्रस्तु पार्व्वणे ।

एकोद्दिष्टे शलाकैकां निधायोदकमाहरेदिति ॥१४६४॥

एक पात्रात्मकमेकोद्दिष्टेऽर्घपवित्रमितिटुण्टुपद्धतौ, कात्यायनस्यगृह्य-

777. सूत्रेऽपि,—

अथैकोद्दिष्टमेकपात्रमेकपवित्रमेकोऽर्घ एकः पिण्डोनावाहनं नाग्नौकरणं न चात्र विश्वेदेवाः, स्वदितमिति तृप्तिप्रश्नः, सुस्वदितमितीत्युत्तरे ब्रूयुः । उपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गोऽभिरक्षताःस्म इति

778. **देवजानोये ।**

तिलोसि प्रेतदैवत्यः प्रेतलोकान् हिनोन्तकम् ।

मन्त्रमुक्त्वा तिलानेवं प्रक्षिपेदर्घ्यपात्रके ॥१४६५॥

779. **इति गारुडे ।**

**केचित् ,**

षोड़शश्राद्धेषु ब्राह्मणपाणिषु प्रेताय स्वाहेत्यग्नौकरणमपीच्छन्ति ।

**तथाचाश्वलायन परिशिष्टे—**

अथैकोदिष्टविधि रेकमुद्दिश्यैकोब्राह्मण एकमर्घ्यपात्रं पाणावेकाहुति, स्तदहर्निमन्त्रणं, न धूपदीपौ, न स्वधापितृशब्दौ, नाभि-श्रवणमित्यादि ॥

780. अथ यथाचारं व्यवस्था । ब्राह्मणविषये,

781. **मत्स्यपुराणम्—**

पुत्रादिसूतकान्तेवै भोजयेदयुयो द्विजानिति ।

एकोद्दिष्टन्तु यच्छाद्धं नैमित्तिकमिहोच्यते ॥

तदप्येकं प्रकर्त्तव्यं अयुग्मानाशयेद् द्विजानिति १(*) ॥१४६६॥

---

१(*) भवाशयेद्, भोजयेदित्यर्थः । कुश ब्राह्मणपचेत्तु पूजयेत्, स्थापयेच ।

782. **शातातपश्च,—**

एकोब्राह्मण इति परिशिष्टोक्तिरशक्तविषयेति नारायणभट्टीये ।

प्रेत श्राद्धेतु यत्पात्रमर्घ्यार्थं परिकल्पितम् ।
तस्यैवोत्तानता प्रोक्ता शेषेषु न्युब्जता मतेति ॥१४६७॥

प्रेतश्राद्धेऽर्घ्यपात्रस्योत्तानता प्रोक्ता १(*) ।

783. **सुमन्तुश्च —**

आशिषोद्विगुणा दर्भा जपा (या)शीः स्वस्तिवाचनम् ।
पितृशब्दः स्वसम्बन्धः स्वधाशब्दस्तथैवच २(†) ॥१४६८॥
पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनन्तथा ।
अष्टादश पदार्थाश्च प्रेतश्राद्धे विवर्जयेदिति ॥१४६९॥

यत्तु, स्वधि (दि) तमिति तृप्तिप्रश्नः, अभिरम्यतामितिविसर्गः ।
विकिरस्तु नलुप्यत इत्याद्येकोद्दिष्ट धर्म्म कथनम् ।
तत्तु सपिण्डी करणानन्तर भाव्येकोद्दिष्ट विषयम् ।
प्रेतश्राद्धे विवर्जयेदिति विशेषोक्तेरिति मन्तव्यम् ।

अत्र श्राद्धे देयान्युक्तानि—

784. **पाद्मे,—**

वासः पात्रं चोपवीतं च्छत्रं पादुकमेवच ।
पवित्रं कर्णभूषांच प्रदद्यात प्रेतकर्म्मणीति ॥१४७०॥

785. **हेमाद्रौ बृहस्पतिरपि,—**

शय्यालङ्कार वस्त्राद्यं पितुर्यद्वाहनायुधम् ।
गन्धमाल्यैः समभ्यर्च्च्य श्राद्धभोक्त्रे तदर्पयेदिति ॥१४७१॥

—*—

१(*) शातातपेनर्षिणा उत्तानसंस्थता कथिता, इत्यर्थः ।

२(†) अत्र पाठान्तरमित्थम्, 'स्वधाशब्दः स्वसम्बन्धः स्वधा शब्द स्तथैवच' इति ।

786. **अथ ब्राह्मणाभावे महैकोद्दिष्टेऽपि विशेषः ।**

—*—

**रेणु—कारिकायाम् ,—**

एकोदिष्टे तु विप्राणामभावे तत् कथम्भवेत् ।
नूतनेष्वेव भाण्डेषु पचेदन्नादिकं बुधः ॥१४७२॥
कुण्डं कृत्वातु विधिवत् प्राणानायम्य यत्नतः ।
गोत्रस्य शर्म्मणस्तस्य प्रेतस्यादि (पि) विमुक्तये ॥१४७३॥
आद्यमध्येह वह्नौतु करिष्य इति निर्दिशेत् १(*) ।
ततोदर्भान् समादाय कुण्डमध्ये निमृज्यवै ॥१४७४॥
गोमयेनोपलिप्याथ कुर्य्याल्लेखणमत्रतु ।
अपो (पै) त्युदपतं पांशु' कर्य्यादभ्युक्षणन्ततः ॥१४७५॥
पात्रेण सकुशं वह्नि मानीय च तदन्तिके ।
पहैकोद्दिष्टश्राद्धेतु क्रियतां भवता क्षणः ॥१४७६॥
गाद्यश्च दैवतश्चापि तत् समीपे विनिक्षिपेत् ।
विष्ठरं कुण्ड मध्येतु निधायाग्निं विनिक्षेत ॥१४७७॥
आसनादि ततः सर्व्वं पूर्व्ववत् कारये दिह ।
अर्घ्यमग्निकरे दत्वा ततसमीपे निवेदयेत् ॥१४७८॥
इतराणि च तन्द्राणि यथा योग्यं निवेदयेत् ।
कुण्डस्योत्तरतः पात्रं क्षालितं मण्डले क्षिपेत् ॥१४७९॥
कुण्डं तीर्त्वाथ पिण्डार्थं शेषयित्वा विधानतः ।
पातयेच्च तदन्नादि श्रृङ्गवेर गुड़ादिकम् ॥१४८०॥
घृतञ्च विधिवत्पात्रं सकुण्डञ्च परिस्तरेत् ।
परिधि र्व्यांततस्तत्र परित्यागञ्च पूर्व्ववत् ॥१४८१॥
सर्व्वमन्नं समादाय मन्त्रैः प्राणादि पञ्चकैः ।
पात्रे शदाहूतीर्हुत्वा शेषं कर्म्म समापयेत् ॥१४८२॥
पात्रेकृत्वा अश्वमन्त्रोऽत्र वैदिकः केचिदुचिरे ।

---

१(*) अवादौ, मध्येच 'अग्नौकरण मदङ्करिष्ये' इति । यदा वह्नौ हवनं कार्य्यमिति केचन ।
,, प्राक्श्रोत्रिय ब्राह्मणेन श्राद्धं सम्पन्नमभूत् । सम्प्रति कुशमय ब्राह्मणेन सम्पाद्यते । प्रतिवचनार्थं पुरोहितश्च ।

केचिदेवं वदन्त्यत्र प्रेतमुद्दिश्य निर्ह्तम् ॥१४८३॥
गोवृषं भोजयित्वाऽन्नं ततः स्नानादिकञ्चरेत् १(*) ।
ततस्तेनोपभुक्तानि वस्त्रालङ्करणानिच ।
सदक्षिणानि विप्राय दद्यात् प्रेतस्य (द्य) चादरादिति ॥१४८४॥
अथ प्रेतश्राद्ध सपिण्डीकरणादि-श्राद्धभोक्तृणां प्रायश्चित्तमुच्यते।

787. **तच्च प्रयोगपारिजाते, मनुः—**

चान्द्रायणं नवश्राद्धे पराके मासिके मतः ।
पक्षत्रयेऽति कृच्छ्रं स्यात् षण्मासे कृच्छ्रएवतु ॥१४८५॥
आब्दिके पादकृच्छ्रंस्या देकाहः पुनराब्दिके ।
अत ऊर्द्धनदोषः स्या देकाहं केचिदुचिर इति ॥१४८६॥

788. **अत्र विशेषमाह, यमः—**

मृतस्याहनि संप्राप्ते यावदब्द चतुष्टयम् ।
वहिः श्राद्धं प्रकुर्वीत न कुर्य्याच्छ्राद्धभोजनमिति ॥१४८७॥

789. **पार्वणश्राद्धे विशेषमाह भरद्वाजः—**

भुंक्ते चेत्पार्वणश्राद्धे प्राणायामान् षड़ाचरेत् ।
उपवासस्त्रिमासादि-वत्सरान्तं प्रकीर्त्तितः ॥१४८८॥
प्राणायामत्रयंवृद्धौ अहोरात्रं सपिण्डने ।
असरूपे स्मृतं नक्त व्रतंपारणकन्तथा ॥१४८९॥

790. **असरूपे वर्णैशादिभिरसमाणे—**

**तथा,**

द्विगुणं क्षत्रियस्यैतत् त्रिगुणं वैश्यभोजने ।
साक्षाच्चतुर्गुणं ह्येतत् स्मृतं शूद्रस्य भोजने ॥१४९०॥ इति ।
चान्द्रायणं नवश्राद्धं इत्यनापद्विषयम् ।
आपदितु, लिखितः—

791. **अत्र षड्विंशन्मतेऽपि—**

प्राजापत्यं नवश्राद्धं पादोनञ्चाद्यमासिके ।
त्रैपाक्षिके भवेदर्द्ध पञ्चगव्यं द्विमासिके ॥१४९१॥

---

१(*) पिण्डांस्तु गोऽज विप्रेभ्योदद्यादप्सी जलेपिवा ।

पादोनं कृच्छ्रमुद्दिष्टं षण्मासे च तथाब्दिके १(*)।
त्रिरात्रं चान्यमासे तु प्रत्यब्दं तदहः स्मृतमिति ॥१४६२॥

792. **क्षत्रियादिश्राद्धेत्वापदि भोजने विशेषस्तत्रैव,—**

चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः ।
त्रैपाक्षिके सान्तपनं कृच्छ्रं ( ो ) मासद्वये स्मृतः ॥१४६३॥
क्षत्रियस्य नवश्राद्धे व्रतमेतदुदीरितम् ।
वैश्यस्यार्द्धाधिकं प्रोक्तं क्षत्रियात्तु मनीषिभिः ॥१४६४॥
शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणं द्वयम् ।
सार्द्धचान्द्रायणं मासे त्रिपक्षेत्त्वेतदेवं स्मृतम् ॥१४६५॥
मासद्वये पराकं स्यादूर्द्धंसान्तपणं स्मृतमिति ।
एवमापदनापत्कालादि भेदेन प्रायश्चित्ते गुरुलघुत्वं यीज्यम् ।

793. **अत्र हारीतस्तु,—**

त्रिधा श्राद्धानि क्रोड़ीकृत्य प्रायश्चित्तमुक्तवान् ।

**तथाहि,—**

च्चान्द्रायणं नवश्राद्धे प्राजापत्यन्तुमिश्रके (त्रिकृच्छ्रके) ।
ऐकाहस्तु पुराणेषु प्रायश्चित्तं विधीयत इति ॥१४६६॥

794. **नवादित्रयस्वरूपमुक्तं, परिशिष्टे,—**

नवश्राद्धं दशाहानि मिश्रश्राद्धञ्च षड्तून् २(†) ।
अतः परं पुराणञ्च त्रिविधं श्राद्धमुच्यत इति ॥१४६७॥
अत्र षड्तून् ,—सम्वत्सरपर्य्यन्तं श्राद्धमित्यर्थः ।
प्रेतश्राद्धे वैश्वदेवस्त्वंते भिन्नपाकेन कार्य्यं इत्युक्तं माधवीये —
सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टन्तथैवच ।
अग्रतोवैश्वदेवः स्यात् पश्चादेकादशेऽहनीति ॥१४६८॥
वचनादिति । शेषभोजननिषेधमाहाङ्गिराः,—
नवश्राद्धेषु यच्छिष्टं गृहे पर्य्यूषितञ्च यत् ।
दम्पत्योर्भुक्तशेषञ्च नतद्भुञ्जीत कर्हिचित् इति ॥१४६९॥

---

१(*) अत्र पूर्व्वश्लोके एवं पाठान्तरं स्यात्, 'त्रैपाक्षिके तदर्द्धं स्यात् पादोनं मासिके तथा' इति ।

२(†) द्वौ द्वौमासावेक ऋतुः, षड्भिः ऋतुभिः सम्वत्सर एक इति । एतत्कालं व्याप्य स्यात्तं प्रायश्चित्तम् ।

795. **प्रायश्चित्तमपि स एवाह—**

द्वाभ्यां तदाच(तु)श्राद्धाभ्यां शुद्धिः स्यात्तु विवेकिनामिति ।

एषु श्राद्धेषु सूतकादिप्राप्तौ, कालादर्शे ऋष्यशृङ्ग आह,—

दैवे पितॄणां श्राद्धे तु अशौचं जायते यदा ।

अशौचे तु विनिष्क्रान्ते तेभ्यः श्राद्धं प्रदीयत इति ॥१५००॥

796. **अशौचान्तेऽप्यसम्भवे व्यासः—**

श्राद्धविघ्ने समुत्पन्ने त्वन्तरामृत सूतके ।

वदन्ति शुद्धौ तत् कार्य्यं दर्शे चापि विचक्षणा इति ॥१५०१॥

तदहश्चेत् प्रलुप्येत केनचित् सूतकादिना ।

सूतकानन्तरं कुर्य्यात् पुनस्तदहरेव चेति, वचनन्तु दर्शेऽप्यसम्भव—परमिति हेमाद्रिः ।

अमावास्यादौ विस्मरणेऽप्येवं न्यायसाम्यात् ।

पत्नीरजस्वलात्वेतु नैवम् ।

आब्दिकानि विधेयानि आमावस्यन्तथाब्दिकम् ।

अन्नेनैव तु कर्त्तव्यं यस्य भार्य्यारजस्वलेति ॥१५०२॥

797. **व्यासस्मृतेः ।**

यत्तु—

श्राद्धे तु समनुप्राप्ते यस्य भार्य्या रजस्वला ।

पञ्चमेऽहनि तत्कार्य्यं न तत् कुर्य्यान्मृतेऽहनीति ॥१५०३॥

यत्पराशरवचनन्तत् स्त्रीकर्त्तृकश्राद्धविषयमिति माधवेनापि व्याख्यातम् ।

798. **हेमाद्रिस्तु,—**

स्त्रियां रजस्वलायां सहाधि(ये)कारादेकभार्य्येण पञ्चमेऽहनि श्राद्धं कार्य्यम् । भार्य्यान्तरसत्त्वे तु तद्दिन एवेत्याह । निर्णय दीपिकाया-

799. मप्येवमभिहितम् । अत्र यथादेशाचारं व्यवस्था ॥१५०४॥

इति श्रीमन्नागदेव भट्टात्मजानन्तभट्टेन विरचिते
विधानपारिजाते षोड़शश्राद्धविधानम् ॥

—*—

## अथ सपिण्डीकरण-विधानम् ।

—*—

800. **तत्राष्टौ कालानाह, कालादर्शकारः—**

एकादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासि वा ।
षष्ठे चैकादशे वाब्दे सम्पूर्णे वा शुभागमे ॥१५०५॥ इति ।

801. **कात्यायनसूत्रेऽपि,—**

ततः सम्बत्सरे पूर्णे द्वादशाहे(ब्दे)वा वृद्धिप्राप्तौ वा षण्मासत्रिपक्षयो-रप्येक इति । एवं काल-नानात्वे व्यवस्थामाह,—

802. **जावालिः—**

सपिण्डीकरणं कुर्य्यात् पूर्णे(र्व्व)दर्शेऽग्नि मान्सुतः ।
परतोदशरात्रस्य पूर्णेऽब्देन तथापरः ॥१५०६॥
नासपिण्ड्याग्निमान् पुत्रः पितृयज्ञं समाचरेत् ।
पापी भवत्यकुर्व्वन् हि पितृहा चोपजायते इति ॥१५०७॥

**अस्यार्थः—**

अग्निमान् सुतो दशरात्रस्य परत एकादशाहादौ दर्शे सति पूर्व्वसपिण्डीकरणं कुर्य्यात्तदुत्तरं पिण्डपितृयज्ञं समाचरेदिति ।

803. **हारीतोऽपि,—**

या तु पूर्व्वममावास्या मृताहाद्दशमी भवेत् ।
सपिण्डीकरणं तस्यां कुर्य्यादेव सुतोऽग्निमान् इति ॥१५०८॥
मृताहाद्द्वितीयदिनमारभ्य दशमीत्यवधेयम् ।

804. **पुत्रस्य साग्नित्वे शङ्खः—**

भार्य्यामरणपक्षे वा देशान्तरगतेऽपि वा ।
अधिकारी भवेत् पुत्रो महापातकिनोपिवेति १(*) ॥१५०९॥
पितुरनग्नित्वेऽपि पुत्रस्याधिकारं यतोवदति । द्वादशाहेतु,—

---

१(०) साग्निः गृहीत वैधाग्निः । स च श्रौतः स्मार्त्तोवा प्रायश्चित्तार्हः साग्निः पुत्रोदाहाधिकारी स्यादिति ।

805. **भविष्यपुराणे—**

यजमानोऽग्निमान् राजन् प्रेतश्चानग्निमान् भवेत् ।
द्वादशाहे तदा कार्य्यं सपिण्डीकरणं सुतैः इति ॥१५१०॥

806. **मुख्यकालासंभवे, प्रयोगपारिजाते अङ्गिराः—**

द्वादशाहादिषु कालेषु प्रमादादननुष्ठितम् ।
सपिण्डीकरणं कुर्य्यात् कालेषूत्तरभाविष्विति ॥१५११॥
साग्निकस्य कर्त्तुर्दर्शे सपिण्डने हेतु रुक्तः ।

807. **कात्यायनसूत्रेच—**

पिण्डकरणे प्रथमः पितॄणां प्रेतःस्यात् पुत्रवांश्चेदिति ।
अत्र पिण्डकरणे—पिण्डपितृयज्ञादौ १(*) ।

808. **गालवोऽपि—**

सपिण्डीकरणात् प्रेते पैतृकं पदमास्थिते ।
आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्त्तते ॥१५१२॥ इति ।

809. **अत्र कालमाह, बृहस्पतिः—**

एकादशेऽह्निकुर्व्वाणः पूर्व्वाह्णे सर्व्वमाचरेत् ।
अपराह्णे तु सापिण्ड्यं कुर्य्यादित्याह शाण्डिलः(ल्य)इति ॥१५१३॥
सर्व्वं वृषोत्सर्गादि निरग्निः साग्नेः २(†) प्रेतस्य सापिण्ड्यं यदा कुर्य्यात् तदा तृतीयः पक्षः काल इत्याह ।

810. **लघुहारीतः—**

अनग्निको यदा कर्त्ता भवेत् कुर्य्यात्तदा गृही ।
प्रेतश्चेदग्निमांस्तस्य त्रिपक्षे वै सपिण्डनमिति ॥१५१४॥

811. **द्वयोरप्यनग्नित्वेतु, भविष्ये—**

सपिण्डीकरणं कुर्य्याद् यजमानस्त्वनग्निमान् ।
अनग्निकस्य प्रेतस्य पूर्णेऽब्दे भरतर्षभ ! ॥१५१५॥ इति ।

---

१(*) पिण्डोद्देश्यः यस्मिन् पितृयज्ञकृत्ये स पिण्डपितृ यज्ञः ।

२(†) वैध गृहीताग्निः साग्निः, निरग्निर् गृहीताग्निः । अन्यदग्निहीन सन्दर्भेचास्ति । अत्र

" द्वयो, यजमानकर्तृ प्रेतयोः ।

812. **कालादर्शेऽपि—**

एकादशे द्वादशेह्नीत्यष्टौ काला प्रागुक्ताः । एवमेव व्यवस्थापितम् ।

**तद्यथा,—**

साग्नौ कर्त्तव्य्यभावाद् यः प्रेते साग्नौ तृतीयकः ।
अनग्नेस्तु द्वितीयाद्याः सप्तकाला मुनीरिताः १(*) ॥१५१६॥ इति ।

813. **उक्तकालासम्भवे निर्णयामृते, ऋष्यश्रृङ्गः—**

सपिण्डीकरणश्राद्धमुक्तकालेन यत् कृतम् ।
रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेदिति ॥१५१७॥

814. **हेमाद्रौ नारदसंहितायामपि,—**

सपिण्डीकरणं कार्य्यं वत्सरेवार्द्धवत्सरे ।
त्रिमासे वा त्रिपक्षेवा मासि वा द्वादशेऽह्निवेति ॥१५१८॥

**अत्र सम्वत्सरेऽतीते सतीति ज्ञेयम् ।**

ततः सपिण्डीकरणं वत्सरात् परतः स्थितम् ।

815. **इति भविष्य पुराणोक्तेः ।**

ततः सपिण्डीकरणं वत्सरादूर्द्धतः स्थितमिति पारिजाते नार (गर) दखण्डोक्तेः ।

ततः सपिण्डीकरणं वार्षिके मृतिवासरे ॥१५१६॥

816. **इत्युशनसोक्तेः ।**

पूर्णे सम्वत् सरे पिण्डः षोड़शः परिकीर्त्तितः ।
तेनैव चसपिण्डत्वं तेनैवाब्दिकमिष्यते ॥१५२०॥

817. इति हेमाद्रौ, यमवचनाच्च । अत्र षोड़शत्वञ्च सपिण्डनस्य षोड़शश्राद्धान्तर्भावपक्षे वेदितव्यम २(†) ।

818. **स्मृत्यर्थसारेतु—**

वर्षान्त्यदिने सम्वत्सरमोक्षश्राद्धं सपिण्डनं च कृत्वा ३(‡) ।
परेद्युर्मृताहे वार्षिकं श्राद्धं कार्य्यमित्युक्तम् ।
गौड़ादयोऽप्येवमेवाहुः । अत्र शिष्टाः प्रमाणम् ।

---

१(*) प्रागष्टौ काला वचनोक्ताः पुनर्वचनोक्ताः सप्तकालाःश्रियाः ।

२(†) षोड़श श्राद्धकालाः षड्विभागाः प्रागुक्ताः । आदौ षोड़श श्राद्धानि पश्चात् सपिण्डीकरणम् ।

३(‡) वर्षान्त्यदिने—वर्षस्य शेषेमृततिथौ श्राद्धं कार्य्यम् ।

819. **विष्णुरपि,—**

मासिकार्थं द्वादश श्राद्धं कृत्वा त्रयोदशेऽह्नि सपिण्डीकरणं कुर्य्यात्। मन्त्रवर्ज्जं हि शूद्राणां द्वादशेऽह्नि सम्वत्सराभ्यन्तरे यद्यधिमासोभवेत्तदा मासिकार्थं दिनमेकं वर्द्धयेदिति ।

**अस्यार्थः :—**

अशौचानन्तरं द्वादशस्वहःसु मासिकानि तेष्वेवाद्य षष्ठ द्वादश दिनेषू न मासिकोनषाण्मासिकोनाब्दिकानि कृत्वा, त्रयोदशेऽह्नि सपिण्डनं कुर्य्यात्। तद्वत्सराभ्यन्तरे यद्यधिमास स्तदा तत् मासिकार्थं एकं दिनं वर्द्धयेत् १(*)।

सपिण्डनन्तु चतुर्द्दशेऽह्नि कुर्य्यात्। शूद्रस्तु द्वादशेऽह्नीति, तथाहि— मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनि कीर्त्तितमिति स्मृत्यन्तराच्च ।

820. तदेतदमावास्या श्राद्धकारि-सच्छूद्रविषयमित्यपरार्के ।

821. कल्पतरौ च प्रतिपादितं वचनवलादशौचमध्येऽपि शूद्रमात्रस्तु सूतकान्ते कुर्य्यात । सर्व्वेषामेववर्णानां सूतकान्ते सपिण्डन, मिति

822. कात्यायनोक्तेः ।

सम्वत्सर-सपिण्डने यदि तत्र मलमास स्तत्र न कार्य्यमित्याह—

823. ज्योतिः पराशरः ।

गर्भेवार्द्धुसिके प्रेते भृत्येचैवानुमासिके ।
आद्याब्दिके नव (च) श्राद्धे नाधिमासोविधीयते इति ॥१४२१॥
प्रेते सपिण्डने अनुमासिके सपिण्डनान्तर २(†) मासिके ३(‡) ।
सपिण्डी करणादूर्द्धं यत् किञ्चिच्छ्राद्धिकं भवेत् ।
इष्टं वा यदिवा पूर्त्तं न कुर्य्याच्च मलिम्लुचे ॥१५२२॥

824. **इति यमोक्तेः । वर्णपरत्वेन कालमाह, वृद्धमनु :—**

825. द्वादशेऽनि विप्राणां अशौचान्तेतु भूभुजाम् ।
वैश्यानान्तु त्रिपक्षादाद्वथवा स्यात् सपिण्डनमिति ॥

---

१(*) अधिमास-चयमासासंवान्त-द्विसंवान्तमलिम्लुचा (मलमास) दयोमासास्तेषांलक्षणं मलमास तत्त्वेऽस्ति ।

२(†) 'सपिण्डनोत्तर मासिके' इति पाठान्तरमस्ति ।

३(‡) अन्यद्द भट्टाचार्य्याणां शुद्धितत्त्वे शुद्धिकौमुद्यां, रत्नाकरीयेचास्ति ।

तथा,—

अब्दादर्व्वाक्च सापिण्ड्यं यदि वृद्धिं समापयेत ।

त्रिपक्षादौ प्रकुर्व्वीत, वृद्ध्युत्तर निषेधनात ॥१५२३॥ इति ।

826. **गर्गः,—ततः सम्वत्सरे पूर्णे त्रिपक्षे ।**

यदहर्व्वावृद्धिरापद्येतेति कात्यायन सूत्रम् १(*) ।

वृद्धो ज्येष्ठः कनिष्ठो वान्यः सपिण्डो वा कुर्य्यात्—

827. **इत्युक्तं लघुहारी तेन ।**

भ्राता वा भ्रातृ पुत्रो वा सपिण्डः शिष्य एववा ।

सह पिण्ड क्रियां कृत्वा कुर्य्यादभ्युदयन्ततः इति ॥१५२४॥

तथा,—

वाराणस्यां कुरुक्षेत्रे गयायां तीर्थ लाभतः २(†) ।

सपिण्डतां द्वादशा हे कनिष्ठोऽपि समाचरेदिति ॥१५२५॥

828. **श्राद्धतत्त्वे । आधानेऽप्यपकर्षमाह, हेमाद्राकुशनाः—**

पितुः सपिण्डीकरणं वार्षिके स्मृतिवासरे ।

आधाना वेद्युप संप्राप्तावैतत प्रागपि वतसरादिति ३(‡) ॥१५२६॥

**आदिशब्दः—तीर्थला (लो) भाद्यर्थः ।**

वाराणस्यां कुरुक्षेत्रे गयायान्तीर्थलोभतः ।

सपिण्डता द्वादशाहे मार्गे सार्थन्तु निर्गतः ॥१५२७॥

829. इति श्राद्ध काशिकायाम्, पुराण समुच्चय वचनात् ।

त्रिपक्षादौ सपिण्डने सर्व्वत्र मृताह एव कालः ॥१५२८॥

मृताहनि तु कर्त्तव्यं प्रतिमासत्तुवत्सरम् ।

सपिण्डीकरणं चैवमाद्यमेकादशेऽहनि ॥१५२९॥

830. **इति याज्ञवल्क्योक्तेः ।**

विधिस्तु,—

गन्धोदकतिलैर्युक्तं कुर्य्यात्पात्रचतुष्टयम् ।

अर्घ्यार्थं पितृपात्रेषु त्रेतपात्रं प्रसेचयेत् ॥१५३०॥

---

१(*) यस्मिन् दिने वृद्धि श्राद्धं स्यात्तत् पूर्व्व दिनेऽपकर्षात्सपिण्डनं स्यादिति ।

२(†) तीर्थ लोभतः इति भिन्नः पाठः ।

३(‡) आधावाप्युप संक्रान्ति इति भिन्नः पाठः ।

ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ।
एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ।।१५३१।। इति ।

अत्र विश्वेदेवाः कामकालसंज्ञकाः । नवान्नलम्भने देवौ कालकामौ
331. प्रकीर्त्तिताविव्यादित्यपुराणोक्तेः । नवान्नलम्भने सपिण्डीकरणमिति
332. **हेमाद्रिः ।**

नात्राश्नत्सु ब्राह्मणेषु पितृसूक्तजपः ।
आमश्राद्धे गयाश्राद्धे प्रेतश्राद्धे तथैव च ।
सपिण्डीकरणश्राद्धे न जपेत् पितृसूक्तकम् ।।१५३२।।

333. **इति त्रिस्थलीसेतौ सुमन्तूक्तेः ।**

इदं श्राद्धं पार्व्वणैकोद्दिष्टात्मकं द्विरूपं नृसिंहवत् । तयोः प्रयोगक्रम—
334. **उक्तः शातातपेन,—**

एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तपिण्डीकरणश्राद्धे दैवपूर्वं नियोजयेत् ।।
पितॄनथाशयेत्तत्र ततः प्रेतं च निर्दिशेत् ।।१५३३।। इति ।

335. दुण्डु पद्धतौ तु, विश्वेदेवतन्त्रानन्तरंप्रेततन्त्रं, ततः पार्व्वणस्येत्युक्तम् ।
आश्वलायनगृह्यपरिशिष्टेऽपि । अथ सपिण्डीकरणमित्युपक्रम्य द्वौ
दैवे पूर्व्ववदथ प्रथमं प्रेतमनन्तरं पितॄनिति यथासम्प्रदायं व्यवस्था-
336. ज्ञेया । अर्घ्यसंयोजनेऽत्रविशेष उक्तो गोविन्दार्णवे ।

दद्यात् प्रैतार्घ्यपात्रस्थं चतुर्भागं जलं द्विजे ।
त्रीन् भागांस्त्रिषु पात्रेषु ये समाना इति क्षिपेत् १(*) ।।१५३४।। इति ।

स्मृत्यर्थ सारे । कल्पतरौतु अर्घ्यपात्रसंयोजनानन्तरम् उद्धृतमर्घ्य-
पात्रस्थं जलं प्रेतस्यानीय ब्राह्मणाय च दद्यादित्युक्तम् । व्यवस्थात्रापि
पूर्व्ववत् ।

---

१(*) ये समानाः स मनसः पितरो यमराज्ये ।
तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥४५॥
ये समानाः समनसो जीवाजीवेषु मामकाः ।
तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः ॥४६॥

शुक्ल यजुः, अ १९, म: ४५, ४६ ।

कात्यायन, श्रौ, सू: १९।१।२३—२४ ।

837. **याज्ञवल्क्यः—१(*)** ।

दत्त्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ॥१५३६॥ इति ।

कुशवत्यां भूमावधोमुखं न्युब्जं कुर्य्यात् तस्योपरि च कुशानिति

838. वशिष्ठः ।

839. **आश्वलायनश्च,—**

नोद्धरेत् प्रथमं पात्रं पितॄणामर्घ्यपातितम् ।
आवृतास्तस्य तिष्ठन्ति पितरः शौनकोऽब्रवीत् ॥१५३७॥
उद्धृतं यदि तत्पात्रं विवृतं यदि वा भवेत् ।
अभोज्यं तद्भवेच्छ्राद्धं क्रुद्धैः पितृगणैर्गतैः ॥१५३८॥

इति प्रेतपात्रमुत्तानं द्विजवामभागे निदध्यादित्युक्तमेव ।

**प्रचेताः—**

पादप्रभृतिमूर्द्ध्वान्तं देवानां पुष्पपूजनम् ।
शिरः प्रभृति पादान्तं नमो व इति पैतृके ॥१५३९॥

840. **विलेपने तु शातातपः,—**

पवित्रे तु करे कृत्या यः समालभते द्विजान् ।
राक्षसं तद्भवेच्छ्राद्धं निराशाः पितरो गताः ॥१५४०॥
सर्व्वतो दर्भपाणिभ्यां दैवे पित्र्ये च कर्म्मणि ।
गन्धलेपं पादशौचं न कुर्य्याद्दर्भपाणिना ॥१५४१॥ इति ।

841. **याज्ञवल्क्यः,—**

दत्त्वोदकं गन्धमाल्यं धूपदानं सदीपकम् । इति ।

842. **विष्णुः,—**

चन्दन कुङ्कुमकर्पूरागुरुपत्रकान्यनुलेपनानीति ।

843. **ब्रह्माण्डे,—२(†)** ।

श्राद्धे जात्यः प्रशस्ताः स्युर्मल्लिकाः श्वेतयूथिकाः ।
जलोद्भवानि सर्व्वाणि कुसुमानि च चम्पकाः ॥१५४२॥

---

१(*) अन्यत् श्राद्ध सन्दर्भे श्राद्ध तत्त्वे चास्ति । अत्र पारिभाषिकानि अनुलेपनानि ।

२(†) श्राद्धे प्रशस्तानि पुष्पाणि, चन्दनादीनिचोक्तानि ।

तुलसी शतपत्राणि भृङ्गराजस्तथैव च ।
अगुरु चन्दनं चैव पितॄणां दत्तमक्षयम् ॥१५४३॥

844. **शातातपः,—**

धूपं दीपं ततोदद्याद्वाससी चोपवीतकम् ।
सुवर्णं रजतं चापि तथा नेपाल कम्बलम् ॥
पादुकोपानहौ छत्रं प्रेतश्राद्धे प्रदापयेत् ॥१५४४॥ इति ।

845. **ब्राह्मेऽपि,—**

वस्त्राभावे क्रिया नास्ति वीतवेदास्तपांसि च १(*) ।
तस्माद्वस्त्राणि देयानि श्राद्धकाले विशेषतः ॥१५४५॥ इति ।

**तत्रैव,—**

मण्डलानि च कार्य्याणि नीवारैश्चूर्णकैः शुभैः ।
गोमयेन मृदावापि प्रणीतेनापि भस्मना ॥१५४६॥

846. इति दैवे चतुरङ्गं पित्रेथ वर्त्तुलमण्डलमिति गृह्य परिशिष्टे ।
भाजनानि ततो दध्यान्मण्डलेषु विशेषतः ।
पालाशमधुखण्डावा खर पाटलचूतजम् ॥१५४७॥

847. जम्बूकुटजरम्भाजं पवित्रं दश पर्णकम ॥ इति आचारतिलके ।
अग्नौ करणे विशेषः ।
तत्रैकोद्दिष्टेऽग्नौ करणं पाक्षिकमिति निरूपितं प्राक् ।
पार्व्वणश्राद्धे तु साग्नेः ।
साग्नौ ब्राह्मणहस्ते वा होमो भवति ।
सपिण्डीकरणान्तानि प्रेतश्राद्धानि षोड़श ॥१५४८॥

848. तानि सर्व्वाणि कार्य्याणि लौकिकेऽग्नौ यथाविधीत्याश्वलायनेन नियमोक्तः ।
आश्वलायन परिशिष्टेऽपि सापिण्ड्यं प्रक्रम्य भोजनार्थादन्नमुद्धृत्य २(†) घृतेनाऽक्त्वानुज्ञाप्याग्नौ कुर्य्यात् , ३(‡) पाणिषु वा जुहुयादित्येके ।
पाणिहोमे देवतायै स्वाहेति प्रेताय हुत्वा, पितॄणां मन्त्राभ्यां जुह्वति ।

---

१(*) 'नास्त्यधीत वेदाः' इति भिन्नः पाठः । अधीत वेदाः कृतवेदपाठाः । वि-गताः वेदा येषां ते वीत वेदाः । गीताः वेदा यैः तेवा इति वार्थः ।

२(†) भोजनार्थं रचितान्नपात्रादित्यर्थः ।

३(‡) घृतेनाभ्यक्त्वा—घृतेनान्नं समालोड्य मधुनाचेत्यर्थः ।

849. सर्व्वत्र हुतशेषं सर्व्वेषां पाणिषु ददातीति हेमाद्रावपि।
नौपासनाग्नौ जुहुयात् प्रेते विप्रकरस्थले।
हुत्वा सापिण्ड्यं समये लौकिकेऽग्नौ हुतं त्यजेत् ॥१५४९॥
**प्रेतश्राद्धेषु तदग्नौ क्षिपेदित्यर्थः।**
हस्ते हुतं यदश्नीयाद् ब्राह्मणोऽज्ञानदुर्व्वलः।
नष्टं भवति तच्छ्राद्धमिति शातातपोऽब्रवीत् ॥१५५०॥

850. इति स्मृत्यर्थसारेऽपि।

851. **श्राद्ध काशिकायामपि,—**
प्रेतविप्रकरे होमः साग्नेरपि भवेदिह।

852. नष्टं भवति तच्छ्राद्धमिति शातातपोऽब्रवीत् ॥
तदन्नं निक्षिपेदग्नौ भुक्त्वा चान्द्रायणं चरेत् ॥१५५१॥ इति।

853. **आपस्तम्बः,—**
कर्त्ता यद्याहिताग्निश्चेत् सर्व्वाधानी भवेत्तदा १(*)।
अनले लौकिके श्राद्ध मन्यस्त्वौपासनानले ॥१५५२॥

854. मिताक्षरायां विज्ञानेश्वरस्तु, आन्वष्टकोपरिवृते पिण्डः पितृयज्ञवदित्यतिदिशति एकोद्दिष्टे (एकादशे) नाग्नौ करणमिति निषेधात् कालात्ययातिरिक्त विषयमेतद्वाक्यं च २(†) पूर्वपूर्व्वमासिमास्यथ पार्व्वणम्। काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम्।
चतुर्ष्वाद्येषु साग्नीनामग्नौ होमो विधीयते।

855. पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपीति ॥१५५३॥
गृह्यपरिशिष्टमुदाहृत्य एकोद्दिष्टं सपिण्डीकरणमिति व्याख्यातवान्।

856. **स्मृतिचन्द्रिकायामपि,—**
एकोद्दिष्टे नवश्राद्धे ष्वग्नौ होमो न विद्यते।
नावाहनं नवा धूपो न पुष्पं न च दीपकम् ॥१५५४॥
न चाभि श्रवणं कुर्य्यान्न देवा नच वै स्वधा।
प्रणवं सुप्रमाणं च पितृशब्दं तथैव च ॥१५५५॥
वर्ज्यान्येकादशश्राद्धं सपिण्डीकरणं विना ॥१५५६॥ इति।

---

१(*) आहिताग्निः—लब्धवेधाग्निः। सर्व्वाधानी,—अनुष्ठित सर्व्वाधान संस्कारः। कृतार्द्धाधानीवा।

२(†) अत्र ग्रन्थान्तरे पाठव्यतिक्रमोऽस्ति।

857. एवं पाणिहोमादिकं कृत्वा पात्रं भिन्द्यादित्युक्तं कपर्द्दिकारिकायाम् । दर्भैस्तिलैर्वैदिकं भस्मना च ब्राह्मणं पात्रमधस्तृणीयादिति ।

858. **आचारतिलकेऽपि,—**

अग्निना भस्मना चैव तिलैर्वाचोदकेन वा ।
द्वारेण वाथ मार्गेण पंक्तिर्भिद्यते षड्विधा ॥१५५७॥ इति ।

प्रेतश्राद्धे पाणिहुतमग्नौ प्रास्येन्नतु तत्पित्रादि पार्व्वण श्राद्धे ।

यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् ।
एकीकृत्यैव भोक्तव्यं पृथग् भावो न विद्यते ॥१५५८॥

859. **इति गृह्यकारोक्तेः ।**

860. **वायवीये,—**

नापवित्रेण हस्तेन नैकेन च विना कुशम् ।
नाप्यायसेन पात्रेण श्राद्धे तु परिवेषयेत् १(*) ॥१५५९॥ इति ।

861. **अत्रैकपाकमाह रेणुः—**

एवं श्राद्धद्वयं कुर्य्यात् कार्य्यैक्यादेकपाकतः ।
एकोद्दिष्टं पार्व्वणं च शेषं प्रकृतिवद्भवेत् ॥१५६०॥ इति ।

862. **पात्रालम्भने यमः—**

कर प्रक्षालना दूर्द्ध्वं पाणिभ्यां पादधारणम् ।
अन्नत्यागाद्दक्षिणं तु भुक्त्वा वासं विवर्ज्जयेत् ॥१५६१॥

**बलिविषयेऽपि,—**

पितॄणामन्नमादाय वलिं यस्तु प्रयच्छति ।
स्तेयेन ब्राह्मणस्तेन स सर्व्वस्तेयकृद्भवेत् ॥१५६२॥ इति ।

योगी श्वरं सव्याहृतिकां गायत्रीं मधुवाता इति ऋक त्रयं जप्त्वा २(†) यथासुखं वाचयित्वाभुञ्जीरंस्तेपि वाग्यताः ।

863. पितृसूक्तजपनिषेधात्तदन्य सूक्तजपः कार्य्यः । पूर्व्ववद् गायत्र्यादि, पुणन्तु मेत्यन्तं जपेदिति ढुन्ढुपद्धत्युक्तेः ।

---

१(*) 'आय सेनतु पात्रेण यदन्नमुपदीयते'। इत्यादि स्मृतिवचसा लौहपात्रे पाक-परिवेशन-भोजनानि सर्व्वथा निषिद्धानि । जलपाने ताम्रपात्रं पूजनादौच प्रशस्तं स्वास्थ्यकरञ्चेति ।

२(†) योगीश्वरं याज्ञवल्क्यं सम्पूज्य मुनयोऽब्रुवन् । भूरादिव्याहृतिपूर्व्वकां गायत्रीम् । मधु-वातेति ऋक् त्रयंच जपेत् ।

864. **मनुः,—**

अत्युष्णं सर्व्वमन्नं स्याद् भुञ्जीरंस्तेऽपि वाग्यताः।
न च द्विजातयो ब्रुयुर्गुणागुणविधिं क्वचित्॥१५६३॥

865. **इति योगीसेव्यः।**

अन्नमादाय तृणस्थं शेषं चैवानुमान्य च।
तदन्नं विकिरेद् भूमौ दद्यादापः सकृत् सकृत ॥१५६४॥ इति।

**प्रेते विकिरस्तु पाक्षिकः। प्रेते स्वधितमिति तदा प्रश्नः** १(*)।

श्राद्धाय वर्णे(र्ग) विप्रस्य वक्तव्यं स्वहितं भवेत्। इति भारतोक्तेः।
यथा, सर्व्वमन्नं समादाय सतिलं दक्षिणामुखः।
उच्छिष्टसन्निध्यौ पिण्डान् दद्यात्तु पितृयज्ञवत्॥१५६५॥

**अत्राग्नौ करणशेषं मिश्रयितव्यम्।**

अग्नौ करणशेषन्तु पिण्डार्थमवशेषयेत्। इति स्मृतेः।

866. **अत्रोल्मुकनिधानमुक्तं वृद्ध याज्ञवल्क्येण,**

ये रूपाणीति मन्त्रेण न्यसेदुलमुकमन्तिके २(†)।
मण्डलेष्वग्निदाहं ये न कुर्व्वन्ति द्विजोत्तमाः॥१५६६॥
निराशाः पितरस्तेषां पैशाचं श्राद्धमुच्यते॥ इति।
यदित्रा अनिधायोल्मुकं पितृभ्यो ददत्यसुररक्षसामिहैषां ते तद्विधि-
867. मश्नन्ति इति काण्वश्रुतेश्च।
व्यासमात्रंसमुत्सृज्य पिण्डांस्तत्र प्रदापयेत।
यत्तोयस्पर्शनाद् वापि प्राप्नुवन्ति न विन्दवः॥१५६७॥

868. **वायुपुराणे,—**

सकृदेवास्तरेद् दर्भान् पिण्डार्थं दक्षिणाग्रकान्।
चतुरो निर्वपेत् पिण्डान् पूर्व्वं तेषु समापयेत्॥
ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते॥१५६८॥ इति।

---

१(*) स्वधितं इति यजमान प्रश्ने, उत्तरं सुस्वधितमिति विप्रा ब्रुयुः। क्वचित् 'स्वदितमिति' पाठोऽस्ति।

२(†) शुक्लः यजुः अः २, मः ३०।

869. **शातातपः,—**

निरूप्य चतुरः पिण्डान् श्राद्धदः प्रतिनामतः।
ये समाना इति द्वाभ्यामाद्यं तु विभजेत्त्रिधा १(*)॥
एष एव विधिः पूर्व्वमर्घ्यपात्र—चतुष्टये ॥१५६९॥ इति।
पिण्डशब्दप्रयोगाय सपिण्डीकरणादधः।
सपिण्डीकरणादूर्द्ध्वं अन्नशब्दो विधीयते ॥१५७०॥

**हेमाद्रावपि,—**

महालये गयाश्राद्धे प्रेतश्राद्धे तथैव च।
पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्त्तयेत् ॥१५७१॥ इति।

तथा—

सौवर्णै राजतैर्वापि पिण्डं भित्वा त्रिधा कुशैः।
पितृपिण्डेषु संयुज्य दद्यात् प्रेतावनेजनम् ॥१५७२॥

**अत्र श्लोकोऽपि वाच्यः, स यथा,—**

एष वोऽनुगतः प्रेतः पितृसामान्यमाप्तवान्।
शिवं भवतु शेषाणां जायन्तां चिरजीविनः ॥१५७३॥ इति।

अत्र केचित् पद्धतिकारा मोक्ष धेनुं दद्यादित्याहुः।

**तन्मन्त्रास्तु,—**२(†)।

मानसं वाचिकं चैव कर्म्मणा चापि यत्कृतम्।
तस्य पापस्य शुद्ध्यर्थं मोक्ष धेनुं ददाम्यहम् ॥१५७४॥
मोक्षं देहि जगन्नाथ मोक्षं देहि जनार्द्दन।
मोक्षं देहि हृषीकेश मोक्षधेनुप्रदानतः ॥ १५७५॥ इति।

अत्र प्रेतपूर्व्वकं पिण्डदान माश्वलायनादिविषयम्। चत्वार्य्युदक—पात्राणि, चेत् प्रेतस्य त्रीणींतरेषामिति तत्सूत्रात्। वाजसनेयिनां तु पितामहादित्रिक पिण्डदान पूर्व्वकं प्रेतपिण्डदानं कार्य्यम्। चत्वारि पात्राणि सतिल गन्धोदकानि पूरयित्वा त्रीणि पितृणामेकं प्रेतस्येति
870. तत्सूत्रात् ३(‡)।

---

१(*) 'ये समाना' इत्यादि द्वौ यजुर्मन्त्रौ प्रागुक्तौ। पितृपिण्डेषु प्रेतपिण्ड मिश्रणे प्रेतत्वं. नं त्यति।

२(†) तन्मन्त्रा :—अथमोक्षधेनुदानमन्त्राश्च याः।

३(‡) ततसूत्रा दाश्वलायन सूत्रोक्तादिति।

दत्वा पिण्डान् पितृभ्यस्तु पश्चात् प्रेताय पार्श्वतः ।
तं तु पिण्डं त्रिधा कृत्वा आनुपूर्व्व्याच्च सन्ततम् ॥१५७६॥

871. निदध्यात् त्रिषु पिण्डेषु एष संसर्जने विधिः ॥ इति कठश्रुतेः ।
प्रेतकृत्यस्य दैवपूर्व्वकत्वायोगात् ।
श्राद्धद्वयमुपक्रम्य कुर्वीत सहपिण्डनम् ।
तयोस्त्रिपुरुषपूर्व्वमेकोद्दिष्टं ततः परमिति ॥१५७७॥
वर्गप्रदीपोक्तेश्चेति विषयव्यवस्थां साधु पश्यामः १(*) ।

तथा,—

पिण्डसंयोजनादूर्द्ध्वं प्रेतत्वस्य निवृत्तितः २(†) ।
अवनेजनधर्म्मेषु पुनः प्रेतं न निर्द्दिशेत् ॥१५७८॥ इति ।

872. **उत्तरीय वस्त्र मिदानीं पिण्डे निदध्यादित्युक्तं ब्राह्मे ।**

सुवर्त्तुलांस्ततस्तांस्तु कृत्वा पिण्डान् प्रपूजयेत् ।
अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैर्वस्त्रैस्तथैव च ॥१५७९॥
प्रेताच्छादनवस्त्रं चेदुत्तरीयं धृतं यदि ।
तर्हि तद्वस्त्रखण्डं तु पिण्डोपरि विनिक्षिपेत् ॥१५८०॥ इति ।

**याज्ञवल्क्यः,—**

वाच्यतामित्यनुज्ञातः प्रत्येकेभ्यः स्वधोच्यताम् ३(‡) ।
ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ॥१५८१॥
इत्यादि कर्म्मशेषं समाप्य विप्रान् विसृज्य पिण्डप्रतिपत्तिं कुर्य्यात् ।

**देवलः,—**

ततः कर्म्मणि निर्वृत्ते तान् पिण्डांस्तदनन्तरम् ।
ब्राह्मणोऽग्निरजा गौर्वा भक्षयेदप्सु वा क्षिपेत् ॥१५८२॥
इति सकृदाच्छिन्नोल्मुकानि पचनाग्नावत्र प्रास्येदिति ।

---

१(*) पिण्ड सम्मिश्रणात् प्रेतत्वनाशे पितृसाम्यत्वप्राप्तिः । अतो न प्रेतपदोल्लेखः स्यात् ।

२(†) 'स्वधांवाचयिष्ये' इति यजमानोक्ते, वाच्यतामिति—पुरोहितोक्तिः । प्रत्येकेभ्यः पित्रादिभ्य इति ।

३(‡) 'पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपिवा' इति स्मृत्युक्त प्रतिपत्ति कर्म्म ।

873. दुण्ढुपद्धतिकारः,—अत्रैतत् सन्दिह्यते प्रेतस्य पात्रं पिण्डं च पत्रादिषु संयुञ्ज्यादित्युक्तम्। तत्र प्रकर्षेणेतः प्रेत इति व्युत्पत्त्या प्रेतशब्देन किं चतुर्थः पुरुषोऽभिप्रेतः आहोस्विन्नवमृत इति उभयथा वचनदर्शनात् सन्देहः १(*)।

874. **तथा हि वृद्ध याज्ञवल्क्यः—**

वृद्धस्यैव तु यत्पात्रं तत्सिञ्चेत् प्रपितामहे।
तत् सुते सिञ्चयेत् पात्रं तत् सुते सिञ्चयेत् पुनः ॥१५८३॥

875. **वृद्ध वसिष्ठः—**

नवानी(ती)तोर्घ्यपात्रं च पिण्डं च यदि संयुजेत्।
पितृपात्रेषु पिण्डेषु सपिण्डीकरणं तु तत् ॥१५८४॥ इत्यादि।
एवं सति तत्रैक आहुरुभयस्य प्रामाणिकत्वाद्विकल्प इति।

**वयन्तु।**

अव्यवस्था च सर्वत्र तद्विनाशनमात्मनः।
इति वशिष्ठवचनात् साग्निकानग्निकपरत्वेन व्यवस्था।

876. **तथा च कश्यपः—**

प्रपितामहस्य वृद्धस्य अर्घ्यपिण्ड क्रिया त्रिधा।
इतरेषु प्रयुञ्जीत सपिण्डीकरणेऽग्निमान् ॥१५८५॥

**इत्यतोऽग्निमतः प्रथमोपक्षः ( यज्ञः )।**

प्रेतपात्रोदकं पिण्डमितरेषु नियोजयेत्।
त्रिधा कृत्वा क्रमेणैव सापिण्ड्ये तु निरग्निकः ॥१५८६॥ इति।

877. हेमाद्रौ, प्रचेतसः स्मरणान्निरग्नेर्द्वितीय इति विवेकः।
सापिण्ड्यानन्तरं चतुर्थो—

---

१(*) ढुन्ढु सन्दर्भकारेण यः सन्देहः कृतः, हेमाद्रिणा स निराकृतः साग्नि निरग्निभेदेन इति।
,, यत्र प्रेतः मृतेः परं सम्वत्सरं यावत् स्थितः,
न पितृसाम्यं गतः। योगाद् रूढेः प्राबल्यम्।

876. **निवर्त्तत इत्याह रेणुः,—**

सपिण्डीकरणादूर्द्धं चतुर्थस्तु निवर्त्तते ।

877. श्राद्धे च तर्पणे चैव इति शातातपोऽब्रवीत् ॥१५८७॥ इति ।

## सपिण्डीकरणोत्तरं पाथेय श्राद्धं कार्य्यम् ।

878. तथा च स्मृत्यर्थसारे, सपिण्डीकरणे कृते प्रेतलोकात् पितृलोकं गच्छन्ति । आमेतु पाथेयश्राद्धं पार्व्वण विधानेन कार्य्यमिति रेणु—

879. कारिकायां च,—

कृते सपिण्डीकरणे पितृलोकं हि गच्छतः ।

प्रेतलोकात्तथामेन पाथेयं पार्व्वणं भवेत् ॥१५८८॥ इति ।

सपिण्डीकरणे ज्येष्ठपुत्रस्यैवाधिकारः १(*) ।

880. **तथाहि हेमाद्रौ वायुपुराणे,—**

सपिण्डीकरणं श्राद्धं ज्येष्ठपुत्रः समाचरेत् ।

श्राद्धानि षोड़शादत्त्वा न कुर्य्यात्तु सपिण्डनम् ॥

प्रोषितावसिते पुत्रः कालादपि चिरादपि ॥१५८९॥ इति ।

एतद्वयाख्यानमपरार्के । सापिण्ड्यं ज्येष्ठ एव कुर्य्यात् । यदि प्रोषितः तदा प्रोषितावसिते प्रवासावसानेऽपि चिरादपि कालात् षोड़शश्राद्ध पूर्व्वकं सापिण्ड्यं कुर्य्यात् । यदि षोड़शश्राद्धानि कनिष्ठभ्रात्रादिना दत्तानि तदा सपिण्डत्वमेव कुर्य्यादिति । तीर्थादौ कनिष्ठोऽपि कुर्य्यादित्युक्तम् ।

881. **श्राद्धसारे,—**

गङ्गायां च गयायां च नैमिषे पुष्करे तथा ।

कनिष्ठेनैव सापिण्ड्यं कर्त्तव्यं मङ्गलेऽपि च ॥१५९०॥ इति ।

882 **मङ्गलवृद्धिः हरिभट्ट पद्धतौ,—**

यदि ज्येष्ठोऽनग्निमान् स्यात् कनिष्ठस्त्वग्निमान् भवेत् ।

कनिष्ठेनैव कर्त्तव्यं सपिण्डीकरणं ततः ॥१५९१॥ इति ।

---

१ (*) 'ज्येष्ठेनैवतु पुत्रेण पुत्री भवति मानवः । अतः ज्येष्ठेनैवतु कर्त्तव्यं प्रेतकृत्यन्तु सर्व्वदा' इति स्मृतिष्वुक्तम् ।

883. **नारायण भट्टोपि,—**

ज्येष्ठेन वा कनिष्ठेन सपिण्डीकरणे कृते ।
देशान्तर गतानां च पुत्राणां तु कथं भवेत् ॥१५६२॥ इति ।
श्रुत्वातु वपनं कार्य्यं दशाहान्तं—तिलोदकम् ।
दत्वा सपिण्डीकरणे कुर्य्यादेकादशेऽहनि ॥१५६३॥

884. द्वादशाहेन कर्त्तव्यमिति शातातपोऽब्रवीत् । इत्यन्यविधिपरेवाक्ये कनिष्ठस्यापि सपिण्डीकरणेऽधिकारोदृष्ट इति ।

885. **तत्र विशेषमाह ऋष्यशृङ्ग :—**

यवीयसा कृते श्राद्धे प्रेत शब्दं विहाय तु ।
ज्येष्ठेनैव प्रकर्त्तव्यं सपिण्डीकरणं पुनः ॥१५६४॥
यः सपिण्डीकृतं जन्तुं प्रेतशब्दे नियोजयेत् ।
असौ विधिघ्नो भवति पितृहा चोपजायत इति ॥१५६५॥

अत्रैव शब्दाज् ज्येष्ठस्य नियमः । ज्येष्ठेनाप्यकृतेऽपि सपिण्डने

886. कर्त्तव्यमेवेति हरदत्त व्याख्यानात् ।

तत्र प्रेतशब्दं विहायार्घ्यं पिण्डसंयोजनादि कर्त्तव्यम् ।
यवीयसा क्रियमान सपिण्डने तु पार्व्वणमात्रम् ।
सपिण्डीकरणश्राद्धे पुनः पार्व्वणवद् भवेत् ।
अर्घ्यसंयोजनं नैव पिण्डसंयोजनं न च १(*) ॥१५६६॥
इति संवर्त्तस्मरणादिति ।

—*—

## अथ व्युत्क्रमम्रृतानां सापिण्ड्यनिर्णयः ।

—*—

887. **ब्राह्मे,—**

मृते पितरि यस्याथ विद्यते च पितामहः ।
तेन देयास्त्रयः पिण्डाः प्रपितामह पुर्व्वकाः ॥१५६७॥
तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यश्च पुर्व्ववत् ।
मातर्य्यग्रे प्रमीतायां विद्यते च पितामही ॥
प्रपितामही पुर्व्वं तु कार्य्यन्तत्राप्ययं विधिः ॥१५६८॥ इति ।

यदा पितामह प्रपितामहौ जीवतस्तदा वृद्धप्रपितामहादि त्रिके वा सपिण्डनं कार्य्यम् ।

---

१(*) अत्रार्घ्यं संयोजन-पिण्डसंयोजनेह 'ये समाना' इतिमन्त्राभ्यां न संमिश्रये ।

त्रयाणामपि पिण्डानामेकेनापि सपिण्डने।
पितृत्वमश्नुते प्रेत इति धर्म्मो व्यवस्थितः ॥१५९९॥
इति सुमन्तूक्तेः।

888. **यत्तु मनुनोक्तं,—**
व्युत्क्रमाच्च प्रमीतानां नैव कार्य्या सपिण्डतेति न मातापितृभर्त्तृ-व्यतिरिक्तविषयम्।

889. **अतएव स्कान्दे,—**
व्युत्क्रमेण मृतानां न सपिण्डीकृतिरिष्यते।
यदि माता यदि पिता भर्त्ता नैष विधिः स्मृतः ॥१६००॥ इति।
एष विधिः सपिण्डण निषेधरूप इति मदन पारिजाते व्याख्यातः।
अपुत्रायाः सापत्नमातुः सपत्नीपुत्रेण सपिण्डनं कार्य्यम्।

890. पितृपत्न्यः सर्व्वा मातर इति गौतमोक्तेरिति ढुण्ढुः।
अत्रापि पितामह्यां जीवन्त्यां प्रपितामह्यादिभिः संयोजयेत्।
एवं च सति व्युत्क्रमसपिण्डने कृतेऽपि पार्व्वणान्वष्टकादेः सिद्ध्यर्थं पुनरपि पितामह पितामह्यादिभिर्यथायोगं सपिण्डीकरणं कार्य्यम्।

891. **तथा च रेणुः,—**
व्युत्क्रमेण प्रमीता ये तद्विना प्रेतता ध्रुवम्।
पुनः सपिण्डनं तेषां कुर्य्यात् प्रेते पितामहे ॥१६०१॥
अन्वष्टकासु वृद्धौ च पितामह्यादिभिः सह।
श्राद्धे सत्युपपन्नं स्यान्न च पित्रा सपिण्डनमिति ॥१६०२॥
एवमेव सहगमने मृतायाः स्त्रियाः पत्या सह सपिण्डनेऽपि ज्ञेयम्।
आस्वादितो यदा पिण्डः पत्याचैकेन योजितः।
आन्वष्टकेषु कर्षूणां तर्पणे च पृथक् पृथक् १(*) ॥१६०३॥
पुनः सपिण्डनं कार्य्यं पितामह्यादिभिः सह ॥१६०४॥

892. **इत्युशनः—स्मृतेः।**
**न वान्वष्टकादौ पतिसहितानां दानं युक्तम्।** २(†)
अन्वष्टकासु वृद्धौ च गयायां च मृतेऽहनि।
मातृश्राद्धं पृथक् कुर्य्यादन्यत्र पतिना सह ॥१६०५॥

---

१(*) अन्यत् ग्रन्थितत्त्वे पुष्कलमस्ति।
२(†) अत्र 'नवा' अस्मिन् 'नचेति' पाठान्तरमस्ति।

**इति विशेषोक्तेः ।**

**अविद्यमानसापत्नपुत्राया स्त्रियाः सापिण्ड्यं पतिः कुर्य्यात् ।**

अपुत्रायां मृतायां तु पतिः कुर्य्यात् सपिण्डतम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं स्मृतम् ॥१६०६॥

893. **इति कात्यायनोक्तेः ।**

**पुत्रपतिहीनायास्तु न सापिण्ड्यम् १(*) ।**

अपुत्रा ये मृताः केचित् पुरुषा वा स्त्रियोऽपि वा ।
तेषां सपिण्डना भावादेकोद्दिष्टेन पार्व्वणम् ॥१६०७॥

894. **इति गालवोक्तेः ।**

ब्रह्मचारिणामनपत्यानां च सपिण्डनं नास्ति ।

895. किन्तु सर्व्वदैकोद्दिष्टमेवेतिस्मृत्यर्थसाराच्च । पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात पुत्रवांश्चेदिति सूत्रभाष्ये कर्काचार्य्योक्तेश्च । प्रयोगपारिजात
896. कारादयस्तु सापिण्ड्यस्य प्रेतत्वनिवृत्तिफलकत्वात् सर्व्वेषामपि सापिण्ड्यं भवतीत्याहुः ।

897. **तथा च रेणुः—**

भ्राता वा भ्रातुष्पुत्रो वा सपिण्डः शिष्य एववा ।
सपिण्डीकरणं कुर्य्यात् पुत्रहीने मृते सति ॥१६०८॥ इति ।
एवमत्र देशाचारतो व्यवस्थेति केचित ।
वयन्तु सापत्न्यनिरपत्यताविषयत्वेन व्यवस्थां ब्रूमः ।

**अन्यथा,—**

स्त्र्यपत्यवतोऽपुत्रस्य दौहित्रकर्त्तृकपार्व्वणादौ संप्रदानार्हत्वापत्तेः ।२(†)
सर्व्वथापत्यशून्यस्य सापिण्ड्याभावः ।

898. प्रेतस्यत्वनपत्यस्य एकोद्दिष्टं सदा भवेदिति त्रयस्त्रिंशन्मतात् ।
वर्षे वर्षे तु कर्त्तव्या वान्धवैरुदकक्रिया ।
अदैवं भोजयेच्छ्राद्धे पिण्डमेकं तु निर्वपेत् ॥१६०९॥

---

१(*) 'पति पुत्र विहीनानां स्त्रीणां नास्ति सपिण्डता' इति मत्यन्तरं ।

२(†) 'स्त्र्यापत्यवतः' इत्यत्र पाठः सन्दिग्धः ।

899. इति मनुवचनाच्चोक्तं सू(यु)क्तमुत्पश्यामः । अनपत्यस्यापि पत्नीसद्भावे
900. सापिण्ड्यमेव तदाह लौगाक्षिः ।

सर्वाभावे स्वयं पत्न्यः स्वभर्त्तृणां समन्त्रकम् ।
सपिण्डीकरणं कुर्य्युस्ततः पार्व्वणमेव च ॥१६१०॥

901. इति सुमन्तुश्च ।

अपुत्रे संस्थिते कर्त्ता न भवेच्छ्राद्धकर्मणि ।
तत्र पत्न्यपि कुर्व्वीत सापिण्ड्यं पार्व्वणं तथा ॥१६११॥ इति ।
अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये ।
तेषामपि प्रकर्त्तव्यं वसुरुद्रैः सपिण्डनम् ॥१६१२॥

902. इति मनूक्तेश्च ।

यत्त्वत्र,—
स्त्रियः स्त्रीषु नसंयोज्याः संयोज्या मृत भर्त्तरि ।
तंतु पिण्डं त्रिधा कृत्वा तत्पित्रादिषु योजयेत् ॥१६१३॥

903. इति ऋतुदक्षस्मरणम् १(*) ।

एकत्वमागता भर्त्तुः पिण्डे गोत्रे च सूतके २(†) ।
स्वगोत्राद् भ्रश्यते नारी विवाहात् सप्तमे पदे ॥१६१४॥

904. इति वृद्धमनुस्मरणम् ।

मातुः सपिण्डीकरणं क्रियते स्वामिना सह ।
मातृकं पैतृकं पिण्ड मेकीकृत्य विधानतः ॥१६१५॥

905. इति व्यासस्मरणं च ।

तत्तु सहगमनमृतस्त्री-विधवास्त्री-विषयं ज्ञेयम् ।
मृता वानुगता नाथं सा तेन सहपिण्डताम् ।
अर्हति स्वर्गवासं च यावदाभूतसंप्लवम् ॥१६१६॥ ३(‡)

---

१(*) महर्षिं क्रतुः, महर्षिं दक्षश्चाब्रवीदिति ।

२(†) इति—उद्वाह तत्त्व सन्दर्भे सर्व्वमस्ति ।

३(‡) सहमृति विषये श्रुतिस्मृति-प्रमाणानि प्रागुक्तानि ।

906. इति ब्राह्मोक्तेः ।

तत्रापि विशेषो निगमे ।

पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं सुतैः
सहयाने तु मातॄणां वर्ज्यावितत् पितामहे ॥१६१७॥ इति ।

अन्यत्रापि,—

पितामहादिभिः सार्द्धं पितुः कुर्य्यात्सपिण्डनम् ।
मातुर्भर्त्रासहैकेन नत्वन्यः श्वशुरैः सह ॥१६१८॥ इति ।

अयमभिसन्धिः, सहगमने स्त्रियं भर्त्रा संयुज्यानन्तरं तत्पित्रादिभिस्त्रिभिः सह संयुज्यात् । भर्त्तुः संपिण्डनेनैव पत्न्या अपि कृतं भवेदिति स्मृतेः । न चासंस्कृतेन पत्या सपिण्डनमयुक्तमिति वाच्यम् वाचनिकत्वादस्यार्थस्य ।

अपापिष्ठमपि शुद्धे न शुद्धः पापकृतापि वा । १(*) ।
सपिण्डीकरणश्राद्धे संयुज्यादिति निश्चयः ॥१६१९॥

907. इति वृद्धपराशरोक्तेः ।

एकचित्यां समारूढ़ा या नारी च पतिव्रता ।
स्वामिना सह पिण्डत्वे तस्या अपि कृतं भवेत ॥१६२०॥
दम्पत्यर्थं द्विजं चैकं भोजयेच्च तथोत्तरे । २(†) ।
तयोः सपिण्डीकरणं भवेत् दम्पती पिण्डयोः ॥१६२१॥

908. इति रेणूक्तेश्च ।

## देशकालद्रव्यकर्त्रैक्ये तान्त्रिको विधिः ।

भेदे पुनर्निमित्तानां कर्म्मावृत्तिरपीष्यत इति स्मृतिसंग्रहोक्तेश्च, अन्वारोहणे एकचित्यारोहणे च स्त्रियाः पृथक्सपिण्डीकरणं नास्तीति स्मृत्यर्थसारोक्तेश्चेत्यलमतिप्रपञ्चनेन । विधवास्त्रीमरणेऽपि पुत्रः स्वपित्रादित्रिकेन तां सपिण्डयेत् । पितरि हि इत्युक्तो दक्षेण ।

909. स्त्रियः स्त्रीषु न संयोज्या इति पूर्व्वोक्तवचनेन लोगाक्षिरपि,—

---

१(*) 'पापिष्ठेन तु पापिष्ठमिति' शुद्धितत्त्वे अन्यदस्ति । 'अपापिष्ठ' इति स्थाने पापिष्ठमिति पाठान्तरमस्ति ।

२(†) 'तथोत्तरे' श्राद्धानन्तरमिति ।

पितामह्यादिभिस्त्रिभिर्मातरं तु सपिण्डयेत् ।
पितरि ध्रियमाने तु तेनैवोपरते सति ॥१६२२॥ इति ।

910. **हारीतोऽपि,—**

तस्मिन् सति सुताः कुर्य्युः पितामह्यादिभिः सहेति । तस्मिन्निति पितृपरामर्शः । सांवत्सरिकान्वष्टकश्राद्धादौ पिण्डसिद्ध्यर्थं तु पितामहादिभिः सह पुनः सपिण्डनं कार्य्यमिति प्रागेवाभिहितम् । तस्मात् सिद्धजीवत्पितृकः । पितामह्यादिभिर्मातरं सपिण्डयेन्मृत—पितृकस्तु स्वपित्रादिभिरिति । पुत्रिकापुत्रस्तु मातरं स्वमातामह्यादिभिः सपिण्डयेदित्युक्तं—

911. **मनुना,—**

मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः ।
द्वितीयन्तु पितुस्तस्यास्तृतीयं च पितुः पितुः ॥१६२३॥ १(*) ।
पितुः पितामहे यद्वत् पूर्णे संवत्सरे सुतैः ।
मातुर्मातामहे तद्वदेषा कार्य्या सपिण्डता ॥१६२४॥

## इति तृतीयं चेति शब्दश्चतुर्थसमुच्चयार्थः ।

912. **बौधायनोऽपि,—**

आदिशेत् प्रथमे पिण्डे मातरं पुत्रिकासुतः ।
द्वितीये पितरं तस्यास्तृतीये च पितामहम् ॥१६२५॥ इति ।

913. **अत्रापि च पूर्व्ववत् लौगाक्षिरपि,—**

मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम् ।
कुर्वीत पुत्रिका पुत्र एवमाह प्रजापतिः ॥१६२६॥ इति ।
एवमेवास्य गान्धर्व्वराक्षसपैशाचविवाहोढास्वपि द्रष्टव्यमिति

914. स्मृतिमञ्जरीकारादयः ।

---

१(*) अत्र, चकाराच्च तुर्यस्य संग्रहो बोध्यः ।

915. **मार्कण्डेयः,—**

ब्राह्मादिषु विवाहेषु या चोढ़ा कन्यका भवेत् ।
भर्त्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया ॥
आसुरादिविवाहेषु पितृगोत्रेण धर्म्मवित् ॥ १६२७॥ इति ।

916. **विज्ञानेश्वरोऽपि,—** १(*) ।

आसुरादिविवाहोत्पन्नः २(†) पुत्रिकासुतश्च स्वमातामहेनैव, ब्राह्मादि-
विवाहोढ़ोत्पन्नस्तु पित्रा पितामह्या वा मातरं संयुज्याद् यथावंश-
माचारः । वंशसमारोपनियतश्चेदात्मनस्तुष्टिरेव चेति वचनाद् यथारुचि
कुर्य्यादिति । हेमाद्रिस्तु,—ब्राह्मादिविवाहेष्वपि देशभेदान्मातामहेन
917. गुर्ज्जरेषु सपिण्डीकरणमाह । अतएव गुर्जरेषु कोकिलमतानु-
सारिणां मातृमातामहप्रमातामहैः—

इति श्राद्धप्रयोगः । सपिण्डनञ्च दृश्यत इति येन केनापि मातुः
सपिण्डो ऽन्वष्टकादिषु पितामह्यादिभिरेव मातुः श्राद्धं कर्त्तव्यम् ।
अन्वष्टका(दि)स्विति वचनादित्युचे ।

अथ यदि दैववशादसंस्कृतौपितामहप्रपितामहौस्त स्तदापर्णशरादिना
सपिण्डीकरणान्तेन प्रायश्चित्त पूर्व्वकंतौ संस्कृत्य पश्चात् पितुः सपिण्डनं
918. कार्य्यमिति ढुण्ढुपद्धतिकृत् ।

असंस्कृतौतुतौ संस्कार्य्यौ पूर्व्वौ पौत्र प्रपौत्रकौ ।
919. पितरं तत्र संस्कुर्य्यादिति शातातपोऽब्रवीत् ॥१६२८॥ इति ।

अथ यदि तौ चेत्पतितौ तदा पौत्रादिस्तयोरभ्युदयकामः पतित-
प्रायश्चित्तं कृत्वा नारायणवलि पूर्व्वकं दाहादिसपिण्डीकरणान्तं
कर्म्मभिः संस्कृत्य ताभ्यां पितुः सपिण्डनंकार्य्यम् ।

920. अथवा पतितं परित्यज्याऽपतितैः सह सपिण्डनं कार्य्यमिति ।
अन्यथा, यस्यैतानि न हीयन्ते प्रेतश्राद्धानि षोड़श ।
प्रेतत्वं हि स्थिरन्तस्य दत्तैः श्राद्ध शतैरपि ॥१६२९॥
पापिष्ठमपिशुद्धेन श्रुद्धं पापकृतापिवा ।
पितामहेनपितरं संस्कुर्य्यादिति निश्चयः ॥१६३०॥ इति ।

---

१(*) याज्ञवल्क्यस्मृति व्याख्यानेऽवादीत् । विवाहेनोढायाजात इति वा ।

२(†) 'विवाहगूढोत्पन्नः' इति पाठान्तरम् ।

कात्यायनवचनं निर्व्विषयं स्यात्। अथवा पतितं परित्यक्तावर्ज्जितैः सह सपिण्डनं कार्य्यमिति केचित्।

918. **तथाहि श्लोकः गोतमस्य—**

ब्राह्मणादिहते ताते पतिते सङ्गवर्ज्जिते।
व्युत्क्रमाच्च मृते देयं येभ्यएव ददात्यसाविति ॥१६३१॥

**तथा,—**

पापकर्म्मिणोनसंसृजेरन् नस्त्रियश्चाभिचारिणीरिति १(*) वाक्यं,
919. गौतमस्य। असंस्कृतौ न संस्कार्यौ पूर्व्वौ पौत्रप्रपौत्रकैः।
920. पितरं तत्र संस्कुर्य्यादिति कात्यायनोऽब्रवीदिति।
जत्र यथा श्राद्धं व्यवस्था, दोषातिशय तदभावाभ्यां वा व्यवस्थेति दिक्।
व्युत्क्रममृत-सा पिण्ड्ये विशेषान्तरमाह,—

पितामहः पितुः पश्चात् पञ्चत्वं यदि गच्छति।
पौत्रेणैकादशादि कर्त्तव्यं श्राद्ध-षोड़शः ॥१६३२॥
नैतत् पौत्रेण कर्त्तव्यं पुत्रोवा चेत् पितामहः।
पितुः सपिण्डणं कृत्वा कुर्य्यान्मासानु मासिकम् ॥१६३३॥ इति।

**अत्रायमर्थः—**

पितामह प्रपितामहयोः पुत्राभावे पौत्रेण दाहादिसपिण्डान्तं श्राद्धं षोड़शं कार्य्यमिति नियमात्। पितृवार्षिकेनैव तत्सिद्धेस्तथाचाराभावाच्च १(*)। पित्रादित्रयाणां यौगपद्यमृतौ तु पितुः प्राधान्यादादौ सपिण्डनं कार्य्यम्।

पश्चात्तयोः कार्य्यम्। पितामहमृतेसति तद्दशाहान्ते पितृमरणे पितुः संस्कारं कृत्वा पितामहस्य पुनः सर्व्वमावर्त्तयेत्। वृत्ते दशाहे नैवम्, एवमशक्त-पित्रानुज्ञामात्रेण पौत्रेण पितामहकृत्ये प्रक्रान्ते तन्मध्ये पितृमृतौ, पित्रशौचं वहन्नेव पौत्रः पितामह-कर्म्म कुर्य्यात्, प्रकान्तत्वादिति
921. मदनपारिजात—पृथ्वीचन्द्रोदययोः। व्युत्क्रममृतौ प्रपितामहादिभिः सपिण्डने कृते सति, पुनः पितामहे मृते तत्सपिण्डने तेनसह

---

१(*) आदर्शग्रन्थान्तरे,—'पुत्रसद्भावे पुत्रेणैव कार्य्यम्। केचित्तु, पुत्रान्तराभावे पितामहादेर्वार्षिकश्राद्धमपि पौत्रेण कार्य्यमित्याहुः। तन्न, 'कर्त्तव्यं श्राद्ध षोड़शमिति' नियमात्। पितृवार्षिके कृतेनै तत् सिद्धेस्तथाचाराभावाच्च' इति भिन्न पाठश्चेत्यमस्ति।

922. पुनः पितुः सपिण्डनं कार्य्यमिति हेमाद्रिराह ।
अन्येनैतन्मन्यते, पूर्व्वकृत-सापिण्ड्येनैव प्रेतत्वनिवृत्त्या संप्रदानोपयोगि पितृत्वप्राप्तेरिति ।
अत्राचारतो व्यवस्था । यतीनां सपिण्डनं नास्ति ।
किन्त्वेकादशाहे पार्व्वणं कार्य्यम् ।
एकोद्दिष्टं न कुर्वीत त्रिदण्डानां कदाचन ।
सपिण्डीकरणं तेषां न कर्त्तव्यं सुतेन च ॥१६३४॥
अहन्येकादशे प्राप्ते पार्व्वणं तु विधीयते ।
923. त्रिदण्डग्रहणात् प्रेत्यं नष्टमाहाङ्गिरा मुनिः ॥१६३५॥
सन्न्यासिनोऽप्याब्दिकादि पुत्रः कुर्य्याद् यथाविधि ।
महालयेतु यच्छ्राद्धं द्वादश्यां पार्व्वणे न तु ॥१६३६॥ इति ।

### त्रिदण्डपदमेकदण्डस्याप्युपलक्षकम् ।

चतुर्थमाश्रमं गत्वा ब्रह्मविद्यापरायणः ।
एकदण्डी त्रिदण्डी वा सर्व्वसङ्गविवर्जितः १(*) ॥
सन्न्यासी ब्रह्मणः स्थानं गच्छत्येव न संशयः ॥१६३७॥

924. **इति चतुर्विंशतिमतोक्तेः ।**
**यद्वा, दण्डशब्दो यमपरो ग्राह्यः** २(†) ।
वाचंयमः । (१) मनः संयमः चित्तवृत्तिरोधः । (२) कायदण्डः स्थिरासनोपविष्टः । (३) कर्म्मदण्डः ईश्वरोद्देशेकर्म्म वा (४) ॥१६३८॥
वाग्दण्डोऽथ मनोदण्डः कर्म्मदण्डस्तथैव च ।
यस्यैते नियता दण्डाः स त्रिदण्डीति चोच्यते ॥

925. **इति मनूक्तेः ।**
यदि पूर्व्वाङ्गं सर्व्वं कृत्वा दण्डग्रहणात् पूर्व्वं मृतस्तदा दाहादि-
926. सपिण्डनान्तं सर्व्वं कार्य्यमिति नारायण भट्टाः ।
यतिश्राद्धे यतिमारभ्य त्रिभ्यो देयम् ।

---

१(*) 'वाग्दण्डश्च मनोदण्डः' इत्यादि गीताटीकादिषु च ।

२(†) नारायण वृत्तिः हेमाद्रौ. विश्वनाथसन्दर्भेचास्ति । हद्धौ इत्यत्र 'संन्यस्तं' इत्यधिकः पाठोऽस्ति ।

यत्तु—

ब्राह्मणादिहते याते ताते सङ्गविवर्ज्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्यएव ददात्यसौ ॥१६३९॥ इति ।
वृद्धौ तीर्थे चतुर्थे च ताते च पतिते सति ।
येभ्य एव पिता दद्यात् तेभ्यो दद्यात् स्वयं तु तत् ॥१६४०॥

इत्यादि वचनंतु जीवद्यतिपुत्रपरम् । अन्यथा, एकोद्दिष्टं न कुर्व्वीत त्रिदण्डानां कथञ्चन इति निषेधानुपपत्तेः । यतिश्राद्धं तत् पुत्रस्यैव । शिष्यादीनां तु समाराधना । गोत्रिणो वा शिष्या वा सम्बन्धिनश्च स्वात्मनो वृद्धिमाशंसमानाः शुक्लद्वादश्यामन्यस्मिन् वा दिवसे श्रीनारायण बुद्ध्या सन्न्यासिनो नारायणवलिं १(*) कुर्य्युस्तत्र सन्न्यासिनो मुख्यास्तदभावे गृहस्था दश द्वादश, शक्तौ, शतमधिकं वा निमन्त्र्य तेष्वेकं महाविष्णुबुद्ध्याऽपरांस्तु केशवादि-मूर्त्तिबुद्ध्या, पुरुषसूक्तेन षोड़शोपचारैः समभ्यर्च्चय २(†) पायसप्रधाने नान्नेन भोजयित्वा गोपीचन्दनकटिसूत्र कोपीनाच्छादनानि दत्वा

ब्रह्मव्यक्तं भवेत् सृष्टि र्ब्रह्मैव व्यक्तिमागतम् ।
यत् किञ्चित् पूज्यते लोके तेन ब्रह्मैव पूजितम् ॥१६४२॥
देवदत्त तथा कश्चिद् ब्रह्मैव व्यक्ततां गतम् ।
पुनर्ब्रह्मैव संजातो ब्रह्म-ब्रह्म तदुच्यते ॥१६४३॥

इति पठित्वा विसृजेदिति ।

वाजसनेयिनां सपिण्डीकरणे विशेषः । श्रौतस्मार्त्ताग्निमतः कर्त्तुः पित्रादेः सपिण्डीकरणं द्वादशाहे स्यात् । स्मार्त्ताग्नेर्वृद्धिप्राप्तौ निरग्नेर्नास्त्येव सपिण्डीकरणम् । तदपि स्मार्त्ताग्नावेव कर्त्तव्यमिति

927. कर्काचार्य्याः ।

928. आपस्तम्बसूत्रभाष्यकृत्सुदर्शनाचार्य्योऽप्येवमेवाह । यथा, साग्नेः स्वाग्नावेव सपिण्डीकरणेऽग्नौ करणम् ।

स्मार्त्तं कर्म्म विवाहाग्नौ कुर्वीत प्रत्यहं गृहीति याज्ञवल्क्यस्मृतेरिति ।

अनग्नेरग्नयाधानीयमाह—

---

१(*) पुरुषसूक्तं शुक्ल, यजुः अः, सूः—३१।१११ ।

२(†) धर्म्मकृत्याङ्गं 'शतं ब्राह्मणभोजनम्' इति स्मृतौ।

929. **देवजानीये भारद्वाजः—**

अशौचान्तदिने कार्य्यं कृतोद्वाहैरनग्निकैः ।
अग्न्याधाने न चाशौचं तदर्थं श्रुतिचोदनात् ॥१६४४॥ इति ।
प्रागेवैकादशाहस्य श्राद्धात् सोऽप्यग्निमान् भवेदिति रेणुकारिका ।
अत्र पदानि देवानामित्युक्तं देवजानीये १(*) ।

930. **गारुडे,—**

तदह्नि दीयते सर्व्वं द्वादशाहे विशेषतः ।
पदानि सर्व्ववस्तूनि वरिष्ठानि त्रयोदश २(†) ॥१६४५॥
यो ददाति मृतस्येह जीवतोऽप्यात्महेतवे ।
सुखी भूत्वा याम्यमार्गं वैनतेय स गच्छति ॥१६४६॥
आसनोपानहौ छत्रं मुद्रिका च कमण्डलुः ।
भाजनं भाजनाधारो वस्त्राण्यष्टविधं पदम् ॥१६४७॥

**तथा,—**

भाजनासनदानेन मुद्रिका भोजनेन च ।
आज्ययज्ञोपवीतेन पदं सम्पूर्णतां व्रजेत् ॥१६४८॥
महिषीरथगोदानात् सुखीभवति निश्चितम् ।
सर्व्वोपस्करयुक्तानि पदान्यत्र त्रयोदश ॥१६४९॥
यो ददाति मृतस्येह जीवन्नप्यात्महेतवे ।
स गच्छति परं स्थानं महाकष्ट-विवर्ज्जितः ॥१६५०॥
त्रयोदश पदानीत्थं प्रेतार्थैकादशेऽहनि ।
दातव्यानि यथाशक्त्या नेनासौ प्रीणितो भवेत् ॥१६५१॥
अन्नं चैवोदकं चैवोपानहौ च कमण्डलुः ।
छत्रं शय्या तथा यष्टिर्लौहदण्डस्तथाष्टमः ॥१६५२॥
अग्नीष्टकं प्रदीपश्च तिलास्ताम्बूलमेव च ।
चन्दनं पुष्पदानं च पदान्येव चतुर्द्दश ३(‡) ॥१६५३॥

---

१(*) देवजानीयोक्त पदानि पश्चादुच्यन्ते ।

२(†) तानि पदसंज्ञकान्युत्तम देय द्रव्याणि ।

३(‡) तानिचाष्टविधं, चतुर्द्दशविधम् । त्रयोदशविधमिति नानाविधोपादेयानि द्रव्याणि ज्ञेयानि । अत्र 'अन्नाष्टक' मिति भिन्नः पाठः ।

यो वै रथं गजं वापि ब्राह्मणे प्रतिपादयेत् ।
स्वमहिम्नोऽनुपारेण तत्तत् पुण्यमवाप्नुयात् ॥१६५४॥ इति ।

931. **पार्व्वतीयानां १(*) दानविशेषोऽत्र उक्तो भविष्ये,—**

तस्माच्छय्यां समासाद्य सारदारुमयीं दृढ़ाम् ।
हंसतूलाप्रतिच्छन्नां शुभ गण्डोपधानिकाम् ॥१६५५॥
आच्छादनपटीयुक्तां गन्धधूपाधिवासिताम् १(†) ।
तस्यां संस्थाप्य सद्धैम हरिं लक्ष्मी समन्वितम् ॥१६५६॥
तच्छीर्पके घृतभृतं कलशं परिकल्पयेत् ।
ताम्वूलं कुङ्कुममदकर्पूरागुरुचन्दनम् ॥१६५७॥
दीपिकोपानहच्छत्रचामरासनभाजनम् ।
पार्शेपु स्थापयेद् भक्त्या सप्तधान्यानि चैव हि ॥१६५८॥
भृङ्गारकं तथादर्शं पञ्चवर्णवितानकम् ।
यस्मादशून्यं शयनं केशवस्य शिवस्य च ॥१६५९॥
शय्याः ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ।
दत्त्वैवं तस्य स(फ)कलं प्रणिपत्य विसर्ज्जयेत् ॥१६६०॥

**तथा,—**

सम्पूज्य द्विजदाम्पत्यं नानाभरण भूषितम् २(‡) ।
अत्र द्विजदाम्पत्यं—सस्त्रीक विद्वद् ब्राह्मणमुपचारैः पूजयेत् ।
उपवेश्य तु शय्यायां मधुपर्कं ततो ददेत् ॥१६६१॥
रजतस्य तु पात्रेण दधिदुग्धसमन्वितम् ।
अस्थिललाटिकं गृह्य सूक्ष्मं कृत्वा सपायसम् ॥१६६२॥
भोजयेद् द्विजदाम्पत्यं विधिरेप सनातनः ।
एष एव विधिर्दृष्टः पार्व्वतीयै र्द्विजोत्तमैः ॥
गृहीतायां तु यस्यां वै पुनः संस्कार मर्हति ॥१६६३॥

इति श्रीनागदेव भट्टात्मजानन्तभट्टविरचिते विधान पारिजाते
सपिण्डीकरण विधानम् ॥

—*—

१(*) पार्व्वत्य-देशः. नेपाल-मणिपुर-काश्मीरादिप्रदेश वास्तव्यानां देय द्रव्याणि ।

,, अत्र हंस इत्यत्र कंस इति भिन्नः पाठः । कांस्यपात्वन्तदिति । अत्र स्रुत, अस्रुत, भृतं इति च पाठद्वयमस्ति ।

२(‡) शय्यातु—पटीपधान-तूलीप्रच्छादन-पर्य्यङ्क-नोशारपादुकादिमयी स्यात् ।

932. **अथोदकुम्भश्राद्धम्, हेमाद्रौ स्मृतिसमुच्चयेच,—**

—*—

एकादशाहात् प्रभृति घटस्तोयान्नसंयुतः ।
दिने दिने प्रदातव्यो यावत्संवत्सरं सुतैः ॥१६६४॥

933. **याज्ञवल्क्योऽपि,—**

यस्य संवत्सरादर्वाक् सपिण्डीकरणं कृतम् ।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरं ॥१६६५॥

934. **मदनरत्ने गौतमः,—**

अदैवं पार्व्वणश्राद्धं सोदकुम्भमधर्म्मकम् ।
कुर्य्यात् प्रेत्याब्दिकाच्छ्राद्धात् संकल्प्य विधिनान्वहम् ॥१६६६॥
अत्राधर्म्मकं ब्रह्मचर्य्यादि नियमहीनम् । एतन्मासिकश्राद्धवदेकोद्दिष्टं पार्व्वणं वा कार्य्यम् ।

935. **अपरार्कस्तु,—**

सपिण्डीकरणे वृत्ते पृथक्त्वेनोपपद्यते ।
पृथक्त्वेऽनुकृते पश्चात् पुनः कार्य्या सपिण्डता ॥१६६७॥ इति ।

936. **लघुहारीतोक्तावपि—**

तस्याप्यन्नं सोदकुम्भं दद्यात् सम्वत्सरं द्विजे ॥१६६८॥ इति ।

937. याज्ञवल्कीये तस्येत्येकत्वोक्तेरेकोद्दिष्टमेवेत्याह ।
**अन्येतु**—१(*) ।

सम्वत्सरसपिण्डीकरणपक्षे इदमेकोद्दिष्टम् ।
द्वादशाह-सपिण्डीकरणपक्षे पार्व्वणमित्याहुः २(†) ॥१६६९॥
अत्र पिण्डदानं कृत्वा कृतं अहरहरन्नमस्मैब्राह्मणायोदकुम्भश्चदद्यात्

938. पिण्डमप्येके नि(गृ)णन्तीति हेमाद्रौ पारस्कर सूत्रोक्तेः ।
अर्घ्यमावाहनं दैवं पिण्डाग्नौकरणादिकम् ।
ब्रह्मचर्य्यंचैकभुक्तं उदकुम्भे विवर्जयेदिति ॥१६७०॥

---

१(*) एतत्तु देशाचारतो मतान्तरमिति बोध्यम् ।
२(†) 'द्वादशाहः प्रशस्तं' इति मते द्वादशाहे सपिण्डने पार्व्वणं विधेयमिति वदन्ति ।

939. **तथा वर्षपर्य्यन्तं दीपदानमुक्तं, देवजानीये गारूड़े—**

प्रत्यहं दीपकोदेयो मार्गेतु विषमे नरैः १(*) ।
यावत् सम्वरंवापि प्रेतस्य सुखलिप्सया ॥१६७१॥
प्राङ्मुखं दीपकं दद्याद्देवागारे द्विजालये ।
कुर्य्याद्वास्य (ष्य) सुखंपित्रे ह्यद्भिः संकल्प्यसुस्थिरमिति ॥१६७२॥

—*—

## अथ मासिकश्राद्धानि ।

—*—

यस्य संवत्सरादर्वाक् सपिण्डीकरणं कृतम् ।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम् ॥१६७३॥

940. **इत्यप्यङ्गिराः ।**

तस्यापीत्यपिशब्देन संवत्सरादर्वाक् कृतसपिण्डनस्य समुच्चयः ।

941. **गोभिलः—**

यस्य संवत्सरादर्व्वाक् विहिता तु सपिण्डता ।
विधिवत्तानि कुर्व्वीत पुनः श्राद्धानि षोड़श ॥१६७४॥
अनुमासिकानि तु चरेत् तान्येव सापिण्ड्यतः पश्चादिति, दीपिका ।

**एतानि स्वस्वकाले कार्य्याणि वृद्धौत्वपकृष्यते** २(†) ।

सपिण्डीकरणादर्व्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥१६७५॥

942. **निषेधवाक्यमाह कात्यायनः,—**

निर्वर्त्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत् ।
नयातयामं मरणं न भवेत् पुनरस्य तु ॥१६७६॥

943. **हेमाद्रौ गालवः,—**

अर्वाक् संवत्सराद्यस्य सपिण्डीकरणं कृतम् ।
षोड़शानां द्विरावृत्तिं कुर्य्यादित्याह गौतमः ॥१६७७॥

---

१(*)　विषमेमार्गे, चतुष्पथे देयम् ।

२(†)　सर्व्वत्र संस्कारा दौवृद्धिनिमित्तक काले उपस्थिते अपकर्षः स्यात् । स्वस्वकालात् पूर्व्वकाले कर्त्तव्यः इत्यप कर्षं णादपकर्ष संज्ञकः ।

इति द्विरनुष्ठानं चोत्तरेषामेव न पूर्व्वेषाम्। तदपरे न क्षमन्ते पुनः श्राद्धानि षोड़शेति वचनात् कार्ष्णाजिनिवचनस्याहितेत्यादित्वादाह

944. कार्ष्णाजिनिः,

अर्वागब्दाद् यत्र यत्र सपिण्डीकरणं कृतम्।
तदूर्द्ध्वं मासिकानां स्याद् यथाकालमनुष्ठितिः ॥१६७८॥

**इति कश्चिदेवमाह।**

तदपरे न क्षमन्ते पुनः श्राद्धानि षोड़शेति वचनात्।
कार्ष्णाजिनिवचनस्याहिताग्निना द्वादशाहादौ।
सपिण्डीकरणार्थमपकृष्य कृतानामपि षोड़शश्राद्धानां सपिण्डीकरणोत्तरं स्व स्व काले कर्त्तव्यतार्थपरत्वेनापि नेतुं शक्यत्वाच्च।
वृद्धाविव गयाश्राद्धार्थं षोड़शानामाकर्षः कर्त्तव्य इति त्रिस्थली सेतौ नारायणभट्टाः आहुः।
अत्रत्यो विशेषः षोड़शश्राद्ध प्रकरणे प्रपञ्चित इत्युपरम्यते ॥

## अथ प्रथमाब्दे विहितनिषिद्धानि।

945. **हेमाद्रौ कश्यपः,—**

स्नानं चैव महादानं स्वाध्यायं चाग्नितर्पणम्।
प्रथमाब्दे न कुर्व्वीत महागुरु निपातने ॥१६७९॥
अग्नितर्पणं लक्षहोमादि तत्त्वध्यानादि।
पितुः सपिण्डीकरणं वार्षिके मृतिवासरे।
आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरादिति ॥

946. हेमाद्रावुशनसोक्तेः।

दिवोदासीये. महातीर्थस्य गमनमुपवासव्रतानि च।
संवत्सरं न कुर्व्वीत महागुरु निपातने १(*) ॥१६८०॥
उपवासमेकादशीव्यतिरेकेण। तस्य सूतके मृतके चैवेति प्रतिप्रसवात्।

947. **माधवीये देवलः,—**

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्।
न दैवं नापि पित्र्यं च यावत् पूर्णो न वत्सरः ॥

---

१(*) 'वन्य श्राद्धं परान्नञ्च गन्धं माल्यञ्च मैथुनम्।
वर्जयेद् गुरुपाते हि यावत् पूर्णो न वत्सरः' इति स्मृतिः।

948. **पित्र्यं सपिण्डनमन्यस्य । अतएवलौगाक्षिः,—**

अन्येषां चैव कार्य्याणि महागुरु निपातने ।
कुर्य्यात् संवत्सरादर्व्वाक् श्राद्धमेकं तु वर्ज्जयेत् ॥
दाहादेकादशाहान्तं कार्य्यं प्रेतस्य सर्व्वदा ॥१६८२॥ इति ।

949. **एकं सपिण्डनम् । पत्न्यादौत्वपवादमाह, ऋष्यशृङ्गः,—**

पत्न्याः पुत्रस्य तत्पुत्रभ्रात्रोस्तत्रोभयस्य च ।
स्नुषा श्वश्रोश्च पित्रोश्च संघात मरणं यदि ॥ १(*)
अर्व्वागव्दान्मातृपितृपूर्व्वं सापिण्ड्यमाचयेत् ॥१६८३॥ इति ।

950. **लौगाक्षिश्च,—**

पत्नीपुत्रस्तथा पौत्रोभ्राता तत् पुत्रका अपि ।
पितरौ च यदैकस्मिन् म्रियेरन् वासरे यदि ॥
आद्यमेकादशे कुर्य्यात् म्रिपक्षे तु सपण्डिनम् ॥१६८४॥

951. **इति, स्मृतिनिवन्धे देवलः २(†) ।**

महागुरु निपाते तु प्रेत कार्य्यं यथाविधि ।
कुर्य्यात् संवत्सरादर्व्वागेकोद्दिष्टं न पार्व्वणम् ॥१६८५॥

952. **भृगुः,—**

माता चैव तथा भ्राता भार्य्या पुत्रस्तथा स्नुषा ।
एषां मृतौ चरेच्छ्राद्ध मन्यस्य न पुनः पितुः ॥१६८६॥ इति ।

**एतदपि सपिण्डनपरे ।**

953. **हेमाद्रौ भविष्ये,—**

तीर्थश्राद्धं गयाश्राद्धं श्राद्धमपरपाक्षिकम् ।
प्रथमाव्दे न कुर्व्वीत कृतेऽपि तु सपिण्डने ॥१६८७॥

---

१(*) स्वश्रोरिति पृथक् पाठः अस्ति ।
२(†) 'स्मृति निवन्धे' इत्यत्र 'धवल' इति 'धर्म्मवल' इति च पाठान्तरमास्ते ।

954. **अस्यापवादस्तत्रैव,—**

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापर पाक्षिकम् ।
प्रथमाब्देऽपि कुर्व्वीत यदि स्याद् भक्तिमान् सुतः ॥१६८८॥

955. इति भक्त्याख्यं श्राद्धमधिकार सिद्धेय कृत्वा कार्य्यमिति त्रिस्थलीसेतौ ।

956. **पतिते विशेषो ब्राह्मे,—**

क्रियते पतितानां च गते संवत्सरे क्वचित १(*) ।
देशधर्म्म प्रमाणत्वाद् गयाश्राद्धं स्ववन्धुभिः ॥१६८९॥ इति ।

**अन्यत्रापि—**

नित्यश्राद्धं तथा दर्शश्राद्धं च पितृतर्पणम् ।
प्रथमाब्दे न कुर्व्वीत सपिण्डीकरणे कृते ॥१६९०॥ इति ।

**एतन्निरग्निपरम् ।**

नित्यश्राद्धं तथा दर्शश्राद्धं चापरपाक्षिकम् ।
घटदानं युगादौ च वैश्वदेवादिकं तथा ॥१६९१॥

957. साग्निकः, प्रथमेऽब्दे तु कुर्य्यादेव न चान्यथा इति संवर्त्तोक्तेः ।

**तथा,—**

सपिण्डीकरण श्राद्धं यस्य भाद्रपदे भवेत् ।
कुर्य्यान्महालयश्राद्धं हारीत—वचनं यथा ॥१६९२॥ इति ।

958. **शङ्खोऽत्र विशेषमाह ।**

अमावास्यां मृतो वस्तु प्रेतपक्षे मृतश्च यः २(†) ।
सपिण्डीकरणा दूर्द्ध्वं तस्योक्तः पार्व्वणो विधि ॥१६९३॥ इति ।

959. **देवजानीये देवलः,—**

नासपिण्डीकृते प्रेते पितृकार्य्यं प्रवर्त्तते ।
ग्रहोपरागाष्टकयोः पञ्चयज्ञेऽथ पार्व्वणः ॥१६९४॥ इति ।

---

१(*) अत्र पतिते, स्वकाले नानुष्ठिते ।

२(†) 'अमावास्याचयोर्यस्य प्रेत पक्षेऽथवापुनः' इत्यन्यत्र पाठान्तरं विद्यते ।

960. **यतिधर्म्मेऽपि,—**

नांश्नन्ति पितरो देवा मृते व गृहमेधिनि ।
भिक्षुर्भिक्षां न गृह्णाति यावत्कुर्य्यात् सपिण्डताम् ॥१६६५॥
अतः संवत्सरं यावत् कर्म्मलोपभयादनग्निनाप्यपकृष्य सपिण्डता कर्त्तव्या ।
आनन्त्यात् कुलधर्म्माणां पुंसां चैवायुषः क्षयात् ।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ॥१६६६॥ इति ।

961. **व्याघ्रपाद्वचनादित्युक्तम् ।**

**अन्यत्रापि,—**

स्नानं चैव महादानं परान्नं च स्त्रियं तथा ।
वर्ज्जयेम् यत्नतश्चैव महागुरुनिपातने ॥१६६७॥ इति ।

962. स्त्रीवर्ज्जनमनृतौ ऋतावुपेयादिति गौतमोक्तेः १(*) ।
इत्यादि प्रथमाब्दे विहितनिषिद्धानि ।
अथ चतुर्थे दिने न पाथेयश्राद्धम् । तच्च यदि द्वादशाहे सपिण्डनं क्रियते तदा त्रयोदशेऽहनि कार्य्यम् ।

963. **तथा च प्रयोगसारे,—**

चतुर्थस्यैव पाथेयं सपिण्डीकरणादनु ।
एकोद्दिष्टविधानेन पुनः श्राद्धं न सोऽर्हति ॥१६६८॥ इति ।
अन्यत्रापि, पितुस्तुरीयस्य सुतः प्रदद्याद् विमुक्तः पिण्डस्य सपिण्डनात्तु । दधिमिश्रमन्नं त्रयोदशेऽह्नि द्विजपुङ्गवेभ्य इति । ततो मङ्गलस्नानं पुण्याहवाचनमाभ्युदयिकश्राद्धं नवग्रहशान्तिश्च कुर्य्यात् ।

964. **तदुक्तं श्राद्धकल्पे,—**

पुण्याहं च ततः कुर्य्यादभ्यङ्गस्नान पूर्व्वकम् ।
भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ॥
सहपिण्डक्रियां कृत्वा कुर्य्यादाभ्युदयं ततः ॥१६६९॥ इति ।
इदमाभ्युदयिकं श्राद्धं मलमासेऽपि कार्य्यम् ।

---

१(*) 'ऋतौ भार्य्यामुपेयात्' इति श्रुत्या ऋतुकाले प्राप्ते तत् सङ्गतिर्नदोषायेति ।

965. **तथा च हेमाद्रौ लघुहारीतः,—**

अधिमासे न कर्त्तव्यं श्राद्धमाभ्युदयं तथा।
तथैव कार्य्यं यत्कर्म्म वत्सरात्प्रथमाहृते ॥१७००॥ इति।

पुनः श्राद्धं न सोऽर्हतीत्युक्तेरतः परं श्राद्धपिण्डेषु न तस्यान्वयः। पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात् पुत्रवांश्चेन्निवर्त्तेत इति कात्यायन—सूत्रोक्तेश्चेति चतुर्थे दिने न पाथेयश्राद्धम् १(०) ॥

**अथ क्षयाहश्राद्धम्,—**

966. **तत्स्वरूपमुक्तं हेमाद्रौ व्यासेन,—**

मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तद् विदुः ॥१७०१॥ इति।

967. **नारदीये,—**

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता २(†)। इति।

अत्र चान्द्रमानं ज्ञेयम्। पितृकर्म्मणि चान्द्रंस्यादिति स्मृतेः।

968. **ब्राह्मे,—**

पुत्रहीनपितृव्यादेरपि क्षयाहश्राद्धं कार्य्यमित्युक्तम्।

प्रतिसंवत्सरं कार्य्यं मातापित्रोर्मृतेऽहनि।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि ॥१७०२॥ इति।

अपुत्र स्यैवेति—भ्रात्राप्यन्वयः। ज्येष्ठस्येति—विशेषणं कनिष्ठ-स्यानावश्यकत्वार्थम्। तच्चपित्रोरपि, नानास्मृतिष्वेकोद्दिष्टं पार्व्वणं
969. वा कर्त्तव्यमित्युक्तम्। तत्राद्य माहयमः—

सपिण्डीकरणादूर्द्ध्वं प्रतिसम्वत्सरं सुतैः।
मातापित्रोः पृथक् कार्य्यमेकोद्दिष्टे मृतेऽनि ॥ १७०३॥
एकोद्दिष्टं परित्यज्य पार्व्वणं कुरुते नरः।
अकृतन्तद्विजानीयाद् भवेच्चपितृघातकः ॥१७०४॥ इति।

970. **कात्यायन सूत्रेऽपि,—**

अत ऊर्द्ध्वं सम्वत्सरे सम्वत्सरे प्रेतायान्नं दद्याद्-यस्मिन्नहनि प्रेतः स्यादिति।

---

१(०) अत्र द्वयोरादर्श ग्रन्थयोः पाठव्यतिक्रमोऽस्ति।

२(†) अत्र, 'आब्दिके पितृकृत्येच मासाश्चान्द्रमसाः स्मृताः' इति स्मृत्याक्ततिथिरेव मुख्या पैतृककृत्ये नतु तदहः। पारणं तिथि निमित्तक व्रतादीनां ज्ञेयम्। कुत्रचित्, तिथ्यन्ते पारणं महत्। अन्यत्र, तिथौ भान्तेच पारणम्।

971. **द्वितीयमाह, शातातपः—**

सपिण्डीकरणं कृत्वा कुर्य्यात्पार्व्वणवत् सदा ।

972. प्रति सम्वत्सरं श्राद्धं छागलेयोदितो विधिः ॥१७०५॥

यः सपिण्डी कृतं प्रेतं पृथक् पिण्डेनियोजयेत् ।

विधिघ्नस्तेन भवति पितृहाचोपजायते ॥१७०६॥ इत्यादि ।

एवं सत्यौरस क्षेत्रजपुत्रयोः पार्वणं, दत्तकादीनांमेकोदिष्टमित्येकः पक्षः ।

(साग्नेः) पार्व्वणं, निरग्नेरेकोद्दिष्टमितिद्वितीयः पक्षः १(*) ।

973. अयञ्च कर्कादिभाष्य कृतांसम्मतः ।

974. **कल्पतरुकारस्तु—**

साग्नेरिवौरस क्षेत्रजयोः पार्व्वणम् ।

निरग्न्योस्तयोरन्येषाञ्चैकोद्दिष्टमित्याह ।

975. अपरार्केऽप्येवम् । दत्तकादयोदशपुत्रास्तु साग्नयीऽनग्नयोश्चैकोद्दिष्टमेव कुर्य्युः ।

प्रत्यब्दं पार्बणेनैव विधिना क्षेत्रजौरसौ ।

कुर्य्यातामितरे कुर्य्यु रेकोद्दिष्टं सुता दशेति ॥१७०७॥

976. **जातूकर्णोक्तेः ।**

यदातु, दत्तकादीनामपि पिता, दर्शे महालयेवा मृतस्तत्रपार्व्वणैकोद्दिष्टयोर्विकल्पः ।

अमायाञ्च क्षयोयस्य प्रेतपक्षेऽथवा भवेत् ।

निरग्निरपिवा कुर्य्यान्मातापित्रोस्तु पार्वणमिति—॥१७०८॥

977. **वायुपुराणोक्तेः ।**

आषाढ्याः पञ्चमे पक्षे प्रेताख्येतु क्षयोयदि ।

पार्वणं तत्र कुर्व्वीत वर्ज्जयित्वा चतुर्द्दशी ॥१७०९॥

इति श्लोको गौतमोक्तैश्चेति ।

---

१(*) एवा चव द्वादश विधाः शास्त्रोक्ताः । तेषु साग्नि निरग्निभेदः । कश्चौदावेवपुत्रोक्तः । औरसः दत्तकश्च । एताभ्यां भिन्ना दशविधाः । यन्यद मिताक्षरा कर्कभाष्ययोरस्ति ।

**अन्येतु—**

सर्व्वेषामपि पार्व्वणैकोद्दिष्टयोर्विकल्प; व्रीहियवादिवत् ।

सच, देशाचाराद्व्यवस्थित इत्याहुः ।

978. **अतएव पराशरः—**

मातापित्रोः पृथक्कार्य्यमेकोद्दिष्टं मृताहनीत्युक्त्याह ।

देशंधर्म्मं समाश्रित्य वंशधर्म्मन्तथापरे ॥१७१०॥

सूरयः श्राद्धमिच्छन्ति पार्व्वणञ्च क्षयाहयमपि, इत्याह ॥१७११॥

979. तच्च, केवलं पितृणां नसपत्नीकानामिति हेमाद्रिः ।

पितरोयत्रपूज्यन्ते तत्रमाता महा अपीति प्राप्त्या मातामहाश्चापि नकार्य्याः १(*) ।

कर्ष्यूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोड़शम् ।

प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युःषडितिस्थितिः ॥१७१२॥

980. इतिच्छन्दोगपरिशिष्टे कात्यायनोक्तेः ।

981. कर्षूसमन्वितं सपिण्डनमिति हेमाद्रिः ।

तथाहि, तत्रत्य प्रेत श्राद्धे विष्णुराह—

अथाशौचापगमे स्वाचारान् ब्राह्मणान् यथाशक्त्युदङ्मुखान् गन्धमाल्यादिभिः । पूजितान् भोजयेदेकैकान् मन्त्रानूहेतैकोद्दिष्टसन्निधावेकं पिण्डं निर्व्वपेत् । भुक्तवत्सु दक्षिणया भिपूजितेषु दत्ताक्षय्योदकेषु चतुरङ्गुलाःपृथ्वीस्तिस्रः कुर्य्यात्, कर्षूणां समीपेऽग्निमुपसमाधाय परिस्तोर्य्यैकैकस्मिन्नाहुतित्रयं जुहुयात् । सोमाय पितृमते स्वधा, नमोऽग्नये कव्यवाहनाय, यमायाङ्गिरसे ते स्वधा नम इति स्थानत्रये प्राग्वत् पिण्डनिर्व्वपणं दधिमधुघृतमांसैः कर्षूत्रयं पूरयित्वैतत्त इति जपेदिति । यैः क्षयाहे एकोद्दिष्टं क्रियते तेषामपि क्वचित् पार्व्वणमेव भवति ।

अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।

पार्व्वणं तस्य कर्त्तव्यं नैकोद्दिष्टं कदाचन ॥१७१३॥

982. **इति शङ्खोक्तेः ।**

**एवं सन्न्यासिनोऽपि** २(†) ।

---

१(*) कुत्रचित् कार्य्या इति भिन्नः पाठः । तेन निषेधा भावः ।

२(†) विष्णुना शङ्खेन च यथोक्तन्तथैव सन्न्यासि नामपि विधानंश्रे्यमेकमेव ।

एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह ।
983. सपिण्डीकरणाभावात् पार्व्वणं तस्य सर्व्वदा ॥१७१४॥
इति प्राचेतसोक्तेः ।

984. **वायवीये,—**
सन्न्यासिनोऽप्याब्दिकादि पुत्रः कुर्य्याद् यथाविधि ।
महालये तु यच्छ्राद्धं द्वादश्यां पार्व्वणं तु तत् ॥१७१५॥ इति ।

985. **पृथ्वीचन्द्रोदये वृद्ध पराशरः,—**
संग्रामे संस्थितानां च प्रेतपक्षे शशिक्षये ।
तेषां पार्व्वणमेवोक्तं क्षयाहेऽपि च सत्तमाः ॥१७१६॥

**तथा,—**
चन्द्रक्षयानाशकसंयुगेषु,
यः प्रेतपक्षे मृतवान् सपिण्डः ।
सपिण्डितानामपि चाब्दिकानि
भवन्ति तेषामिह पार्व्वणानि ॥१७१७॥ इति ।

**तथा,—**
भ्रातुर्ज्येष्ठस्य कुर्व्वीत ज्येष्ठो भ्रातानुजस्य च १(*) ।

986. **तथा च, पृथ्वीचन्द्रोदये शातातपः,—**
अनाद्य गर्भज्येष्ठोऽपि भ्राता सद्भिर्निगद्यते ।
ऋते सपिण्डनात् तस्य नैव पार्व्वणमाचरेत् ॥१७१८॥ इति ।
आगर्भ ज्येष्ठे तु पार्व्वणमेकोद्दिष्टं वेति विकल्पः २(†) ।
एवं पितृव्यस्यापि पितृव्यस्याप्यपुत्रस्येति स्मृतेः ।
987. मातुस्तद्भेदमाह हेमाद्रौ कात्यायनः,—
प्रत्यब्दं यो यथा कुर्य्यात् पुत्रः पित्रे सदा द्विजः ।
तथैव मातुः कर्त्तव्यं पार्व्वणं वान्यदेव वा ॥१७१९॥

---

१(*) भ्रात्रद्वयोः सहोदरयोर्भ्रात्रोर्मध्ये उभयोः अन्योन्यं कर्त्तव्यमिति सूच्यते। सपिण्डनादृते सपिण्डनंविना।

२(†) 'आगर्भ' इति, आद्यगर्भ इतिच भिन्नः पाठः। विकल्पस्तु यवव्रीहिवद् भवेत्। 'यवैर्जुहोति, व्रीहिभिर्वा जुहोति' इति।

**यत्तु तेनैवोक्तम्,—**

सपिण्डीकरणादूर्द्ध्वं पित्रोरेव हि पार्व्वणम् ।
पितृव्यमातृभ्रातॄणामेकोद्दिष्टं सदैवतम् ॥१७२०।
इति तत् सापत्न मातृविषयम् ।

988. **यत्तु वृद्धपराशरः,—**

अपुत्रस्य पितृव्यस्य तत् पुत्रो भ्रातृजो भवेत् ।
स एव तस्य कुर्व्वीत पिण्डदानादिकं क्रियाम् ॥१७२१॥
पार्व्वणान्ते च कर्त्तव्यं पुत्रवद् भ्रातृजेन तु ।
पितृस्थाने तु तत् कृत्वा शेषं पूर्व्ववदुच्चरेत् ॥१७२२॥ इति ।
पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्व्वणं भवेत् ।
एकोद्दिष्टं कनिष्ठानां दम्पत्योः पार्व्वणं मिथः ॥१७२३॥
अपुत्रस्यापि पितृव्यस्य भ्रातुश्चैवाग्रजन्मनः ।
मातामहस्य तत्पत्न्याः श्राद्धं पार्व्वणवद् भवेत् ॥१७२४॥ इति ।
श्राद्धदीपकलिकायाम् । चतुर्विंशतिमते च ।
तत्तु पितृश्राद्धवद्देशाचाराद् व्यवस्थितं ज्ञेयमिति ।
989. पृथ्वीचन्द्रोदयकारः । यत्त्वत्र पत्नींकर्त्तृकंभर्त्तृश्राद्धमेकोद्दिष्टमित्युक्तम् ।

990. **लौगाक्षिणा,—**

भर्त्तुः श्राद्धं तु यानारी मौग्ध्यात् पार्व्वण माचरेत् ।
न तेन तृप्यते भर्त्ता कृत्वा तु नरकं व्रजेत् ॥१७२५॥ इति ।
तत्तु क्षयाहे पाक्षिकैकोद्दिष्टप्रशंसनार्थंपार्व्वणनिषेधार्थमुदितानुदित-
991. होमनिन्दार्थवाद इति त्रिस्थलीसेतौ व्याख्यातम् । युक्तं चैतत् ।

**अन्यथा,—**

स्वभर्त्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च १(*) ।
विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ॥१७२६॥
इत्यादिस्कान्दविरोधापत्तेः ।

---

१(*) यथा कालम्—शास्त्रोक्तकाले इति ज्ञेयम् । व्रततिथौवेति ।

992. **अन्येषामपुत्राणां हेमाद्रावापस्तम्बः,—**

अपुत्रा ये मृता केचित् स्त्रियोयाः पुरुषाश्च वा ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्व्वणम् ॥१७२७॥
मित्रबन्धुसपिण्डेभ्यः स्त्रीकुमारीभ्य एव च ।
दद्याद् वै मासिकं श्राद्धं सांवत्सरमतोऽन्यथा ॥१७२८॥

अतोऽन्यथा मासिकश्राद्धं भवेत्, सांवत्सरं वा कार्य्यमित्यर्थः

993. प्रयोगपारिजाते तु अन्यथा पार्व्वणं कार्य्यमित्युक्तम् ।

994. **पृथ्वीचन्द्रोदये गार्ग्यः,—**

मातुः सहोदरा या च पितुः सहभवा च या १(*) ।
तयोश्च नैव कुर्व्वीत पार्व्वणं पिण्डनादृते ॥१७२९॥

पिण्डनात् सपिण्डनादित्यर्थः ।

995. **तथा च प्रचेताः,—**

सपिण्डीकरणादूर्द्ध्वमेकोद्दिष्टं विधीयते ।
अपुत्राणां च सर्व्वेषाम पत्नीनां तथैव च ॥१७३०॥

अपत्नीनां ब्रह्मचार्य्यादीनां सपिण्डनाभावे पिण्डनाभावेऽपि श्राद्धं

996. **देयमित्युक्तं मार्कण्डेयपुराणे—**

प्रतिसंवत्सरं कार्य्यमेकोद्दिष्टं नरैः स्त्रियाः ।
मृताऽनि यथा न्याय्यं नृणां यद्वदिहोदितम् ॥१७३१॥

नृणां यद्वदिति । गोविप्रचाण्डालादिहत पाषण्डादीनां सपिण्डनाभावेऽपि यद्वत् सांवत्सरमेकोद्दिष्टं क्रियते तद्वदिति श्राद्ध-शूलपाणौ व्याख्यातम् २(†) ।

997. **हेमाद्रावपि वृद्धवसिष्ठः,—**

सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते ।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥
पितृव्यगुरवे श्राद्धमेकोद्दिष्टं न पार्व्वणम् ॥१७३२॥

---

१(*) तयोः पिण्डनादृते, सपिण्डीकरणं विना पार्व्वणं न विधेयम् । यद्वा पिण्डदानादृते पार्व्वणं न कार्य्यम् ।

२(†) गो-विप्र-चाण्डालादिहत-पाषण्डादीनां श्रा[illegible]ः प्राङ् नारायणबलिः, ततः गयायां श्राद्धं युक्तम् ।

998. **इति, भ्रात्रादीनामेकोद्दिष्टमाह, जातूकर्ण्यः,—**

पितृव्य भ्रातृमातृणामपुत्राणां तथैव च ।
मातामहस्यासुतस्य श्राद्धादि पितृवद् भवेत् ।।१७३३।।

999. इति तस्यावश्यकार्थं न तु पार्व्वणाविदेशार्थमिति हेमाद्रिरेवाह ।
अन्ये तु, मातामहस्य पार्व्वणमेव ।

मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः १(*) ।
तेषां तु पितृवच्छ्राद्धं कुर्य्युर्दुहितृसूनवः ।।१७३४।।

1000. इति पुलस्त्यस्मृतौ त्रय इत्युक्तेः ।
तत्साहचर्य्याज्ज्येष्ठ भ्रातादावप्येवम् ।
भ्रात्रे (तुः) भगिन्यै इत्येकोद्दिष्ट कथनं तु कनिष्ठपरमित्याहुः ।

1001. पृथ्वीचन्द्रोदयेऽप्येवम् ।
एवं यत्र स्मृति वचनानां विरोधस्तत्रोक्तरीत्या व्यवस्थेयमितिदिक् ।।

## अथ क्षयाह द्वैधे निर्णयः ।

—*—

तत्रैकोद्दिष्टं चेन्मध्याह्ने कार्य्यम् ।

1002. मध्याह्नश्च पञ्चधा विभक्ते दिने तृतीयभागो ग्राह्य इति माधवाचार्य्याः ।

आमश्राद्धं तु पूर्व्वाह्णे एकोद्दिष्टं च मध्यतः २(†) ।
पार्व्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ।।१७३५।। इति—

हारीतोक्तौ प्रातः शब्दसाहचर्य्यात तत्रापि कुतपादि मुहूर्त्तत्रये ज्ञेयम् ।

प्रारभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः ।

1003. विधिज्ञो विधि मास्थाय रोहिणन्तु न लङ्घयेदिति गौतमोक्तेः ।।१७३६।
अत्र रोहिणो नवम मूहूर्त्तः ।

**अन्यथाः—**

ऊर्द्धं मुहुर्त्तात् कुतपाद् यन्मुहूर्त्त चतुष्टयम् ।
मुहूर्त्त पञ्चकंह्येतत् स्वधाभव न मिष्यते इत्यादि विरोधात ।।१७३७।।

---

१(*) हेमाद्रौ, प्राग्ब्रह्म वसिष्ठेनोक्तम् । त्रयः—मातामह—प्रमातामह—वृद्धप्रमातामहा इति ।

२(†) 'पूर्व्वाह्णे मातृकं श्रा' अपराह्णेतुपैतृकम् । एकोद्दिष्टन्तुमध्याह्ने प्रातर्वृद्धि निमित्तकमिति स्मृत्यन्तरे । दिने पञ्चदशमुहूर्त्ताः, रात्रौ च पञ्चदशमुहूर्त्ताः सन्ति । मुहूर्त्तविधारण विषये तेषां नामानि कालमाधवे, ज्योतिषे, भट्टोजी दीक्षित-नागेश भट्टयोस्तिथि-निर्णययोः, तिथिनिर्णयकारि कायाश्च विद्यन्ते ।

1004. यत्तु एकोद्दिष्ट मुपक्रमेत् कुतप इति दीपि कायामप्युक्तम ।

1005. तद् युक्त्यैव, माधवीये व्यासोऽपि—

कुतप प्रथमे भागे एकोद्दिष्ट मुपक्रमेत ।

आवर्त्तन समीपेवा तत्रैव नियना स्त्वधेति ॥१७३८॥

दिनद्वयेऽपि पदूव्याप्तौ समव्याप्तौचपूर्व्वा, विषमव्याप्तौसत्यां अधिकोन ( तद् ) निर्णयः । अव्याप्तौ पूर्व्वैव परविद्धाया निषेधात् ।

1006. निषेधोवक्ष्यते । अत्र मूलवचनानि कालमाधवीयादो सुस्पष्टानि । संग्रहवचनमुल्लिख्यते ।

सायन्तनी यत्रचेन्मृततिथिः सेवाब्दिके मासिके ग्राह्या, साह्यपराह्णयो-र्यदि तदा यत्राथिका सा मता ।

तुल्याचेदुभया पराह्णसमये पूर्व्वा नचेतद् द्वये,

पूर्व्वैवत्रिमुहूर्त्तयाऽस्तसमयेनोचेत् परैकोचिता ।

एकोद्दिष्टविधावपि स्युरमीहि भेदास्तु मध्याह्णगाः ॥१७३९॥ इति ।

पार्व्वणन्त्व पराह्णे वा कार्य्यम् । पार्वणमपराह्णेचेति पूर्व्वोक्तेः ।

मध्याह्णव्यापिनी यास्यात् सैकोद्दिष्टे तिथिर्भवेत् ।

अपराह्ण व्यापिनी या पार्व्वणे सा तिथिर्भवेत् ॥१७४०॥

1007. इति पृथ्वीचन्द्रे वृद्धगौतमोक्तेश्च । अत्रापि पूर्व्वेद्युरेव परेद्युरेववा, अपराह्णव्याप्तौ सैवतिथिर्ग्राह्या । दिनद्वये तदूव्याप्तौ अंशतः, समव्याप्तौ च पूर्वैव ।

**विषमव्याप्तौतु यत्राधिका सा ग्राह्या ।**

अपराह्णव्यापिनीस्यादाब्दिकस्य यदा तिथिः ।

महती यत्र तद्विद्वन् १(*) प्रशंसन्तिमहर्षयः ॥१७४१॥

1008. **इति मरीच्युक्तेः ।**

दर्शश्च पौर्णमासश्च पितुः साम्वत्सरं दिनम् ।

पूर्व्ववृद्धमकुर्व्वाणो नरकं प्रतिपद्यते ॥१७४२॥

---

१(*) अत्रै कस्मिन्नादर्शे पाठः पतितः । अन्यत्रास्ति स च पाठः 'प्र शंसन्ति—इत्यतः 'नद्दऽह्णव्यापिनीति' यावत् पाठच्युतिः । 'महतीं तत्रतां विद्यात्' इति च भिन्नं पाठश्च ।

1009. **इत्यपरार्के नारदोक्तेः** १(*) ।

द्व्यहेप्यव्यापिनीचेत्स्यान्मृताहस्य यदा तिथिः ।

1010. पूर्व्वविद्धा प्रकर्त्तव्या त्रिमुहूर्त्ता भवेद्‌द्व्यह इति सुमन्तूक्तेः ॥१७४३॥

1011. पूर्व्वस्यां निर्वपेत्पिण्डान् इत्याङ्गिरस भाषितमिति हेमाद्रावुत्तरार्द्धे पाठः ।
नद्व्यहव्यापिनीचेत्स्यान्मृताहस्य चया तिथिः ।

1012. पूर्व्वं वृद्धैव कर्त्तव्या त्रिमुहूर्त्तापि या भवेदिति—मनूक्तेश्च ॥१७४४॥

1013. **यत्तु व्यासेनोक्तम्—**

अह्नोऽस्तमय वेलायां कलामात्रा यदा तिथिः ।

सैव प्रत्याब्दिके ज्ञेया नापरा पुत्रहानिदेति ॥१७४५॥

पूर्व्वेह्नः सायंत्रिमुहूर्त्ताभावेतु परैव ग्राह्या २(†) ।

त्रिमुहूर्त्ता नचेद्‌ग्राह्या परैव कुनपेहिसा इति ॥१७४६॥

1014. **कालादर्शे गोभिलोक्तेः । माधवपृथ्वीचन्द्रयोस्तु—**
दिनद्वयेऽपराह्नव्याप्तौ अंशतः समव्याप्तौ च क्षये पूर्व्वावृद्धौ परा ग्राह्या ।

**स्वस्वदेयौ परौ पूज्याविस्युक्तेः** ३(‡) ।

अपराह्नद्वयव्यापिन्यतीतस्य च या तिथिः ।

1015. क्षये पूर्व्वातु कर्त्तव्या वृद्धौ कार्य्या तथोत्तरेतिबौधायनोक्तेश्चेत्युक्तम् ।
वृद्धि क्षयावत्र पूर्व्वतिथेः नतु ग्राह्य तिथेर्ज्ञेयौ, तस्याः क्षय पक्षेऽपराह्नद्वयव्याप्तेर सम्भवात् ।

1016 **एतदाह, माधवाचार्य्य :—**

1017. न ग्राह्यं तिथ्यो यौवृद्धि-क्षयादूर्ध्वं तिथेस्तु ताविति । अन्यत्र (यत्र) सायाह्नव्यापित्व मुच्यते तत्रापराह्न व्यापिनी ग्राह्या । सायाह्नस्त्रिमुहूर्त्तस्या त्तत्रश्राद्धं न कारयेदिति मानुष्ये ।

---

१(*) मुहूर्त्तावधारणविषये कालमाधवादौ सम्यगस्ति ।

२(†) अत्रापरार्कः, याज्ञवल्क्यस्मृति व्याख्यान कृदिति ।

३(‡) अत्र 'सर्व्वदेयौ' 'स्वधादेयौ' इति च भिन्नः पाठः ।

अत्र मृताऽपदं मृत तिथि परम ।

1018. तत्र श्राद्ध निषेधात्, पूर्व्ववचनेषु त्रिमुहूर्त्तादि-ग्रहणन्तु श्राद्धापराह्णरूप त्रिमुहूर्त्तं परमिति केन चिदुक्तम् ।

1019. तद्धेमाद्रि-कालादर्शादि ग्रन्थ विरोधादुपेक्ष्यम् ।
तस्मात् पूर्व्वोक्तमेव साधु ।
अथ यदि दैवान्मानुषाद्वा प्रति बन्धात्तद्दिने सास्वत्सरं (वार्षिकादि-) श्राद्धं न कृतं, तदा रात्रावपि तद्दिने कार्य्यम् ।
मृताहं समतिक्रम्य चण्डालेष्व भिजायते इति—

1020. **मरीचिना तदहातिक्रमे दोषोक्तेः ।**

1021. न नक्तं श्राद्धं कुर्व्वीत, अत्रवा भोजन समापण मित्यापस्तम्बेन १(*) गौणकालतोक्तेश्च । ग्रहण दिने वार्षिकादि प्राप्तौ तद्दिन एवान्नेनामेन हेम्नावा कार्य्यं नोत्तरदिन इत्युक्तं तृतीयस्तवके ग्रहण निर्णय प्रकरणे । ग्रन्थ गौरव भयान्नेहोच्यते । एतच्च प्रथमाब्दिकश्चेत् त्रयोदशे मलमासे कार्य्यम् । इतर था,—
प्रत्यब्दं द्वादशे मासि कार्य्या पिण्ड क्रिया सुतैः ।

1022. क्वचित् त्रयोदशेपि स्या दाद्यं मुक्त्वातु वत्सरम् ॥
इति लघुहारीतोक्तेः । द्वादशेऽतीते इत्यर्थः ।

1023. माधवीय ये, हेमाद्रौ चैवम् । द्वितीयादिकन्तु शुद्धमासे एव कार्य्यम्, नाधिके नाप्युभयोः, मलमास मृतानान्तु यदा कदाचित् स एव मलमासः स्यात्तदा तत्रैव कार्य्यम, अन्य दातु श्राद्धे मासे एवइत्ये-तदपि प्रागुक्तम् २(†) ।
दर्शे वार्षिकश्चे त्तदा पूर्व्वं वार्षिकं कृत्वा पिण्ड पितृयज्ञ-दर्शश्राद्धे कर्त्तव्ये ।
दर्शे क्षया हे कर्त्तव्ये सम्प्राप्ते कथं कुर्वन्ति याज्ञिकाः ।
आदौ क्षयाहं निर्वर्त्त्य पश्चाद्दर्शं समाचरेत् ३(‡) ॥१७४७॥

---

१(*) 'नक्तञ्च रजनी रात्रिमिति ।' 'रात्रौ श्राद्धं न कुर्व्वीत राक्षसी कीर्त्तिताहिंसा' । रात्रौ ग्रहणादृते श्राद्धनिषेधः ।

२(†) अमावास्याद्वयं यत्र रविः संक्रान्ति वर्जितः ।
मलमासः स विज्ञेयः विष्णुः स्वपिति कर्कटे ॥ इति मलिम्लुच लक्षणम् ।

३(‡) दर्शश्राद्धं क्षयाहं श्राद्धं पिण्डपितृ यज्ञञ्च वचनोक्त क्रमेण विधेयम् ।

1024. **इति निर्णय दीपिकोक्तेः ।**

कश्चिदादौ पिण्ड पितृयज्ञः ततः साम्वत्सरं ततोदर्शश्राद्धमिति १(*) क्रममाह ।

प्रत्यब्दयोर्यथा कुर्य्यात् तथा कुर्य्यात् स तान्यपि । इति ।

**प्रमाणमप्युक्तत्वात् । स्तु—**

यज्ञान्तं कर्म्मनिर्वर्त्य वैश्वदेवञ्च साग्निकः ।

पिण्डयज्ञं ततः कुर्य्यात् ततोऽन्वाहार्य्यकं बुधः ॥१७४८॥

1025. इति क्रमपर लौगाक्षि-वचन विरोधात्, 'प्रत्यब्दं यो यथा—कुर्य्यादिति वचनस्य सपिण्डनोत्तर भावि-मासिकश्राद्धे ज्ञेयम् ।

तथाच,—

मृताहं यो नजानाति मासं वापि कथञ्चन ।

तेन कार्य्यं ममायांस्याच्छ्राद्धं माघेऽथमार्गके ॥ १७४९॥ इति ।

इति कर्त्तव्यता परत्वात् सर्व्वत्र क्षयाह श्राद्धे पिण्डपितृयज्ञाभावाक्षो-

1026. पेक्षनीयः । क्षयाह-वृषोसर्ग उक्तो हेमाद्रौ ।

1027. **विष्णुधर्म्मोत्तरे,—**

अयनद्वितयेचैव मृताहे वान्धवस्यतु ।

उत्सृजेन्नीलवृषभं कौमुद्याः समुपागमे ॥१७५०॥ इति ।

अत्र कौमुदी कार्त्तिकी पौर्णमासी । इदमाब्दिकं वत्सरत्रयमशुद्ध-संज्ञम् । तदुत्तरं शुद्धमभिधीयते २(†) ।

1028. **तथा च दिवोदासीये—**

सपिण्डीकरणादूर्द्धं यावदब्दत्रयम्भवेत् ।

तावदेव नभोक्तव्यं क्षयेऽहनि कदाचनेति ॥१७५१॥

**वर्षान्तसपिण्डनेऽप्येतत्तुल्यम् ।**

मृताऽहनितु सम्प्राप्ते यावदब्दचतुष्टयम् ।

वहिः श्राद्धं प्रकुर्वीत न कुर्य्याच्छ्राद्धभोजनम् ॥१७५२॥

---

१(*) पितृपिण्डो यस्मिन् यज्ञे सपिण्ड पितृयज्ञः इति ।

२(†) प्रागुक्त मण्डन, 'शाद्धं शुद्धं चतुर्थकमिति कथञ्चित् शुद्धमुच्यते ।

प्रथमेऽस्थीति मज्जाच द्वितीये मांस भक्षणम्।
तृतीये रुधिरप्रोक्तं श्राद्धं शुद्धं चतुर्थकमिति ॥१७५३॥

1029. श्राद्धकाशिकोक्तेः। शुद्धं किञ्चिदिति ज्ञेयम् १(*)।

1030. **तथाहि स्मृत्यन्तरम्—**

सदा त्रिंशच्च योमासांच्छ्राद्धे भुंक्ते तु मोहितः २(†)।
सः पङ्क्ति दूषितः पापः प्रेताशीतु भवेच्च सः ॥१७५४॥ इति।
अत्र प्रथमेऽब्दे वर्षान्त सपिण्डनपक्षे मृताहात् पूर्व्वेऽह्निसपिण्डनमब्द—
पूर्त्तिश्राद्धञ्च कृत्वा परेद्युर्वार्षिकं कुर्य्यादिति—

1031. **स्मृत्यर्थसारे उक्तम्। हेमाद्रिस्तु—**

मृताहे सपिण्डीकरण श्राद्धेनैव वार्षिकश्राद्धसिद्धिः।
पूर्णे सम्वत्सरे पिण्डः षोड़शः परिकीर्त्तितः ॥१७५५॥
तेनैवाब्दिकमिष्यत इति वचनादित्याह ३(‡)।
एतदेवयुक्तं प्रतिभाति वचनसद्भावात्।

1032. **अथ क्षयाहापरिज्ञाने, मरीचिः—**

—*—

श्राद्धविघ्ने समुत्पन्ने ह्यविज्ञाते मृताऽनि।
एकादश्यान्तु कर्त्तव्यं कृष्णपक्षे विशेषतः ४(०) ॥१७५६॥
अत्र विशेषत इत्युक्तेः शुक्लैकादश्यामिति गम्यते।

1033. **मासेज्ञाते सएवेत्याह, बृहस्पतिः—**

नज्ञायते मृताहश्चेत् प्रमीते प्रोषिते सति।
मासश्चेत् प्रतिविज्ञात स्तद्दर्शेस्याद् यथाब्दिकम् ॥१७५७॥
मासाज्ञानेऽपि स एव।
दिनमासौ न विज्ञातौ मरणस्य यदापुनः।
प्रस्थानमासदिवसौ ग्राह्यौ पुर्व्वोक्तया दिशेति ॥१७५८॥

---

१(०) इत्यनेन श्राद्धे भोजननिषेधः कथितः।
२(†) विप्राः शुद्धाः पङ्क्ति पावनाः स्मृत्युक्ताः। प्रेताशो पंक्ति दूषकः।
३(‡) 'तेनैवाह्निसपिण्डत्वं तेनैवाब्दिकमिष्यते' इति स्मृत्यन्तरे।
४(०) अन्येतु प्रोचुः, विशेषतः कृष्णपक्षीयामावास्यायामिति।

1034 **भविष्येतु, —**

दिन मेवतु जानाति (जानीत) मासं नैवतु योनरः ।
मार्गशीर्षेऽथवा भाद्रे माघे वा तद्दिनं भवेदिति ॥१७५९॥

1035. **निर्णयामृतेतु,—**

यदा मासो नविज्ञातोविज्ञातं दिनमेवतु ।
तदा पाढ़के ऽथवापि माघेवा तद्दिनं भवेदिति ॥१७६०॥

1036. **बृहस्पत्युक्तेः, आषाढ़ोऽप्युक्तः । कालादर्शेऽपि—**

मासाज्ञानेदिन-ज्ञाने कार्य्यमाषाढ़माघयोरित्युक्तम् ।

1037. **हेमाद्रौ, प्रभासखण्डेऽपि—**

मृताहं यो न जानाति मासंवापि कथञ्चन ।
तेन कार्य्यममायां स्या च्छ्राद्धं माघेऽथ मार्गके १(*) ॥१७६१॥ इति ।

—*—

## अथ सूतकादिना श्राद्धविघ्नेऽपि निर्णयः ।

—*—

तत्र विप्रस्य निमन्त्रणोत्तरं सूतके मृतकेवा जाते सत्यशौचाभावः ।
निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्म्मणि ।
निमन्त्रणाद्धि विप्रस्य-स्वाध्यायाद्विरतस्यच ॥
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ॥१७६२॥

1038. **इति शुद्धिप्रदीपे ब्राह्मोक्तेः । कर्त्तविषये विष्णुः—**

व्रतयज्ञ विवाहेषु श्राद्धे होमेऽर्चने जपे ।
आरब्धे सूतकं नस्यादनारब्धेतु सूतकमिति ॥१७६३॥

१(*) यस्तु प्रत्यासन्नमासमविदित्वा, स चाहकत्,
माघ-मार्गशीर्षयोरमावास्यायां श्राद्धं कुर्यादिति ॥, मतान्तरे भाद्रे आषाढ़मासिच ।

**श्राद्धप्रारम्भस्तु तेनैवोक्तः—**

प्रारम्भोवरणं यज्ञे संकल्पो व्रतसत्रयोः १(*) ।

नान्दीमुखं विवाहादौ श्राद्धेपाकपरिक्रियेति ॥१७६४॥

पाकपरिक्रिया, पाकप्रोक्षणक्रियेति केचित् ।

1039. गौड़ादयस्तु ब्राह्मण निमन्त्रणमारभ्यैवा शौचाभावे निमन्त्रितेष्विति पूर्व्वस्मृतेरित्याहुः ।

**दाक्षिणात्यास्तु,—**

पाकपरिष्क्रियोत्तरं अशौचाभावं मन्यन्ते ।

श्राद्धकर्त्तृ—गृहे जनने मरणे च सति,—

1040. **ब्राह्मे उक्तम्—**

भोजनार्द्धंतु सम्भुक्ते विप्रैर्दातु र्विपद्यते ॥१७६५॥

**गृहे इति शेषः** २(†) ।

यदा केचित्तदोच्छिष्टं शेषं त्यक्त्वा समाहिताः ।

आचम्यपरकीयेन जलेन शुचयोद्विजाः ॥१७६६॥ इति ।

1041. इदं श्राद्धविषयमिति हेमाद्रिराह ।

1042. पृथ्वीचन्द्रोदयोऽप्येवमेवाह ।

केचिदिदं विवाहादि भोजन विषयम् ,

नतु श्राद्धविषयं तत्पदाभावात् इत्याहुः ।

**विवाहोत्सव यज्ञेष्वित्युपक्रम्य—**

भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके ।

अन्यगेहोदकाचान्ता सर्व्वेते शूचयः स्मृताः ॥१७६७॥ इति ।

1043 षड्विंशन्मतैक वाक्यत्वाद् , निमन्त्रितेषु विप्रेषु इति—

---

१(*) श्राद्धस्थान्नपाके विप्र निमन्त्रणेच श्राद्धारम्भो ज्ञातः । इति शास्त्रवाक्यात् ।

„ गौड़ादयः—पञ्च गौड़-देशवासिनः । पञ्चगौड़ाः प्रागुक्ताः ।

२(†) अत्र 'भोजनार्द्धंतु' इति भिन्नः पाठः । भोजनदातुर्गृहे भोक्ता अर्द्धं भोजने कृतेचेति ।

„ परकीयेन जलेन पवित्र जलेनाचम्य इति ।

पूर्व्वोक्तवचन विरोधाचेत्याहुः । अत्र यद्यपि विष्णुना अशौचाभाव—
उक्तोदातृ भोक्त्रोस्तथापि भोक्तुर्दोषोऽस्त्येव ।
अपि दातृग्रहीत्रोश्च सूतके मृतके तथा ।
अविज्ञाते नदोषः स्याच्छ्राद्धादिषु कथञ्चन ।
विज्ञाते भोक्तुरेवस्यात् प्रायश्चित्तविधानतः ॥१७६८॥

1044. **इति ब्राह्मोक्तेः । तत्र प्रायश्चित्तमाह विष्णुः १(*) ।**
ब्राह्मणादीनामशौचे यः सकृदेवान्नमश्नाति तस्यतावदशौचं यावत्तेषां,
अशौचव्यपगमेतु प्रायश्चित्तं कुर्य्यादिति । यत्तु, गृहे पितृषुतिष्ठत्सु
1045. नाशौचं विद्यते क्वचिदिति ब्राह्मवचनं तदाम श्राद्धपरमिति
केचिदाहुः ॥१७६९॥

मिताक्षरा-मा धवीयादि निवन्धकारास्तु, कर्त्तुर्भोक्तुश्च सर्व्वथा दोषा-
भावः, निमन्त्रितेष्वित्यादि स्मृतेः । विज्ञाते भोक्तुरेव स्या दितितु
श्राद्ध व्यतिरिक्त भोजनविषय मित्याहुः ॥

—*—

## अथा शौचमध्ये श्राद्धदिने प्राप्ते (सौ) निर्णयः ।

—*—

1046. **माधवीये ऋष्यशृङ्गः :—**
देये पितृणां श्राद्धेतु अशौचं जायते यदा ।
अशौचेतु व्यति क्रान्ते तेभ्य श्राद्धं प्रदीयत इति ॥१७७०॥
एतन्मासिकाब्दिकपरम् , न दार्शिकादि श्राद्ध परम् ।

1047. **तथा च सुदर्शन भाष्यकारः,—२(†) ।**
अपरपक्षे पित्र्याणीति नियमादमावास्या श्राद्धलोपे प्रायश्चित्तमेव ।
न तु गौणकाले करणं वचना भावात् ।
1048. प्रायश्चित्तमभोजनमिति मनूक्ते रित्याह ।

---

१(*) विप्राशौचान्न भक्षणे विप्रेषु तावत्कालमेवाशौचं यावत्स्यादिति ।
२(†) 'सुदर्शन भाष्य काम'इति एकस्मिन् आदर्शे पाठोऽस्ति । इन्दूधये, क्रमाम् । 'हामहेन्दु-
कथा क्रमः ।

1049. **अशौचान्तेऽसम्भवेतु व्यासः—**

श्राद्धविघ्ने समुत्पन्ने त्वन्तरामृत सूतके ।
अमावास्यां प्रकुर्व्वीत शुद्धंवैके मनीषिण इति ॥१७७१॥

1050. अत्रामावास्यां प्राप्येत्यर्थः । हेमाद्रौ, षट्त्रिंशण्मतेऽपि,—
मासिकेचाब्दिके वापि संप्राप्ते मृत सूतके ।
वदन्ति शुद्धौ तत्कार्य्यं दर्शेवापि विचक्षणाः ॥१७७२॥ इति ।

1051. **गोभिलः—**

प्राप्ते प्रत्याब्दिक श्राद्धेत्वन्तरा मृतसूतके ।
अशौचानन्तरं कुर्य्या त्तन्मा सेन्दुक्षये पिवेति ॥१७७३॥

1052. **तत्राप्यसम्भवेऽत्रिः—**

तदहश्चेत् प्रलुप्येत केनचित् सूतकादिना ।
सूतकानन्तरं कुर्य्यात् पुनस्तदहरेव चेति ॥१७७४॥
अशौचेतरविघ्न विषयमिदमिति प्राह माधवाचार्य्यः ।
व्याध्यादौ विस्मरणे चैवम् ॥

—*—

## अथ भार्य्यारजोदर्शने सति श्राद्धप्राप्तौ निर्णयः ।

—*—

तत्रामावास्या श्राद्धमामेण कार्य्यम् ।
श्राद्धविघ्ने द्विजातीनां आमश्राद्धं विधीयते १(*) ।
अमावास्यादि नियतं माससंवत्सराद्दते इति ॥१७७५॥

1053. **हेमाद्रौ हारीतः । व्याघ्रपादोऽपि,—**

आर्त्तवेदर्श कालानां विप्लवे समुपस्थिते ।
1054. आमश्राद्धं द्विजैः कार्य्यं शूद्रः कुर्य्यात् सदैवहि ॥१७७६॥

---

१(*) एकस्मिन् आदर्शग्रन्थे 'श्राद्धं प्रकीर्त्तितम्' इत्यारभ्य—'विधीयते' इत्यन्तः पाठः पतितः। आमश्राद्धं, आमान्नेन कार्य्यम्। विधुराः मृतपत्नीकाः। द्विजातयः-विप्रक्षत्र-विशः। शूद्राणां सदैव आमेन श्राद्धं कार्य्यम्। 'आमं शूद्रस्य पक्वान्नं पक्व मुच्छिष्टः—मुच्यते' इति स्मृतौ।

1055. **दीपिकायामपि,—**

दर्शेतु भार्य्यार्त्ते वेऽप्याम श्राद्धे विधिन्तदा १(*) ।

प्रवासि-विधुराद्याश्च ह्याचरेयुर्द्विजातयः ॥१७७७॥ इति ।

वस्तुतस्तु, पाकाभावेद्विजाती नामाम श्राद्धं विधीयत इति

1056. सुमन्तूक्तेः । पाकस्यकर्त्र्न्तरे सत्यन्नेन कार्य्य मन्यथामेनेति युक्तम् ।

मासिकानि सपिण्डानि अमावास्यातथाब्दिकम् ।

अन्नेनैवतु कर्त्तव्यं यस्य भार्य्या रजस्वलेति ॥१७७८॥

1057. **गर्गोक्तेश्च । एवं युगादिमन्वादावपि ।**

आब्दिकन्तुरजोदर्शनेऽपि तद्दिन एव कार्य्यम् ।

पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः ।

अन्नेनैवाब्दिकं कुर्य्याद्धेम्नावामेन नक्वचित् ॥१७७९॥

1058. **इति माधवीये लौगाक्षिस्मृतेः ।**

रजस्वलायांभार्य्यायां क्षयाहं यः परित्यजेत् ।

सवै नरक माप्नोति यावदाभुतसंप्लवमिति ॥१७८०॥

1059. **प्रयोगपारिजाते यमोक्तेः ।**

रजस्वलाङ्ग नोऽनग्निर्विदेशस्थोऽथवाब्दिके ।

दर्शादाविवनामेन त्वन्नेन श्राद्धमाचरेदिति ॥१७८१॥

1060. **कालादर्शोक्तेः ।**

विदेशगोवा विगताग्नि कोवा,

रजस्वलायांमपि धर्म्मपत्न्याम् ।

श्राद्धं मृताहेविदधीत पाकैः,

आमेन हेम्ना नतुपञ्चमेऽह्नीति ॥१७८२॥

1061. **स्मृतिदर्पणोक्तेश्च । यत्तु—**

आब्दिके समनुप्राप्ते यस्य भार्य्या रजस्वला ।

पञ्चमेऽहनि तच्छ्राद्धं ननकुर्य्यान्मृतेऽहनीति ॥१७८३॥

---

१(*) मृण्मन्तु सन्नमाख्यः कालः दर्शः । अत गोभिलेन स्वमते अमापूर्णिमयोर्लक्षणे उक्त । सूर्य्याचन्द्रमसोः—परो सन्निकर्ष विप्रकर्षौ इति ।

1062. **माधवीये गर्गवचनं तदपुत्रकस्त्री कर्त्तृक श्राद्धविषयम् ।**

अपुत्रातु यदा भार्य्या सम्प्राप्ते भर्त्तुराब्दिके ।
रजस्वला भवेत् सातु कुर्य्यात्तत्पञ्चमेऽहनीति ॥१७८४॥

1063. **श्लोके गौतमोक्तेः ।**

रजस्वलातु या स्नाता चतुर्थेऽनि शुध्यति ।
दैवे कर्म्मणि पित्र्येच पञ्चमेऽहनि शुद्ध्यति ॥१७८५॥

1064. **इति प्रभासखण्डवचनाच्च । यत्तु—**

सप्ताहात् पितृ-देवानां भवेद् योग्या व्रतार्चने—
इति कश्यपवचनन्तद् रजोनिवृत्तिपरमिति निवन्धकाराः ।
अतः स्त्रीकर्त्तृकं श्राद्धं पञ्चमेहऽनीति साधु ॥१७८६॥

1065. **हेमाद्रिस्तु,—**

पुरुषकर्त्तृकमपि श्राद्धं पञ्चमेऽहनि कार्य्यम् ।
श्राद्धादावपि न साध्यत्वेन स्त्रियासहैवाधिकारा, त्तस्याञ्च रज-दुष्टायां सहाधिकारनिवृत्ते रेकभार्य्येण पञ्चमेऽहनि कार्य्यम् १(*) ।
सहाधिकृत भार्य्यान्तरसत्त्वेतु तद्दिनएव कार्य्यमित्याह ।

1066. **दीपिकाकारोऽपि,—**

भार्य्यार्त्तौ सति पञ्चमेच दिवसे,
स्याद् वार्षिकं मासिकम् । पकान्नैर्वहुभार्य्यकस्त्वधिकृते,
पत्न्यन्तरेतिष्ठति । कुर्य्यात्तद्दिनएवंसमुख्यदिवसे इति ।
एवं सति देशाचारतो व्यवस्था कार्य्या ॥

—※—

## अथान्वारोहणे श्राद्धनिर्णयः ।

—✶—

1067. **तत्र, लौगाक्षिः—**

1068. मृताहनि समासेन पिण्डनिर्वपणं पृथक् ।
नवश्राद्धञ्च दम्पत्योरन्वारोहणएवत्विति ॥१७८७॥

---

१(*) 'सहाधिकृत, इत्यतः श्राद्धादावपि इत्यारभ्य—तद्दिने कार्य्यमित्यन्तः पाठः आदर्शपुस्तके
" एकस्मिन्नास्ति । अन्यादर्शपुस्तकेऽस्ति । 'न साध्यत्वेन' इति भिन्नः पाठः ।

समासेन तन्त्रेण, द्विपितृकश्राद्धवद् द्वयोरेकः पिण्डोदेयः ।
विप्रश्चैक एव भोज्यः पिण्डशब्दस्य श्राद्धपरत्वात् ।
1069. समासस्तु मृताहश्राद्धएव, नवश्राद्धन्तु पृथगेवेति हेमाद्रिः ।

1070. **स्मृत्यन्तरञ्च—**

एकचित्यधिरोहेतु तिथिरेकैवजायते ।
एकपाकेन पिण्डैकोद्वयोर्गृहीतनामनी ॥१७८८॥ इति ।

इदन्तु मृततिथ्यैकत्वे द्रष्टव्यम् । तिथिभेदे तु वार्षिकं पृथगेव कार्य्यम् । मृताह १(*) समासेनेति लौगाक्ष्युक्तेरेव, तत्र मृताहनीत्य २(†)ह-एकत्वावगतेः तद्भेदे न समास इत्यर्थः ।
तथा, नवश्राद्धमेव पृथगिति परिसंख्याया अन्यत्र पृथगुक्तेस्तीर्थगया
1071. सपिण्डनान्वष्टकादिषु समास एवेति मदन पारिजात-निर्णया मृतादयः । अतः समासविधिवलाज्जेष्ठपुत्रस्यकर्त्तृत्वे सापत्न-मातुस्त्वारोहणे तत्पुत्रे सत्यपि तद्वार्षिकादिकर्म्मविभक्तः सापत्नपुत्र
1072. एव ज्येष्ठः, कुर्य्यात्नौरस इति गम्यते । एवं वह्वीष्वपि मातृषु ज्ञेयमिति त्रिस्थली सेतौ ।

**यत्तु—**

एकचित्यां समारुढ़ौ दम्पती निधनं गतौ ।
पृथक श्राद्धं तयोः कुर्य्या दोदनञ्च पृथक् पृथगिति ॥१७८९॥
1073. गार्ग्यवचनं, तन्नव श्राद्धविषयमिति हेमाद्रिः ।

**यच्च,—**

या समारोहणं कुर्य्याद्भर्त्तुश्चित्याम्पतिव्रता ।
तां मृताऽहनि सम्प्राप्ते पृथक्पिण्डे नियोजयेत् ॥२७९०॥
प्रत्यब्दन्तु नवश्राद्धं युगपत्तु समापयेत् ॥१७९१॥ इति ।
1074. भृगुवचनं, तत्तुमृताहभेदे द्रष्टव्यम् । यद्वा, येषां वार्षिकमेकोदिष्टमुक्तम

१(*) अत्र, 'मृताहमासेन' इत्येकस्मिन् पाठः ।
२(†) 'मृताहणीत्येकत्वा' इति भिन्नः पाठः ।

तद्विषयंमन्तव्यम् । प्रत्यब्दं मृताऽनीति यदान्वयः । नव श्राद्धन्तु पुनर्यदित्युक्तेः दर्शवर्गद्वयवदेकतन्त्रेण पृथगित्यर्थमाह—

1075. पराशरमाधवीये-गार्ग्यभृग्वादिवचनमुदाहृत्य लौगाक्षिवाक्ये समासोक्तेः कालायैक्येन दर्शवर्गद्वयश्राद्धवत् पृथक् पृथगाब्दिकं नवश्राद्धादि-कुर्य्यादिभुक्तं १(*) । एवं सति पृथक्पिण्डदानन्तु मूल्यः कल्पः ।

1076. **तदाह, वृद्धपराशरः—**

(आरुह्यभर्त्तु'श्चिति) 'आर्त्त-(आत्म)'श्चितिं मङ्गनायाः ।
प्राप्नोति मृत्युं खलुसत्त्वयुक्ता ।
एकादशाहेतु तयोर्विधेयम् ,
श्राद्धं पृथक्स्वर्गमपेक्ष्य सद्भिः ॥
एकत्वमिच्छन्ति मतिप्रहीणाः,
एकादहाशादिषु येऽनृणार्थाः ।
ते स्वर्गमार्गं विनिहत्य कुर्य्युः,
स्त्रीसत्त्वघातान्नरकाधिवासम् ॥१०६२॥
भर्त्रासह मृता यातु नाकलोकयभीप्सती ।
साऽनर्हच्छ्राद्धं पिण्डान्नमे कत्वन्तु तयोःस्मृतम् ॥१०६३॥
पृथगेवहि कर्त्तव्यं श्राद्धमेकादशाहिकम् ।
यानि श्राद्धानिसर्व्वाणि तान्युक्तानि पृथक् पृथगिति ॥१०६४॥

1077. **विश्वादर्शेऽप्येवम्—**

मातुर्गयाष्टकावृद्धि मृंताहेषु महालये ।
श्राद्धं कुर्य्यात् पृथग् दैवं तन्त्रं चानुगतावपि ॥१०६५॥
एकचित्यां समारुह्य मृतयोरेकवर्हिषि ।
पित्रोः पिण्डान् पृथग् दद्यात् पिण्डंवा य (प)न् सुतकृतिः ॥१०६६॥ इति

1078. **यत्तु षट्त्रिंशन्मते—**

पृथक्त्वं सागता भर्त्तुः पिण्डेगोत्रेच सूतके ।
न पृथक् पिण्डदानन्तु तस्मात् पत्नीषु विद्यत इति ।
तद्दर्शादिश्राद्धपरमित्याहुः ।

---

१(*) अत्र कश्चिन् पाठः पतितः । यथा; 'पृथक् पिण्ड—इत्यादि-श्राद्धं पृथक् इत्यन्तः ।

1079. **श्राद्धप्रकाशेऽपि—**

एकचित्यां समारूढौ दम्पतीचेन्मृतौ यदि ।
पृथक् श्राद्धं प्रकुर्व्वीत पत्युरेव क्षयाऽहनि ॥१०९७॥

मृतानामपि भृत्यानां भार्य्याणां पतिना सह ।
तन्त्रेण श्रपणं कृत्वा श्राद्धं स्वामिक्षयेऽहनि ॥१०९८॥

पूर्व्वंकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ।
तृतीयस्य ततः कुर्य्यात् सन्निपातेष्वयं क्रमः ॥१०९९॥

1080. **पाकविषये मदनरत्ने, प्रचेताः,—**

एकचित्यां समारूढौ म्रियेते दम्पती यदि ।
तन्त्रेण श्रपणं कुर्य्यात् पृथक् पिण्डान् समाचरेदिति ॥११००॥

अत्र भर्तुरशौचमध्ये एवाऽन्यदिने स्त्र्यन्वारोहणे पतिमरणदिनगणनया पिण्डदानं कादशादिकार्य्यम् , नात्र पक्षिण्यात्मकाशौचवृद्धिः ।

मृतंपतिमनुव्रज्य पत्नीचेदनलङ्गता ।
न तत्र पक्षिणी कार्य्या पैतृका देव शुद्ध्यति ॥११०१॥
पुत्रोवान्योऽग्निदस्तस्या स्तावदेवाशुचिस्तयोः ।
नव श्राद्धं सपिण्डश्च युगपत्तु समापयेदिति—

1081. **षडशीत्युक्तेः ।**

भर्त्तुरशौचानन्तर मन्वारोहणेतु त्र्यहमशौचं कार्य्यमित्युक्तं प्राक् ।
तस्याः क्षयाह श्राद्धं तिथि भेदेऽपि भर्त्तृक्षयाहे कार्य्यम् ।
सहाग्रतः पृष्ठतोवा तद्भर्त्ता(र्य्या)मियते यदि ।
तस्याः श्राद्धं प्रदातव्यं पृथक्पत्युः क्षयेऽहनि ॥११०२॥

1082. **इति स्मृत्यन्तरात् ।**

अग्रतः पृष्ठतोवापि तद्भार्य्याम्रियतेचया १(*) ।
तस्याः श्राद्धं सुतैः कार्य्यं पत्युरेव क्षयेऽहनीति ॥११०३॥

---

१(*) 'तद्भर्त्ता [illegible] तद्भर्त्तु [illegible] [illegible] [illegible] पत्युः श्राद्धाहं च पत्न्याः अपि श्राद्धकार्यं युतम् ।

1083. **श्राद्धकाशिकायां पुराणसमुच्चयोक्तेश्च ।**

इत्यन्वारोहण आह्निक श्राद्धादिनिर्णयः ॥

—*—

1084. **अथ क्षयाहादि श्राद्धसम्पाते निर्णयः ।**

तत्र दैवात् पित्रोर्मृततिथ्यैकत्वे मरणक्रमेण दर्शेवर्गद्वयवत्तन्त्रेण श्राद्धं कुर्य्यादिति—

1085. **हेमाद्रिराह—**

तत्र पूर्व्वं कस्य मृतस्यादाविति स्मृतिः प्रमाणम ।

1086. **माधवादिनिबन्धकारास्तु,—**

पित्रोः श्राद्धेनायंक्रमः, किन्तु—पितुः पूर्व्वं कृत्वा ततोमातुः कुर्य्युः ।
पित्रोः श्राद्धे समं प्राप्रे नवे पर्य्युषितेऽपिवा ।
पितृ-पूर्व्वं सुतः कुर्य्यादंन्यत्रासक्तियोगतः ॥११०४॥

1087. इति कार्ष्णाजिनिना विशेषोक्तेः । सर्व्वत्र पितृपूर्व्वभिन्नं प्रयोगमाहुः । इदन्तु कालान्तरमृततिथ्यैक्यविषयम् ।

एकतिथौ पित्रोर्मृतौ तु पितृपूर्व्वकं दर्शे वर्गद्वयश्राद्धवत् तन्त्रेण श्राद्धं कुर्य्यात् १(*) ।

मृते भर्त्तरि तद्दाहात् प्राक्पत्नी म्रियते यदि ।
प्रत्न्यांवा प्राक्प्रमीतायां दाहादर्व्वाक् पतिर्मृतः ।
तत्र तन्त्रेण दाहःस्यान्मन्त्रेषु द्वित्वमूह्यते ॥११०५॥
कीकसानान्तु संस्कारः पृथग्वा सहवा तयोः २(†) ।
एकाह मृत्यौ युगपन्नवश्राद्धादिकन्तयोरिति ॥११०६॥

---

१(*) बहूणामेकमुद्दिश्य सह्नदनुष्ठान तन्त्रमिति । ततः दम्पत्योरेकदादाहः स्यात् ।

,, 'मन्द्रे ग्रहित्व मुच्यते' इति भिन्नः पाठः ।

२(†) 'कोकस कुल्यमस्थि च'। कोकसः क्रमिजातौस्यात् पुंसिकुल्येनपुंसकम । यथा ग्रात्याः पतिताः । अथ कुल्याः स्वकुल जाता इति ।

1088. **कपर्द्दिकारिकोक्तेः। अत्र विशेषोहेमाद्रौ, स्मृत्यन्तरेंच—**

माता मङ्गल सुत्रेण म्रियते यदि तद्दिने ।
उद्दिश्य विप्रपंक्तौ तां भोजयेत्तु सुवासिनी मिति ॥११०७॥

इदमन्वारोहण-मरणे विज्ञेयं न्यायसाम्यात् ।

—*—

**अथ पार्व्वणैकोद्दिष्टयोः सम्पाते,—**

1089. **माधवीये जावालिः—**

यद्येकत्र भवेयातामे कोद्दिष्टश्च पार्व्वणम् ।
पार्व्वणत्व मनिर्व्वर्त्त्य एकोद्दिष्टं समाचरेदिति ॥११०८॥

महामार्य्यग्निदाहादिना वहूणां युगपन्मरणेतु ।

1090 **हेमाद्रौ भृगुः—**

एककाले गतासूनां वहूणामथवा द्वयोः ।
तन्त्रेणश्रपणं कृत्वा कुर्य्याच्छ्राद्धं पृथक् पृथक् ।
पूर्व्वंकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ॥
तृतीयस्य ततः कुर्य्यात् सन्निपातेष्वयं क्रम इति ॥११०९॥

1091. **गारुडेऽपि—**

एकेनैवतु पाकेन श्राद्धानि कुरुते यदि ।
विकिरन्त्वेकतः कुर्य्यात् पिण्डान्दद्यात् पृथक् पृथगिति१(*) ॥१११०॥

1092. **युगपण्मरणेतु ऋष्यश्रृङ्गः—**

भवेद् यदि सपिण्डानां युगपण्मरणन्तथा ।
सम्वन्धासत्तिमालोच्य तत् क्रमाच्छ्राद्धमाचरेदिति ॥११११॥

सन्निहित-सम्वन्धस्य पूर्व्वं दत्वा, ततस्तदपेक्षया व्यवहित सम्वन्धस्य दद्यादिति वाक्यार्थः ।

1093. **कात्यायनश्च—**

द्वे वहूनि निमित्तानि जायेरन्नेकवासरे ;
नैमित्तिकानि कार्य्याणि निमित्तोत् पत्त्यनुक्रमादिति ॥१११२॥

एतद् व्याख्यानं तृतीयस्तवके तीर्थप्रकरणे विषदं द्रष्टव्यम् ।

---

१(*) 'पिण्डान्ते पिण्डशेषान् सकृद् विकीरयेदिति ।

1094. **जाबालिः—**

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने ।
नैमित्तिकन्तु कर्त्तव्यं निमित्तानुक्रमोदयम् ॥१११३॥

1095. **कालादर्शेऽपि—**

नित्य दार्शिकयोश्चोदकुम्भ मासिकयोरपि ।
दार्शिकस्य युगादेश्च दार्शिकालभ्य योगयोः ॥१११४॥
दार्शिकस्य च मन्वादेः सम्पाते श्राद्ध कर्म्मणः ।
प्रसङ्गादित रस्यापि सिद्धेरुत्तरमाचरेदिति ॥१११५॥

**अस्य क्वचिद्देवता भेदेऽपवादमाह, तत्रैव—**

नित्यस्य चोदकुम्भस्य नित्य मासिकयोरपि ।
दर्शस्य चोदकुम्भस्य दार्श मासिकयोरपि ॥१११६॥
नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि १(*) ।
युगाद्याब्दिकयोश्चैव मन्वाद्याब्दिकयोस्तथा ।
प्रत्याब्दिकस्यचालभ्य योगेषु विहितस्य च ॥१११७॥
सम्प्राते देवताभेदाच्छ्राद्ध युग्मं समाचरेत् ।
निमित्त नियतिश्चात्र पूर्व्वानुष्ठान कारणम् ॥१११८॥
पित्रोस्तु पितृ पूर्व्वत्वं सर्व्वत्र श्राद्ध कर्म्मणीति ।

1096. **माधवीये, स्मृति संग्रहेऽपि,—**

काम्यतन्त्रेण नितस्य तन्त्रं श्राद्धस्य सिद्ध्यतीति ॥१११९॥

इति श्राद्धसम्पाते निर्णयः ॥

—*—

## अथ श्राद्धान्तर्गत तर्पणविधानम् ।

—*—

1097. **तत्र पृथ्वी चन्द्रोदये, गर्गः—**

पूर्व्वं तिलोदकन्दत्वात्वाम श्राद्धं समाचरेत् ।
प्रत्यब्देन भवेत् पूर्व्वं परेऽहनि तिलोदकम् ॥
पक्षश्राद्धे हिरण्येच अनुव्रज्य तिलोदकमिति ॥११२०॥

---

१(*) अत्र आदर्शपुस्तकान्तरे नित्यस्यचाब्दिकस्यापी त्यारभ्य प्र ::ब्दिकश्च तथेति पाठोनास्ति ।

न च नित्यतर्पणस्यैवायं परेऽह्न्युत्कर्षो नतुश्राद्धाङ्गनां पृथक्तर्पणमस्तीति वाच्यम्।

यस्तर्पयति तान् विप्रः श्राद्धं कृत्वा परेऽहनि।
पितरस्तेन तृप्यन्ति न चेत् कुप्यन्तिवै भृश मिति—

1098. प्रयोगपारिजाते गर्गेण, फलनिन्दार्थवादाभ्यां तर्पणस्याङ्गत्वोक्तेः १(*)।

परेद्युः श्राद्धकृन्मर्त्त्योयोनतर्पयति पितॄन्।
तस्य ते पितरः क्रुद्धाः शापंदत्वा व्रजन्तिहि ॥११२१॥

इत्यादिकं प्रक्रम्य नारदीयोक्तेश्च। अत्र पितृ शब्दः श्राद्धेऽभ्यभूतवर्गपरः। तैनैतत्तर्पणस्य पशु-पुरोडाश यागवत् प्रस्तरप्रहरणवच्च, प्रागिष्टदेवता संस्कारकता। तेन क्षयाह-दिने नित्यं स्वपितृतर्पणं कार्य्यमेव। श्राद्धाङ्गतर्पणस्यैव परेद्युविधानात्।

1099. **तदुक्तं पारिजाते, गर्गेण—**

प्रत्यब्दाङ्गे तिलान्दद्यान्निषिद्धेऽपि परेऽहनि।
वर्गैकस्य वचोयेषां अन्येषान्तु विवर्जयेदिति २(†) ॥११२२॥

एवं पक्षश्राद्धेऽपि श्राद्धानन्तरं तिलतर्पणं कार्य्यम् ३(‡)।

कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत्।
पितॄणां प्रत्यहं कार्य्यं निषिद्धाहेपिच तर्पणम् ४(+) ॥११२३॥

1100. इति तत्रैव भृगूक्तेः। अत्र तर्पण शब्दस्तिलतर्पणपरः।

निषिद्धाहेपीत्युक्तेः। सकृन्महालयेतु श्राद्धाङ्गतर्पणं विधेयम्।

स(श्च)एव, दर्शेतिलोदकं पूर्व्वं पश्चाद् दद्यान्महालये ॥११२४॥

1101. सकृन्महालये श्वः स्यादष्टकास्वन्तएवहीति ऋष्यश्रृङ्गोक्तेः।

अत्र दर्श इत्यादि सप्तमी निर्देशाद् दर्शादिरङ्गितास्फुटैवावगम्यते। यथा तत्र जवान् (वां)जुहुयात्, मन्त्र प्रापणीयायां मन्त्रं प्रातः सवन-इत्यादि वत् क्वचिच्छ्राद्धे ऽपवादोहि।

---

१(*) वाच्यमित्यस्मात् परं— यस्तर्पयति, इत्यस्यप्राग्ग्रन्थभाग एकस्मिन्नादर्शग्रन्थे पतितः।

२(†) अन्यत्रादर्शे 'पितृशान्ततर्पणस्य' इत्यं पाठान्तरम्।

३(‡) आदर्शपुस्तकान्तरे अत्र पाठाग्रज्विरधिकपाठश्चास्ति।

४(+) 'निषिद्धाङ्गच्च तर्पणम्' इति भिन्नः पाठोदृश्यते।

1102 **बृहन्नारदीये—**

वृद्धिश्राद्धे सपिण्डां च प्रेत श्राद्धेऽनुमासिके ।
संवत् सरविमोकेच न कुर्य्यात्तिलतर्पणम् इति ॥११२५॥
अत्रापि सप्तमीनिर्द्देशात्तदंगभूतस्य निषेधः ।
अत्रायं निष्कर्षः, दर्शेविप्रनिमन्त्रणोत्तरं पाकारंभोत्तरं वा श्राद्धस्यारम्भत्वात्, ब्रह्मयज्ञोत्तरं नित्यतर्पणेनैव श्राद्धाङ्गतर्पणस्य तन्त्रेण प्रसङ्गेनवासिद्धिः ।
ततः पूर्व्वं वैश्वदेवोत्तरं वा ब्रह्मयज्ञकरणे श्राद्धांग तर्पणं पृथक्कार्य्यम् ।
वार्षिक श्राद्धदिनेतु नित्यतर्पणं तिलवर्ज्जं कार्य्यम् ।
नैव श्राद्धदिने कुर्य्यात्तिलैस्तु पितृतर्पणम् ।
श्राद्धं कृत्वा परेऽह्न्येव तर्पणन्तु तिलैः सह ॥११२६॥

1103. **इति यमोक्तेः ।**

सप्तम्यां भानु वारेच मातापित्रोर्मृतेऽहनि ।
न तिलैस्तर्पणं कुर्य्यात् सभवेत् पितृघातकः १(क) ॥११२७॥

1104. **इति स्मृतिरत्नावल्यां वृद्धमनूक्तेश्च ।**

1105. **यत्तु कात्यायनवचः—**

उपरागे पितुः श्राद्धे पातेऽमायाश्च संक्रमे ।
निषिद्धेपिहि सर्व्वत्र तिलैस्तर्पणमाचरेदिति ॥११२८॥
तदपि परेद्युःश्राद्धा ङ्ग)तर्पण विषयम् ।
श्राद्धाशक्तस्य तत्स्थानीयतर्पणविषयं वेति द्रष्टव्यम् ।
प्रेतपक्षेऽपि श्राद्धदिनेषु नित्यतर्पणं सतिलं कार्य्यम् ।
तीर्थे तिथि विशेषे च गङ्गायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिल मिश्रितम् ॥११२९॥

---

१(क) अन्ये प्रोचुः—अन्यत्र 'गङ्गायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि ।
निषिद्धेऽपिदिने कुर्य्यात्तर्पणं तिलमिश्रितमिति ॥
'ग्रहणे च न्द्रसूर्य्ययो, रित्यर्ध पूर्व्वार्द्धे पाठान्तरमस्ति ।
अपरञ्च— 'तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके, इत्यपि पूर्व्वार्द्धे भिन्नः पाठः ।

1106. इति तर्पण प्रकरणे पृथ्वीचन्द्रे हारीतोक्तेः। न चेदं श्राद्धतर्पणविषयमिति वाच्यम्। पक्षश्राद्धेहिरण्येचेत्यनेनैव तस्यप्राप्तेः।
सकृन्महालयेऽष्टकासुचान्ते श्राद्धाङ्गतर्पणं कार्य्यम्।
तीर्थे दर्शवत् माघीवर्षादिष्वष्टकाश्राद्धवदन्ते कार्य्यम्।
अनेक श्राद्धसम्पातेतु यदि प्रसङ्गागत(ा)सिद्धिस्तदा तदीयमेव तर्पणं कार्य्यम्। तन्त्रपक्षेतु श्राद्धसमसंख्यत्वे श्राद्धाङ्गत्वेवा स्यात्। विषमसंख्यायां बह्वनुरोधः। वृद्धिश्राद्धप्रेतश्राद्धसपिण्डनादौ श्राद्धाङ्गतर्पणं नास्त्येवेति सर्व्वं समञ्जसम्॥

1107. **श्राद्धाङ्गतर्पणविधिस्तु संग्रहे,—**

स्नात्वा तीरं समागम्य उपविश्य कुशासने।
सन्तर्पयेत् पितृण् सर्व्वान् स्नात्वा वस्त्रञ्च धारयेत्॥११३०॥
अत्र स्नात्वा तर्पणोत्तरं नित्यस्नानं कृत्वेत्यर्थः।
अपसव्यन्ततः कृत्वा सव्यं जान्वोच्य भूतले।
नामगोत्रस्वधाकारैर्द्वितीयान्तेन तर्पयेत्॥११३१॥ इति

1108. **अत्र वस्वादि रूपतोक्ता, स्मृत्यर्थसारे,—**

वसुरुद्रादिति-सूतां चश्राद्धार्थे तर्पयेत्पितृणिति।
तच्च बह्वृचानां दक्षिणहस्तेन, अनादेशे दक्षिणं प्रतीयादितिसूत्रात्। अन्येषामुभाभ्यां हस्ताभ्यां तत्तत्सूत्रेऽञ्जलिग्रहणात्। केचित्तु—बह्वृचानामप्यञ्जलिर्भवति।

**तथाच,—**

एकैकमञ्जलिं देवा द्वौद्वौतु सनकादयः।
अर्हन्ति पितरस्त्रीं स्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम्॥११३२॥
इति स्मृत्या सर्व्वसाधारण्येन तर्पणेऽञ्जलिकथनात्।

1109. आश्वलायन सूत्रे विशेषाभावाद् दक्षिणं प्रतीया दित्यस्यान्यविषयत्वेन नेतुं शक्यत्वाच्चेत्याहुः। अत्र प्रत्यञ्जलिमन्त्रावृत्तिः निर्वपणवत् सन्ध्यार्घ्यदानवच्च द्रव्यभेदात्।
अवघात वेदि प्रोक्षणादौतु द्रव्यैकत्वान्न मन्त्रावृत्तिः।

एकद्रव्येकर्म्मावृत्तौ सकृन्मंन्त्रकरणं कृतत्वादिति—
1110. कात्यायनसूत्रात्। एवं नित्यतर्पणेऽपि द्रष्टव्यम्।
तस्मात् सिद्धं क्षयाहादौ नित्यतर्पणं कर्त्तव्यमिति।

**यत्तु, संग्रहनाम्ना पठन्ति वचः—**

पित्रोः क्षयाहे सम्प्राप्ते यः कुर्य्यान्नित्यतर्पणम्।
आसुरं भद्र भवेच्छ्राद्धं तत्तोयं रुधिरं भवेत्॥११३३॥

**तथा,—**

सर्व्वदा तर्पणं कुर्य्याद् ब्रह्मयज्ञपुरः सरम्।
मृताहे नैव कर्त्तव्यं कृतं चेन्निष्फलं भवेदित्यादि॥११३४॥
तत्तु, महानिबन्धेष्वनुपलम्भान्निर्मूलम्। समूलत्वे तु सति (तत्)
तर्पण विषयमिति न किञ्चित् क्षुद्रोपद्रवः॥

—*—

## अथ नित्यतर्पणे तिलनिषेधः।

—*—

1111. **हेमाद्रौ, मरीचिः—**

सप्तम्यां रविवारेच गृहे जन्मदिने तथा।
निशा सन्ध्यासु पुत्रार्थी न कुर्य्यात्तिलतर्पणमिति॥११३५॥

1112. **पारिजाते, गार्ग्यः—**

भानौ भौमे त्रयोदश्यां नन्दा भृगु मघासु च।
पिण्डदानं मृदा स्नानं न कुर्य्या त्तिलतर्पणम्॥११३६॥

1113. **स्मृत्यर्थ सारे,—**

विवाह व्रतचूड़ासु वर्षमर्द्धं तदर्द्धकम्।

**पिण्डदानमिति पूर्व्ववत्।**

वृद्धौ सत्यान्तु तण्मासि नित्याहुस्तिलतर्पणम्, इति॥११३७॥

1114. **अस्यापवादः, पृथ्वीचन्द्रोदये—**

तीर्थे तिथि विशेषे च गङ्गायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्य्या त्तर्पणं तिलमिश्रितमिति ॥११३८॥

1115. **स्मृत्यर्थ सारेऽपि—**

तिथि-तीर्थ विशेषे च कार्य्यं प्रेतेऽपि सर्वदेति ।

1116. **तिलवर्ज्ज-तर्पणे विशेषमाह, गोभिलः—**

तिलाभावे निषिद्धाहे सुवर्णरजतान्विते १(*) ।
तद भावे नषिंद्धश्चेत् दर्भमन्त्रेणवा पुन रिति ॥११३६॥
अत्रत्यान्यो विशेष आह्निके तीर्थप्रकरणे च द्रष्टव्यः ।

इति श्राद्धाङ्ग तर्पण विधानम् ॥

—*—

## अथ प्रसङ्गाद्वृद्धिश्राद्धं निरूप्यते ।

—*—

**तस्य निमित्तं पृथ्वीचन्द्रे, ब्राह्मे,—**

अथ प्रसङ्गाद्वृद्धि श्राद्धं निरूप्यते ।
जन्मन्यथोपनयने विवाहे पुत्रकस्य च ।
पितॄन्नान्दीमुखान्नाम तर्पयेद्विधि पूर्व्वकम् ॥११४०॥
वेदव्रतेषु चा धान यज्ञ पुंसवनेषु च ।
नवान्न भोजने स्नाने ऊढ़ायाः प्रथमार्त्तवे २(†) ॥११४१॥
देवाराम तड़ागादि प्रतिष्ठासूत् सर्व्वेषु च ।
रामाभिषेके बालान्न भोजने वृद्धि संज्ञकान् ३(‡) ॥११४२॥
वनस्थाश्रा श्रमं गच्छन् पूर्व्वेद्युः सद्य एव वा ।
पितॄन् पूर्व्वोक्तविधिना तर्पयेत् कर्म्मसिद्धय इति ॥११४३॥

---

१(*) तर्पणकालेतिल निषेधे तदभावेन सुवर्णरजतान्वितकरेण कुशयुक्तेन च तर्पणं कुर्य्यात् ।
२(†) 'ऊढ़ाय्याः प्रथमेऽर्त्तवे' इति अन्यत्र पाठः ।
३(‡) 'बालना मधेयः, इति अन्यत्र पाठः ।

1117. **बहूवृचकारिकायां—**

स्यादाभ्युदयिकं श्राद्धं वृद्धि पूर्व्वेषु कर्म्मसु ।
पुंसः सवन-सीमन्त-चौलोप नयनेष्विह ॥११४४॥
विवाहे जातनामधेय प्रभृति श्रौत कर्म्मसु ।
इदं श्राद्धं प्रकुर्व्वन्ति द्विजा वृद्धिनिमित्तकम् ॥११४५॥
अन्यैः षोड़शसंस्कार-श्रावण्यादिष्व पीष्यते ।
वाप्याद्युदूषापनादौतु कुर्य्युः पूर्त्तनिमित्तकमिति ॥११४६॥
अन्यदपि निमित्तं महाग्रन्थे ( तो ) द्रष्टव्यम् ।

**इदमावश्यकमित्युक्तं—**

1118. **शातातपेन,—**

वृद्धौ न तर्पिता ये वै पितरोगृहमेधिभिः ।
तदेव विफलं ज्ञेयं आसुरोविधिरेव सः इति १(*) ॥११४७॥
अनिष्ट्वातु पितॄन् श्राद्धे न कुर्य्यात् कर्म्म वैदिकम् ।
तत्रापि मातरः पूर्व्वं पूजनीयाः प्रयत्नतः । इति ॥११४८॥

**अत्र श्राद्धत्रयमाह, सएव,—**

मातृश्राद्धन्तु पूर्व्वंस्यात् पितॄणान्तदनन्तरम् ।
ततो माता महाणाञ्च वृद्धिश्राद्धत्रयं स्मृतमिति ॥११४९॥

1119. **एतत्कालमाह, गार्ग्यः:—**

मातृश्राद्धे तु पूर्व्वेद्युः कर्म्माहनितु पैतृकम् ।
मातामहं चोत्तरेद्यु र्वृद्धौ श्रादुध त्रयं स्मृत मिति ॥११५०॥

**अत्राप्यशक्तौ, वृद्ध शातातपः—**

पूर्व्वाह्ने मातृकं श्राद्धं मध्याह्ने पैतृकन्तथा ।
ततो मातामहाणाञ्च वृद्धौ श्राद्धत्रयं स्मृतमिति ॥११५१॥

1120. **अत्राप्यशक्तौ, स एव—**

पृथग्दिनेष्वशक्तश्चेदेकस्मिन् पूर्व्ववासरे ।
श्रादुधत्रयं प्रकुर्व्वीत वैश्वदेवन्तु तान्त्रिकम् २(‡) ॥११५२॥

---

१(*) 'तदेवाद्धं फलम्' इति भिन्नः पाठः ।

,, वृद्धिः अभ्युदयजनकं श्राद्धम् । अतोऽव गौर्य्यादयः, ब्रह्माण्यादयश्च शक्तयः पूज्याः ।

२(†) यदि पृथग्दिने कर्त्तुमशक्तः तदा पूर्व्वदिने युगपत् एकस्मिन् संस्कारदिने वा ; अनुष्ठानं कुर्य्यादिति ।

**दिनशब्दोऽत्र पूर्व्वाह्णादेरुपलक्षणः ।**

अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः ।
पूर्व्वेद्युर्वै प्रकुर्व्वीत पूर्व्वाह्णे मातृपूर्व्वकमिति ॥११५३॥

1121. **वृद्धमनूक्तेः ।**

अत्र महत्सु कार्य्येषु पूर्व्वेषु तदहरन्येष्वित्याश्वलायनगृह्यपरिशिष्टाद् व्यवस्था ज्ञेया । आभ्युदयिके प्रदक्षिण मुपचारः पूर्व्वाह्ण इति ।

1122. **कालस्तु, कात्यायनसूत्रे,—**

**स्मृत्यन्तरेच,—**

पूर्व्वाह्णे दैविकं श्राद्ध मपराह्णे तु पैतृकम् ।
एकोद्दिष्टन्तु मध्याह्णे प्रातर्वृद्धि निमित्तकम् इति १(*) ॥११५४॥

**दैविकमिति,—**

द्वादश्यादिषु क्रियमाणं वैष्णव श्राद्धम् ।

**अत्र प्रातःशब्दः सार्द्धप्रहरपरः ।**

ललाट सम्मिते भानौ प्रथमः प्रहरः स्मृतः ।
सएवाध्यर्द्ध संयुक्तः प्रातरित्यभिधीयत । इति २(†) ॥११५५॥

1123. **जातूकर्णोक्तेः ।**

प्रातः शब्दस्त्रेधा विभक्तदिनस्य प्रथमभागपरश्च । पूर्व्वाह्णो वैदेवानाम्,
1124. मध्यन्दिनं मनुष्याणां, अपराह्णः पितॄणाम्, इति वाजसनेयिश्रुतेश्च ।
इदञ्च पुत्रजन्माद्यनियत कालातिरिक्तविषयम् ।

1125. **तदाहात्रिः—**

पूर्व्वाह्णे वै भवेद्वृद्धि र्विनाजन्म-निमित्तकम् ।
पुत्रजन्मनि कुर्व्वीत श्राद्धं तात् कालिकं द्विज इति ॥११५६॥
तेषामनियतत्वेतु तदा न ३(‡) तर्पयिष्यते ।

---

१(*) 'प्रातः कालोमुहूर्त्तांस्त्रीन् सङ्गवः तावदेवत' इति ज्योतिषे ।

२(†) 'सूर्य्योदयात् प्रागुक्तौ मुहूर्तौ आद्योवाक्यः द्वितीयोरौद्रः । सूर्य्योदये सति ततः प्रातराद्यः' इत्यपि तिथि निर्णयकारिकायामस्ति, अपरं आह्निकाचारतत्त्वे च ।

३(‡) 'आधानं तर्पयिष्यत' इति अपरः पाठः ।

1126. **इति लौगाक्षिस्मृतेश्च ।**

तेषां निमित्तानां एतदाधानेऽपराह्णेऽपि स्यात् ।
आमश्राद्धन्तु पूर्व्वाह्णे सिद्धान्नेनतु मध्यतः ।
पार्व्वणञ्चापराह्णेतु वृद्धि श्राद्धं तथाम्रिक मिति ॥११५७॥

1127. **हेमाद्रौ गालवोक्तेः ।**

नान्दीमुखाह्वयं प्रात राम्निकंत्वपराह्णत इति—१(*)

1128. **विष्णूक्तेश्च ।**

इदञ्च मातृ पितृ-मातामहादिक्रमेण न दैवतं कार्य्यम् ।
मातृणां प्रथमं कार्य्यं पितृणान्तदनन्तरम् ।
ततो मातामहानाञ्च सपत्नीनामिति स्थिति—॥११५८॥

1129. **रितिगारुड़ोक्तेः ।**

अत्र मात्रादिक्रमः स्यात् पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इति वहवृचपरिशिष्टे नान्दी—श्राद्धं प्रकृत्योक्तेः ।

नान्दीमुखाः पितरः पितामहाः प्रपितामहा नान्दी मुखामातामहाः प्रमातामहा वृद्ध प्रमातामहाश्च प्रीयन्तामिति कात्यायन सूत्राच्तु ।

1130. **यत्तु वशिष्ठ :—**

नान्दीमुखे विवाहे च प्रपितामह पुर्व्वकम् ।
नाम संकीर्त्तयेद् विद्वान् अन्यत्र पितृ पूर्व्वकम्. इति ॥११५६॥

1131. **यच्च स्मृत्यर्थ सारे—**

वृद्ध मुख्यास्तु पितरो वृद्धिश्राद्धेतु भुञ्जते इति । तत्तु येषां सूत्रादौ नान्दीश्राद्धे व्युत्क्रम उक्त स्ततूपरो ज्ञेयः ।

1132. **कात्यायनस्तु—**

वृद्धिश्राद्धं षड्दैवकमिच्छन्ति नान्दीमुखाः पितर इत्यनुपदोक्तं तत्-सूत्रे तथोक्तेः । षड्भ्यः पितृभ्यः तदनु श्राद्धं कर्म्म समाचरेत्—

1133. **इति कात्यायन परिशिष्टोक्तेः ।**

वहल्पं वा स्वगृह्योक्तं यस्य यावत् प्रचोदितम् ॥११६०॥

---

१(*) 'अपराह्णे तु दैवकम्' इत्युक्तं प्रागन्यत्र ।
,, 'सुखेषिताः' इति ,, ,, ।

तेन तावति शास्त्रार्थें कृते सर्व्वः कृतोभवे, दिति कात्यायनेनैव तथा करणस्य प्रशंसनाच्च । केचिदत्र वृद्धि (द्ध)शब्दं पित्रादिषु प्रयुञ्जते ।

**तन्न—**

अनस्मद्वृद्ध शव्दानामरूपाणामगोत्रिणाम् ॥११६१॥
अनाम्नामतिलाद्यैश्च नान्दीश्राद्धन्तु सव्यवदिति—

1134. **हेमाद्रौ संग्रहोक्तेः ।**

नच निषेधवलादेव क्तप्तोविधि र्व्यर्थ इति वाच्यम् । तस्य प्रौष्ठपदी-श्राद्धे प्रपितामहात्परेषां वृद्ध पित्रादीनां विशेषण परत्वेन सार्थक्यात् ।

1135. **यत्तु, ब्राह्मे,—**

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयोह्यश्नुमुखाह्येते पितरः परिकीर्त्तिताः १(†) ॥११६२॥
तेभ्यः पूर्व्वतया येच प्रजावन्तः सुखैधिताः ।
तेतु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥

1136. **यच्च, मार्कण्डेये—**

ये स्युः पितामहादूर्द्ध तेस्युर्नान्दी मुखाअपीति । अत्र पितामह शब्दः प्रपितामहपरः ।

तथा त्वे पूर्व्ववचनेनैकवाक्यत्वात् । तत्तु जीवत् पुत्रादि-त्रिकस्य जीवत् पितृकस्य वृद्धि श्राद्ध विषयमिति कल्पतरु-मदन-
1137. पारिजातौ ।

1138. **यत्तु विष्णुः—**

पितरि पितामहे प्रपितामहेच जीवति ।
नैवकुर्य्यादिति, तद्दर्शादिश्राद्ध परमित्याह ।

1139. **हेमाद्रिस्तु,—**

नान्दीमुखानां श्राद्धन्तु कन्याराशिगते रवौ ।
पौर्णमास्यान्तु कर्त्तव्यं वराहवचनं यथेति ॥११६३॥

ब्राह्म वचनेनैक वाक्यत्वात्प्रौष्टपदीश्राद्धपरमेतदित्याह । अत्र सत्यवसु-विश्वेदेवा इत्युक्तम् , नान्दीश्राद्धे सत्यवसू इति स्मृत्या २(†) ।

---

१(०) 'इष्टि श्राद्धे क्रतुर्दक्षः सत्योनान्दीमुखेवसुः । नैमित्ति के कामकालौ काम्येच धूरीलोचनौ' इत्यपराकृतिः । एते श्राद्धे देवाःस्युः । 'त्रयोह्यश्रुमुखः' इत्यन्यः पाठः । एतेन सप्तधाराः पञ्चधारा वा मन्त्रै देयाः ।

२(†) पूजिताः स्युः शुभावहाः इति भिन्नः पाठः ।

" सर्व्वासु इति च पाठः ।

1140. **यत्तु मार्कण्डेयपुराणे—**

विश्वेदेवविहीनन्तु केचिदिच्छन्ति मानवाः ।

इति तद्भिन्नप्रयोगे मातृश्राद्धविषयम् ।

1141. मातृश्राद्धन्तु युग्मैः स्याददैवं प्राङ्मुखैः पृथगितिशातातपोक्तेः ।

प्रयोगैक्येतु देवनियम इति हेमाद्रिराह ।

इदश्च मातृ-पूजापूर्व्वकं कार्य्यम् ।

अकृत्वा मातृयागन्तु यः श्राद्ध' परिवेशयेत् ।

तस्य क्रोधसमाविष्टां हिंसामिच्छन्ति मातरः ॥११६४॥

1142. **इति शातातपोक्तेः ।**

1143. **छन्दोगपरिशिष्टेतु—**

कर्म्मादिषु च सर्व्वेषु मातरः सगणाधिपाः ।

पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः १(*) ॥११६५॥

प्रतिमासुच शुद्धासु लिखितावा पटादिषु ।

अथवाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥११६६॥

कुड्यलग्नां वसोर्द्धारां सप्तधारां क्रमेण तु २(†) ।

कारयेत् पञ्चधारां वा नातिनीचां नचोच्छ्रिताम् ॥११६७॥

आयुष्याणिच शान्त्यर्थं जप्त्वा तत्रसमाहितः ।

षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेदिति ॥११६८॥

1144. वसोर्धाराकरणं छन्दोगाणामेव नान्येषामिति पारिजाते ।

1145. स्मृतीनां साधारण्यात् सर्वेषाम्भवतीति निर्नयामृते ३(S) ।

करणे ४(+) त्वभ्युदय इत्यन्ये ।

षड्भ्यइति छन्दोगविषयं कातीयविषयञ्च,

1146 नवदैवत्यमन्येषाञ्चेत्यपरार्कः ५(×) ।

1147. नवदैवत्यकरणेऽभ्युदय इति पृथ्वीचन्द्रः ।

कोकिलमतानुसारेण मातृ-मातामह-प्रमातामहा इति मात्रासहैव मातामह श्राद्धकरणात्तद्विषयं षड्भ्य इति वचनमित्यपरे ।

---

१(*) 'पूजनन्तच कारयेत्' इति पाठान्तरमस्ति ।

२(†) 'सप्तधाराघृतेन नतु' इत्यपरः पाठः ।

३(‡) धारासु-वसु पूजनं सर्व्वत्रास्ति इति स्मार्त्ताः ।

(४S) करणेति,—घृतेन धाराणां अनुष्ठानेऽभ्युदयेवेति ।

५(×) नवदैवत्यं यजुषां, नव पौरुषिकं वा । षाट् पौरुषिकं छन्दोगानाम् ।

" कोकिल' इत्यत्रगोभिल इति भिन्नः पाठः ।

1148 **मातरस्तत्रैवोक्ता,:—**

गौरी-पद्मा-शची-मेधा-सावित्री-विजया जया ।
देवसेना स्वधा स्वाहा मातरोलोकमातरः ॥११६९॥
धृतिः पुष्टिस्तथातुष्टिरात्मदेवतया सह ।
गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दशेति ॥११७०॥

मातरोलोकमातर इति सर्व्वविशेषणम्, तेन चतुर्दशत्वं सुस्थम्। क्वचित्तु षोडशेतिपाठः। तदा तु यथास्थित मेतत्।

1149. चन्द्रिकायां चतुर्व्विंशतिस्त्वन्या उक्ताः ।
तिस्रः पूज्याः पितुः पक्षे तिस्रोमातामहे तथा ।
इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाष्टमीति ॥११७१॥
आसु जीवन्तीषु तदा प्रत्यक्षं पूजनं स्मृतम् ॥
मृतास्व क्षतपुञ्जेषु,१(*)

1150. **इति हेमाद्रिराह—**

ब्रह्माण्याद्यास्तथा सदा दुर्गाक्षेत्रगणाधिपान् ।
वृद्ध्यादौ पूजयित्वातु पश्चान्नान्दीमुखान् पितॄन् ॥११७२॥
मातृपूर्व्वास्तु सम्पूज्य ततो मातामहानपि ।
मातामहीस्ततः केचिद् युग्मा भोज्या द्विजातय इति ॥११७३॥

अत्र द्वादशदैवत्य कथनं देशाचार तो व्यवस्थेयम् ।

1151. अपरार्के, अन्या अपि मातर उक्ताः, ता यथा—
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा सप्तमातर इति ॥११७४॥

अत्रापि देशाचारतो व्यवस्था ।
अत्र चौलादीनां निमित्तानां यौगपद्ये तत्रोक्ताः ।

1152. **छन्दोगपरिशिष्टे,—**

गणेशं क्रियमाणानां मातृभ्यः पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धं आदौ न पृथगादिषु इति ॥११७५॥

---

१(*) यवधान्याक्षतपुञ्जेषु पूजये दित्यर्थः ।
,, गणाधिपः गणेशः । क्षेत्रपः क्षेत्रपालश्च ।

**तथा,—**

असकृद् यानि कर्म्माणि क्रियन्ते कर्म्मकारिभिः १(*) ।
प्रति प्रयोगं नैवस्युर्मातरः सगणाधिपाः ॥११७६॥

तानि च प्रतिपत्‌स्थालीपाकादीनि । प्रतिप्रयोगमित्युक्ते न द्वितीयादि प्रयोगे भवति । प्रथम प्रयोगेतु भवत्येवेति गम्यते ।

**उक्तंहि तत्रैव,—**

आधाने होमयोश्चैव वैश्वदेवे तथैवच २(†) ।
वलि कर्म्मणि दर्शेच पौर्णमासे तथैवच ॥११७७॥
नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्ध मेतेषु न पृथक् पृथगिति ॥११७८॥

एतेष्वाधानादिषु प्रतियोगं नावर्त्तते, किन्तु आद्य प्रयोग एव । एतद्भिन्नसोमयागादौ प्रतिप्रयोगमावर्त्तत एव श्राद्धमित्यर्थः ।

1153. **नारायण वृत्तौतु—**

आधानादि सप्तसु प्रतिकर्म्मापि न श्राद्धम् । किन्तु, आधानादौ कृते-नैकेनैव सर्व्वत्रोपकारः । श्रवणा कर्म्मादिषु प्रतिकर्म्म कार्य्यमिति ।

1154. अपरार्केतु—आधाने तत्रैव न पुनराधाने, होमयोः सायं प्रातः क्रियमाणयो रूभयोरेकं नतु प्रत्येकं वैश्वकमेवेति व्याख्यातम् ३(‡) । अत्र यथाचारमनुष्ठेयम् । क्वचिदादावपि निषेधमाह—सएव,

नाष्टकासु भवेत् श्राद्धं न श्राद्धे श्राद्ध मिष्यते ॥११७९॥
न शोष्यन्ती जातकर्म्म प्रेषितागत कर्म्मसु ॥ विवाहादिः कर्म्मगणो-यउक्तोगर्भाधानं शुश्रुषा यस्यचान्तेनादौ कर्म्मणः स्यादिति ।

सोष्यन्त्या आसन्नप्रसवाया सुख प्रसवार्थं यत् कर्म्म । तत्र यद्वा छन्दोगैःक्रियमाणं जातकर्म्म, तत्र प्रोषितेति, प्रोष्यैत्य गृहानुपतिष्ठते ४(+) । पूर्व्ववत् पुत्रं दृष्ट्वाजयतीति ५(×) कात्यायनसूत्रे विहितम् ।

---

१(*) कर्म्मकर्त्तृभिः इति भिन्नः पाठः ।
२(†) 'आधाने होमयोश्चैव' इत्यन्यत्र पाठः ।
३(‡) वैश्वदेवताकमिति ।
४(+) गर्भाधान-पुंसवनादाविति परमेषां संस्काराणां कालस्तु पृथगेव ।
५(×) अत्रतु, पुत्रजातेष्टिकर्म्मोद्देशम् । 'वैश्वानरं द्वादशकपालंनिर्व्वपेत् पुत्रेजातेष्वाविति' । तथातु पुत्रेष्टिः । अन्यत पारस्करगृह्यादौ विद्यते ।

**तत्रापि नेत्यर्थः । विवाहेति ,—**

विवाहादि गर्भाधान प्रान्तोयोगृहप्रवेशचतुर्थीकर्म्मादिः,१(*)

कर्म्मसमूहउक्तः ।

सूत्रकारेण तत्रापि प्रतिकर्म्म नेदमित्यर्थः ।

अन्येऽपि लाङ्गलयोजनादयोऽपवादविषयास्तत्रैवज्ञेयाः ।

लोके प्रचाराभावान्नोच्यन्ते ॥

1155. **अथात्राधिकारिणः, तत्र विष्णु पुराणे,—**

जातस्य जातकर्म्मादि क्रियाकाण्डमशेषतः ।

पिता पुत्रस्य कुर्व्वीत श्राद्धश्चाभ्युदयात्मकम् । इति ॥११८०॥

**अथ केचित्—**२(†)

जीवत् पितृकस्य साम्नेरेव वृद्धिश्राद्धेऽधिकारोनतु निरम्नेः ।

**यतः—**

नजीवत् पितृकः कुर्य्याच्छ्राद्धमग्निमृते द्विजः ।

येभ्यएव पितादद्यात्तेभ्यः कुर्व्वीत साग्निकम् ॥११८१॥

पितामहेष्येवमेव कुर्य्याज्जीवति साग्निकः ।

आ(ना)ग्निकोन तु कुर्व्वीत जीवति प्रपितामहे ॥११८२॥

1156 **इति सुमन्तूक्ते रित्याहुः । मदनरत्नेतु—**

1157. निरम्नेरपि तस्यात्राधिकारः ।

जीवत्पितापि कुर्व्वीत जन्मादौ वृद्धि कर्म्मणि ।

1158. येभ्य एव पिता दद्यात्तानेवोद्दिश्य तर्पयेदिति हारीतोक्तेः ।

सौमन्तवचनन्तु वृद्धिश्राद्धभिन्न श्राद्धपरमित्युक्तम् ।

पिण्डपितृ-यज्ञ विपयमिति पृथ्वीचन्द्रे ।

1159. **अपरार्कस्तु ,—**

समावर्त्तने ब्रह्मचारी स्वयमेव नान्दीश्राद्धं कुर्य्यात् ।

पितरोजनकस्येज्या यावद्व्रतमनाहितम् ।

समाहितव्रतः पश्चात् स्वान्यजेत पितृन् सदा ॥११८३॥

---

१(०) प्राप्त इति भिन्न पाठः । 'स्वपुत्रस्य पिता कुर्य्यात् सुत संस्कार-कर्म्मणि इति ।

२(†) 'अथ' इत्यत्र अत्रेति पाठोऽस्ति ।

" जीवन् पिता यस्य स जीवत् पितृकः ।

1160. **इति वृद्ध याज्ञवल्कोक्तेः ।**

व्रतं ब्रह्मचर्य्यव्रतम् , अत्रनाहित मसमापितम् । समाहितव्रतः समाप्त-ब्रह्मचर्य्यव्रत इत्यर्थः इत्याह । धृतव्रतः गृहीतब्रह्मचर्य व्रतः ।

**अन्येतु,—**

विवाहान्त सूतसंस्कार कर्म्मणः स्मृत्या पितृक(र्त्त)त्वोक्तेः ।
समावर्त्तनस्यापरमिति विवाहात् प्राचीन सुतसंस्कारत्वात् ।
जीवत् पितृक समावर्त्तने पिता स्वपितृभ्योदद्यात् १(*) ।
अजीवत् पितृकश्चैव संस्कार्य्यस्तदा तद्भ्रात्रादयोदद्युरित्याहुः ॥

1161 **तथा च कात्यायनः—**

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु २(†) ।
पिण्डानोद्वाहनात्तेषां तस्याभावेतु तत् क्रमादिति ॥११८५॥
पिण्डशब्दोऽत्र श्राद्धपरः, अत्रऔद्वाद्वाहनादित्याङ अभिविधौ विवाह-पर्य्यन्तमित्यर्थः ।

**विवाहश्चात्र प्रथमः ।**

नान्दी श्राद्धं पिता कुर्य्यादाद्यपाणिग्रहे बुधः ।
अत ऊर्द्धं प्रकुर्व्वीत स्वयमेवतु नान्दीकमिति ॥११८६॥

1162. **इति सायणाचार्य्योक्तेः ।**

प्रागुक्त-तस्येति,— तस्य पितुरभावे तत् क्रमात् ।
असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः ॥११८७॥
इति स्मृत्युक्तोयः कर्त्तृक्रमस्तेन क्रमेण ज्येष्ठभ्रात्रादिः स्वपितृभ्योदद्या-
1163. दिति पारिजात कारादयः ।

1164. **हेमाद्रिस्तु—**

तस्य पितुर भावे यः पितृव्य मातुलादिः संस्कुर्य्यात् ।

---

१(*) जीवति पितायस्य स जीवत्पितृकः । स्वपितृभ्यः पिता दद्यात् सुत संस्कार कर्म्मणि' इति स्मृत्या ।

२(†) 'पितुः स्नातकालिकी शुद्धिरिति' इति स्मृते जातेष्टिषष्ठार्चनादौ पितुः कर्त्तृत्वेशुद्धिः तत् कृत्यदिवसे शुद्धिस्तस्य स्यादेवेति ।

तत् क्रमात् संस्कार्य्य-पितृक्रमाद्द्याम्न पितृभ्य इति व्याचख्यौ १(*)। एवं सति समावर्त्तनेपि पितैव नान्दीश्राद्धं कुर्य्यात्। तदभावे ज्येष्ठभ्रातादिः, तदभावे स्वयमेव कुर्य्यात्। उपनयनेन कर्म्माधि कारस्य जातत्वात्। एवमाद्य विवाहेऽपीति पृथ्वीचन्द्र-

1165. चन्द्रिकाकारादयः। वृद्धिश्राद्ध वदन्येष्वपि जीवत्पितृकस्याधिकारः श्रूयते—उद्वाहे पुत्रजनने पित्रिष्ट्यां सौमिकै मखे।

तीर्थे ब्राह्मण—आयातें जीवत् पितापि कुर्व्वीत ॥११८८॥

1166. जन्मादाविति हारीतः। पितुरिति—उद्वाहोऽत्र द्वितीयादिः, प्रथमे पितृकर्तृत्वोक्तेः। पुत्रजननपदं तद्विवाहान्त संस्कारपरम्। जीवत् पितापि कुर्व्वीत जन्मादाविति हारीतोक्तेः।

पित्रिष्टिश्चातुर्मास्ये प्रसिद्धा।

सौमिकेमखे, सोमयागे तृतीय सवने। तीर्थे गयाव्यति रिक्ततीर्थे।

महानदीषु सर्व्वासु तीर्थेषुच गयां विना।

जीवत् पितापि कुर्व्वीत श्राद्धं पार्व्वण धर्म्मवत् ॥११८९॥

1167. इति त्रिस्थलीसेतौ।

तदुक्तेरेव ब्राह्मणे आयाते विशिष्ट ब्राह्मणागमन।

1168. श्राद्धस्य ब्राह्मणः कलिः इति भारते वनपर्व्वण्युक्तेः २(†)।

षडिति—विहितान्तरस्यौपलक्षणम्।

1169. तद्विधानन्तु मैत्रायण्यपि—

आन्वष्टक्ये गया प्राप्तौ सत्यां यच्च मृतेऽहनि।

मातुः श्राद्धं सुतः कुर्य्यात् पितरि जीवति सति ॥११९०॥

जीवत् पितृक-श्राद्धे देवतादि विशेष माह,—

वृद्धे तीर्थे च सन्न्यस्ते जाते च पतिते सति ३(‡)।

येभ्य एव पिता दद्यात्तेभ्योदद्यात् स्वयं सुत इति ॥११९१॥

सन्न्यस्ते जातेच पतिते सतीति विशिष्ट विधानं प्रमाणान्तरेणाप्राप्तत्वात्। तेन च सन्न्यस्त पतित जीवत् पितृकस्य पितृकर्तृक-

---

१(*) 'स्वयं व्याचख्यौ' इति भिन्नः पाठः।

.. चातुर्मास्यं विष्णु शयनात्तदुत्थान कालं यावद्व्रतमिति।

२(†) 'ब्राह्मणः काल' इति पाठान्तरम्। ब्राह्मणामन्त्रणं आरभ्य कालो वा इत्यर्थो वा स्यात्।

षडिति—'उद्वाहे' इति वचनोक्त षट्सु इति ज्ञेयम्।

३(‡) सन्न्यस्ते गृहीतवेष सन्न्यासे इति।

श्राद्धमात्रेऽधिकारः, अन्यथा सन्न्यस्तपतितग्रहणं व्यर्थः स्यात्। न चतयोरूपरत्यनन्तरमपि सुतकर्त्तृकश्राद्धे सन्न्यस्तपतित पितृण देवतात्वे विधानार्थत्वेन नव्यर्थमिति वाच्यम्।

सन्न्यासिनोऽप्याब्दिकादि पुत्रः कुर्य्याद्‌ यथाविधि। इत्यादिवचनविरोधात्। १(*) स्व मातृमातामह श्राद्धलोप-प्रसङ्गाच्च तस्मादस्मदुक्तमेव साधु।

दर्शश्राद्धं गयाश्राद्धं श्राद्धञ्चापरपाक्षिकम्।
नजीवत् पितृकः कुर्य्यात्तिलैः कृष्णैश्च तर्पणम् ॥११६२॥

इत्यादि वचनम्, तत्तु सन्न्यस्तपतित-जीवत्पितृकान्य-विषयमित्यलं प्रसङ्गेन।

मृत मातृ-मातामह कोऽपि जीवत्पिता वृद्ध्यादि श्राद्धे पितृ (पितृ) मातामहादिभ्योदद्यान्न स्वकीयेभ्यः, येभ्य एव पितादद्यादिति नियमात् २(†)।

यद्रूपेभ्य इति तद्व्याख्यानात्। यच्छब्दवाच्येभ्य इति व्याख्याने
1170. लक्षणापाताच्च। वक्ष्यमाणवह्वृचपरिशिष्टन्तु तच्छाखीयानामेवेति केचित्। वयन्तु वृद्धिश्राद्धव्यतिरिक्तविषयोऽयं नियम इति ब्रुमः। वृद्धिश्राद्धेतु जीवत्पिता यदि पितृप्रतिनिधित्वेन श्राद्धकर्त्ता स्यात् तदा पितृ-पित्रादिभ्य एव दद्याद्‌ यदा तु, स्वसुतसंस्कारकृत्यं करोति तदा जीयत् पिता सुतसंस्कारे स्वमातृ-मातामहयोः कुर्य्यात्। तस्यां जीवितायां (जीवन्त्यां) मातामहस्यैवेति सूतसंस्कारं प्रकृत्य
1171. वह्वृचपरिशिष्टवचने विशेषोक्तेः। तच्छाखामात्रपरत्वे कारणाभावात्।

अन्तरो (२) जनकस्येज्या यावद्व्रतमनाहतम्।
समाहित व्रतः पश्चात् स्वान् यजेत पितॄन् सदेति ॥११६३॥

1172. वृद्धयाज्ञवल्क्य वचनेनैकवाक्यत्वाच्च।
जीवत्पितृकोऽपि स्वमातृ-मातादिभ्यो दद्यादिति ब्रुमः।
1173. प्रयोगपारिजातेऽप्येवं॥ अत्रेतिकर्त्तव्यतानि रूप्यते।
1174. पृथ्वीचन्द्रे, वृद्ध पराशर :—

मालत्याः शीतपत्रा वा मल्लिकाकुञ्जयोरपि।
केतक्याः पाटलाया वा देया माला न लोहिता इति ॥११६४॥

---

१(*) षाब्दिकादिकं साम्वत्सरिक श्राद्धादिकमित्यर्थः।
२(†) इति प्रागुक्तस्मृति वाक्य सार्थक्यादिति।

श्राद्धे मालानिषेधस्यापवादः । तथा,

सुवेशभूषणैस्तत्र सालङ्कारैस्तथा नरैः ।
कुङ्कुमाद्यनुलिप्ताङ्गैर्भाव्यन्तु ब्राह्मणैः सह ॥
स्त्रियोऽपि स्युस्तथाभूता गीतनृत्यादि हर्षिताः ॥११६५॥

1175. हेमाद्रौ, ब्रह्माण्डे,—

कुशस्थाने तु दुर्व्वाःस्युर्म्मङ्गलस्याभिवृद्धये ।
यद्वा कुशा अपि ग्राह्या स्तिलस्थाने यवास्तथेति ॥११६६॥

1176. छन्दोगपरिशिष्टे,—

प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा ।
उभयतो दैवे पैत्रे च, वैश्वदेवे द्वौ विप्रौ पित्र्यष्टादशेति विंशतिः ।
यद्वा, प्रतिवर्गे द्वौद्वाविति विश्वदेवेनसहाष्टौ विप्रा निमन्त्र्याः ।
अत्र विप्राभावे तिस्रो योषितोऽष्टौ कुलोद्भवाः, मातृवर्गे चतस्रः,
एवं मातामहीवर्ग इतष्टाविति हेमाद्रिः ।
अत्र पित्र्ये प्राङ्मुखा विप्रा उपवेशनीयाः ।
विप्रान् प्रदक्षिणावर्त्तं प्राङ्मुखानुपवेशयेत् ॥ इति ॥११६७॥

1177. हेमाद्रौ ब्राह्मात् । पाद्मेऽपि,—

1178. पित्र्ये च चतुरस्रंमण्डलमिति जयन्तः ।
( नात्राप ) मात्रेऽपसव्यकरणं न पित्रं तीर्थमिष्यते ।
ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान् ।
कृत्वार्घ्यं सम्प्रदातव्यं नैकैकस्यात्र दीयत इति ॥११६८॥

अस्यार्थः,—

पित्रादे द्वौ विप्रौ तयोर्द्दक्षिणहस्तौ संयोज्य प्रथमोपवेशितविप्र-करोपरि तन्त्रेण द्वयोरर्घ्यं दद्यादित्यर्थः ।

वह्वृच कारिकायान्तु—

दत्तार्घ्यादिकदेशःस्यादर्घदानं प्रतिद्विजम् ।
आवृत्तिरपि मन्त्रस्य प्रतिब्राह्मणमिष्यते ।
प्रतिद्विजं पृथक् कुर्य्यान्नैवेत्यर्घानुमन्त्रणमित्युक्तम् ॥११६९॥
मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् ।
गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः १(*) ॥१२००॥

१(*) 'मधुमध्विति' मधुवाता ऋतायते—
इत्यादि ऋक्त्रयम् । प्राग् गायत्री तत एतत्त्रयम् ।

नचाश्नत्सु जपेदत्र कदाचित पितृसूक्तकम् १(*) ॥१२०१॥
सम्पन्नमिति तृप्तास्थ-प्रश्नस्थाने विधीयते ।
सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ॥१२०२॥
अक्षय्योदकदानञ्च अर्घ्य दानवदिष्यते ।
षष्ठ्यैव नियतं कुर्य्यान्न चतुर्थ्या कदाचन ॥१२०३॥

1179· ब्राह्मे,—

पठेच्छाकुनिसूक्तञ्च स्वस्तिसूक्तं शुभन्तथा ।
नान्दीमुखान् पितॄन् भक्त्या साञ्जलिश्च समाह्वयेत् ॥१२०४॥

तथा,—

शाल्यन्नं दधिमध्वक्तं बदराणि यवांस्तथा ।
मिश्रीकृत्वा तु चतुरः पिण्डान् श्रीफलसन्निभान् ॥१२०५॥
दद्यान्नान्दीमुखेभ्यश्च पितृभ्यो विधिपूर्व्वकम् २(†) ।

1180 कात्यायनोऽपि,—

सर्व्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च ॥१२०६॥
संयोज्य यवकर्कन्धुरद्भिः प्राङ्मुखतस्ततः—

1181. इति श्राद्धकाशिकायाम् ।

प्राङ्मुखस्त्वथदर्भेषु दद्यात् क्षीराऽवनेजनम् ।
पिण्डान्दत्वा तथाक्षय्यस्थाने क्षीरंयवोदकम् ॥१२०७॥
द्वौ द्वौचाभ्युदये पिण्डा वैककस्मै विनिक्षिपेत् ।
एकं नाम्नाऽपरं तुष्णीं दद्यात् पिण्डं पृथक् पृथक् ॥१२०८॥

1182. वसिष्ठः—

प्राङ्मुखो दैवतीर्थेन प्राक्कृतेषु कुशेषु च ।
दत्वा पिण्डान्न कुर्व्वीत पिण्डपात्रमधोमुखम् ॥१२०९॥
नान्दीमुखेभ्यः पितृभ्यः स्वाहेति वा पिण्डदान—

1183. मन्त्र, इति नारायणवृत्तौ ।

1184. अत्र पिण्डाः कृता इत्युक्तम् । भविष्ये,—

पिण्डनिर्व्वपणं कुर्य्यान्न वा कुर्य्याद्विचक्षणः ।
वृद्धिश्राद्धे महाबाहो कुलधर्म्मानवेक्ष्य तु ॥१२१०॥

---

१(*) श्राद्धे पितृसूक्तं वेदोक्तं, ग्रन्थं, कठोपनिषदं, पितृसंहिताश्चावश्यंपठेदशक्तौ पाठयेदिति ।
२(†) नान्दीमुखे,—द्राक्षामलकमूलवदर-यवान् संहृत्य निवेदयेदिति ॥

केचित्तु—१(*)

साग्नेरत्र पिण्डदानमितरस्य तदभावः ।
आहिताग्नेः पित्रर्च्चनं पिण्डैरेवेति नियमात् ।
योऽग्नौ तु विद्यमाने हि वृद्धौ पिण्डान्न निर्वपेत् ।
पतन्ति पितरस्तस्य नरके स तु पच्यत—१२११॥

1185. इति वासिष्ठादित्याहुः । युक्तञ्चैतत्—

यावन्नात्राग्निसम्बन्ध उत्सन्नाग्नि स्तथैव च ।
तावद्वृद्धिषु सर्व्वासु सङ्कल्प-श्राद्धमाचरेत् ॥१२१२॥

1186. इति स्मृत्यन्तरात् । छागलेयः सङ्कल्प प्रकारमाह—

अग्नौ करणमर्घ्यञ्चावाहनं चावनेजनम् ।
पिण्डश्राद्धे प्रकुर्व्वीत पिण्डहीने निवर्त्तत इति ॥१२१३॥
तेनात्र भोजनस्यैव प्राधान्याद्य यदि विवेचनम् ।
तदा तस्यैवावृत्तिर्न पार्व्वणस्येति सिद्धम् ।

अत्र साग्नेरपि पाणिहोमएव ।

आण्वष्टक्यञ्च पूर्व्वद्यु रितिवाक्ये तथोक्तेः । इदञ्च बह्वृचविषयम् ।
अध्वर्यु शाखिनामग्नौ करणमेवेति-याज्ञिक-सम्प्रदायः २(†) ।

1187. पिण्डसंस्थानमाह, कात्यायनः ।

द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः ।
मातामहादिप्रभृतीन् एतेषामेव वामतः इति ॥१२१४॥

1188. एतेषां पित्रादित्रयाणाम् । ब्राह्मे,—

द्राक्षामलकमूलानि यवांश्च विनियोजयेत् ।
तानेव दक्षिणार्थञ्च दद्याद्विप्रेषु सर्व्वदा ॥१२१५॥

1189. कात्यायनः—

……अमूषु वाजिनमिति तान् विप्रांश्च विसर्जयेत् ।

अन्योऽत्र विशेषः । स्वस्वसूत्रतोऽवगन्तव्यः । अत्र साग्निरनग्निर्व्वादौ वैश्वदेवं कुर्व्वीत ।

---

१(*) शाखाभेद-सन्दर्भक्रमतभेद-देशाचारादि भेदैरा हुरिति ।

२(†) याजुषोऽध्वर्युः, उद्गाता छान्दोग्यः, ब्रह्मा पैत्यादयो यज्ञकर्म्मसु इताः । श्रुतिचोदित-शाखा-कर्म्मभेदेन प्रभिन्नाः स्युरिति । अन्यत् सर्व्वं श्रौतगृह्यसूत्रादिष्वस्ति ।

वृद्धौ चादौ क्षये चान्ते मध्ये जुह्वति पार्वणे ।
एकोद्दिष्टेनिवृत्ते तु वैश्वदेवो विधीयत इति ॥१२१६॥

1190. इति शांखायन परिशिष्टोक्तेः । हेमाद्रौतु,—

1191. शेषमन्नमनुज्ञाप्य वैश्वदेवक्रियान्ततः ।
श्राद्धा(दौ)हि श्राद्धशेषेण वैश्वदेवं समाचरेत् ॥१२१७॥

इति चतुर्विंशति मतान्नान्दीश्राद्धान्ते वैश्वदेव उक्तः । बह्वृचानामपि गृह्यवृत्त्यालोचनात्तथैवायाति । एवं सत्याचारतो व्यवस्था । सचायं नित्यवैश्वदेवस्यापकर्षउत्कर्षाविवेति ज्ञेयः । तेन रात्र्यादौ क्रियमाणे वृद्धिश्राद्धे न वैश्वदेव इति सिद्धम् । अत्र श्राद्धाङ्गतर्पणं नास्त्येवेत्युक्तं तर्पणप्रकरणे ।

1192. आब्दिक नान्दीश्राद्धयोः सम्पाते देवजानीये१(*) वृहस्पतिः—

एकस्मिन् वासरे स्यातां वृद्धिशाम्वत्सरावुभौ ।
पूर्व्वेषां वत्सरं कुर्य्याद् वृद्धिं कुर्य्यात्ततः परमिति ॥१२१८॥

अत्र जीवत्पितृकस्य विशेष उच्यते । तत्रानेके पक्षा दृश्यन्ते २(†) । जीवन्तं पितरं भोजयित्वा अपरयोः श्राद्धं कुर्य्यादित्येकः ।

1193. होमान्तमेव कुर्य्यादित्यन्यः । होमान्तमनारम्भोवेति कात्यायनोक्तेः ।
होमान्तः पितृयज्ञः स्याज्जोवे पितरिजा(ज्ञा)नतः ।

1194. पितरं भोजयित्वादौ पिण्डौ निर्वृणुयात परावितिं यज्ञपार्श्वोक्तेः ।
जीवतां पिण्डानग्नौ हुत्वा परेभ्यो देयमित्यपरः ।

1195. जुहुयाज्जीवेभ्य इत्याश्वलायनोक्तेः । जीवतामजीवना(ञ्च) वा

1196. देयमिति हिरण्यकेतुरिति निगमात् ।
तस्माज्जीवत् पिता कुर्य्याद् द्वाभ्यामेव न संशयः ॥१२१९॥

1197. इति भविषोक्तेः ।

द्वाभ्यामेवेत्यन्यः । एते पक्षाः कलौ निषिद्धाः ।
प्रत्यक्षमर्च्चनं श्राद्धे निषिद्धं मनुरब्रवीत् ।

---

१(*) द्वयोः सम्पाते, एकस्मिन् दिने उपस्थिते इति

२(†) 'नासौ मुनिर्यस्य मतं न भिन्नं' इति नियमाद् देशाचारभेदाद्वा अनेके मतभेदाः सन्ति तेषु एकं समाश्रयेदिति । शास्त्राचार—देशाचार—कुलाचार—स्वगाचाराश्चेति वाचस्पतीये उक्ता भेदाः ।

1198. पिण्डनिर्वपणं वापि महापातकसम्मितमिति ।
पृथ्वीचन्द्रे भविष्योक्तेः ॥१२२०॥

1199. स्मृतिचन्द्रिकायामप्येवम् । तस्मात् पितरि जीवति श्राद्धानारम्भ-
एवेत्येकः पक्षः ।
(स्व)सपितुः पितृकृत्येषु श्राद्धाधिकारो निवर्त्तते ।

1200. इति कात्यायनोक्तेः ।
जीवत् पितरि वै पुत्रः १(*) श्राद्धकालं विवर्जयेत् ।

1201. इति मनुक्तेश्च ।
इति हारीतोक्तेश्च । पितुः पित्रादिभ्यो दद्यादितिद्वितीयः ।
ध्रियमाणे तु पितरि पूर्व्वेषामेव निर्वपेत् ॥१२२१॥

1202. इति हारीतोक्तेश्च ।

1203. पितुः पितृभ्यो वा दद्यात् स पितेत्यपरा श्रुतिरितिकात्यायनोक्तेश्च ।
अयञ्च बहुसम्मतः पक्षः । अन्ये च पक्षाः शाखाभेदिनोऽवस्थेयाः ।
एवं जीवन्मातामहेनाप्यूहेन कार्य्यम् । मातामहानामप्येवं श्राद्धं
कुर्य्याद्विचक्षण, इति स्मृतेः । एवं स्वमातृ-मातामहयोर्मृ तयोरपि न-
दद्यात् । किन्तु—पितुरेव मातृमातामहयोर्दद्यात ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात् स्वयं सुतः ॥१२२२॥

1204. इति वचनादिति नारायणभट्टाः । मदनरत्नेतु—
जीवत् पिता स्वमातृ-मातामहयोर्मृ तयोस्त (स्स)तोतयोरेव दद्यात् ।

1205. पितरोजनकस्येज्या—इति स्मृतेरित्युक्तम् । कालादर्शेऽप्येवमुक्तम् ।
गौड़ाद्यास्तु, जीवन्तंप्रतिदद्याद्वा प्रेतायान्नोदकेद्विज १(*) ।

1206. इति स्मृतितत्त्वे कात्यायनोक्ते रित्याहुः ।
दाक्षिणात्यास्तु,—२(†)
पितृवर्गे मातृवर्गे तथा मातामहस्य च ।
जीवे तस्मिन् सुताः कुर्युः पितामह्याः सहैव तु ॥१२२३॥
तस्याञ्चैव तु जीवन्त्यां तस्याः श्वश्र्वेतिनिश्चयः ।

---

१(*) अत्र जीवन्तमतिदद्यादिति भिन्नः पाठः ।
२(†) मद्रदेशीयाः—तेतु कर्णाट-द्राविर-केरल-कोङ्कन प्रभृति देश वासव्याः प्रसिद्धा दाक्षिणात्या इति ।

1228. **इति हारीतोक्तेरित्याहुः।**

तस्मिन् भर्तरि तस्मिन्मृते तु तेनैव सपिण्डनस्योक्तेः।
एवं पतित सन्न्यस्त-जीवत्पितृकस्यापि ज्ञेयम्।
वृद्धौ तीर्थे च सन्न्यस्ते ताते च पतिते सति।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात् स्वयं सुतः॥१२२७॥

1229. इति षट्त्रिंशन्मतात् सन्न्यासस्यादौ मृते तु तद्राप्येवं दद्यात्।
ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ इति॥१२२८॥

**इति स्मृतौविशेषोक्तेः।**

एवंसति जीवत्सन्न्यस्तादिपितृकस्याविशेषात् सर्व्व-श्राद्धेऽधिकारः।

1230. **यत्तु हेमाद्रौ,—**

दर्शश्राद्धं गयाश्राद्धं श्राद्धञ्चापरपाक्षिकम्।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणमिति।

1231. कौण्डिन्यवचनं, तत्सन्न्यस्तपित्राद्यतिरिक्तविषयमित्युक्तम् प्राक् १(*)॥

## अथ पितामहादौ जीवति श्राद्धप्रकारमाह—

1232. **हेमाद्रौ, विष्णुः—**

अथ पितामहादौ जीवति श्राद्धप्रकारः—

पितरि जीवति यः श्राद्धं कुर्याद्व येषां पिता कुर्यात्तेषामेव कुर्यात्पितरि पितामहे च जीवति येषां पितामहः, पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्।

अथ यस्य पिता प्रेतः स्यात् स पित्रे पिण्डे निर्वापयति २(†) पितापराभ्यां द्वाभ्यां दद्यात्। यस्य पिता पितामहश्च प्रेतौ स्यातां स-

---

१(*) 'तीर्थे तिथि विशेषे च गङ्गाया प्रेतपक्षके। निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिल मिश्रितम्' इति स्मृतौ चान्यत्तिलतर्पणविषये।

२(†) 'जीवन्तमति दद्यात्' इति भिन्नः पाठः।

:: अत्र 'विधाय' इत्यपरः पाठः।

ताभ्यां पिण्डौ दत्वा(प्र)पितामहाय दद्यात्। यस्य प्रपितामहः प्रेतः स्यात् स तस्मै पिण्डं निधाय, प्रपितामहात् पराभ्यांद्वाभ्यां दद्यात्। यस्य पितामहः प्रपितामहः प्रेतः स्यात् स तस्मै पिण्डं निधाय प्रपितामहात् पराभ्यां द्वाभ्यान्दद्यात्।

यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे पिण्डं निधाय पितामहात् परं द्वाभ्यान्दद्यात्।

मातामहानामप्येवं श्राद्धं कुर्य्याद्विचक्षणः।
मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् इति ॥१२३०॥

अत्रैवमिति वचनान् मातामहे जीवति तत् पित्रादिभ्यो दद्यात्। यथा तत्र त्रिषु जीवत्सु नैव कुर्य्यात्।
1233. तथात्रापीति सर्व्वमति द्रष्टव्यम्। एवं मातृ-जीवनेऽपीति कालादर्शे।

इदन्तु,—

दर्शादीश्राद्धपरं, नान्दीश्राद्धे तु भवत्येव।
दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्चेत्तुतयं यदि ॥१२३१॥

इति मनूक्तेः सर्व्वत्र विकल्पः। स च देशाचाराद् व्यवतिष्ठते। त्रिषु
1234. जीवत्सु नैव कुर्य्यादित्याश्वलायनपरिशिष्टोक्तेः। अत्र जीवत्पितृकस्य प्रसङ्गान्नच तत्र विविच्योक्त-सुज्ञानाय सर्व्वत ··· स्याप्युच्यते १(*)।

तथाहि,—

स्नानसन्ध्याब्रह्मयज्ञोपासनादिनित्येषु, ग्रहणस्नानादिनैमित्तिकेषु, लक्षहोम-तुलापुरुषादिकाम्येषु च कर्म्मसु, विशेषाभावादप्रतिबद्ध एवाधिकम्। एवमेव नि··षु मद्यपानादि निषेधेषु, नैमित्तिकेषु गर्भिणीपतेः समुद्रेस्नान-श्राद्धभोजन-शववहन-दूरदेशगमनादिषु निषेधेषु, काम्येष्वायुस्कामादेः-पूर्व्वादीना ··· मग्रहणादिषु२(†) वर्जनरूप पर्य्युदासेष्वप्यविशेषादप्रतिषिद्ध एवाधिकारः।

येषु तु, वचनादनधिकार स्तस्य तान्युच्यन्ते ॥१२३२

१(*) 'विशेष्योक्तं सर्व्वत्रस्याप्युच्यते' भिन्नः पाठः।
२(†) 'पुर्व्वादीनामग्रहणादिषु, इत्यन्यः पाठः।

1235. **तथाच वृद्धमनु :—**

पादुके चोत्तरीयञ्च तर्जन्यां रौप्यधारणम् ।
न जीवत्पितृकः कुर्य्याज्ज्येष्ठे भ्रातरि जीवति इति ॥१२३२॥
पादुके—काष्ठनिर्म्मिते । निरुपपदपादुकाशब्दस्य तत्रैव शक्तेः ।
उत्तरीयमुपरिवासोमात्रम् । न किन्तु सग्रन्थिपरिमण्डलवस्त्र-मुत्तरीयं कुर्य्याद् । वस्त्रोत्तरीयाभावे, त्वेकाङ्गुलं द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वाससूत्रैरेव कृतं परिमण्डलं ( वस्त्र ) मुत्तरीयं कुर्य्यात् ।

1236. **इति जातूकर्ण्योक्तमुत्तरीयं निषिद्धम् ।**

एतेनैव 'यज्ञोपवीते द्वे धार्य्ये श्रौते स्मार्त्ते च कर्म्मणि ।
तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते । इति ॥१२३३॥

1237. प्रयोग पारिजाते विश्वामित्रोक्तमुत्तरीयस्थानीयं तृतीयमुपवीत-मपि निषिद्धम् । १(*)
उपरि वस्त्रमात्रं तु तस्यापि भवत्येव ।
एकवस्त्रो न भुञ्जीयान्न कुर्य्याद्देवतार्च्चनम् ।
न चार्च्चयेद्द्विजाञ्चान्यः कुर्य्यादेवं विधो नरः ॥१२३४॥

1238. इति गोभिलेन सामान्यतो निषिद्धत्वात् ।
एवंरूप्यस्यापि मुद्रिकारूपस्य तर्जन्यां धारणं निषिद्धम्, न रूप्य-मात्रस्य । अन्यथा रूप्यमयमणिबन्धालंकारादेरपि वर्जनप्रसङ्गात् ।

**आधानमपिनेत्याह, सुमन्तुः—**

ज्येष्ठभ्राता यदा तिष्ठेत् पिता वापि पितामहः ।
कनिष्ठःपुत्रपौत्राणामाधानंनैव कारयेत् ॥१२३५॥

---

१(*) 'सदोपवीति ना भाव्यं सदाबद्ध शिखे नतु । विशिखे नोपवी तेन यत् करोति न तत कृतम्' ॥
एक वस्त्रे ण कृत्यानुष्ठान निषेधाद
वस्त्राभावे तृतीयं चतुर्थंच धार्य्यम् ।
तद ग्रन्थान्तरे चोक्तम् ।

इति यदा पित्रादिरकृताधानस्तिष्ठेत्तदेतिव्याख्येयम् । मृतपितृकस्यापि पितामहे जीवति नाधिकार इति दर्शयितुं पितामहग्रहणम् । तत्राप्यनुज्ञायां नायं निषेधः ।

1239. अनुज्ञातस्तु कुर्व्वीत शङ्खस्यवचनं यथेति ।

सुमन्तुक्तेरेव ।

अग्रजस्तु यदानग्निराद्ध्यादनुजः कथम् ।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥१२३६॥

इति बृहद्वसिष्ठोक्तेः ।

पिता पितामहो यस्य त्वग्रजो वात्वनग्निमान् ।
1240. तपोऽग्निहोत्रमन्त्रेषु न दोषपरिवेदन इत्युशनसोक्तेश्च १(*) ॥१२३७॥
अत्र तपो वानप्रस्थाश्रमः २(†) ।
अग्निहोत्रं तदुपकारकमाधानम् । सुमन्तुवाक्येनैकवाक्यत्वात् ।
मन्त्रो मन्त्रसाधनम् ३(‡) । एवमेव सोमयागादिष्वपि द्रष्टव्यम् ।

1241. तथाच, त्रिकाण्डमण्डनः—

परीष्टिदोषसम्प्राप्तौ न यष्टव्यं कदाचन ।
दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसाग्रहम् ।
अग्निहोत्रं विवाहञ्च प्रयोगे प्रथमे स्थितम् ॥
न कुर्याज्जनके ज्येष्ठे सोदरे चाप्यकुर्व्वतीति ॥१२३८–३९॥

अत्र विवाहग्रहणं भ्रातृमात्रविषयम् । प्रथमग्रहणं पुनराधानादौ पित्रादेरकृतपुनराधानादित्वेन(स) पुत्रादेरदोष इति ।

1242. दर्शयितुं अपिशब्देन सुमन्तुः—

पितामहः संगृहीतसोदरग्रहणं असोदराणां अदोष इति दशपितृं क्षेत्रजादा···वनिर्ज्ञाते विद्यमानेऽपि४(ऽ)सोदरेणाधिकारविज्ञातोऽस्ति ।

---

१(*) 'ततोऽग्निमान्, इति पाठान्तरम् ।

२(†) ननु योगसूत्रोक्तं तपः ज्ञेयम् ।

३(‡) अत्र तत्तत्कर्म्मसमुत्युक्तमन्त्रैः कार्य्य साधनं ज्ञेयम् ।

४(ऽ) 'क्षेत्रजानामप्यज्ञाते विद्यमानेऽपि, इति भिन्नः पाठोऽस्ति ।

1243. भिन्नोदर्येऽपि चौरस इति मण्डनोक्तेरेव, यागादावप्याज्ञायां न दोषस्तेनैवोक्तः ।
पिता यस्याग्रजो भ्राता न कुर्याद्वा पितामहः ।
ना (ता)पोऽग्निहोत्रं यज्ञं वाऽऽज्ञया कुर्यात्कठाशयादिति ।

क्वचिदाज्ञांविनाऽप्यदोष इत्युक्तं सुमन्तुना ।
व्यसनासक्तचित्तो वा नास्तिको वाऽप्यथाग्रजः ।
कनीयान् धर्म्मकामश्चेदाधानमथ कारयेत् ॥ इति ॥१२४०-४१
अग्रज इति पित्रादेरूपलक्षणम् । आधानमिति यागादेः ।

अथवेति,—
अथवेति,– स्मृत्यन्तरोक्तजात्यन्धादेः संग्रहः ।

1244. तथा च कात्यायनः—
देशान्तरस्थक्लीवैकवृषणांश्च सहोदरान् ।
वेश्यानिष्ठांश्च पतितान् शूद्रतुल्यातिरोगिणः ॥१२४२॥
जडमूकान्धबधिरकुब्जवामनकुष्ठकान् ।
अतिवृद्धानभार्य्यांश्च कृषिसक्तान्नृपस्य च ॥१२४३॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।
कुटिलोन्मत्तरोगांश्च परिविदन्नदूष्यतीति ॥१२४४॥

1245. पितुराज्ञायां सत्यामपि नाधेयमित्युक्तं त्रिकाण्डमण्डने ।
न ज्येष्ठे श्रद्धाविहीने सत्याधानं तदनुज्ञया ।
पितुः सत्यप्यनुज्ञाने नादधीतं कदाचन ॥ इति ॥१२४५॥
अत्र पितुरधिकारित्वे सतीति ज्ञेयमिति केचित् ।
अन्येत्वनधिकारित्वेऽपि नेत्याहुः ।

युक्तश्चैतत्—
यदातु, कादाचित्क-नास्तिक्येन तदभावे पित्रादेराधानादेरकरण १(*) संभावनायां तदनुज्ञयापि नाधिकारः पुत्रस्येति ।

---

१(*) अत्र '-देककरण सम्भावनायां' इत्यन्य: पाठः ।

1246. **तथा दर्शश्राद्धादावप्यनधिकारः ।**

स (स्व) पितुः पितृकृत्येषु अधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिरिति ॥१२४६॥

1247. **कात्यायनोक्तेः ।**

जीवत्पितुर्नोक्तमिति नियमोक्तेश्च । पितृकृत्यानि तु—श्राद्धतर्पण-स्वधाकारपितृ-तृप्त्यर्थदानादीनि । पितृशब्दस्त्विह सपिण्डीकरणान्तश्राद्धजन्य-पितृभावमापन्नमनुष्यपितृणभिधत्ते । न तु दिव्यपितृनग्निष्वात्तादीन् । जीवपितृकोप्येतानन्यांश्चेतर इति कात्यायनेन जीवत्पितृकस्यापि दिव्यपितृतर्पणाभिधानात् ।

**उभयपरत्वे प्रमाणाभावाच्च ।**

अयञ्च निषेधो नित्यनैमित्तिककाम्यानि, अहरहरमावास्यादौ, सूर्य्य-चन्द्रग्रहणादौ, पुत्रपश्वादिफलार्थतया विहितानि तर्पणश्राद्धानि पितृकृत्यानि विषयीकरोति । एवं सामान्यतो निषेधे प्राप्ते प्रतिप्रसवः

1248. **श्रूयते, मैत्रेयपरिशिष्टे,—**

उद्वाहे पुत्रजनने पुत्रेष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुरिति ॥१२४७॥

जीवतः पितुः पुत्रस्येति शेषः । यद्वा, अनादरे षष्ठी, जीवन्तं पितरमनादृत्येति व्याख्यातं चैतत् पूर्व्वम् ।

षडिति—स्वकृतगणनागणनानुवादः १(*) । न तु परिसंख्यार्थम्, मैत्रेय परिशिष्ट एव श्राद्धान्तराधिकारकथनात् ।

**तथाहि,—**

आन्वष्टक्यं गयाप्राप्तौ सत्यां, यच्च मृतेऽहनि ।
मातुः श्राद्धाद्धृतं सुतः कुर्य्यात् पितर्य्यपि च जीवति इति ॥१२४८॥

---

१(*) 'स्वकृतगणनाद् गणनानुवादः,' इति भिन्नः पाठः ।

इदमपि व्याख्यातं प्राक्। गयाश्राद्धञ्च प्रासङ्गिकं।
गयांप्रसङ्गतो गत्वा मातुः श्राद्धं समाचरेदिति स्मृतेः।

### नतु तदुद्देशेन गयांगत्वा कार्य्यम्।

दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपाक्षिकम्।
न जीवत् पितृकः कुर्य्यात्तिलैः कृष्णैश्च तर्पणम् ॥१२४६॥

1249. इति लौगांक्षिणा तन्निषेधात्। दर्शश्राद्धं पिण्डपितृयज्ञम् १(*)।
आपरपक्षिकं-कृष्णपक्षान्तर्गतमन्वष्टकाश्राद्धम्।
कृष्णैरिति विशेषणाज्जीवत्पितृकः शुक्लतिलैस्तर्पयेदिति केचित्।

### वयन्तु,—

कृष्णत्वस्योद्देश्यविशेषणस्याविवक्षया तिलमात्रनिषेध इति साधु-प्रतीमः। तर्पयेदित्युक्ते जीवत्पितृकाधिकारिक श्राद्धे नतिल निषेधः।

यदपि श्राद्धाङ्गभूतमनुष्यपितृतर्पणं तदपिजीवत् पितुर्भवत्येव। साङ्गेऽधिकारोक्तेः।

### केचित्तु—

जीवमानः पितायस्य माता यदिविपद्यते।
तस्याः श्राद्धं सुतः कुर्य्यात्तर्पणं न समाचरेत् ॥१२५०॥

इति संग्रहवचनाद् नमातुः श्राद्धाङ्गतर्पणं भवतीत्याहुः।

### तथा, जीवत्पितुर्यमभीष्मतर्पणञ्च।

जीवत्पितापि कुर्व्वीत तर्पणं यमभीष्मयोः।

1250. इति पद्मपुराणोक्तेः।

यमतर्पणं कार्त्तिककृष्णचतुर्द्दश्यां विहितम्।

---

१(*) दर्शश्राद्धम्, अमावास्यायां कृत्यमिति कीचन विदः प्राहुः।

**भीष्मतर्पणन्तु—**

कार्त्तिक शुक्लैकादश्यादिपुर्णिमान्तं विहितम ।
यद्पि तीर्थे श्राद्धाशक्तौ तर्पणं विहितम् ,
तत्तर्पितस्य भवत्येव श्राद्धवत् ।

1251. **तथा, अन्यत्राप्यधिकारः कात्यायनोक्तः,—**

ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्य साविति ॥१२५१॥

**अस्यार्थः—**

दर्पादिना ब्राह्मणगवाद्यभिभवार्थं प्रवृत्तस्य(१)ब्राह्मणादिभिर्हतस्यात्मघातित्वात् सम्वत्सरपर्य्यन्तं असंस्कार्य्यत्वात् , तन्मध्येपुत्रस्यापत्यजनने तीर्थप्राप्त्यादौसति येभ्यः पितादद्दाति तेभ्योदद्यात् ।
एवं पितरि पतिते सङ्गवर्जिते, सन्नचस्तेऽपि विद्यमाने ।

वृद्धौ तीर्थेच सन्नचस्ते पतिते सङ्गवर्ज्जिते १(*) ।
येभ्य एव पित्तादद्यात्तेभ्योदद्यात् सुतः स्वयम् ॥१२५२॥

1252. **इति स्मृत्यन्तराच्च ।**

एवञ्चात्र पूर्व्वोक्तविषये, जीवत्पितृकस्य नित्यामावास्यादिषु , नैमित्तिकी ग्रहणादिषु, काम्य ।आयुरादिफलकेषुच श्राद्धेषु अधिकार इति सिद्धम् ।

व्युत् क्रमाच्च मृत इति, व्युत्क्रमेणमृतस्य सपिण्डीकरणाभावपक्षे तज्जन्यपितृत्वाभावेन सम्प्रदानत्वाद्, येभ्यः पितादद्यात्तेभ्यः पुत्रोदद्यादित्यर्थः । एवं व्युत्क्रममरणाभावेऽपि, सपिण्डीकरणपर्य्यन्तं वर्षमध्ये पुत्रजननादौसति, तेभ्य एव दद्यादिति सिध्यति । द्वादशाहेसपिण्डीकरणे तु तदादिभ्यएव देयम् २(†) ।

---

१(*) इदं प्रागुक्तस्यापि विषयस्य स्पष्टी करणमत ।
२(†) 'द्वादशाहः प्रशस्यते' इति प्रागुक्तम् ।

एवं जीवत् पितृकस्य दौहित्रस्यच प्रतिपद्याश्विने शुक्ले श्राद्धेऽधिकारः श्रूयते ।

ज़ातमात्रोऽपिदौहित्रीदौहित्रो विद्यमानेऽपि मातुले ।
कुर्य्यान्मातामहश्राद्धं प्रतिपद्याश्विनेसिते ॥१२५३॥

1253. **इति ब्राह्मोक्तेः ।**

जात मात्रस्य इत्युक्तेः पितृश्राद्धवदनुपनीतस्या प्यधिकार इति गम्यते ।
एवं अपुत्रपितृव्यवार्षिकेऽपि, अपुत्रस्य पितृव्यस्य श्राद्धादि पितृवद्भवे-
1254. दिति सुमन्तूक्तेः । पितृवद्भवेदित्युक्तेस्तदन्त्येष्टयादिकेऽप्यधिकारः ।
तथाऽपुत्रज्येष्ठभ्रातुः श्राद्धेऽपि 'ज्येष्ठभ्राता पितुः सम'इति स्मरणात् ।

**तथा मातृ-सपत्नी श्राद्धेऽपि,—**

सर्व्वासामेक पत्नीना मेकाचेत् पुत्रिणी भवेत् ।
सर्व्वास्तास्तेन पुत्रेण पुत्रिण्योमनुरब्रवीत् । इति ॥१२५४॥

1255. **मनूक्तेरेव ।**

तथा, अपुत्र मातामह वार्षिक श्राद्धेप्यधिकारः ।
यथा, व्रतस्थोऽपि सुतः पितुः कुर्य्यात् श्राद्धक्रियां नृप ।
उदकाप्त्यां(द्यां) महाबाहो दौहित्रोऽपि तथार्हति ॥१२५५॥

1256. **इति मात्स्योक्तेः ।**

अपुत्रस्यापि दौहित्रो वार्षिकं पितृवच्चरेत् १(*) ।

1257. **इति स्मृतेश्च ।**

इदमपि मातामह्या मसत्यां वेदितव्यम् ।
विद्यमाना चेत् सैवाधिकारिणी ।
भार्य्या-पिण्ड' पतिर्दद्याद् भर्त्रे भार्य्या तथैवचेति २(†) ॥१२५६॥

---

१(*) दौहित्र भागिनेययोरवाधिकारः ।

२(†) भार्य्यायाः पतिः, पत्युश्चपत्नी चाधिकारिणी स्यात् ।
'पत्युर्णो यज्ञसंयोगे' इति सूत्रात् ।

1258. **शङ्खोक्तेः ।**

1259. अपुत्रा पुत्रवत् पत्नीत्यौशनसोक्तेश्च ।
अपुत्रायां अपि भार्य्यायाः सपत्नी पुत्र सद्भावे स एव कुर्य्यान्न भर्त्ता, पितृ-पत्न्यः सर्व्वा मातरः ।

1260. **इति गौतमोक्तेः ।**
सर्व्वासामेक पत्नीनामिति सुमन्तूक्तेः ।

1261. **तथा-मनुक्तेश्च ।**
दौहित्र भ्रातृ पुत्रयोः समवायेतु मृतस्य विभक्तत्वे दौहित्र एव कुर्य्यात् । पिण्डदोऽशं हरेच्चैषां पूर्व्वाभावे परः पर—

1262. **इति मनूक्तेः । ात्नीसद्भावेतु सैव ।**
अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तत् पिण्डं कृत्स्नमंशं लभेत चेति ॥१२५७-६०॥

**तदुक्तेरेव ।**
मृतस्या विभक्तत्वे तु भ्रातृ पुत्रएव कर्त्ता ।
भ्रातृणामेकजाताना मित्यनन्तरोक्त स्मृतेः ॥१२६१॥
एवं भ्रातृ-तत् पुत्र समवाये भ्रातैव कर्त्ता पूर्व्वाभावे परः पर इत्यंश-हरत्वेन प्राथम्यात् । एव मेवान्यदप्यूह्यम् ।
ग्रन्थ गौरव भयान्नात्र प्रपञ्चयते ।

**यत्तु,—**
न जीवत् पितृकः कुर्य्या च्छ्राद्धमग्नि मृते द्विजः ॥१२६२॥

1263. **इति सुमन्तु वचः,**
तन्न सामान्येनाना हिताग्नि जीवत् पितुः श्राद्ध निषेधके ।
तथात्वे मात्रादि वार्षिक श्राद्धादेरकरण प्रसङ्गात् ।

किन्त्वग्नि साध्येष्वन्वष्टकादिष्वग्निं बिना जीवत पितृको नाधि-कारीत्येवं परम् (कल्प्यते) ।

**यथा,—**

न दर्शेन विना श्राद्धं आहिताग्नेर्द्विजण्मनः १(*) ।

1264. **इति मनुवचनम्,—**

मृत पितृ कस्याप्यन्वष्टकाद्यकरण प्रसङ्गाद्, यथा श्रुत परित्यागेनाग्नि साध्येषु, दर्शे विना, पिण्ड पितृयज्ञ कल्पं विना साग्निको नाधिकारी-त्यर्थं परं कल्प्यते, तथेदमपि कल्पनीयम् ।

इदम प्यारब्ध पिण्ड पितृयज्ञ स्यैव भवति ।

अनुष्ठित प्रकृतेरेव विकृतावधिकारात् ।

तदनारम्भपक्षे होमान्तपक्षे-अनाहिताग्नित्वे च स्मार्त्त श्राद्ध विधितः प्राप्तं श्राद्धं भवत्येव वाधका भावात्, वैपरीत्ये वाधकोक्तेश्च ।

एवं च जीवत् पितृकस्य विहित श्राद्धेऽधिकारोनिर्वाध इति सिद्धम् ।

**तत्राप्यङ्गे विशेष उच्यते ,—**

न जीवत् पितृकः कुर्य्याज्जानुपातञ्च नीविकम् ( काम् ) ।
उपवीतं प्रकोष्ठस्थं कारयेन्नोर्द्धतः स्थितम् ॥१२६३-६७॥

1265. **इति वृद्ध हारीतोक्तेः ।**

जानुपातो वामजानुपातः ।

**नीविका-नीवीवन्धः ।**

प्रकोष्ठो वामहस्त मणिवन्धाग्र-प्रदेशः २(†) ।

1266. **वृद्धशातातपोऽपि,—**

अपसव्यं द्विजाग्रथाणां पित्रे सव्वत्र कीर्त्तितम् ।
आप्रकोष्ठात् प्रकर्त्तव्यं मातापित्र्योस्तु जीवतोरिति । तथा, श्राद्धे-तर्पणेच स्वाङ्गपात्रं जीवत् पितु र्निषिद्धम् , सत्यव्रतेन ।
स्वर्ण ( शङ्ख ) मौक्तिकहस्तेन कर्त्तव्यं पितृतर्पणम् ।
नजीवत् पितृकः पित्र्यं कुर्य्यात् स्वाङ्गेनधारयेदिति ॥१२६८॥

---

१(*) आहिती गृहीतो वैधोऽग्निर्येन, तेन दर्शं श्राद्धं विना अन्य श्रा ं न विधेयम् ।

२(†) अन्य: गृन्थाभ्यन्तरे प्रवरकः ।

,, 'स ं प्रकीर्त्तितम्' इति भिन्नः पाठः ।

पित्र्यं—मनुष्यपितृतर्पणादिकर्म्म । दिव्यपितृतर्पणन्तु भवत्येव । जीवत्
1267. पितृकोप्येतानन्यां श्चेतर इति कात्यायनसूत्रात् । एतान्देवर्षिदिव्य-
पितॄन् । च शब्दाद्देवर्षिदिव्यपितॄनपि तर्तयेदित्यर्थः १(*) ।

तथा,—

1268. न जीवत् पितृकः कुर्य्याद्वस्त्रनिष्पीड़नं बुध; इति पुराण समुच्चयोक्ते स्तर्पणान्ते वस्त्रनिपीड़नमपिनिषिद्धम् । तर्पण प्रकरणात् सन्न्यस्त-पतित जीवत् पितृकस्यतु प्रात्यहिकतर्पणमपि (पितुः) पित्रुद्देशेन भवति । वृद्धौ तीर्थेच सन्न्यस्ते जाते च पतिते सति ।

इति वचनात् ।

1269. एवं जीवत्पितृपितामहकस्यापि त्रिषुजीवत्सुनैवाधिकार इति विष्णु-णोक्तम् । पितरि जीवति येषां पिताकुर्य्यात्तेषां कुर्य्यात् । पितरि-पितामहेच जीवति येषां पिताकुर्य्यात्तेषां कुर्य्यात्, पितरिपितामहेच जीवति, येषां पितामहः पितरिपितामहेच प्रपितामहेचजीवतितद नैवकुर्य्यादिति ।

एतेन वृद्धि-तीर्थ-सन्न्यस्तपितृकत्वादौ, जीवत्पितृकस्येव वृद्धितीर्थ-सन्न्यस्त पितामहकत्वादौ, जीवत्पितृपितामहकस्यापि पितामह पितृभ्यः श्राद्धं भवतीति गम्यते ।

अत्र पितुः पितामहस्यवा, पितृ-पितामह-प्रपितामहाणामित्यादिप्रयोगो-ज्ञेयः । निगमेषु जीवत्सु प्रपितामहपितृभ्योऽपि देयमित्युक्तम् ।

यथा,—

येभ्योवापि पितातेभ्योदद्याद्वैतानकर्मणे ।
दद्यात्तिभ्यः परेभ्यस्तु ।
जीवत् पितृकः पित्रासह विभक्तस्तदा—
एकपाकेन वसतां पितृदेवद्विजार्च्चनम् ।

---

१(*) अत्र दिव्यपितृगणाः 'कव्यवाड़नलसोमादयः । अग्निष्वात्तादयश्च । चन्द्रलोकादुपरि पितृलोकः । 'विधूर्द्धदेशे पितरो वसन्ति' इति भास्कराचार्य्याः ।

एवं भवेद् विभक्तानां तदेवस्याद् गृहेगृहे ॥ इति १(*)

1270. बृहस्पत्युक्ते वैश्वदेवादिकमपि कुर्य्यात् । तत्र पञ्चमहायज्ञेषु स्वधा-पितृभ्य इति पितृयज्ञस्य, यदा सर्व्वशाखाप्रत्ययन्यायेन नित्यश्राद्ध-रूपत्वं तदा पितृयज्ञं न कुर्य्यात् ।
न जीवत् पितृकः श्राद्धं कुर्य्यादिति निषेधात् ।

## यदातु,—

भूतयज्ञानन्तरं पितृभ्यः स्वधानम इति मन्त्रेणदीयमानवलिरूपत्वमेव, न नित्यश्राद्धरूपत्वम् ।
तन्मते मनुष्यपितृुद्देशाभाद् वाब्रह्मयज्ञः भवत्येव ।
जीवत्सन्न्यस्तपतित-पुत्रस्य तूभयरूपोपि भवतीतिनिष्कर्षः ॥१२६६॥

## यथा,—

नाभिमात्रे जले गत्वाकृत्वा केशान्द्विधा द्विजः ।
स्नानंकुर्य्यात् प्रयत्नेन देवादीनाञ्च तृप्तये ॥
जीवत् पितातु कुर्व्वीत दक्षिणे केशसञ्चयान् इति ॥१२७०॥

1271. **मातृस्ये, योगि याज्ञवल्क्यः ।**

दर्शे स्नानंन कुर्व्वीत मातापित्रोस्तु जीवतोः ।
पुत्रः कुर्व्वन् निराचष्ट पित्रोरुन्नतिं जीविते ॥१२७१॥
इति । एतच्छीतलोदक विषयमिति शिष्टाः ।
उष्णोदकविधेरेवमादि- विषयत्वस्यैव सम्भवात् ॥१२७२॥
मातापित्रोरित्युद्देश्यगतमपि साहित्यं विवक्षितम् ।
तेन मातरि जीवत्यामपि मृतपितृकस्यापि न निषेधः ॥१२७३॥

---

१(*) दिव्य पितरः—अग्निष्वात्मादयः क्रव्यवाल नलषो मादयः ।

२(†) पञ्च महायज्ञाः, गृह कर्त्तव्य पञ्च प्रकारक नित्य कर्म्माणि—
यथा,—'पाठोहोम श्चातिथीणां स पर्य्या तर्पणं वलिः ।
एतैः पञ्चमहायज्ञा ब्रह्मयज्ञादि नामकैः' ॥
अन्यत् (१) स्मृती गृह्यसूत्रेचास्ति ।

३(‡) स्मृत्यन्तरेव,—अमावास्यं गयाश्राद्धं—दक्षिणामुख भोजनम् । न जीवत् पितृकः कुर्य्यात्-कृतेव पितृहा भवेत ।

तीर्थाभावेतु कर्त्तव्यं उष्णोदकपरोदकैः १(*) ।।१२७४।।

1272. इति यमेन विशेषोक्तेः। एवं ग्रहणादावपि द्रष्टव्यम्। नैमित्तिकवत् काम्येष्वप्येवं बलवत्वमूह्यम्।

**तथा,—**

मुण्डनं पिण्डदानञ्च प्रेतकर्म्मच सर्व्वशः।

1273. न जीवत् पितृकः कुर्य्याद् गुर्व्विणीपतिरेवच इति दक्षः ।।१२७५।।
अत्र पिण्डदाननिषेधः पिण्डपितृयज्ञादिविषयः, विशिष्योक्तं मातृ-क्षयाहादौ भवत्येव, मुण्डनन्तु सामान्यविधिप्राप्तं रागप्राप्तञ्च, यथानु

1274. भाविनां च परिवपनमित्यापस्तम्बोक्तम्।
यत्त, नित्यनैमित्तिककाम्यत्वेन(च)वपनं तत्तु भवत्येव।

**तत्र नित्यम् ,—**

चौलोपनयन-व्रत-विसर्गाधान-दर्शपौर्णमास-ज्योतिष्टोमादिषु विहितं ज्ञेयम्। नैमित्तिकन्तु—तीर्थप्राप्ति प्रायश्चित्त-मातृमरणादौ ज्ञेयम्।

**काम्यन्तु,—**

( कामतः ) तीर्थयात्रादौ विहितम्। न चैतदपि जीवत्पितृकातिरिक्त-विषयमिति वाच्यम्, चौलादौ तदभावप्रसङ्गात्। नैमित्तिककाम्ययोरपि मुण्डनयोः श्रौतत्वेन स्मार्त्तान्निषेधाद्वलवत्त्वं श्रौतस्य।
गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृते २(†)।
आधाने सोमपाने च वपनं सप्तसु स्मृतम् ।।१२७६।।

1275. इति निगमोक्तेश्च। एतच्चावश्यं जीवत्पितृक गुर्व्विणीपतित्वाद निमित्तेषु ( तु ) यत्र वपननिषेध स्तत्रप्रतिप्रसवार्थं मितिवक्तव्यम्। अन्यथा, सामान्यविधितः प्राप्ते मुण्डने सत्वे तद्वचनस्य वैयर्थ्यापत्तेः।

---

१(*). 'ग्रन्थोदकं परोदकैः' इत्यन्यः पाठः।
२(†) अत्र, वपनमित्यत्र चयनमिति पाठोऽस्ति क्वचित्। 'मुण्डनञ्चोपवासश्च सर्वतीर्थे ष्वयं विधिः। इति सामान्य-प्राप्तिः।

**अतएव स्मर्य्यते,—**

क्षौरं नैमित्तिकं कार्य्यं निषेधे सत्यपि ध्रुवम् ।

पित्रादिमृतिदीक्षासु प्रायश्चित्तादि तीर्थके ॥१२७७॥ इति

**दीक्षासु—**

निषेधे सत्य पीत्युक्तेः प्रतिप्रसवत्वमेतस्य स्पष्टम् ।

गङ्गायां भास्करक्षेत्र इति तीर्थमात्रोपलक्षणम् ॥१२७८॥

**उभयोपादानन्तु तीर्थेष्वनयोर्मुख्यत्वात्१(*) ।**

विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना ।

नोवापयति लोमानि स पुत्रः पितृघातकः ॥१२७९॥

1276. **इति संग्रहे विशेषोक्तेश्च ।**

**मातापित्रोरिति,—**

मातृग्रहणं तन्मातृमरणे मुण्डनार्थम् ।

गुरोर्मृतौ इति,—क्षेत्रजदत्तकादिविषयम् २(†) ।

यद्वा मात्रादि गुरु विषयम् ।

**यत्तु,—**

कुम्भे कर्कटकेचैव कन्यायां कार्मुके रवौ ।

२(†) रोमखण्डं गृहस्थस्य पितॄन्नाशयते ध्रुवम् इति ॥१२८०॥

सौमन्तु वाक्यं वपननिषेधकं तद् गृहस्थैः ग्रहणाद्, यथा ब्रह्मचर्य्यादिकं नास्कन्दते तथा पितृघातक इति वचनं पितृग्रहणाज्जीवत्पितृक मपिन विषयीकरोतीति केचित् ।

अन्येतु, चादि शब्दस्य पितृ-भावापन्न-पितृ वाचित्वेन जीवत् पितृकस्यापि पितॄणां आचार····धारणवदेतत प्रवृत्तिरवि शिष्टेत्याहुः ३(‡) ।

अत्र यथाचारं व्यवस्था, प्रेतकर्म्म च सर्व्वंशः । (सर्व्वं सर्वंश इति) ।

( मातृ ) मातामह सपत्नी व्यतिरे केणान्यस्य प्रेतकर्म्म निषिध्यते ।

पित्रोः पुत्रैण कर्त्तव्या पिण्डदानोदक क्रियेति—

---

१(*) 'तीर्थेषु' इत्यत्र इति भिन्नः पाठः ।

रोमखण्डमिति, रोम्णां खण्डनं च्छेदनमित्यर्थः ।

२(†) 'प्रागद्वादश विधाः पुत्रा आसन् । सम्प्रति द्वौ पुत्रौ औरस दत्तकौ' इति श्रुतिः.

३(‡) 'आचार साधारणवत' इति भिन्नः पाठः ।

1277. **शंखोक्तेः ।**

पुत्रेषु विद्यमानेषु नान्यो वै कारयेत् स्वधाम् १(*) ॥१२८१॥

1278. **इति ऋष्यश्रृङ्गोक्तेः ।**

पुत्रा भावे सपिण्डा मातृ सपिण्डाः शिष्याश्च दद्युरिति गौतमस्मृतेश्च ।
नचैतन्मृत पितृक विषयमिति वाच्यम्, पुत्रस्य मुख्याधिकारित्वोक्तेः ।
जीवत्पिता पितामह्या मातुः कुर्य्यात् सपिण्डताम् ।
प्रमीत-पितृकः पित्रा पितामह्यापि वा सुत :—

1279 **इति यमेन विशेषोक्तेश्च ।**

अत्र सपिण्डताग्रहणं तदन्तः प्रेतकर्म्मोपलक्षणम् ।

**तथा,—**

आचार्य्य-पित्रुपाध्यायान्निर्हृत्यापि व्रती( व्रतम् ) ॥१२८२॥

1280. **इति याज्ञवल्क्यः ।**

**यथा,—**

व्रतस्थोऽपि सुतश्चैव पितुः कुर्य्यात् क्रियां नृप ।
उदकाद्यां महाबाहो दौहित्रोऽपि तथार्हतीति—१२८३॥

1281. **मात्स्ये ।**

मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।
तेषान्तु पितृवच्छ्राद्धं कुर्य्युर्दुहितृ-सूनवः ॥१२८४॥

1282. **इति पुलस्त्यः । तथा च शंख :—**

भार्य्या पिण्डं पतिर्दद्याद्भर्त्रे भार्य्या तथैव चेति ।
अपुत्रायां मृतायान्तु पतिः कुर्य्यात् सपिण्डतामिति—१२८५॥

---

१(*) देवानां मन्त्रान्ते स्वाहा। पितॄणां स्वधा इति स्मृतेः ।
२(†) 'उपनीयतु यः शिष्यं वेदमध्यापयन्—स कल्पं सरहस्यं वा तमाचार्य्यं विदुर्बुधाः' इति स्मृतौ ॥

1283. **पैठी न सिद्ध । एवम पुत्र पितृव्य मरणेऽपि,—**

पितृव्य भ्रात-मातॄणां अपुत्राणान्तथैवच ।
मातामहस्या सुतस्य श्राद्धादि पितृवद्भवेत् ॥१२८६॥

1284. **इति जातूकर्णोक्तेः ।**

माताऽत्र पितुः पत्नी, तण्मरणेऽपि जीवत्पितृकस्य क्रिया भवति ।
अपुत्रइत्युक्ते पुत्र वत्वाभावे नेतिज्ञेयम् ।

**तथा,—**

सपत्नी पुत्र-दौहित्रो भ्रातृपुत्र दौहित्रयोश्च समवाये सति सपिण्ड-सगोत्रत्वेन वलवत्त्वात् ।
सपत्नी पुत्रो भ्रातृपुत्रश्च ( सापत्न ) समत्व मातृपितृव्ययो रौर्द्धदेहि-काद्यधिकारिणौ तौ । दौहित्रस्या सपिण्डत्व मात्रेण दुर्वलत्वात् ।
सर्व्वासामेक पत्नीना मेकाचेत् पुत्रिणी भवेत् ।
सर्व्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत् ॥१२८७॥
भ्रातॄणामेक जाताणां एकश्चेत् पुत्रवान् भवेत् १(*) ।

1285. सर्वेते तेन पुत्रेण पुत्रिणो मनुर ब्रवीदिति-मनुना तयोः पुत्र कार्य्य-कारित्वोक्तेः ।
पुत्रेषु विद्यमानेषु नान्यं वैकारयेत्स्वधाम ।

1286. **इति ऋष्यश्रृङ्गेणान्य निषेधाश्च ।**
एवम पुत्रस्य, पत्नी भ्रातृपुत्र-समवाये पत्न्येवौर्द्धदेहिकाधिकारिणी ।

1287. अपुत्री पुत्रीवत्-पत्नीत्युशनसः स्मृतेः ।
भार्य्या पिण्डं पतिर्दद्याद् भर्त्रेभार्या तथैवच ॥१२८८॥

1288. **इति शङ्खोक्तेश्च । तत्रापि,**
दाह मेव सा कुर्य्यादन्यद्भ्रातृ-पुत्रः कुर्य्यादिति प्रागुक्तम् ।
एवम पुत्रस्य पत्नी कनिष्ठ-भ्रातृ-समवायेऽपि द्रष्टव्यम् ।
एव मेव पुत्रासन्निधौ पौत्रादिः पितामहौर्द्धदेहिकाधिकारीत्याद्यूह्यम् ।

---

१(*) अत्र भ्रातृणां सहोदराणां मध्ये यद्येकः पुत्रवान् स्यात्तदा तेन भ्रातृपुत्रेण सर्व्वे भ्रातरः

**तथा,—**

जीवत् पितृकस्य ज्ञाति साधारण्येन क्वचिदधिकारः ।

1289. **तथाच, याज्ञवल्क्य :—**

ते (ये) ज्ञातय इत्यनुवृत्तौ, सकृत्-प्रसिञ्च न्त्युदकं नाम गोत्रेण वाग्-यता इति ।

इदमुदकं सतिलमेव तेनापि देयम् ।

एतदुदकदानस्य तर्पणत्वाभावेन तिलैः कृष्णैश्चत्तर्पणमिति निषेधा-विषयत्वात् ॥*॥

इति श्रीमन्नागदेवभट्टात्मजानन्तदेवभट्टेन विरचितेविधानपारिजातेजीवत् पितृकस्य धर्म्मविशेष निर्णयः समाप्तः ॥

—*—

## अथ विभक्ताविभक्त-निर्णयः ।

—*—

1290. **पृथ्वीचन्द्रे, मरीचिः—**

बहवः स्युर्यदापुत्राः पितुरेकत्रवासिनः ।
सर्व्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ॥१२८६॥
द्रव्येणवाविभक्तेन सर्वै रेव कृतम्भवेत् इति ।
ज्येष्ठकृत कर्म्मणः सर्वे फलभागिन इत्यर्थः ।

एतेन ये ब्रह्मचर्य्यादिनियमा स्तैः प्रतिसंस्कारत्वान् सर्वैरेवकार्य्याः ।

एवं संसृष्टीनामपि द्रव्येणाविभक्तेनेति स्मरणात्, तुल्यन्यायत्वाच्च ।

1291. **मिताक्षरायां नारदः—**

भ्रातृणामविभक्तानामेकोधर्म्मः प्रवर्त्तते ।
विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक् पृथगिति ॥१२६०॥

---

१(*) अनपत्यस्य कृत्यं पत्या साधनीयम् पत्युरिति ।

२(†) पुत्रीवदिति, कन्यावदिति । यथा पुत्रः कुर्य्यात्तथा पत्नी कन्यापि कुर्य्यात् ।

1292. **बृहस्पतिश्च,—**

एकपाकेनवसतां पितृदैवव्रता( पुजा )र्चनम्।

एकम्भवे(द)द्विभक्तानां तदेव स्याद् गृहे सदा १(*) ॥१२६१॥

इदन्तु, द्रव्यसाध्यत्वात्कर्म्मविषयम्।

द्रव्यस्यानेकस्वामिकत्वे नैकस्य(द्रव्य)व्ययेऽनधिकारात्।

यानितु द्रव्यासाध्यानि,—मन्त्र-

जपोपवास-सन्ध्योपासन-ब्रह्मयज्ञ-पारायणादीनि,

नित्यनैमित्तिककाम्यानि, तेषु पृथक् पृथगेवाधिकारः।

तेषु द्रव्यव्ययाभावेन मिथोऽनुमत्यनपेक्षणात्।

द्रव्येणवाविभक्तेनेत्यस्या विषयत्वात्।

पृथगप्येकपाकानां ब्रह्मयज्ञोद्विजातीनाम्।

अग्निहोत्रं सुरार्चाच सन्ध्या नित्यं भवेत्तथा ॥१२६२॥ इति।

1293. पारिजाते आश्वलायन स्मृतेश्च। अग्निहोत्रशब्दोऽत्राग्निसाध्यश्रौत-स्मार्त-नित्यकर्म्मपरः तत्रापिमिथोऽनुमत्यैवाधिकारः।

एकोऽपि स्थावरे कुर्य्याद्दानाध्यनविक्रयम् २(†)।

आपत्काले कुटुम्बार्थे धर्म्मार्थेच विशेषत इति स्मृतेः ॥१२६३॥

1294 धर्म्मार्थेऽवश्यकर्त्तव्येपितृश्राद्धादाविति विज्ञानेश्वरोऽपि।

क्वचित्त्वविभक्तानामपि पृथक्पाकानां देशान्तरे वसताम्।

1295. वैश्वदेव-दर्शाब्दिकश्राद्धानिच प्रत्येकं भवन्ति।

एकपाकेन वसतामिति बृहस्पतिवचन लिङ्गात्।

भ्रातृणामविभक्तानां पृथक्पाकोभवेद् यदि ३(‡)।

वैश्वदेवादिकं श्राद्धं कुर्य्युस्तेवैपृथक् पृथगितिहारीतोक्तेः ॥१२६४॥

अविभक्तेन पुत्रेण पितृमेधोमृताहनि।

देशान्तरेपृथक्कार्य्योदर्शश्राद्धं तथैवचेति यमोक्तेरित्याह ॥१२६५॥

1296. तत्रहेमाद्र्यादिमहानिबन्धेष्वनुपलम्भादमूलं मृग्यम्।

**तदयं प्रघट्टकार्थः—**

पञ्चमहायज्ञेषुमध्ये,देव-भूत-पितृ-मनुष्य-यज्ञानन्यानुमत्या ज्येष्ठएव कुर्य्यात्।

---

१(*) 'तदेव स्यादगृहे गृहे' इति भिन्नः पाठः।

२(†) दान रक्षण विक्रयम्, इत्यन्यः पाठः।

३(‡) 'वैश्व देवाब्दिकं श्राद्धम्' इति पाठान्तरम्।

होमाप्रदानरहितं न भोक्तव्यं कदाचन १(*) ।

1297. अविभक्तेषु संसृष्टे ष्वेकेनापिकृतेकृतमितिव्यासोक्तेश्च ॥१२९६॥

यदातु,

ज्येष्ठेनाकृते वैश्वदेवेऽन्नं तूष्णीं मग्नौकिञ्चित्क्षिप्त्वा भोक्तव्यम् ।

यस्यत्वेषामग्नतोऽन्नं सिध्येत् स नियुक्तमग्नौकृत्वाग्रं ब्राह्मणाय दत्वा

1298. भुञ्जीतेत्यविभक्ताधिकारे गोभिलोक्तेः ।

वैश्वदेवासम्भयेतु कुक्कुटान्त प्रमाणकम् ।

अन्नमग्नौसंप्रहृत्य(दाय)किल्बिषात्तु विमुच्यत

इति स्मृत्यन्तराच्च ॥१२९७॥

1299. **आश्वलायनस्तु—**

**पाकभेदे सति वैश्वदेवपृथक्त्वमाह,—**

वसनामेकपाकेन विभक्तानामपि प्रभुः ।

एकस्तु चतुरोयज्ञान् कुर्य्याद्वाग् यज्ञ पूर्वकान् २(†) ॥

अविभक्ता विभक्तावा पृथक्पाका द्विजातयः ।

कुर्य्युः पृथक्पृथग्यज्ञान् भोजनात् प्राग्दिनेदिने इति ॥१२९८॥

एतेन देशान्तरगतौ पृथग्वैश्वदेवमपि कार्य्यमिति सिद्धम् ।

1300. अन्नस्यासंस्कृतत्वेन भोजने किल्बिषीभवेदितिकात्यायनेन तदकरणेदोषोक्तेः ।

1301. एवं देव पूजादिकमपि पृथक्पृथगप्येकपाकाना मित्याश्वलायनोक्तेः ।

दर्शग्रहण श्राद्धादितु ज्येष्ठस्यैव, तीर्थश्राद्धाद्यपि युगपत् ,

सर्वेषां अविभक्तानां तीर्थप्राप्त्यावेकस्यैव,

भेदेन तत्प्राप्तौभिन्नं ( तत् )प्राप्तेरेव निमित्तत्वात् ।

**गया श्राद्धेऽप्येवम् ।**

एष्टव्यावहवः पुत्राः शीलवन्तो गुणान्विताः ।

तेषान्तु समवेतानां यद्यप्येकोगयां व्रजेत् ३(‡) ।

1302. तारिताः स्मोवयन्तेन सयाति परमाङ्गतिमिति

हेमाद्रौ कौर्म्मोक्तेः ॥१२९९॥

---

१(*) होमानु ( य ) दान रहितम् , इति पाठान्तरम् ।

२(†) अत्र वाग्यतो देव पाठ । इति केचन् विदः . कुर्य्याद्वा इत्यपि पाठश्च ।

३(‡) एष्टव्या वहवः पुत्रा यत्र प्येकोगयाव्रजेत् । यजेद्वाचाश्वमेधेन नीलंवा वृषमुत्सृजेत् ॥ इति वायुपुराणे । अन्यद्द ग्रन्थान्तरे ।

केचित्तु, युगपद्गयां प्राप्तौ प्रत्येकं गयाश्राद्धमाहुः।
विभक्तौवाऽविभक्तौवा गयां दैगच्छतः सुतौ।
तदा श्राद्धं पृथक्कार्य्यं पितॄणां तृप्तिकारणादिति स्मृत्यन्तरादिति ।१३००।

काम्येपि-दानहोमादौ मिथोऽनुमत्यैवाधिकारः।

द्रव्य(া)साध्यजपादौ तां विनापि स्यात्।

1303. **साम्वत्सरिकादा वपरार्के पैठीनसिः—**

विभक्तैस्तैः पृथक्कार्य्यं प्रतिसम्वत् सराब्दिकम्।
एकेनैवाविभक्तेषु कृते सर्व्वैस्तु तत् कृतमिति ॥१३०१॥

प्रतिसम्वरादिकमित्युक्तेः पूर्व्वभावीनि श्राद्धान्येकत्रैवेति गमयति।

1304. **तदाह लघुहारीतः,—**

सपिण्डीकरणान्तानियानि श्राद्धानि षोडश।
पृथङ् नैवसुताः कुर्य्युः पृथग्द्रव्या अपिक्वचित् ॥१३०२॥

इति सपिण्डीकरणं मासिकोपलक्षणं वत्सरान्त सपिण्डीकरणा(क्षिप्त-)भिप्रायंवा।

**यत्तु—**

अर्व्वाक् सम्वत्सराज्ज्येष्ठः श्राद्धंकुर्य्यात्समेत्यतु।
नव श्राद्धानि सर्वाणि सपिण्डीकरणन्तथा॥
ज्येष्ठेनैव प्रकर्त्तव्यमाब्दिकं प्रथमन्तथेति ॥१३०३॥

प्रथमं साम्वत् सरिकमपि समेत्य कर्त्तव्यमितिवचनं पठन्ति।
तद्वचनन्तु मृग्यम्। एवं मातृश्राद्धेऽपिद्रष्टव्यम्।
ज्येष्ठस्यात्राशक्त्यादौतु कनिष्ठोऽपि तदनुज्ञयाकुर्य्यात्।

तस्याप्यधिकारसद्भावात्। यदातु सापत्न्या भ्रातर स्तदा वैमात्रे ज्येष्ठेऽपिसति कनिष्ठ एव स्वमातृवार्षिकान्वष्टकादि स्वमातामह-श्राद्धञ्च कुर्य्यात्।

मुख्यपुत्रत्वा मुख्य दौहित्रत्वात्तस्य। मुख्यासम्भवे सपत्नीपुत्रः ज्येष्ठ एव कुर्य्यात्। तथाहि, ज्येष्ठेन जातमात्रेण पुत्री भवति-मानव
1305 इति मनुना ज्येष्ठस्यैव पुत्र कार्य्यकारित्वोक्तेः।

तदशक्त्यादावन्योऽपि, एवम विभक्तेष्वपि भ्रातृषु मध्ये यस्य द्वितीयो विवाहः स्वसुत संस्कारो वा कर्त्तव्यत्वेनोप तिष्ठते तदा स एव वृद्धि श्राद्धाद्यङ्ग संहितं कर्म्म कुर्य्यात् ।

तन्मात्र कर्त्तव्यत्वेनेतरेषां प्राप्त्य भावात् । तद भावे सन्निहित-क्रमेणान्योऽपि कुर्य्यादित्यादि वृद्धि श्राद्ध प्रकरण उक्त मेव ॥

इति विभक्ता विभक्तभात्रादि विधानम् ॥

—*—

## अथ श्राद्ध-विशेषनिरूक्तिः ।

—*—

अभिधाय विधानानि श्राद्धे सामान्य मुच्यते ।
हरेः कृपा मनु प्राप्य श्राद्ध शब्दो निरूच्यते ॥१३०४॥
प्रेतं पितरमुद्दिश्य भोज्यं यत् प्रियमात्मनः १(*) ।
श्रद्धयादीयते यत्र तच्छ्राद्धं परिकीर्त्तितम् ॥१३०५॥

1306. इति मरीच्युक्त्या श्रद्धा शब्दात् प्रज्ञा श्रद्धार्चावृत्तिऽभ्याण इति । प्रत्यये कृते श्राद्धमिति सिध्यति ।

1307. **तच्चानेकवाचकम् ,**

होमश्च पिण्डदानञ्च तथा ब्राह्मण तर्पणम् २(†) ।
श्राद्ध शब्दाभिधेयं स्यादन्यदप्युपचारत :—१३०६॥

**इति स्मृति रत्नावल्युक्तेः। केचिद्व्यवस्थितमित्याहुः ।**

यजुषां पिण्डदानन्तु बह्वचां द्विज तर्पणम् ।
श्राद्ध शब्दाभिधेयं स्यादुभयं सामवेदिनाम् ॥१३०७॥

1308. **इति स्मृति संग्रहोक्तेरिति । कर्काचार्य्योऽप्येवमाह ॥**

## अथ श्राद्धप्रशंसा ।

—*—

श्राद्धात् परतरं नास्ति श्रेयस्कर मुदाहृतम् ।
तस्मात् सर्व्वं प्रयत्नेन श्राद्धं कुर्य्याद्विचक्षणः ॥१३०८॥

---

१(*) पयोमधुघृतान्नादिकं श्रद्धामन्त्रपूर्वक पित्रादीनुद्दिश्य यद्दीयते तच्छ्राद्धमिति ।

२(†) 'गर्भाधानादिकार्य्येषु ब्राह्मणान भोजयेद्द्विज' ।

अन्यत्र 'श्रतं ब्राह्मणभोजनम्' इति स्मृतिः ।

1309. **इति मनूक्ता ।**

अरोगः प्रकृतिस्थश्च चिरायुः पुत्र पौत्रवान् ।
अर्थवान् अर्थभोजी च आकारी भवेदिह ।
परत्र च परां तुष्टिं लोकांश्च विविधांश्छभान् ॥१३०६॥
श्राद्धकृत् समवाप्नोति यशश्च विपुलं नरः ।

1310. इति देवलोक्ताच ॥

## अथ पिण्डादि सम्बन्धिनः ।

—*—

1311. **अत्र मार्कण्डेयः—**

पिता पितामहश्चैव तथैव प्रपितामहः ।
पिण्ड सम्वन्धि नोह्येते विज्ञेयाः पुरुषास्त्रयः ॥१३१०॥
लेप सम्वन्धिनश्चान्ये पितामह प्रपितामहान् १(*)....
प्रभृत्युक्ता, स्त्रयस्तेषां यजयानस्तु सप्तमः ।
तथान्ये पुर्व्वजाः स्वर्गे येचान्ये नर कौकसः ।
येच तिर्य्यकत्त्व मापन्ना येच भूतादि संस्थिताः ।
तान् सर्व्वान् यजमा नोऽसौ श्राद्धं कुर्व्वन् यथाविधि ॥१३११-१२-१३॥
समाप्यायतते वत्स येन येन शृणुष्व तत् २(†) ।
अन्न-प्रकिरणं यच्च मनुष्यैः क्रि(स्तृ)यते भुवि ॥१३१४॥
तेन तृप्ति मुपायान्ति ये पिशाचत्व मागताः ।
यदम्वु स्नान वस्त्रोत्थं भूमौ पतति पुत्रक ॥१३१५॥
तेन ये तरुतां प्राप्ता स्तेषां तृप्तिः प्रजायते ।
यास्तु गन्धाम्वुकणिकाः पतन्ति धरणीतले ॥१३१६॥
ताभि राप्यायनन्तेषां ये तिर्य्यक्त्वं तिलाशिनः ।
भुक्त्वाचाचमनं यच्च जलं यच्चाङ्घ्रि सेवने ॥१३१७॥
ब्राह्मणाणां तथैवान्यैस्तेन तृप्तिं प्रयान्तिवै ।
तेनानेककुले तत्र तत्तद्योन्यन्तरं गताः ।
प्रयान्त्याप्यायनं वत्स ! सम्यक्श्राद्ध-क्रियावताम् ॥१३१८॥

---

१(*) स्मृतौ, लेपभाजश्चतुर्थाद्याः पित्राद्या पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्त पौरुषम् ॥ इति ।
सपिण्डतातु पुरुषे सप्तमे विनिवर्त्तते । इति च ।

२(†) 'समाप्ययतते' इति च पाठः ।

यथागोष्ट प्रविष्टां गां वत् सोविन्दति मातरम् ।
नामगोत्रस्वधामन्त्राः पितॄणां प्रापकास्तथा ॥१३१९॥

नामगोत्रं पितॄणाञ्च प्रापकं हव्यकव्ययोः ।
नाम मन्त्रास्तथादेश भेदान्तर गतानपि ।
प्राणिनः प्रीणयन्त्येते तदाहारत्वमागतान् ॥१३२०॥

देवोयदि पिताजातः शुभकर्म्मानुयोगतः १(*) ।
तस्यान्नममृतं भुत्वा देवत्वेऽप्यनुगच्छति ॥१३२१॥

मर्त्यत्वेभोज्य रूपेण पशुत्वेपितॄणां भवेत् ।
श्राद्धान्नं वायु रूपेण नरत्वे२(†)ऽप्यनु गच्छति ॥१३२२॥

पानं भवति पक्षित्वे गृध्रत्वे च तथामिषम ।
दनुजत्वे तथामांसं प्रेतत्वे रुधिरोदकम् ॥१३२३॥

मानुपत्वेऽन्नपानादि नानाभोगकरन्तथेति—

1312. **हरिवंशे याज्ञवल्क्यः, नाम्नि विशेष माह,—**

वसुरुद्रादिति सुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄण् श्राद्धेन तर्पिताः इति ॥१३२४॥

1313-14 **हेमाद्रौ, विंशेषो विष्णु धर्म्मोत्तरे—**

पितृपिण्डश्चविज्ञेयः प्रद्युम्नश्चापराजितः ।
देवोऽनिरुद्धोविज्ञेयः पिण्डनिर्वपणे वुधैः ॥१३२५॥

श्राद्धं कर्तुं कथं शक्यं विना वैष्णव तेजसा ।
अनिरुद्धःस्वयं दैवः प्रद्युम्नश्च पिता स्मृतः ।
सकर्षणस्तज्जनको वासुदेवस्तु तत् पिता ॥१३२६॥

1315. **मोक्ष धर्म्मेऽपि,—३(‡)**

पिता पितामहश्चैव तथैव प्रपितामहः ।
अहमेवात्र विज्ञेयस्त्रिपु पिण्डेपु संस्थितः ॥१३२७॥

---

१(*) 'शुभकर्म्मानुसारतः इति भिन्नः पाठः ।

२(†) 'नरत्वेऽप्यनुतिष्टते' इत्यपरः पाठः ।

३(‡) महाभारते शान्ति पर्व्वणि मोक्षधर्म्माध्याये ।

नास्ति मत्तोऽधिकः कश्चित् कोवाऽभ्यर्च्च्योमया तथा ।
कोवामम पिता लोके ह्यहमेव पितामहः ।
प्रपितामहश्च सुतानां अहमेवात्र कारणमिति ॥१३२८॥

1316. **श्राद्धाकरणेदोषोप्यादित्य पुराणे,—**

न सन्ति पितरश्चैवं कृत्वा मनसि योनरः ।
श्राद्धं न कुरुते जातु तस्य रक्तं पिवन्ति ते ॥१३२९॥

1317. **कौर्म्मेऽपि—**

अमावास्यादिने प्राप्ते गृहद्वारं समाश्रिताः ।
वायुभूताः प्रपश्यन्ति श्राद्धं वैपितरो नृणाम् ।
यावदस्तमयं भानोः क्षुत्पिपासासमाकुलाः ।
ततश्चास्तंगते भानौ निराशा दुःखसंयुताः ॥१३३०॥
निः श्वस्य शिविरं यान्ति गर्हयन्तः स्ववंशजम् ।
जलेनापिच न श्राद्धं शाकेनापि करोति यः १(०) ॥१३३१॥
क्षमायां पितरस्तस्थ शापं दत्वा प्रयान्ति च ।

**यथा,—**

कन्यांगते सवितरि यान्यहानितु षोड़श ।
तत्र श्राद्धम कुर्व्वाणोनरकं याति दारुणम्—
1318. इत्यादि । शाकेनापि नापरपक्षमति क्रामेदितिकात्यायनः ॥१३३२॥

## अथ श्राद्धभेदाः ।

—*—

**अत्र विश्वामित्रः—**

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
1319. पार्व्वणं चेति विज्ञेयं गोष्ठंय शुद्ध्यर्थमष्टमम् ॥१३३३

---

१(०) अत्रापिना—शा[illegible]पि ना' कुर्य्यात् ! 'शोत्रेन' इत्यन्यः पाठः ।
न तत्काल त्यजेदिति पितृणां शापेन वंशलोपभयाच्चेति ।

,, अत्र शुद्धार्थं श्राद्धं प्रायश्चित्तात् परं अनुष्ठेयं पार्व्वणमष्टमम् ।

कर्म्माङ्गं नवमं प्रोक्तं वैदिकं दशमं स्मृतम् ।
यात्रास्वेकादशं ज्ञेयं पुष्ट्यर्थं द्वादशं स्मृतमिति ॥१३३४॥

1320. **लक्षणान्येषां भविष्ये—**

अहन्यहनि यः श्राद्धं तन्नित्यमिति कीर्त्तितम् ।
वैश्वदेवविहीनन्त दशक्तावुदकेनतु ॥१३३५॥

एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवं कर्त्तव्यं अयुग्मान् भोजयेद्द्विजान् ॥१३३६॥

कामाय विहितं काम्यं अभिप्रेतार्थसिद्धये ।
पार्वणेन विधानेन तत्कर्त्तव्यं खगाधिप ॥१३३७॥

वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धन्तदुच्यते ।
सर्व्वंप्रदक्षिणं (०) कार्य्यं पूर्व्वाह्नेतूपवीतिना ॥१३३८॥

गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥१३३९॥

'ये समाना' इति द्वाभ्यां एतज्ज्ञेयं सपिण्डनम् ।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि ॥१३४०॥

अमावास्यां यत्क्रियते तत्पार्वणमिति स्मृतम् ।
क्रियतेवा पर्व्वणि यत् तत्पार्व्वण मितिस्थितिः ॥१३४१॥

गोष्ठ्ये (ष्ठ्योप) यत्क्रियते श्राद्धं गोष्ठ्यश्राद्धन्तदुच्यते १(*) ।
बहूनां विदुषां सम्पत् सुखार्थं पितृतृप्तये ।
क्रियते शुद्धये यत्तु ब्राह्मणानान्तु भोजनम् २(†) ॥१३४२॥

शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय मनीषिभिः ।
निषेककाले सोमेच सीमन्तोन्नयने तथा ॥१३४३॥

ज्ञेयं पुंसवने चैव श्राद्धंकर्म्माङ्गमेवच ।
देवान्तुद्दिश्य यत् श्राद्धं तदैविकमुदाहृतम् ॥१३४४॥

हविष्येण विशुद्धेन सप्तम्यादिषु यन्नरः ।
गच्छन्देशान्तरं यच्च श्राद्धं कुर्य्यात्तु सर्पिषा ॥१३४५॥

---

१(*) गोष्ठ्ये—'गोस्थानकम्' । गोशाला वा । अमायांतिथौयत् श्राद्धं क्रियते तदिति ।

२(†) शुद्धये,—प्रायश्चित्तानन्तरम्, शुद्ध्यर्थं पार्वणं विधेयं यत्तदिति ।

" 'सर्वोपचारिकमिति' भिन्नः पाठः ।

यात्रार्थमिति तत्प्रोक्तं प्रवेशेच न संशयः ।
शरीर-प्रचये श्राद्धं अर्थोपचय एव वा ॥
पुण्यार्थ मेतद् विज्ञेयं औपचायिक मुच्यत इति ॥१३४६॥

**वृद्धिः—**

पुत्र जन्म विवाहादिः ( समृद्धिः शुभ निमित्तं यजेदेव ) १(*) ।
नित्येनावश्य केनैकोद्दिष्टेन, पार्वणेन च तुल्यम् ।
शेष मङ्गजातं स्यात् सपिण्डीकरणस्यैवोभयात्मकत्वात् । पार्वणांश-पार्वणे, कोद्दिष्टांशः एकोद्दिष्टे, प्रेतत्वसमाप्तितिथौ सपिण्डीकरण-मेवोक्तम् । प्रसङ्गात् स्त्रीसम्बन्धेनापि उभयात्मकस्यैकोद्देशेन निर्देशः कृत इति नित्येन तुल्यमित्यस्यार्थोज्ञेयः ।
क्रियते वा पर्वणीत्यत्र—पर्व्व शब्दः संक्रान्त्यादिपरः ।

1321. **तथाच वृद्ध वसिष्ठः—**

प्रति पर्व्व भवेद्यस्मात् प्रोच्यते पार्व्वणन्तु तदिति २(†) ॥१३४७॥

## अथ षण्णवति श्राद्धानि ।

—*—

1322. **संग्रहे,—**

अमामनुयुगक्रान्ति(धृ)व्यतीपात महालयाः ।
अन्वष्टकाश्चतिथयः षण्णवत्यः प्रकीर्त्तिताः इति ॥१३४८॥

**अन्यत्रापि—**

मन्वादिश्च युगादिश्च अमा ( थ ) संक्रान्ति वैधृती ।
यश्च श्राद्धाष्टका पाता श्राद्धंषण्णवतिः स्मृता इत्यर्थः ॥१३४९॥
मन्वादयः ( मन्वन्तरादयः )—चतुर्दशज्ञेयाः पौराणिकाः ।

1323. **तथाच मात्स्ये,—**

अश्वयुक् शुक्लनवमी कार्त्तिके द्वादशी तथा ।
तृतीया चैत्र मासस्य तथाभाद्रपदस्य च ॥१३५०॥
फाल्गुनस्यत्वमावास्या पुष्य (पौष)स्यैकादशी सिता ।
आषाढ़स्यापि दशमी तथा माघस्य सप्तमी ॥१३५१॥

---

१(*) वृद्धि राभ्युदयिकं श्राद्धं विवाहादिषु कर्मसु ।

२(†) पर्व्वणि, अमायां संक्रान्तौ च यद्दीयते तत् पार्व्वणम् । अन्यत्र पञ्च पर्व्वाणि, चतुर्दश्यादीनि ।

श्रावणस्याष्टमी कृष्णा तथा षाढ़स्य पुर्णिमा ।
कार्त्तिकी फाल्गूनीचैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयश्चैता दत्तस्याक्षय-कारिकाः इति ।१३५२॥
यत्र कृष्णेति—निर्दिश्यते तत्र सैवान्यथा सितेति ज्ञेयम् ।

1324. **युगादयश्चतस्रः (४) ताश्च विष्णुपुराणे—**

वैशाखमासस्य सिता तृतीया,
नवम्यसौ कार्त्तिक शुक्लपक्षे ।
नभस्य मासस्य तमिस्रपक्षे,
त्रयोदशी पञ्चदशीच माघे १(*) ॥१३५३॥

1325. पञ्चदश्यत्र, नामावास्या ज्ञेया, द्वैशुक्ले द्वैतथाकृष्णे, इति नारदीयोक्तेः । अमाः सक्रान्त्यश्च द्वादश प्रसिद्धाः । चतुर्द्दश वर्षमध्ये वैधृत्यस्त्रयोदश सम्भवन्ति । पक्षश्राद्धतिथयः षोड़श स्युः ।
पूर्व्वेद्युरष्टका ( अष्टका )—अन्वष्टकाश्चेत्यष्टका द्वादश ।
हेमन्त शिशिरयोश्चतुर्णामपर पक्षाणामष्टमीष्वष्टकाः ।

1326. पूर्व्वेद्युरष्टका अष्टकाश्चेति गोभिलोक्तेः ।
व्यतीपाताश्च त्रयोदशैव । एवं मिलित्वा षण्णवतिः ।
नेयं परिसंख्या किन्तु गणनामात्रम् , पितृ मात्रादिकादि-श्राद्धकालान्तरोक्तेः । एतां कालनिर्णय स्तृतीयस्तवके ज्ञेयः २(†) ।

1327. **कालान्तरमुक्तं ब्राह्मे,—**

आह्निकश्च गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः ३(‡) ।
श्राद्धंप्रतिरुचिश्चैव विशिष्ट-ब्राह्मणागमः ॥
श्राद्धकाला इमे प्रोक्ता दातुरक्षयकारकाः ॥१३५४॥

---

१(*) 'एता युगाद्याः कथिताः पुराणैः अनन्तपुण्यास्तिथयश्चतस्रः'। इति शेषांशः पाठः।

२(†) प्राकृततीयस्तवके प्रोक्तं मेह पुनरुच्यते ।

३(‡) गजच्छाया, यथा— 'यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः । याम्यातिथि र्भवेत साहि । गजच्छायाप्रकीर्त्तिता' इति मिताक्षरा-कृत्यचिन्तामण्यादिषु ।

1328. **छायाग्रहणं चन्द्रसूर्य्ययोः। ब्राह्मे—**

अश्विन्यां प्राप्नुयादश्वान् भरण्यामायुरुत्तम्।
कृत्तिकायां विज्वरत्वं श्राद्धकृत् तमवाप्नुयात् ॥१३५५॥

1329. **इति नक्षत्र श्राद्धफल मुक्तम्। मनुस्मृतौ—**

कुर्व्वन् प्रतिपदि श्राद्धं सुरूपान् लभते सुतान्।
विज्वरत्वं कन्यकान्तु द्वितीयायां लभेत् ध्रुवम् ॥१३५६॥

1330. **इत्यादि तिथि श्राद्धफलम्। शङ्खश्च—**

यदा त्रिशिर्व्यतीपातो भानुवारस्तथैवच १(*)।
पद्मकं नाम तत् प्रोक्तं तत्र श्राद्धमथाक्षय—
मित्यादिच। सर्व्वमिदं काम्य श्राद्धपरम् ॥१३५७॥

## अथ कर्त्तारः।

——*——

**तत्र शङ्खः,—**

पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया।
पुत्राभावेतु पत्नीस्यात् पत्न्यभावेतु सोदरः ॥१३५८॥

**विष्णु पुराणे,—**

पुत्रः पौत्रः प्रपौत्रोवा भ्रातावा भ्रातृसन्ततिः।
सपिण्ड-सन्ततिर्व्वापि क्रियार्थे नृप जायते ॥१३५९॥

तेषामभावे सर्व्वेषां समानोदकसन्ततिः।
मातृपक्षस्य पिण्डेण सम्बद्धा ये जलेनवा ॥१३६०॥
कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्य्या क्रियानृपेति।
अत्र स्त्रीभिरिति भार्य्यातिरिक्तविषयम् ॥१३६१॥
पत्न्यभावेतु सोदर इति विशेषोक्तेः।
भार्य्या-पिण्डं पतिर्दद्याद्भर्त्तृ-भार्य्या तथैवच।

1331. श्वश्र्वादेस्तु स्नुषाचैव तदभावेतु सोदर इति शङ्खोक्तेः।

---

१(*) 'तिथिर्व्यतीपातः' इति भिन्नः पाठः। त्रिशिरेश्च.... गचवम् इति कैचन।

1332. **पुत्राश्च द्वादशविधाः १(*) । तथाहि याज्ञवल्क्यः—**

औरसो धर्म्मपत्नीजस्तत् समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्र जातस्तु स्वगोत्रेणेतरेणवा ॥१३६२॥
गृहे प्रच्छन्न उत्पन्नो गूढ़जस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामह सुतोमतः ॥१३६३॥
अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः ।
दद्यान्माता पितावा यं स पुत्रोदत्तको भवेत् ।
क्रीतस्तु ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं सुतः २(†) ॥१३६४॥
पिण्डदोंऽशहरश्चैषां पूर्व्वाभावे परः पर इति ।
दत्तकव्यतिरिक्ता एते पुत्रप्रतिनिधयः, युगान्तरे कार्य्याः ।
कलौतु, दत्तौरसावेव । दत्तौरसेतरेषान्तु पुत्रत्वे न परिग्रह—

1333. इति हेमाद्रौ कलिवर्ज्ये प्रकरणे निषिद्धत्वात् ३(‡) ।

यद्यप्यत्र—

पिण्डदोऽंशहरश्चैव(क) पूर्व्वाभावे परः पर—इतुक्तेरौरसाभावे कलावपि दत्तकप्राप्ति स्तथाप्यौरसाभावे पौत्र स्तदभावे प्रपौत्र-स्तदभावे दत्तकादय इति ज्ञायते ।

पुत्रः पौत्रश्च तत् पुत्रः पुत्रिका पुत्रएव वा ।
पत्नी भ्राताच तज्जश्च पिता माता स्नुषा तथा ॥१३६५—६६॥
भगिणी भागिनेयश्च सपिण्डः सोदक स्तथा ।
असन्निधाने पूर्व्वेषां उत्तरे पिण्डदाः स्मृताः ॥१३६७॥

1334. इति क्रमपरे स्मृति संग्रहवचने, प्रपौत्रानन्तरं पुत्रिका पुत्रोक्तया तत्-समस्य दत्तक स्यापि तत् स्थानीयत्व-प्राप्तेः ।

---

१(*) द्वादशविधाः पुत्राः—पुतस्त्राणात् पवनात् पुत्रः इति यास्कः । तेच मानवे नवमाध्याये, चतुर्विधाश्च पाद्मे भूमिखण्डे । सप्तविधाः पुत्राः ब्रह्मवैवर्त्ते श्रीकृष्णजन्म खण्डे । तेचाने कविधाः काम्याः विष्णुपुराणेच । तथैव गारुड़े पुराणेच प्राककाले भासन् । नारदीय स्मृतावपि तथैव ।

२(†) 'ताभ्याम्' इत्यत्र याभ्यामिति भिन्नः पाठः ।
ताभ्यां माता पितृभ्यामित्यर्थः

३(‡) कलिवर्ज्यं प्रकरणमुद्वाहतत्त्वेऽप्यस्तीचास्ति ।

1335. **यत्तु, बृहस्पतिना—**

पौत्रश्च पुत्रिका पुत्रः स्वर्गप्राप्ति करावुभौ ।

रिकथे च पिण्डदानेच समौ तौ परिकीर्त्तिता विति ॥१३६८॥

तत् पुत्रिकापुत्रस्य पौत्र साम्यमुक्तम् ।

1336. **याज्ञवल्क्येनतु—**१(०)

औरसोधर्म्म पत्नीज स्तत् समः पुत्रिका सुतः ॥१३६९॥

इति तस्यौरस पुत्र साम्यमुक्तम् ।

तथापि लोके राजसमो मन्त्री इत्यादौ किञ्चिन्नूने समशब्द प्रयोग-दर्शना, न्मुख्यामुख्ययोःसाम्यायोगाच्च । स्तुत्यर्थं तत् नतु तत् सम

1337. विकल्पार्थमिति पृथ्वी चन्द्रोदये, मदनरत्न-कालादर्शादयोऽप्येवमेबाहुः ।

1338. मदनपारिजाते तथैव प्राचुः ।

**अत्र केचित्—**

1339. पुत्रेषु विद्यमानेषु नान्यो(न्यं)वैकारयेत् स्वधामिति सुमन्तूक्तौ ।

पितामहः पितुः पश्चात् पञ्चत्वं यदि गच्छति ।

पौत्रेनैकादशाहादि कर्त्तव्यं श्राद्ध षोड़श मित्युक्त्वा ॥१३७०॥

नैतत् पौत्रेण कर्त्तव्यं पुत्रवांश्चेत् पितामह —

1340. इति छन्दोग परिशिष्टे च पुत्र शब्दस्य द्वादशविध पुत्र परत्वात् पूर्व्वाभावे परः पर इत्यस्यान्य परत्वाच्च ।

दत्तकाद्यभावे पौत्रादीनामधिकारोऽवगम्यत इत्याहुः । अतएव निषेधा-दुपनीत पौत्र सत्त्वेप्यनुपनीत पुत्रस्यैवाधिकारो लोके दृश्यते ।

श्राद्धं कुर्य्यादवश्यन्तु प्रमीते पितृके द्विजः ।

व्रतस्थोवाऽव्रतस्थोवा प्येकत्रैव(न)भवेद् यदि इति ॥१३७१॥

1341 **सुमन्तूक्तेः ।**

कुर्य्यादनुपनीतोऽपि श्राद्धमे कोहि यः सुतः ।

पितृ यज्ञाहुतिं पाणौ जुहुयाद् ब्राह्मणस्य सः ॥१३७२॥

1342. **इति वृद्ध मनूक्तेः ।**

अनुपेतोपि कुर्वीत मन्त्रवत् पैतृमेधिकमिति कार्ष्णाजिन्युक्तेः ।

---

१(*) इदं कलिवर्ज्यं प्रकरणं आदित्य पुराणोक्तं हेमाद्रौ गृहीतम् । तथैवोद्वाहतत्त्वे धृतम् । स्मृतौ पुराणे न तद् संचास्ति ।

२(†) अत्र 'नासौ मुनि र्यस्य मतं न भिन्नम्' इति स्मृतौ 'नाना मुनीनां मतयोविविभिन्नाः' इति च महाभारते ।

पुत्रश्चोत्पत्तिमात्रेण संस्कुर्य्याद्वण मोचनात् १(*) ॥१३७३॥

1343 पितरं नाब्दिकाच्चौलात् पितृमेधेन कर्म्मणेति यमोक्तेश्चेत्यन्येऽप्येव-
माहुः । तदेतदपेशलम ।

पुत्रः पौत्र इति पुर्व्वोक्त वचनादेव । यत्तु, संस्कृत पौत्र सत्त्वेऽप्य-
नुपनीत पुत्रस्यैवाधिकार इति, तद प्यौरसमात्र विषयम् ।

पित्रोरनुपनीतोऽपि विदध्या दौरसः सुतः ।
और्द्धदेहिक मन्येतु संस्कृताः श्राद्धकारिणः ॥१३७४॥

1344. इति हेमाद्रौ स्कान्दोक्तेः । तस्मादत्रायं निष्कर्षः—आद्यावौरसः
पुत्रोऽधिकारी, तदभावे पौत्रः, तदभावे प्रपौत्रः, तदभावे दत्तकादयो
द्वादश पुत्राः, तदभावे भर्त्तुः पत्नी, पत्न्याश्च भर्त्ता, यदि सापत्न-
पुत्रोऽस्ति तदा तयोः स एव कुर्य्यात् ।

विदध्या दौरसः पुत्रो जनन्या और्द्धदेहिकम् ।
तदभावे स पत्नीजः क्षेत्रजाद्यास्तया ( था ) सुताः ॥१३७५॥

1345. तेषाम भावेतु पति स्तदभावे सपिण्डका इति कात्यायनोक्तेः ।

1346. पितृ-पत्न्यः सर्व्वामातरः, इति सुमन्तूक्तेश्च । अपरार्केऽप्येवमेवोक्तम् ।
न भार्य्यायाः पतिर्द्द्याद पुत्राया अपि क्वचित् ।

पिण्डश्चोदकदानञ्चेति,

सर्व्वाभावे स्त्रियः कुर्य्युः स्वभर्त्तृणाम मन्त्रकमिति—

( यत् प्रोक्तं ) तदासुरादि विवाहे पत्नी विषयम् । पत्नी व्यतिरिक्त
1347. विषयं वा । अन्यथा, भार्य्या पिण्डं पतिर्द्द्याद्भर्त्तुः भार्य्या तथैवचेति
शङ्ख वचनं निर्विषयं स्यात् ।

धर्म्मे विवाहे रूढ़ा या सा पत्नी परिकीर्त्तिता २(†) ।
क्रय-क्रीतातु या नारी न सा पत्न्य भिधीयते ॥१३७६॥

---

१(*) 'पुत्रः कस्मात् पुतः त्राणात् नवनादिति' यास्कः 'जायमानोवै ब्राह्मणस्त्रिभि-र्ऋणवाञ्जायत' इति सूत्रम् ।

२(†) 'पत्युर्नो यज्ञ संयोगे' इति पत्युः पत्नी भवति । ब्राह्म विवाहे ।

न सा दैवे न वा पैत्र्ये दासीं तां मुनयो विदुः ।

1348. इति माधवीये शातातपोक्तेः ।

1349. यदत्र शुद्धिरत्नाकरे :—

अपुत्रस्य च या पुत्री सापि पिण्डं प्रदापयेत् ।
तस्य पिण्ड दर्शकं वा एकाहेनैव निक्षिपेत् ॥१३७७॥

1350. इति जावालोक्तेम् ।

भर्त्तूर्धनहरा पत्नी तां विना दुहिता स्मृतेति वृहस्पति वचनं तद्भ्रातृ व्याद्यभाव विषयम्, विभक्त-मृत विषयं वा ज्ञेयम् ।

पत्न्यभावे त्वविभक्तस्य सोदरः १(*) ।

1351. पत्न्य भावेतु सोदर इति पूर्व्वोक्त शङ्खोक्तेः ।

1352. विभक्तस्य दुहिता धन हारित्वेन पूर्वोक्त जावालस्मृतेश्च ।

तत्राप्यनूढ़ा नूढ़समवाये सोदर ऊढ़ैव,—

दुहिता पुत्रवत् कुर्य्यांण्माता पित्रोस्तु संस्कृता ।
आशौचमुदकं पिण्ड मेकोद्दिष्टं सदाचरेत्—॥१३७८॥

1353. इति भरद्वाजोक्तेः । तदभावेदौहित्रः धनहारित्वात् ।

माता पित्रो रुपाध्यायाचार्य्ययोरौर्द्धदेहिकम् ।
कुर्व्वन्मातामहस्यापि व्रती न भ्रस्यते व्रतादिति ॥१३७९॥

1354. वृद्धमनूक्तेः । इदमपिधनहारित्वेस्यात् २(†) ।

श्राद्धं मातामहाणान्तु अवश्यं धनहारिणा ।
दौहित्रेणार्थ निष्कृत्यै कर्त्तव्यं पूर्व्वं मुत्तरमिति—१३८०॥

1355. इति स्कान्दात् ।

दौहित्र भ्रातृ व्ययोः समवाये विभक्तस्य दौहित्रः,
अविभक्तस्य भ्रातृव्यः भ्रातृव्ययोः समवाये ३(‡)
कनिष्ठश्चेद्भ्रातैव, ज्येष्ठश्चेत्तत्पुत्र इति केचित् ।

१(*) सोदर :—सहोदरः एकोदरः भ्रातेति ।

२(†) 'पिण्डं दत्वा हरेद्धनम्' इति स्मृतेः । और्द्धदैहिकं निधनात् परं कृत्यं यत्तदिति ।

३(‡) 'भ्रातृव्यौ भ्रातृज द्विषो' इत्य मरः । भ्रातृ सुतः भ्रातृव्यः । अन्यः शत्रुः । भ्रातृ-शब्दाद 'भ्रातुर्व्यं च' इत्यनेन सिद्धः ।

**अपरेतु :—**

भ्रातुर्भ्राता स्वयञ्चक्रे यद्भिार्य्या नविद्यते ।
तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः ॥१३८१॥

1356. **इति ब्राह्मोक्तेः ।**

ज्येष्ठभ्रातैव कुर्य्यात्तत्पुत्र इत्याहुः ।
नानुजस्य तथाग्रज इतितु, मृतस्य कनिष्ठभ्रातृ सत्त्वविषयम ।

**यच्च,—**

भ्रातृणामेकजातानामेकश्चेत पुत्रवान् भवेत् ।
सर्व्वांस्तांस्तेन पुत्रेण पुत्रिणोमनुर ब्रवीत् ॥१३८२।

1357. **इति मनुवचनं तदपि सोदराभावविषयम् ।**

अनुजोह्यग्रजोवापि भ्रातुः कुर्वीत संक्रियाम् ॥१३८३॥
ततस्तु (स्त्व) सोदरस्तद्वत् क्रमेण तनयस्तयोः ।

1358. **इति मदनरत्ने कात्यायनोक्तः ।**

सोदरसुता(:) सोदर समवाये सोदरसुत एवाधिकारी ।
पुत्रः कुर्य्यात् पितुः श्राद्धं पत्नीच तद सन्निधौ ।
धनहार्य्यथ दौहित्रस्त तोभ्राता च तत् सुतः १(*) ॥१३८४॥
भ्रात्रोः सहोदरो भ्राता कुर्य्याद्दाहादि तत्सुतः ।
ततस्त्व सहोदरो भ्राता तदभावेच तत्सुतः ॥१३८५॥

**इति तत्रैव स्मृतिसंग्रहोक्तेः ।**

1359. **स्मृतिचन्द्रिकायां वृद्धशातातपः ।**

मातुलोभागिनेयस्य स्वस्रीयो मातुलस्य च ।
श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्यच ॥१३८६॥
एतेषां चैव भार्य्याणां स्वसुर्मातुः पितुस्तथा ।
श्राद्धमेवान्तु कर्त्तव्यं यन्मातादि क्रमेणतु इति २(†) ॥१३८७॥

---

१(*) 'ततो भ्राता तत् सुतः' इति पाठान्तरम् । अथ, धनहारी रिक्थभाक् ।
२(†) 'मातामहादि क्रमेणतु' 'भ्रात्रादिष' इत्यपरः पाठः ।

इदमपि पुत्राद्यभावे वेदितव्यम् ।

पुत्रेषु विद्यमानेषु नान्यं वैकारयेत् स्वधाम् ॥१८८७॥

1360. इत्युक्तेः । शुद्धिविवेके, ब्राह्मे—

दत्तानां वाप्यदत्तानां कन्यानां कुरुते पिता ।

चतुर्थेऽनि तास्तेषां कुर्व्वीरन् सुसमाहिताः १(*) ॥१३८८॥

दत्ता वागूदत्तावा ।

दत्ता वाग्दत्ताश्च कन्यकाः एव मदत्ता अपि ।

मातामहानां दौहित्राः कुर्व्यन्त्यह नि चापरे ।

ते पि तेषां प्रकुर्व्वीरन् द्वितीयेऽहनि सर्व्वदा ॥१३८६॥

जामातुः श्वशुरः कुर्य्यात्तस्य सोपि सुसंयतः ।

मित्राणां तदपत्यानां श्रोत्रियाणां गुरोस्तथा ॥१३६०॥

भागिनेय सुतानाञ्च सर्वेषां त्वपरेऽनि ।

राज्ञोऽसति सपिण्डेतु निरपत्ये पुरोहितः ॥१३६१॥

मन्त्री वा तदशौचन्तु पुराचीर्त्वा करोति स इति ॥

अत्र, चतुर्थाहादि श्राद्धविधान मस्थि सञ्चयन-परम् ॥१३६२॥

एतदपि पुत्राद्यभावे वेदितव्यम् ।

1361. तथाहि कालादर्शकारः—

दाहादिमन्त्रवत्पित्रो र्विदध्यादौरसःसुतः ।

तदभावेतु पौत्रश्च प्रपौत्रः पुत्रिका सुतः ॥१३६३॥

दौहित्रोधन हारीच भ्राता तत्पुत्र एवच ।

पिता माता स्नुषाचैव स्वसा तत् पुत्रएवच ।

सपिण्डः सोदकोमातुः सपिण्डश्च सहोदकः ॥ १३६४॥

स्त्रीच शिष्यर्त्त्विगाचार्य्यो जामाताच स्वसापिच ।

उत्सन्न वन्धोरिक्थेन कारयेदवनीपतिरिति ॥१३६५॥

धनहारीति—सर्व्वत्र सम्बध्यते २(†) ॥

मूलमेतन्मनुष्याणां द्रविणं(म)यत् प्रकीर्त्तितम् ।

---

१(*) ताः सर्व्वाः क्रियाः, सर्व्वाः खन्यावाः इति ।

२(†) 'पिण्डं दत्वा हरेद्धनं' इत्यर्थवाक्यात् ।

ऋषिभिस्तस्य निर्द्दिष्टा निष्कृतिः पावनी परा ।
आदेह पतनात्तस्य कुर्य्यात् पिण्डोदक क्रियाम् ॥१३६६॥

1362. इति स्कान्दोक्तं मदनरत्ने । अपिच,—

दत्तकस्तु स्वजनकस्य पुत्राद्यभावे श्राद्धाधिकारी १(*) ।

यत्तु,—

गोत्ररिक्थे जनयितुर्नभ जेद्दत्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डोव्य पैति ददतः स्वधेति ॥१३६७॥

1363. मनूक्तम् ।

इदं जनकस्य पुत्रादि सद्भाव विषयम् ॥

अथ ये दत्त-क्रीत-कृत्रिमाः ( क्वचित्काः ) पुत्राः परपरि—
ग्रहेणानार्षेया जाता स्ते द्व्यामुष्यायणा भवन्ति २(†) ।

यथा,—

शौङ्ग-शैशिरीणां याणिचान्यान्येवं समुत्पन्नानीत्येवं कुलानि भवन्ती त्यादिना, द्वयोः प्रवरानुक्तोक्तेः । ( प्रवरानुक्तेः )

अथ यद्येषां स्त्रासु भार्य्यास्वपत्यं न स्याद् , दत्तकादयोरिकथं कथं हरेयुः । पिण्डं चैभ्यस्त्रि पुरुषन्दद्युः, यद्युभयोर्नस्यादुभाभ्यामेव-दद्युः । एकस्मिन् श्राद्धे पृथगुद्दिश्यैकपिण्डे, द्वावनुकीर्त्तयेत् , परि-
1364. गृहीतश्चोत् ( प्रतिग्रहीतारश्च ) पादयितारश्च, तृतीयात् पुरुषादिति कात्यायन प्रवराध्यायोक्तेः ।

यावन्तः पितृवर्गाः स्यु स्तावद्भिर्द्दत्तकादयः ३(‡) ।
प्रेतानां योजनं कुर्य्युः स्वकीयैः पितृभिः सह ॥१३६८॥

---

१(*) परमव प्रदत्तपुत्रेणापि चतुर्थांहे श्राद्धादिकं स्वजनकस्य ।
दत्रिमः कुर्य्याद यतः पुत्रदानात् परं अन्यः श्राद्धकृन्नास्ति ।

२(†) दत्तको द्विविधः—कैवलदत्तकः द्वामुष्यायणदत्तकश्च ।
कैवलदत्तको जनकेन प्रति ग्रहीत्रर्थमेव दत्तः । तस्यैव पुत्रः ।
द्व्यामुष्यायणस्तु जनक प्रतिग्रहीत्रर्थां भ्यावयोरय मिति संप्रति पन्नः ।
उभयोरपि पुत्रः । इति मित्याक्षरा-वद्दाहृतत्त्वयोः । एवे तद ग्रन्थ कृन्मतं भिन्नम् ।

३(‡) 'नत्वेकं पुत्रं दद्यात् प्रति गृह्णीयाद्वा, अन्यत्रानुज्ञानाद्भर्त्तुः । सहि पूर्व्वेषां सन्तानायं ।
इति दत्तक शिरो मणौ ।
पत्युरनुमतिं विना, स्त्री पुत्रं न दद्यात्' इति च

द्वाभ्यां सहाथ तत् पुत्राः पौत्रास्त्वेकेन तत् समम्।
चतुर्थे पुरुषे च्छन्दस्तस्मादेत्रां त्रिपुरुषी ॥१३६६॥
साधारणेषु कालेषु विशेषोनास्ति वर्गिणाम्।

1362. **इति हेमाद्रौ कार्ष्णाजिन्युक्तेश्च।**

1363. अस्यार्थमाह हेमाद्रिः।

दत्तकादयोजनक-पालकयोः कुले प्रेतानां स्ववर्गीयैः सपिण्डनं कुर्य्युः। दत्तकादीनां पुत्रास्तु, दत्तकादीनां द्वाभ्यां पितृभ्यां जनकपालकयोः कुले प्रेतानां स्ववर्गीयैः सपिण्डनं कुर्य्युः। (दत्तकादीनां पुत्रास्तु, दत्तकादीनां द्वाभ्यां पितृभ्यां जनकपालकाभ्यां सपिण्डनं कुर्य्युः)। दत्तकादि पौत्रास्तु स्वपितरं दत्तकेन संयोज्य एकेन पितामहेन तज्जन केनच सपिण्डयेषुः।

चतुर्थोऽपि तत् कुलस्थ एव, तेषां प्रपौत्रस्तु दत्तकस्य प्रपितामहस्य पालक कुलस्थं चतुर्थं योजयेन्नवा। च्छन्दः इच्छा, तथा दर्श-महालयादौ द्वयोः पित्रोः पितामहयोश्च श्राद्धं देयम्। नतु नियमेन। तत्र द्वयोर्द्वयो र्द्वौ पिण्डौ दद्यात्, एकस्वाद्वयोर्नामनी समुच्चार्य्येति। गोत्रन्तु द्वयोः पालकस्यैवोच्चार्य्यं, विवाहादौतू भयोरिति विवेच-
1364. नीयम्॥ जारजानां विशेषमाहा परार्के—१(*)

1365. **नारदः,—**

जायन्तेऽनियुक्तायामेकेन व हुभिस्तथा।
अरिक्थ भाजस्ते सर्व्वे बीजिनामेव ते सुताः ॥१३६७॥
दद्युस्ते बीजिने पिण्डं माता चेच्छुल्कतो हृता।
अशुल्कोपहृतायान्तु पिण्ड दा( ढू दातो )वोढुरेव ते।
इति। किञ्च, स्त्री कर्त्तृके श्राद्धे त्रैवर्णिके स्त्रियः।
सङ्कल्प मात्रं स्वयं कृत्वा वैदिकमन्त्र युक्तं सर्व्वं ब्राह्मणद्वारा कारयेषुः।

**इति प्रयोगपारिजाते विशेषोऽभिहितः।**

यज्ञेषु मन्त्रवत् पत्नी कर्म्म कुर्य्यादयथा नृप।
तथौर्द्ध देहिकं कर्म्म कुर्य्यात् सा धर्म्म संस्कृतेति

---

१(*) 'जारस्तूपपतिः' जारेणोपतिना जातः सुतः जारजः। कुण्ड गोलकौ उयावपेति

1366. **मदनरत्ने स्कान्दोक्तिश्च । शूद्रकर्त्तृकेतु,—**

अयमेवविधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः ।

अमन्त्रस्यतु शूद्रस्य विप्रोमन्त्रेण गृह्यत ॥१४००॥

1367. **इति ब्राह्मवचनेन ।**

नाध्येतव्यमिदं शास्त्रं वृषलस्यतु सन्निधाविति ॥।१४०१॥

1368. **कूर्म्मपुरानेन ।**

अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेणच ।

श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचनेति ॥१४०२॥

1369. **भविष्य वचनेन च ।**

सर्व्वं कर्म्म तु शूद्रेणामन्त्रकर्त्तृकंकार्य्यम् ।

तत् सन्निधौ तदानीं ब्राह्मणेन पौराणमन्त्रोऽध्येतव्यः

नतु वैदिक मन्त्र इति विशेषः १(*) ॥

**केचितु,—**

नहि वेदेष्वधिकारः कश्चिच्छूद्रस्य विद्यते ।

पुराणेष्वधिकारोमे(श्च)दर्शितो ब्राह्मणैरितिपाद्मोक्तेः ॥१४०३॥

स्त्रीशूद्राणां पौराणमन्त्रपाठेऽप्यधिकारोऽस्ति ।

1370. नाध्येतव्यमिदमिति (कौर्म्मवचनं) तु स्तुतिपरम् । अन्यथाश्रयणेष्वधिकारोनस्यादित्याहुः । नारीणामप्येवं समानन्यायात् । यस्यसर्व्वथा द्रव्यादिकं नास्ति तस्यापि धर्म्मार्थं यथाशक्ति कार्य्यम् ।

1371. **शातातपोये,—**

प्रीत्या श्राद्धन्तु कर्त्तव्यं सर्वेषां वर्णलिङ्गिनाम् ।

एवं कुर्व्वन् नरः सम्यङ् महतीं श्रियमाप्नुयात् ॥१४०४॥

1372. **संग्रहेऽपि,—**

पुत्रः पौत्रश्च तत् पुत्रः पुत्रिकापुत्र एवच ।

पत्नी भ्राताच तज्जश्च पितामातास्नुषा तथा ॥१४०५॥

भगिनी भागिनेयश्च पिण्डदः सोदकस्तथा ।

असन्निधाने पूर्व्वेषामुत्तरे पिण्डदाः स्मृताः ॥

तदभावे स्वकीयं न धर्म्मार्थमपि कारयेत् ॥१४०६॥

---

(*) 'स्त्री शूद्र द्विज बन्धूनां त्रयी न श्रुति गोचरा' इति भागवते ।

,, 'ॐकारोच्चारणाद्धोमात् शालग्राम शिलार्च्चनात् ।
ब्राह्मणी-गमना च्छूद्रः सचण्डालतां व्रजेत्' इति स्मृत्यन्तरे ।

तज्जातीये नैव सम्यग् दाहाद्याः सकलाः क्रियाः ।

1374. सर्व्वेषामेव वर्णानां बान्धवोनृपति र्यतः इति स्कान्दे ॥१४०७॥

पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः ।

और्द्धदेहिकमन्येतु संस्कृताः श्राद्धकारिणः, इति ॥१४०८॥

1375. **मनुरपि,—**

नह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जीवन्धनात् .

नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृत इति ॥१४०९॥

स्वधानिनयनं श्राद्धम् , सोऽपि कृतचूड़श्चेत् तदाधिकारी ।

अनुपपेतो( नीतो ) पि कुर्व्वीत मन्त्रवत् पैतृमेधिकम् ।

यद्यसौ कृतचूड़ः स्याद् यदिवा स्यात्त्रि वत्सर इति ॥१४१०॥

अन्यत्र विशेषः स्तवकादौ द्रष्टव्यः १(*) ।

इति श्राद्धकर्त्तारः ॥

—*—

## अथ श्राद्धदेशाः ।

—*—

1376. **स्कान्दे,—**

दक्षिण प्रवणे देशे तीर्थादौच गृहेऽपिवा ।

भूसंस्कारादि संयुक्ते श्राद्धं कुर्य्यात् प्रयत्नतः ॥१४११॥

स्वभूमौच नदीतीर देशे केशाद्य दूषिते ।

स्थलेषु गिरि पृष्ठेषु सरः स्वायतनेषुच ॥१४१२॥

गोष्ठेषु च विविक्तेषु तुष्यन्ति पितरः सदा ।

तुलसी काननच्छाया यत्र यत्र भवेद्द्विज ॥१४१३॥

तत्र श्राद्धं प्रदातव्यं पितॄणां तृप्तिहेतवे ।

तुलसीबीजनिकरः प्रपतेद्यत्र नारद ॥१४१४॥

पिण्डदानं कृतं तत्र पितॄणामक्षयम्भवेत् ।

शालग्रामसमीपेतु गङ्गातीरे विशेषतः इति २(†) ॥१४१५॥

---

१(*) 'शूद्रेणापि समस्तावद् यावद् देवनजायते' इति स्मृत्यन्तरं अत्र वास्ति ।
नृसिंहपूर्व्व तापन्युपनिषद,—
'सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्राय नेच्छन्ति' ।
यदि जानीयात् स्त्री शूद्रः समृतोऽधिगच्छति' ।
'तस्माच्छूद्रोयज्ञेऽनवक्लृप्त' इति श्रुतिश्च' ।
स्तवकस्यादौ प्रथमे मार्गेऽनुसन्धेयः ।

२(†) 'शालग्राम शिलारूपी यत्र तिष्ठन्ति देवताः । तत्र देवा सुरयक्षा भुवनानि चतुर्द्दश'
इति स्मृतौ ।

तीर्थमृपि सेवितं सलिलाश्रमादि १(*)। भूसंस्काराः केशतूषाङ्गारा-मेध्यास्थि प्रभृति कुत्सित द्रव्यापसरणपुरः सरं, भूलेखन-परिस-मूहनमृद् गोमयलेपनादयः। स्वतोदक्षिण प्रवणाभावे, पितृ-यजनत्व सिद्धये प्रयत्नेनापि दक्षिणाप्रवणत्वं कुर्यात् ।
स्वभूमौ स्वगृहे गोष्ठादौ, अकृत्रिमः प्रदेशःस्थली ॥१४१६॥

—*—

## अथ निषिद्धदेशाः ।

—*—

**पारिजाते, यमः,—**

रूक्षार्क विहतं क्लिन्नं संकीर्णानिष्टगन्धिकम् ।
पिपीलिकादिजुष्टञ्च दुष्टं व्यालादिभिस्तथा ॥१४१७॥
श्व-खरोष्ट्रादिजुष्टञ्च परकीयञ्च कृत्रिमम् ।
देशेत्वनिष्टशब्दञ्च वर्जयेच्छ्राद्ध कर्म्मणीति ॥१४१८॥

परकीयं परगृहीत-गृह-गोष्ठादि । (परस्वामिक स्थानं शत्रुस्थानं वा) नतु गिरि-सरिदरण्य-तीर्थादि, तेषामस्वामिकत्वात् ।

1377. **तथाच, ब्रह्मपुराणे,—**

परकीय गृहे यस्तु स्वान् पितॄस्तर्पयेज्जनः ।
तद्भूमिस्वामिनस्तस्य हरन्ति पितरोवलात् ॥१४१९॥
अग्रभागं स्ततस्तेभ्योदद्यान्मूल्यञ्च जीवतम् ॥

1378. **स्कान्दे,—**

त्रिशंको र्वर्ज्जयेद्देशं यावद्द्वादशायोजनम् ॥१४२०॥
उत्तरेण महानद्या दक्षिणे तु कीटकात् ।
देशस्त्रैशंकोहि नाम श्राद्धकर्म्मणि गर्हितः, इति ॥१४२१॥

---

१(*) येतु निःस्वास्ते तीर्थं देवालयाद्य भावे, गोष्ठे, अश्वत्थ विल्वमूले, ग्रामग्रामतुलसी सन्निधौ, गोमय लिप्तेच भूमौ श्राद्धादिकं कुर्य्यात् ।
अन्यत् तीर्थं काशी-गया-प्रयागादि चैवम् ।

1378. **काम्यदेशानाह, शङ्खः—**

वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे हिमालये।
नर्म्मदा बाहुदा तीरे सर्व्वमानन्त्य मुच्यते ॥१४२२॥
गङ्गाद्वारे प्रयागेच गयाशीर्षे कृतञ्च यत्।

1379. **गयाशीर्ष-प्रमाणत्वादि पुराणे उक्तम्—**

पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः १(*)।
महानद्याः पश्चिमेन यावद्‌ भद्रेश्वरोगिरिः।
उत्तरे ब्रह्मयूपस्य यावद्‌ दक्षिण मानसम् ॥१४२३॥
एतद्‌ गयाशिरोनाम विष्णु लोकेऽपि विश्रुतम्।
शमीपत्र प्रमाणेन पिण्डन्दद्याद्‌ गयाशिरे ॥
उद्धरेत् सप्तगोत्राणि कुलमेकोत्तरं शतमिति ॥१४२४॥

**सप्तगोत्राणितु,—**

पितामाता च भार्य्या च भगिनी दुहिता तथा ॥१४२५॥
पितृमातृ स्वसाचैव सप्तगोत्राणिवै विदुः २(†) ॥१४२६॥

अत्र मातृगोत्रं नाम, मातामह गोत्रम्। भार्य्यागोत्रंनाम—श्वाशुर्य्यम्। अन्यत् स्पष्टम्। एषां गोत्राणामेकोत्तरं शतमिति पितृगोत्रे, तत्त्वानिच चतुर्विंशतिः, गोत्रशब्देनात्र तत्तत्तस्य कुलजातस्थाः पुरुषा-लक्ष्यन्ते। ( यद्वा स्वीय पूर्व्वजाताः ) तेच द्वादश पराअत्र तावन्त एवापरे, एवमन्यत्रापि द्रष्टव्यम्। नृपाः षोड़श राजकीये अर्थशास्त्रे दर्शनात् ३(‡) ॥

—*—

## अथ श्राद्धार्हब्राह्मणाः।

—*—

1380. **आश्वलायनः,—**

आचार्य्याच्छ्रोत्रियः श्रेष्ठः श्रोत्रियाद्‌ भ्रूणएवच।
भ्रूणाद्‌ वेदान्तगश्चापि तस्माच्चैवाग्निमान् द्विजः इति ॥१४२७॥

---

१(*) अत्र पुराणे, वायु पुराणे गया माहात्म्य र्णितमस्ति। स्मृतावपि तदुक्तम्।
२(†) अवसप्त गोत्राणीति पञ्चाम्रादिवत् पारिभाषिकीसंज्ञा ज्ञेया।
३(‡) षोड़श मण्डल राजकीय विषयस्तु शुक्र-वृहस्पत्यर्थ शास्त्र-कामन्दकनीत्यादौ विद्यते।

1381. **एषां लक्षणमपि तेनैव उक्तम्—**

वेदैकदेशपाठज्ञः सदाचारपरः सदा ।
सत्वाचार्य्य इति ज्ञेयः सपत्नीकः प्रशस्यते ॥१४२८॥
शाखैका सकला यस्मिन् निःसन्दिग्धाः प्रतिष्ठिताः ।
स श्रोत्रियः स्वकर्म्माणि कुर्व्वाणः शुचिरात्मवान् ॥१४२९॥
वेदमेकं तदङ्गानि निखिलं वेत्ति योद्विजः ।
सभ्रूण इति विज्ञेयः स्वकर्म्म-निरतः सदा १(*) ॥१४३०॥
साङ्गांश्च चतुरो वेदान् तदर्थान खिलांश्च यः २(†) ।
जानातीह स्वकर्म्मस्थः स प्रोक्तोवेद पारदः (गः) ॥१४३१॥
अपि स्वशाखामेकांवा सकला योद्विजोत्तमः ३(‡) ।
पठित्वाग्नि त्रयं याति सोऽग्निमान् ब्राह्मणोत्तमः ॥१४३२॥
वेदान्तगोऽग्निमांश्चापि स्वकर्म्मपरमोयदि ।
सदाचारपरश्चापि सविप्रः शिव एवहि ॥१४३३॥
स्वशाखामपठित्वातु योऽग्न्याधानं समाचरेत् ।
अग्निष्टोमादिकांश्चापि स विप्रोऽपसदः स्मृतः ॥१४३४॥
यस्मिन्न सकलाः शाखा विप्रेत्विह समर्पिताः ।
श्रोत्रिये श्रोत्रियसुते ब्राह्मणे वा स्वकर्म्मणि ।
स्वाचारं सम्प्रदत्तानि (दत्तानि) फलिष्यन्ति सहस्रधा ॥१४३५॥

1382. **इतिहासेऽपि—**

वेदाध्यायीतु योविप्रः सततं ब्रह्मणि स्थितः ।
सदाचारश्चाग्निहोत्री(च)सोऽग्निर्वै कव्यवाहनः ॥१४३६॥

1383. **हारीतोऽपि—**

अविद्वान् वा सुविद्वान् वासु( सत् ) कुलोदुष्कुलोपि वा ।
बीजक्षेत्रात्मसंशुद्धः श्राद्धेस्वर्हः स्वकर्म्मकृत् ॥१४३७॥

---

१(*) यथा, गर्भस्थ भ्रूणः तदा कैवल्य प्राप्तवत् सुपरम उक्तः, तथायं वेदविद् ब्राह्मणः, भ्रूण-विप्र लक्षणं स्वयं पश्चाद् वक्ष्यते ।

२(†) अङ्ग सहितान् वेदान् साङ्गान्, शिक्षादि षडङ्गान्, तज्ज्ञः विप्र इति ।

३(‡) स्मृतौ,—एकां शाखां सकल्पां वा षड्भिरङ्गैरधीतवान् ।
षट् कर्म्मनिरतो विप्रः स वै श्रोत्रिय उच्यते ॥ महाभाष्येच, श्रोत्रियः छन्दोऽधीते इति ।

तस्मात् सदाचारपरान् वेदज्ञान् कर्म्मतत् परान् ।
चतुः शुद्धान् द्विजान् (द्विजः) श्राद्धे कुलीनानर्च्चयेद्बुधः ॥१४३८॥

विशुद्धो वीज-योनिभ्यां श्रोत्रियः श्रोत्रियात्मजः ।
स्वधर्म्मनिष्ठः शान्तात्मा श्राद्धे केतनमर्हति ॥१४३९॥

केतनमर्हति, इति केतनं सम्प्रदायत्वम् ।

चतुः शुद्धलक्षणमपि—

**सएवाह,—**

यस्य मातापिताचात्मा शुद्धा भार्य्या च सद्विजः ।
चतुः शुद्धः स्मृत स्तज्ज्ञैः सदाचारश्च पञ्चम इति ॥१४४०॥

1384. **पुराणसमुच्चये ।**

गृहस्थाः कुल सम्पन्नाः प्रख्याताः कुल गोत्रतः ।
स्वदारनिरताः शान्ता विज्ञेयाः पङ्क्ति पावनाः, इति ॥१४४१॥

**तथा,—**

यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ॥
तावुभौ पुण्यकर्म्माणो पङ्क्तिपावनपावनौ ॥१४४२॥

1385. **इति याज्ञवल्क्यः ।**

अग्र्याः सर्व्वेषु वेदेषु श्रोत्रियोब्रह्मविद्युवा ।
त्रिनाचिकेतः त्रिमधु त्रिसुपर्णः षडङ्गवित् ।
वेदविच्च सपत्नीकः श्राद्धे केतनमर्हतीति १(*) ॥१४४३॥

त्रिनाचिकेतत्रिसुपर्णौ यजुर्वेदैकदेशौ । तद्व्रत-पूर्व्व-तदध्यायिनौ स्तः । एवं त्रिमधुः ।

**तथा,—**

ऋत्विक् सदस्योऽप्याचार्य्यः स्नातकश्च सुयन्त्रितः ।
सन्ध्याबन्धन निष्ठश्च श्राद्धे केतन मर्हतीति २(†) ॥१४४४॥

---

१(*) केतनम्—कीतनन्तु ध्वजे कार्य्य निमन्त्रण निवासयोः । इत्यजयः । अत्र दैवे, पित्रे निमन्त्रित-विप्रः ।

ब्रह्मविद् युवा इत्यत्र 'निरुग युवा' इति भिन्नः पाठः ।

२(†) —प्राक् इतिहासीक्तकव्यवाहनः—अन्यत्राग्निवाचकः ।

हव्यकव्ययोः—देवपितृ यज्ञादौदेयद्रव्ययोरितिच । पितृणां कव्यं देवानां हव्य मिति ।

युवेति विशेषणमविकलेन्द्रियपरम् । न वृद्धनिरासार्थम्, न
1386. वृद्धान्तानति क्रमेदिति कात्यायनोक्तेः ।

## यत्तु, विश्वामित्रेणोक्तं—

न ब्राह्मणं परीक्षेत कदाचिदपि बुद्धिमान् ।
दातॄन् परीक्ष्य दत्तानि नयन्ति नरकं ध्रुवमिति—॥१४४५॥

तद् द्रव्यव्यतिरिक्तविषयम् । अन्यथा परीक्षणग्रन्थवैयर्थ्यापातात् ॥

## अथ मुख्यकल्पमाह ।

1387. **मनुः—**

एषवै प्रथमः कल्पः प्रदाने हव्यकव्ययोः १(*) ।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥१४४६॥
मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुं ऋत्विग्याज्यौच भोजयेत् ॥१४४७॥

विट्पतिर्जामाता । बन्धुशब्देनात्र शरीर-बन्धवः स्नेहबन्धवश्च
1388. गृह्यन्ते । विशेषानुक्तेः शिष्यानपि गुणवती भोजयेदितिवसिष्ठः ।
1389. अभावेपि शिष्यानिति कात्यायनसूत्रम् । अभावे,—मुख्याभावे
स्वस्रीय-ऋत्विग्जामातृ-श्वशुर मातुलाः त्रिनाचिकेतः २(†) दौहित्र-
1390. शिष्य-सम्बन्धि-बान्धवा इत्यनुकल्पेन याज्ञवल्क्योक्तिश्च ।

1391. **कूर्म्मपुराणे विशेष उक्तः—**

आसमान प्रवरको ह्यसगोत्रस्तथैवच ।
असम्बन्धी च विज्ञेयोब्राह्मणः श्राद्धसिद्धये ॥१४४८॥
श्राद्धेषु विनियोज्याः स्युर्ब्राह्मणा ब्रह्मवित्तमाः ।
ये योनि गोत्र मन्त्रान्ते वासि सम्बन्ध वर्जिताः ॥१४४९॥

---

१(*) एत हव्य-कव्यविषयौ पूर्वानुक्तौ ।
,, 'षत्यागसहनीबन्धुः सदैवानुमितः सुहृत् ।
एकक्रियो भवेन्मित्रः सम प्राणः सखा मतः' इति ।

२(†) 'त्रिनाचिकेतः त्रिभिरेत्य सन्धिं त्रिकर्म्म कृत्तरति' इति कठोपनिषदि च ।
ऋत्विक पुत्रो- गुरुर्भ्राताभागिनेयोऽथविट पतिः' इति स्मृतिः ।

1392. **गार्ग्योऽपि,—**

नैकगोत्रे हविर्दद्यात् समानप्रवरेऽपि वा ।
नचाज्ञाते कुले दद्याद्व यथाकन्या तथा हविः ॥१४५०॥
अभावेह्यन्य गोत्राणां सगोत्रानपि भोजयेत् ।
अत्र सगोत्र शब्देन, एकगोत्रा असम्बन्धिनोऽनुज्ञायन्ते ।
सगोत्रा अपि सप्तम-पुरुषादूर्द्धं भोज्या इत्येके ।

1393. **तदुक्तं श्राद्धकाशिकायाम् , जावालेन,—**

षड्भ्यः पुरुषेभ्योऽर्व्वाक् श्राद्धे हेयास्तु गोत्रजाः ।
षड्भ्यस्तुपरतो भोज्याः श्राद्धे स्युर्गोत्रजा अपि ॥१४५१॥

**इति नेत्यपरे ।**

समानोदकता येषां सापिण्ड्यंवा भवेद यदि ॥१४५२॥
ते वर्ज्या हव्य कव्येषु नेतरे गोत्रिणो द्विजाः ॥१४५३॥

1394. इति ब्राह्मेऽभिधानात् । जावालि वचनं श्राद्धार्हं ब्राह्मणासम्भ-
1395. वविषयम् ।

1396. **विप्राभोवे वसिष्ठः—**

निधाय च दर्भवटूनासनेषु समाहितः ।
प्रैषानुप्रैषसंयुक्तं विधानं परिकल्पयेद्दिति ॥१४५४॥

**दर्भवटुर्नाम परिमित-कुशमयो ग्रन्थिः ।**

यज्ञवास्तुनि मुष्ट्यौ च स्तम्भे दर्भ वटौ तथा ।
दर्भसंख्या नविहिता विष्टरास्तरणेषुचेति स्मृतेः १(*) ॥१४५५॥

—*—

## अथ श्राद्धे वर्ज्याः ।

—*—

1397. न श्राद्धे भोजयेन्मित्तं धनैः कार्य्योऽस्य संग्रहः ।
नारिं नामन्त्रिणं श्राद्धे भोजयेद्द्विजपुंगव इति २(०) ॥१४५६॥

---

१(*) स्मृत्यन्तरेच 'पञ्चाशद्भिः कुशैर्ब्रह्मा, तदर्द्धेन तुविष्टरः ।
तदर्द्धं नोपयमनस्तदर्द्धेन द्विजः स्मृत इति ।।

२(1) 'द्विज पुङ्गवम्' इत्यन्यः पाठः 1

1398. **इति हारीतः । मनुरपि,—**

ये स्तेनपतिताः क्लीवा येच नास्तिकवृत्तयः ।
तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् ॥१४५७॥
जटिलं चानधीयानं दुर्बलं कितवस्तथा ।
याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत् ॥१४५८॥
चिकित्सकान् देवलकान् मांसविक्रयिनस्तथा ।
विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः ॥१४५९॥
प्रेष्योग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः ।
प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्द्धुषि (वि) स्तथा ॥१४६०॥
यक्ष्मीच पशुपालश्च परिवेत्ता निराकृतिः ।
ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एवच ॥१४६१॥
कुशीलवोऽवकीर्णीच वृषलीपतिरेवच ।
पौनर्भवश्च काणश्च यस्यचोपपतिर्गृहे ॥१४६२॥
भृतकाध्यापको यश्च भृतकाध्यापितस्तथा ।
शूद्रशिष्योगुरुश्चैव वागुष्णःकुण्डगोलकौ १(*) ॥१४६३॥
अकारणे परित्यक्ता मातापित्रोर्गुरोस्तथा ।
ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः २(‡) ॥१४६४॥
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी बन्दी च तैलिकः कूटकारकः ३(S) ।
पित्रा विवदमानश्च केकरो(कितवो) मद्यपस्तथा ॥१४६५॥
पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी ।
धनुः शराणां कर्ताच यश्चाग्रे दिधिषू पतिः ॥१४६६॥
मित्रध्रुग् द्यूतवृत्तिश्च पुत्राचार्यस्तथैव च ।
भ्रामरी गण्डमालीच श्वित्र्यथो पिशुनस्तथा ॥१४६७॥

---

१(*) 'वाग्दुष्टः' इति मिश्र पाठः। दुर्वाक्यप्रयोक्ता, कटुभाषीव।
'शूद्राचार्यः' इति पाठान्तरम्।

२(‡) मूलान्तरे 'सम्बन्धैर्वा भवति पतितैः सहाचरन्' इति।
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुः 'संसर्गश्चापि तैः सह' इति।

३(S) तत्रैव,— 'सद्यः पतति मांसेन लाक्षया लवणेन च। त्र्यहेण शूद्री भवति ब्राह्मणः क्षीर-विक्रयात्'।

उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एवच ।
हस्तिगोऽश्वोष्ट्रदमकः नक्षत्रैर्यश्च जीवति १)*) ॥१४६८॥
पक्षिणां पोषकोयश्च यु(सु)द्धाचार्य्यस्तथैव च ।
स्रोतसां भेदकश्चैव तेषां चावरणे रतः ॥
गृहसंवेशकोदूतो वृक्षारोपक एवच ॥१४६९॥
श्वक्रीड़ी श्येनजीवी च कन्यादूषक एव च ॥
हिंस्रोवृषलवृत्तिश्च गणानां चैव याजकः ॥१४७०॥
आचारहीनः क्लीवश्च नित्यं याचनकस्तथा ।
कृषिजीवी-श्लीपदीच सद्भिर्निन्दित एवच ॥१४७१॥
औरभ्रिको माहिषिकः परपूर्वापतिस्तथा ॥
प्रेत निर्यातकश्चैव वर्जनीयाः प्रयत्नतः २(†) ॥१४७२॥
एतान् विगर्हिताचारान् अपाङ्क्तेयान् द्विजाधमान् ।
द्विजाति प्रवरोविद्वानुभयत्रापि वर्जयेदिति ॥१४७३॥

## एतदर्थो यथा—

स्तेनोब्राह्मण सुवर्णव्यतिरिक्तद्रव्यापहर्त्ता तस्कर इति ।
ब्राह्मणसुवर्णहर्त्तुस्तु पतितपदेनैवाभिधानात् ।
पतितोमहापातकीच ३(‡) । क्लीवः सप्तविधोनपुंसकः ४(S) ।

षण्ढकोवातजः पण्डः पण्डः क्लीवोनपुंसकः ।
कीलकश्चेति सप्तैवं क्लीवभेदाः प्रकीर्त्तिताः ॥१४७४॥
तेषां स्त्रीतुल्यवा कृष्णः स्त्री धर्म्मा षण्टको भवेत् ।
पुमान्भुत्वा ( मूर्त्वा ) स्वलिङ्गानि पश्चाच्छिन्दन्तथैवच ॥१४७५॥

---

१(*) ज्योतिर्विद्याः ज्ञात्वा [illegible] मातुलस्या धनापहारी ।
२(†) प्रेतस्य स्वपूर्वक शुल्केन भाटकेन दाहकृदिति ।
'उभयत्र विवर्जयेत्' इति भिन्नः पाठः । ईदृशं तैच कर्मणोः ।
३(‡) श्रुतिश्च—'स्तेनोहिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन् ब्रह्महा पतन्तिचैतेचत्वारः पञ्चमश्चाचरंस्तैः' इति छान्दोग्ये पञ्चविध महापातकी प्रोक्तः ।
४(S) देवल इत्यन्यत्रापि । 'क्लीवः स्यात् सुरतासमर्थः क्लैव्य मुच्यते' इति ।

स्त्रीच पुंभावमास्थाय पुरुषाचारवद्गुणः ।
वात(वीजी)जो वामषण्ढः स्यात् स्त्रीषण्ढोवापि नामतः ॥१४७६॥
असल्लिङ्गोपि षन्ढः स्यात् पण्डस्तून्मान(न)मेहनः १(*) ।
अमेध्याशी पुमान् क्लीवोनष्टरेता न पुंसकः ॥१४७७॥
सकीतक इति क्लीवोयः क्लैब्यादात्मनः स्त्रियम् ।
अन्येन सह संयोज्य पश्चात्तामेव सेवते इति ॥१४७८॥

नास्तिकी वृत्तिर्येषामिति ते नास्तिक वृत्तयो नास्तिका इत्यर्थः । जटिलोब्रह्मचारी जटान्वितः । अनधीयानं तद्विशेषणं, तस्यैव श्राद्धानर्हत्वात् ।

दुर्ब्बलः—रोगात्स्वशक्तिहीनः खल्वाटः, (खल्लीटः) कितवोद्यूता-सक्तः २(†) । पूगयाजको-गणयाजकः । चिकित्सकोभिषक् । देवलका ३(‡) धनार्थं देवार्च्चकाः । मांसविक्रयिणः सूनारताः । सकृदपि-सद्यः पतति मांसेनेति वचनात् ।

विपणजीवो वाणिज्यरतः आपणिकश्च । प्रेष्योधनार्थं ग्रामे राजाज्ञा-कारी । कुनखी-श्यावदन्तौ, स्वभावान्मृतनख कृष्णदन्तौ रोगिनौ । अनयोः पुराकृतकर्म्मशेष सम्बन्धादेव प्रतिषेधः । प्रतिरोद्धा—विरोधी । त्यक्ताग्निः प्रसिद्धः । वृद्ध्याजीवि—वार्द्धुषिकः सूद-ग्राहीति । यक्ष्मी-रोगी, राजयक्ष्म-क्षयरोग ग्रस्तः ।

पशुपालः—तद्वृत्तिजीवी ।

दाराग्निहोत्र संयोगं यः कुर्य्यादग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वज इति ॥१४७९॥

---

१(*) 'उन्मोनमेहनः' इति पाठान्तरम् ।

२(†) प्रतारयामूलक खेलनकृत् , द्यूतक्रीड़ा सक्तः ।

३(‡) वृत्ती, देवार्च्चनरतो विप्रः वित्तार्थी वत्सरत्रयः ।
असौ देवलकोनाम हव्यकव्येषु गर्हितः इति ॥
'चिकित्सकान देवलकान् तथा कारु कुशीलवान्' इत्यादि स्मृति वाक्यान्तरावश्येर्दिति ।
अन्यत् श्राद्धार्हा विप्रा विष्णु स्मृतौ द्रष्टव्याः सन्तिच ।

1399. **एवं स्मृत्युक्तः ।**

ब्रह्मद्विड्—ब्राह्मणद्वेष्टा । गणोमद्रिराशिनां समूहः । तन्मध्यगो—गणाभ्यन्तरगः । कुशीलवोनट—वृत्तिः १(*) । अवकीर्ण—त्यक्त-ब्रह्मचर्य्योब्रह्मचारी । वृषलयनेकविधा । तत् पति वृ षलीपतिः ।
बन्ध्याच वृषली ज्ञेया वृषलीच मृतप्रजा ।
चाण्डाली चानृता याच (तृतीयाच) कुमारी या रजस्वला ॥१४८०॥
इत्यभिधानात् । पुनर्भू रप्यनेका, ततपुत्रः पौनर्भवः । ततस्वरूपं तृतीयस्तवके द्रष्टव्यम् । एकचक्षुः—काणः । (यस्य तु द्वे चक्षुषी नस्तः सोऽन्धः), यस्य गृहे भार्य्यायामुपपतिर्जारोविद्यते । भृत्या-परिक्रीतोऽध्यापको भृतकाध्यापकः । तेनाध्यापितोभृतकाध्यापितः । शूद्रस्य-शिष्यः शूद्रशिष्यः तद्गुरुश्च । वाग्दुष्टो निष्ठुरः पारुष्यकृत् । अमृते भर्त्तरि स्वव्यभिचारेण ब्राह्मणाज्जातः कुण्ड उच्यते । मृते जातोगोलकः ।
शूद्रादिजातस्य श्राद्धे प्राप्त्यभावात् । अकारण—मपातित्यं तस्मिन् सत्यपि पित्रोर्गु रोश्च त्यागी । ब्राह्मैरध्ययनाध्यापनैः । यौवनैर्वैवाहिकैः सम्बन्धैः । सावित्रीपतितैरन्यैश्च समोपगतः । अगारदाहीगृहादिदाहकृत् । गरदोविषप्रदः विप्रोऽन्येषाम् , तस्य महापातकित्वात् । कुण्डाशी—(कुण्डाशो)कुण्डगोलकयोर्गृहे भोक्ता । सोम विक्रयी—सोमलता—तद्रसस्यच विक्रेता । समुद्रयायी—तदुद्योगकृत् ( समुद्रयात्राकृत् ) २(†) ।
वन्दी—स्तावकः । ( अतिशयोक्त्या स्तुतिकृत् ) । तैलिकः—तैलयन्त्रप्रवर्त्तकः । कूटकारको मानतुला कूटकारी । पित्रा विवदमानः पित्रासह धनार्थं विवदमानः । केकरोऽध्यर्द्धदृष्टि र्वक्रदृष्टिर्वा । मद्यपः—द्राक्षादिमद्यपः सुरापश्चेति ३(‡) परमन्यस्य महापातकित्वात् । पापरोगी—कुष्ठादिनानिन्द्यरोगी ।

---

१(*) नाट्योपजीविकः । नाट्य विद्यायां प्रसिद्धः । नाट्याभिनयरतश्च ।
" 'सावित्री पतिता व्रात्या भवन्त्यार्य्यविगर्हिताः' इति स्मृतिः ।
२(†) अथ पतनीयं कर्म्म—बौधायन धर्म्म सूत्रादौ, 'समुद्र संयानं सीधुपानम्' इत्यादि । इति स्मृतिः ।
अपरा स्मृतिश्च—मासं कारागृहेवासं षड्विर्यांति दिन त्रयम्' । 'समुद्रयात्रा स्वीकारं कमण्डलु विधारणम्' । 'द्विज स्याब्दीतु नौ यातुः शोधितस्याप्य संग्रहः' । इति हेमाद्रौ ।
३(‡) मद्यपः—सुरापायी, गौड़ी-पैष्टी-माध्वी-ऐरेय पौष्पी इत्यादि पानकृत् विक्रेताच ।

अभिशस्तो—ऽभिशापयुक्तः १(*) । दाम्भिकः—धर्म्मध्वजः, धर्म्माभिमानी । रसविक्रयी—गुडलवणाद्यादिरसविक्रेता । वृत्त्यर्थं धनुः शराणां कर्त्ता । ज्येष्ठायां अनूढायां कनिष्ठा परिणीता, सा अग्रेदिधिषूः तत्पतिरग्रे दिधिषू पतिः । उत्तरं स्पष्टम् । पुत्रएवाचार्य्योयस्य स पुत्राचार्य्यः । भ्राम—शिशूनां अक्षरपाठकभ्रमः । तस्मिन् स्वयं परिभ्रमन्नर्थार्जको वा । भ्रामरी—( भ्रमः ) रोगश्च । गण्डमाली गलदेशे स्फीतः रोगविशेषोवा । चित्री—वृत्त्यर्थं (मूर्त्यादि) चित्रकर्त्ता । पिशुनोऽपराधः सूचकश्च । उन्मत्तः—उन्मादत्वात् , उन्मादरोगवान् , विक्षिप्तमनाः । अन्धो-द्विनेत्रविकलः । हस्त्यादेर्दमनशिक्षयाजीविकः—हस्तिगवोष्ट्राश्वदमकः । नक्षत्रजीविकः,—२(†) नत्रत्रैर्ज्यौतिषेण जीवकः । पक्षिणां क्रीडार्थमपि पोषकः तत् क्रीड़या अर्थार्जनकारी । युद्धाचार्य्यो—युद्धविद्योपदेष्टा । स्रोतसोभेदकः—स्रोतोनिरोधादिकृत् ।

गृहसंवेशकः—त्वष्टादिः ( स्थपतिश्च सौधादिनिर्म्माता,काष्ठद्रव्यादिनिर्म्माताच ) । दूतोदौत्यवृत्तिः । वृक्षारोपको वृत्त्यर्थमुद्यानपालकः । श्वक्रीड़ी,—श्वभिः क्रीड़तेऽसौ श्वक्रीड़ी । श्येनादि पक्षिभि र्जीवतीति श्येनजीवी (अर्थार्थं नानापक्षिणां क्रीड़ापरश्च) । कन्यादूषकः,—अङ्गुल्यादिना तद्द्योनि विदारकः । हिंस्रो हिंसावृत्तिरतः । वृषलः—अधर्म्मशीलस्तत्पुत्रोवृषल पुत्रः, वृषलः पुत्रोयस्येति वा । गणानां याजकः—अनेकयजमान-याजकः, ग्रामयाजकोवा । उत्तरः प्रसिद्धः । क्लीवः—स्वधर्म्मेस्वनुत्साही स्वकर्म्मसु वा । नित्य याचनकः—सदा याचकत्वेन परोद्वेजकः । स्वयं कृषिकर्त्ता कृष्योपजीवकः । अन्यद्वारा तदुपजीवनस्य वैधत्वात् । श्लीपदी—व्याध्यादिना प्रफुल्ल ( स्फीत ) चरणः । केनापि निमित्तेन सतां निन्द्या विषयः । औरभ्रिकः—मेषपोषकः । माहिषिकः—( वृत्त्यर्थं महिषपालकः ) । परपूर्व्वापतिः व्यभिचारिणी पतिः तस्याः कुत्रचित् स्वपरपूर्व्वाऽन्यस्मैदत्ता, तस्याःपतिः । प्रेत निर्यातकः—मौल्येन प्रेतदाहकः । इति ।

---

१(*) कुत्रचित् 'अभिशप्तः' इति पाठः ।

२(†) ज्योतिष शास्त्रमन धीत्य धनार्थं तद्व्यवहार परः नक्षत्र जीवीति ।

" कुत्रचित् कितवइति भिन्नः पाठः ।

1400. **यमोऽपि—**

काणाः कुब्जाश्च षण्डाश्च कृतघ्ना गुरु तल्पगाः।
ब्रह्मघ्नाश्च सुरापाश्च स्तेना गोघ्नाश्चिकित्सकाः ॥१४८१॥
राष्ट्र कामास्तथोन्मत्ताः पशुविक्रयिणश्च ये।
मानकूप स्तिलाकूटाः शिल्पिनोग्राम याचकाः ॥१४८२॥
राज भृत्यान्ध बधिरा मूक खल्वी(खल्ला)पङ्गवः।
वणिजोमधुहर्त्तारः गरदा वनदाहकाः ॥१४८३॥
समयानाञ्च हर्त्तारः ( भेत्तारः ) प्रदाने ये निवारकाः।
प्रव्रज्योप निवृत्ताश्च वृथा प्रव्रजिताश्च ये १(*) ॥१४८४॥
यश्च प्रव्रजिताज्जातः प्रव्रज्यावसिनश्च ये।
समुद्रयायी वान्ताशी केशविक्रयिणश्च ये ॥१४८५॥
अवकीर्णी च वीरघ्नः श्राद्धे वर्ज्याः प्रयत्नतः। इति।

राष्ट्रकामाः—नृपधर्म्माणः। समयानां—शास्त्रकृत मर्य्यादानां अपहारकाः।

वृथा प्रव्रजिताः—वैराग्यादिकं विना अवैध सन्न्यासस्वीकारिणः।

वान्ताशी,—भुक्तं वमित्वा लालसत्वात् पुनर्भोजी।

1401. **कात्यायनसूत्रेऽपि—**

द्विर्नग्नः शुक्लुथि क्लिबः श्यावदन्त-विध्वन् प्रजनन-व्याधित-व्यङ्गि-श्वित्रि-कुष्ठि-कुनखि-वर्ज्जमिति। द्विर्नग्नः—वेदाग्निशून्यः।

**तथा च,—**

यस्य त्रिपुरुषा नासौ द्वयोर्वात्रियोरपि।
वेदस्याग्नेश्च विच्छेदो द्विर्नग्नः परिकीर्त्तितः ॥१४८६॥

1402. **इति सुमन्तूक्तेः। शुक्लोदुश्चर्म्मा २(†)।**

दुश्चर्मा शुक्लनामा स्यात् यद्वाऽपि कपिलः स्मृतः।
विचर्च्चिकादि-त्वग्दोषो विज्ञेयः परिकीर्त्तितः ॥१४८७॥

---

१(*) अत्र प्रव्रज्याविषये [illegible], [illegible], मानव-धर्मशास्त्रेच [illegible] द्रष्टव्याः।

” अत्र समयः, शिष्टाचारः [illegible] इति। तेन [illegible] ज्ञेयाः। 'समयश्च साधूनां प्रमाणं वेदवद् भवेत्' इति स्मृतिः।

२(†) 'विचर्च्चिका च दुर्गन्धः' इत्यादि [illegible] —'[illegible] कुष्ठ रोगार्त्त [illegible] रोगी।

यद्वा,—

यस्य नैवाधरोष्ठाभ्यां च्छाद्यते दशनावलिः ।
विश्लिष्टः सतु विज्ञेयः ब्राह्मणः पंक्ति दूषक इति ॥१४८८॥

श्यावदन्तः—कपिलदन्तः । विभूतजनः—च्छिन्न लिङ्गाग्रचर्म्मा । व्याधितो महारोगी । व्यङ्गी-न्यूनातिरिक्ताङ्गः । श्वित्री-श्वेत-कुष्ठी १(*) । कुष्ठी—कुत्सित गलिताङ्गः, स्वभावात् कुनखीतिवा ।

1403. शालङ्कायनोऽपि—

अविद्ध कर्णै यद्भुक्तं लम्बकर्णै स्तथैवच ।
दग्ध कर्णैश्च यद्‌ भुक्तं तद्‌ वै रक्षांसि गच्छति ॥१४८९॥

1404. लम्बकर्णलक्ष्माह, गोभिलः—

हनू नूनादधः कर्णौ लम्बौतु परिकीर्त्तितौ ।

1405. द्व्यङ्गलौ त्र्यङ्गलौ शक्तौ इति शातातपोऽब्रवीदिति ॥१४९०॥

1406. अत्र मरीचिः—

मूकश्च पूतिनासश्च च्छिन्नाङ्ग श्चाधिकाङ्गुलिः ।
गल रोगीच गड्, मान्-स्फुटिताङ्गश्च सज्ज्वरः ॥१४९१॥
पण्ढ-तूवर-मन्दाश्च येचान्ये दीर्घरोगिणः ।
येषां न ज्ञायते स्थानं कुल गोत्रादिकन्तथा ॥१४९२॥
न ज्ञातिः ( जाति ) ज्ञायते येषां न सम्बन्धी न बान्धवः ।
कुधर्म्माचरणा येतु न तान् श्राद्धे निमन्त्रयेत् ॥१४९३॥ इति ।

गरुमान् ,—

रोगादुरपि पृष्ठे वोन्नत मांसपिण्डः ।
तूवरो-यौवनेऽप्यश्मश्रुः । श्राद्धघाती—कूर्च्चहीन

1407. इति स्मृतेः ।

मुण्डान् जटिल काषायान् श्राद्धे यत्नन वर्जयेत् २(†) ।
शिखिभ्योऽप्यथरक्ते भ्यस्त्रि दण्डिभ्यः प्रदापयेत् ॥१४९४॥

---

१(*) श्वित्री-श्वेतवर्ण सर्वाङ्गः श्वेतकुष्ठ-रोगी, धवलाङ्गय ।

२(†) मुण्डान्,—वृथा मुण्डितान्, वेशधारिणः, वृथा काषायाम्बरधारिणश्च धर्म्मध्वजिलादीतान् वर्जयेदिति । त्रिदण्डी, यथा—'वागदण्डोऽथमनोदण्डः कायदण्डस्तथैवच ।
यस्यैते कथिता दण्डाः स त्रिदण्डीति कथ्यते' ॥

तेहि व्रतस्थिता नित्यं ज्ञानिनो ध्यानि न स्तथा ।
वृथा मिष परित्यागी वृथापाकरुचिर्द्विजः ॥१४६५॥
ब्राह्मणा ये विकर्म्मस्था वैराल-व्रतिकाः शठाः ।
धर्म्मध्वजी सदालुब्धः छाद्मिको लोकदाम्भिकः ॥१४६६॥
रोगी हीनाति रिक्ताङ्गः क्रूरो धूर्त्तः पुरोहितः ।
अनध्यायेष्व धीयानः सूचकश्च नियामकः ॥१४६७॥
विवाहस्रष्टः( दुष्टः ) स्त्रीजीवी सुदूष्यश्चाहितुण्डकः । इति ॥१४६८॥
वृथामिष परित्यागीति, यश्च श्राद्धादौ दोषबुद्ध्या मांसपरित्यागी ।
श्राद्धे मांसभक्षणमपि युगान्तर विषयम् ।
अक्षता गो पशुश्चैव श्राद्धे मांसं तथा मधु ॥१४६९॥
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् १(*) ।

अत्र कलौ, इति कलिवर्ज्येषूक्तेः ।
विड़ाल वद्व्रतं यस्यासौ वैड़ालव्रतिकः २(†) ।
वैड़ालव्रतिकोज्ञेयः हिंस्रः सर्व्वाभि शंसकः ।

1408. इति स्मृतेः । अहि तुण्डकः—
अहिदन्तोत्पाटी । सर्प मुखाद्द दन्तवहिष्कारी, अहि क्रीड़ाजीवी वा ।

1409. एतस्यापवादमाह, शङ्खः—
अपि चेन्मन्त्र विद्युक्तः शरीरैः पङ्क्ति दूषणैः ।
अदूष्यन्तं यमः प्राह पङ्क्ति पावन एव सः । इति ॥१५००॥

मुण्डानिति—
मुण्डी विशिखः । अशुचिर्व्वा एव यन्मुण्ड स्तस्मै—
1410. तदभि (पि)धानं यच्छिखेति इति शतपथ श्रुतेः ।
अत्र यद्यपि मुण्डत्वेन सन्न्यासि-निषेधः, तथापि, वृथा प्रव्रजिताश्च य- इति यमेन विशेषोक्ते राश्रमब्राह्य मुण्डपरः स निषिद्ध इति ज्ञेयम् ।

---

१(*) अन्यत् कलिवर्ज्य प्रकरणे प्रागुक्तम् ।
२(†) 'कापट्ययुक्त-भिक्षुः' इति बोध्यः । एतेषां समाजेसमादरे दुर्नीति वृद्धिः समाजे सत्यनाशश्च स्यादिति वर्ज्या एते स्युः । तुल्यता सर्वदेवकेन विचारतः व्याख्यातेति प्रसिद्धः ।

1411. **तथा च वायुपुराणे—**

सन्ति वेद विरोधेन केचिद्विज्ञानमानिनः १(*) ।
अयज्ञ पतयो नाम वेधयन्ति यथारज इति ॥१५०१॥

1412. **वाराहेऽपि—**

वैश्वदेवे नियुञ्जीत ब्रह्मचारी-शुचिः सदा ।
भिक्षुकान् देवतार्थेषु प्रजपेदतिथिं यथेति ॥१५०२॥

1413. **छागलेयोऽपि,—**

गन्धमाल्यैः फलैश्चैव भोजनैः क्षीर संयुतैः २(†) ।
सम्पूजयेद् यतिं श्राद्धे पितृणां तुष्टि कारकम् ॥१५०३॥
ब्रह्मचारी यतिश्चैव पूजनीयौ हि नित्यशः ।
तत् कृतं सुकृतं यत्स्या त्तस्य षड्भागमाप्नुयात् ॥ इति ।१५०४।

1414. **मार्कण्डेयोऽपि—**

भिक्षार्थ मागतान्वापि काले संयमिनो यतीन् ३(‡) ।
भोजयेत् प्रणिपाताद्यैः प्रसाद्योद्यत मानसः ॥ इति ।१५०५॥

1415. **कल्पतरावपि—**

पूजयेच्छ्राद्ध कालेऽपि यतिं स ब्रह्मचारिणम् ४(S) ।
विप्राणुद्धरते पापात् पितृ-मातृ-गणानपि ॥१५०६॥
भुञ्जते यत्र कुत्रापि यतयो ब्रह्मचारिणः ।
तृप्यन्ति पितरो देवाः सोऽपि याति पराङ्गतिम् ॥१५०७॥

---

१(*) 'विज्ञानवादिन:' इति भिन्न: पाठ: । अत्र 'विज्ञानवादिन:' बौद्धा अनीश्वरा लौकायतिकाश्चेति । न तु वस्तुतत्त्व सूक्ष्मेक्षिका: । कत्व, वेदयन्ति इति भिन्न: पाठ: ।

२(†) 'संस्कृतैरिति' पाठान्तरम ।
'प्रसादाद्यत मानस:' इति भिन्न: पाठ: ।

३(‡) ब्रह्मचारीतु, 'अदेत व्रतकर्म्माच कवलं ब्रह्मणिस्थित: ।

४(S) ब्रह्मभूतश्चरन् लोके ब्रह्मचारीति कथ्यते' । अत्रतु यति संयमिनौ ब्रह्मचारि तुल्यौ ज्ञेयौ ।
" यद्वा, अष्टाङ्गमैथुनत्यागीति । परमहंसादीनां तु वृत्तं ब्रह्मोपनिषत्-सन्न्यासोपनिषत्-यतिधर्म्म समुच्चय—वेदान्त कल्पतर्वा दिष्वस्ति ।

अलाभे ध्यान-भिक्षुणां पूजयेद्ब्रह्मचारिणम्।
तदलाभेऽप्युदासीनं गृहस्थमपि भोजयेत् ॥१५०८॥ इति।

1416. **विश्वामित्रोऽपि—**

यतिर्व्वा ब्रह्मचारी वा भुञ्जानानां द्विजण्मणाम्।
श्राद्धे यत्र भवेत् साक्षी महालय समं(स्मृतम् )हितत् ॥१५०९॥ इति
एके यतीनिति १(*) कात्यायन सूत्रेऽपि एवमेवोक्तम्।

1417. **वृद्ध वसिष्ठोऽपि,—**

चत्वार आश्रमाः पूज्या दैव श्राद्धेन सर्व्वदा।
चतुरा श्रम वाह्येभ्यः श्राद्धं नैव प्रदापयेत्, इति ॥१५१०॥
दैवञ्च श्राद्धञ्चेति दैवश्राद्धं तेनेत्यर्थ।

1418. **मार्कण्डेय पुराणेच—**

ब्राह्मणानां सहस्रेभ्यो योगीत्वश्नास नो यदि।
यजमानञ्च भोक्तृंश्च नौरिवाम्भसि तारयेत् ॥१५११॥
न चैतत् त्रिदण्डि विषयमेवेति मन्तव्यम्।
परमहंसस्यापि श्राद्धे पूज्यत्वेन श्रवणात्।

1419. **श्रीभागवते सप्तमस्कन्धे,—**

कर्म्मनिष्ठा द्विजाः केचित्तपोनिष्ठा नृपाः परे।
स्वाध्यायेऽन्ये प्रवचने ये केचित् ज्ञान योगयोः ॥१५१२॥
ज्ञान निष्ठाय देयानि कव्यान्यानन्त्य मिच्छता।
दैवञ्च तदभावेस्या दितरेभ्यो यथार्हत इति ॥१५१३॥
कुटीचकोवहूदश्च हंसः परम हंसकः।

1420. एवं चतुर्द्धा यतयः श्राद्धे भोज्याः प्रयत्नतः इति विष्णुस्मृतौ।

**हेमाद्रौ नारदीयेऽपि—**

योवै यतीननादृत्य भोजयेदितरान् द्विजान्।
विजानन्वसतो ग्रामे; कृतन्तद्‌याति राक्षसान् ॥ इति ।१५१४॥

---

१(*) अत्र 'राके यतीन्' इत्यन्यः पाठः। महान् दिव्य' आलयो यस्यां सा महालया, वा अमा, अश्वयुक्कृष्णपञ्चोया। 'आगता यं महालये' इति कृतौ।

1421. **दक्षस्मृतावपि—**

विना मा(मांसेन)सेन मधुना विना दक्षिणयाशिषा १(*) ।
परिपूर्णं भवेच्छ्राद्धं यतिषु श्राद्ध भोजिषु ॥१५१५॥
तस्माद् यतयः श्राद्धे भोज्या इति सिद्धम् ।

1422. **गारुड़े,—अथ श्राद्धविधिं वक्ष्य इत्युपक्रम्य—**

'अपपाः सर्व्वेषु वेदेषु' इत्यादि ग्रन्थेन श्राद्धीय ब्राह्मणानुक्त्वोक्तञ्च—
रोगि हीनातिरिक्ताङ्गाः काणः पौनर्भव स्तथा ।
अवकीर्णादयो येच येत्वाचार विवर्जिताः ॥१५१६॥
अवैष्णवाश्च ये विप्रा न श्राद्धार्हाः कदाचन ।
इत्य वैष्णवानिति निषेधाद् वैष्णव-ब्राह्मणाः श्राद्धे शस्ताः इति गम्यते । वैष्णवत्वमपि—दीक्षामन्त्रादिमत्त्वेनैव ।

1423. वैखानसाद्यागमोक्त दीक्षां प्राप्तोहि वैष्णव इति स्मृते र्यूपाहवनीयत्वादिवत् २(†) ।

1424. **भारतेप्यनु शासनिकेच—**

यतयो मोक्ष धर्मज्ञा योगिनश्चरित व्रताः ।
पञ्चरात्रविदोमुख्या येच भागवताः परे ३(‡) ॥१५१७॥
इति पांक्तेय प्रस्तावे पञ्चरात्रोक्त दीक्षावन्तो वैष्णवाः ।

**श्राद्धार्हं प्रतिमा इत्युक्तम् । यदत्र—**

शिव—केशवयोरङ्काच्छूलचक्रादिकान् द्विजः ।
न धारयेत मतिमान्वादके (इके)वर्त्मनि स्थितः ॥१५१८॥
तादृशं वर्जयेद् ( विप्रं ) श्रौते स्मार्तेच कर्म्मणि ।

1425. इत्याश्वलायनादिवचनम् । तत्तु वृथा वृत्यर्थत्वेनवा तद्धारयितृजनपरम् । इतरथा गारुड़ं वचो निर्विषयं स्यात् ।

1426. **चन्द्रिकायाम्, शातातपः—**

वृथा गीतञ्च नृत्यञ्च वृथा शङ्खादिधारणम् ।
नाचरेन्मतिमान् विप्रोविष्णु प्रीत्यर्थमाचरेत् ॥१५१९॥

---

१(*) अत्र विना दक्षिणया, वना चाशिषाच ।
२(†) वैखानसागमोक्त ब्रह्मचारी । 'वैखानसंविधानया व्रत साम्प्रदायात्' इति महाकविः ।
३(‡) पञ्चरात्राणि, 'हयशीर्ष नारद-कपिल-महेशाख्यानि ।
अत्र भागवता वैष्णवाः । विष्णुरस्य देवता इति वैष्णवः । 'सा अस्य देवता'-इति सूत्रेण ।

इत्याह । समर्थितं चैतत्तृतीयस्तवके, इत्युपरम्यते १(*) ।

अग्निष्टोमादिभिर्यज्ञैर्ये यजन्त्यल्पदक्षिणैः ।

तेषामन्नं न भोक्तव्यं अपाङ्क्तेयाश्च कीर्त्तिता इति ॥१५१९॥

एतच्छक्तौ स्थित्यामिति ज्ञेयम् ।

अव्रती कितवः स्तेनः प्राणिविक्रयकोऽपिवा ॥१५२०॥

1427. यश्चापि पात (तत्) पान वान्सोमं सोपि केततन्नमर्हतीत्यपरार्के २(†) भारतोक्तेः ।

1428. **श्राद्धदीपिकायाम् , यमः—**

अपत्नीकश्च वर्ज्यः स्यात् सपत्नीकोऽप्यनग्निकः ।

प्रतिमा विक्रयी योवै करोति पतितस्तु सः ॥१५२१॥

जीवनार्थं परास्थीनि धृत्वा तीर्थं प्रयाति यः ।

मातापित्रोर्विना सोऽपि पतितः परिकीर्त्तितः ॥१५२२॥

1429. नैते श्राद्धे नियोक्तव्या नियुक्ताः श्राद्धघातका इति जातूकर्णः ।

यत्र मातुलजोद्वाही यत्रवा वृषलीपतिः ।

नैतच्छ्राद्धंपितृणाञ्चेत् कृतं यच्च निरामिषम् ॥१५२३॥

पिता पुत्रौ भ्रातरौ द्वौ निरग्निं गुर्व्विणी पतिम् ।

शैवं पाशुपतञ्चैव श्राद्धेषु परिवर्जयेदिति ॥१५२४॥

मातुलजोद्वाही,—गान्धर्व्वादि विवाहेन समर्थंत चैतत्तृतीयम् ।

1430. **हेमाद्रौ, मात्स्ये,—**

त्रिशङ्कून् वर्वरान् वात्रीन् वाह्लीक-द्रविडकोङ्कनान् ३(‡) ।

कर्णाटकान् तथाभीरान् कलिङ्गांश्च विवर्जयेत् ॥१५२५॥

एतद्देशपरमित्यन्ये । अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रान् गुर्जरांस्तथा ।

आभीरकान् कोङ्कर्णांश्चैव द्राविड़ान्दक्षिणायनान् ४(§) ।

आवन्त्यान्मागधांश्चैव देशान् यज्ञे विवर्जयेत् ॥१५२६॥

1431. इत्यादित्यपुराणोक्ते रित्याहुः । युक्तञ्चैतत् पश्यामः, अन्यथा

---

१(*) तृतीय स्तवके प्रागुक्तं यन्न कश्चिन्नैव पुनरुच्यते ।

२(†) 'यश्चापि पीतवान् सोमम्' इति । कैतन लक्षणं प्रागुक्तं प्रकृतम् । सम्प्रति पृथगुच्यते । भिन्नः पाठः । अत्र मातुल जोद्वाहे श्रुतिश्च 'आयाहि इन्द्र-मातुलस्येव योषा' इति । तत्र सत्याषाढ़ सूत्रं 'मातृगोत्रं माध्यन्दिनीयाणा'मिति ।

३(‡) 'वाह्लीक' इत्यत्र वाह्लीन इत्यन्यः पाठः ।

४(§) 'दक्षिणायनान्' इत्यत्र दाक्षिणात्यान्, तानपि पङ्क्ति दूषका मितिज्ञेयम् ।

तद्देशीयाणां मातामहादि परित्यागापत्तेः ।

सप्तपूर्व्वान् सप्तपरान् पुरुषानात्मना सह ॥१५२७॥

अतिक्रम्य द्विजानेतान्नरके पातयेत् खग ! ।

सम्बन्धिन स्तथा सर्वान् दौहित्रं विट्पतिन्तथा ।

भागिनेयं विशेषेण तथा बन्धुं खगाधिप ! ॥१५२८॥

1432. इति मदनरत्ने अन्यथोक्तेश्च ।

1433. कुष्ठिकाणादेरपवादो हेमाद्रौ वसिष्ठेनोक्तः ।

कुष्ठी च कुनखी चैव काणोविक्लिध एव च ।

एते श्राद्धं समाघ्नन्ति वेदशास्त्र विवर्जिताः ॥१५२९॥

इति वेदशास्त्रानभिज्ञत्वेना ग्राह्या इत्यर्थः ।

अपिचेन्मन्त्र विद्युक्तः शारीरैः पङ्क्ति दूषणैः १(*) ॥१५३०॥

1434. अदूष्यन्तं यमः प्राह पङ्क्तिपावन एव सः, इति स्मृतेः ।

एवं परीक्ष्य श्राद्धार्हान् विवक्षितसंख्याकान् ब्राह्मणान्, पूर्वेद्युः स्वयं भुक्त्वा सायं सन्ध्यावन्धनाग्निहोत्रहोमानन्तरं निमन्त्रयेत् ।

1435. **तदुक्तं श्राद्धतिलके—**

भुक्त्वा सायं स्वयं गत्वा श्रोत्रियाणामथालयम् ।

निमन्त्रयीत पूर्व्वेद्युः स्वशाखिनः द्विजानिति तु ॥१५३१॥

1436. हेमाद्रिणा नादृतं निर्मूलत्वादिति ।

1437. **देवलः—**

श्वः कर्त्तास्मीति निश्चित्य कर्त्ता विप्रान् निमन्त्रयेत् ।

निरामिषं सकृद्भुक्त्वा भुंक्ते सर्व्वजने गृहम् २(†) ॥१५३२॥

गृहस्थित-सर्व्वजने भुक्त इत्यर्थः ।

---

१(*) 'पङ्क्ति पावनाः' यत्र श्राद्धादौ योग्यविप्र भोजने अग्रासनेच योग्या बोध्याः ।
'मन्त्रवित्'—वेदस्मृतिमन्त्रवित्' एतस्याचार पूतस्य च शारीरदोषे पङ्क्ति दोषे च नैव त्याज्यः स विप्र इति यमः प्राह । पङ्क्ति पावन लक्षणं मन्वादावप्यस्ति पुष्कलम् ।
अन्यथा देशाचारलोपापत्तेः । 'यस्मिन् देशे यः—
आचारः पारम्पर्य्यक्रमागतः' इति स्मृतेः । अन्य नीलकण्ठानां आचारमयूखे देशाचार विषये बालभट्टाख्यास्ति । मीमांसायां होलाकाधिकरणेऽपि च ।

२(†) 'सर्व्वजने गृहे' इति भिन्नः पाठः । —श्वः परदिने श्राद्धं कार्य्यमिति सङ्कल्प्य नियमेन—विप्रान निमन्त्रयेदिति ।

1438. **चन्द्रिकायां वाराहे,—**

स्नानेन वस्त्र शौचादि—कर्त्तास्मीति हि जानता १(*) ।
स्थलोपलेपनं कृत्वा ततो विप्रान्निमन्त्रयेत् ॥
दन्तकाष्ठञ्च विसृजेद्द ब्रह्मचारी शुचि र्भवेत् ॥१५३३॥

1439. **बृहस्पतिः—**

उपवीती ततोऽभुत्वा देवार्थन्तु द्विजोत्तमान् २(†) ।
अपसव्येन पित्रेऽथ स्वयं शिष्योऽथ वा सुतः ॥१५३४॥

1440. **भातृघ्ये—**

दक्षिणं जानुमालभ्य त्वं मयात्र निमन्त्रित इति ॥१५३५॥
अत्र निमन्त्रण प्रयोगेपि ।

1441. **प्रचेताः—**

सर्व्वस्मिन् प्रेषयेदाप्तं द्विजानान्तु निमन्त्रणे ।
कर्त्तुर्व्वाऽप्यथ शिष्यादेः कार्य्यान्तरनिमित्तत इति ॥१५३६॥

1442. **अतएव स्कान्दे—**

राजकार्य्य-नियुक्तस्य बन्ध-निग्रह-वर्त्तिनः ।
व्यसनेषु च सर्व्वेषु श्राद्धं विप्रेण कारयेत् ३(‡) ॥१५३७॥ इति

1443. **यमः—**

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितमिति ॥१५३८॥

ब्राह्मण शूद्रयोरेव निषेधात्, क्षत्रियवैश्यकर्त्तृके श्राद्धे ब्राह्मणेन निमन्त्रणे दोषः। अतएव पूर्व्वं प्रचेतोवचने सर्व्ववर्णपदं सम्भवप्रायम् ॥

—*—

१(*) अत्र पाठः क्लिष्टार्थः।

२(†) श्राद्धकर्त्तुः प्रतिवन्धकत्वे सति पराधिकारिणा कारयेत्। न तु शक्तः स्वं काले नत् त्यजेत्। अत्र, उपवीती दैवे, पैत्रे प्राचीनावीती, मानुषे निवीति। कात्यायनेन च, सदोपवीतिना भाव्य सदावद्ध शिखेनच। विशिखोऽनोपवीतेन यत् करोति न तत् कृतम्' इति।

३(‡) पुत्र-दौहित्र-पुरोहितैः कारयेन्नतद्द वर्जयेत्।
अत्र वृषलः अपशूद्रा द्वि बोध्यः।

## अथ ब्राह्मण संख्याउक्ता (श्राद्धे) आश्वलायन सूत्रे—

—*—

एकैकमेकैकस्य द्वौ द्वौ त्रीं स्त्रीन्वा वृद्धौ फलभूयस्त्वमिति ।

1444. द्वौद्वाविति,—वृद्धिश्राद्ध परमिति नारायण वृत्ति कृत् ।

1445. **कात्यायन सूत्रेपि—**

द्वौवा दैवे त्रीन्-पित्र्ये एकैक मुभयत्र वा ।

मातामहानामप्यैवं तन्त्रं वा वैश्वदैविकमिति ॥१५३९॥

1446. **सूत्रान्तरेऽपि—**

दैवे युग्मान् अयुग्मान् पित्र्ये त्रीन् इति १(*) ।

1447. **अत्रापि व्यवस्थामाह, गौतमः—**

नवाचाराद्, भोजयेदयुजोवा यथोत्साहमिति । पराशरोपि—

सम्पत्ता वथपात्राणामेकैकस्य त्रयस्त्रयः ।

पित्रादेर्ब्राह्मणाः प्रोक्ताश्चत्वारोवैश्वदैविके ॥१५४०॥ इति ।

1448. **वृद्ध याज्ञवल्क्योऽपि,—**

दशैकं पञ्च वा विप्रान् पार्वणे विनियोजयेत ॥१५४१॥

वैश्वदेवे द्वौचतुरो वोपवेश्य पित्रादीनामे कैकस्य स्थाने एकं त्रीन्वोप-

1449. वेशयेदित्यर्थः । अतएव मनुः—

द्वौ दैवे पितृकार्य्ये त्रीन् एकैकमुभयत्रवा ।

भोजयेत् सुसमृद्धोऽपि न प्रसज्येत विस्तरम् ॥१५४२॥

सत्क्रियं देशकालौच शौचं ब्राह्मण सम्पदम् २(†) ।

यश्चैतान् विस्तरोहन्ति तस्मान्नेहेत विस्तरम्, इति ॥१५४३॥

1450. **वृद्ध वसिष्ठः,—**

श्राद्धद्वयं करिष्यन्तु दशवा चतुरोऽपिवा ।

त्रीन्वा निमन्त्रयेद्द्विप्रान् एकं वा सत्यवादिनमिति ॥१५४४॥

---

१(*) अत्र, त्रीन् पित्रो, मातामहेच त्रीन्, दैवे सर्व्वत्रैव युग्ममिति । नान्दीमुखेच सर्व्वत्र युग्मानिति केचन ।

२(†) अत्र 'संकीर्त्तं' इति वा पाठः ।

1451. **अत्र, शातातपः—**

द्वौ दैवेऽथर्वणौ विप्रौ प्राङ्मुखावुपवेशयेत् १(*) ।
पित्र्ये तूदङ्मुखांस्त्रीं स्त्रीन् बह्वृचाध्वर्य्यु सामगानिति ॥१५४५॥

1452. **नारदः—**

ब्राह्मणेषु पविष्टेषु यतयः श्रोत्रियास्तथा ।
दैवादायान्ति श्राद्धे तान् विप्रान् पङ्क्तौतु भोजयेदिति ॥१५४६॥

1453. **अशक्तौ हेमाद्रौ, देवलः—**

एकेनापि हि विप्रेण षड्पिण्डं श्राद्धमाचरेत् ।
षोड़शान्दापयेत्तत्र षड्भ्योदद्यात्तथा हविः ॥१५४७॥

1454. **गोभिलः—**

यद्येकं भोजयेच्छ्राद्धे छन्दोगन्तत्र भोजयेत् ।
ऋचो यजूंषि (षो) सामानि त्रितयन्तत्र विद्यते ॥
अलाभेत्वन्यविप्रं वा भोजयेन्नतु हापयेदिति ॥१५४८॥

1455. **श्राद्धमिति शेषः २(†) । वसिष्ठः—**

यद्येकं भोजयेच्छ्राद्धे दैवन्तत्र कथम्भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्व्वस्य प्रकृतस्यच ॥१५४९॥
देवतायतने कृत्वा ततः श्राद्धं समाचरेत् ।
प्रास्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणे ॥१५५०॥
एतच्च सपिण्डीकरणवर्ज्यं ज्ञेयम् । नत्वेवैकं सर्व्वेषां कामनाद्ये३(‡)

1456 इत्याश्वलायनसूत्रात् । एतदर्थंनारायण स्मृतौ—
आद्यं सपिण्डीकरणं तद्वर्जं सर्व्वशास्त्रे कामं त्रयाणामेकं भोजयेत् ।
सपिण्डीकरणेतु नियतं त्रिभिर्भवितव्यम् । यद्वा, अनाद्ये पार्वण-

---

१(*) '...र्वणौ विप्रौ' इति भिन्नः पाठः । नतु ह्रापयेत् इतुल्यजित् । श्राद्धं विदध्याद्भोजयेच्चान्याश्च ।
२(†) 'शिलांचयः' इति पाठान्तरं दृश्यते । 'नतु श्रद्धैविकम्' इति परः पाठः ।
३(‡) 'अत्र कार्व्यनाद्यम्' इति पाठान्तरम् । श्राद्ध कर्त्तृणां भोक्तृणांच श्राद्धे ये नियमाउक्तास्ते
ते: पालनीयाः ।
अन्यथा सम्यक् फलं न स्यात् । तेच नियमा मन्वादि स्मृतावुक्ताः ।
इति श्राद्ध विषये ज्ञेयम् ।

वर्जित श्राद्धे अभोजने, आमहेमश्राद्धादौ वा अन्नाभावेवेति व्याख्यान्तरम् ।

1457. अत्र साग्नेर्विशेषमाह, प्रचेताः—

एकस्मिन् ब्राह्मणे दैवे साग्नेरग्निर्भवेत् सदा ।
अनग्नेः कुशमुष्टिःस्या च्छ्राद्धकर्मणि सर्व्वशः ॥१५५१॥
निधाय दर्भं निचय मासनेषु समाहितः ।
प्रैषानु प्रैषसंयुक्तं सर्व्वं श्राद्धेषु कल्पयेत् ॥१५५२॥
तस्य स्वरूपमुक्तं प्राक्, मातृश्राद्धेतु विप्राभावे सुभाषिण्यो भोज्याः

1458. इत्याहापरार्कः १(*) ।

मातृश्राद्धेतु विप्राणां अलाभे पूजयेदपि ।
पतिपूर्व्वान्विताः भोज्या योषितोऽष्टौ कुलोद्भवाः ॥ इति,
अत्राष्टाविल्यविवत्तितं वृद्धिश्राद्धयिषयम्वा ॥१५५३॥
तेन यथासम्भवं भोज्या इति ।
सकृद्वाऽभ्यर्चितं लिङ्गं शालग्रामशिलोच्चयम् ।
पीठे संस्थापयित्वातु श्राद्धं यः कुरुते नरः ।
पितरस्तस्य तिष्ठन्ति कल्पकोटिं शतं दिवीति ॥१३५४॥
पठन्निमन्त्र्य नियमाच्छ्रावयेत् पितृकान् बुधः ।
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः २(†) ।
भवितव्यम्भवद्भिश्च मयाच श्राद्धकारिणा ॥
असम्भवे परेद्युर्व्वा ब्राह्मणांस्तान्निमन्त्रयेदिति ।१३५५॥

1459. यदहः सम्पद्यते तदहर्ब्राह्मणानामन्त्रयेदिति कात्यायन सूत्रमपि ॥

—*—

## अथ श्राद्धकर्त्तृ-भोक्तृनियमः ।

—*—

1460. **अपरार्के यमः,—**

केतनं कारयित्वातु योऽतिक्रामति वैद्विजम् ।
ब्रह्महत्यामवाप्नोति शूद्रयोनौच जायते ।

---

१(*) अथवा तादृश विप्रालाभे सुभाषिणीः भोजयेत्, श्राद्धं विदध्याच्च । 'त्रीणि श्राद्धे पवित्राणि दौहित्रं कुतपस्तिलाः ।' अत्र दौहित्रः योग्यविप्रश्च ।

२(†) 'ब्रह्मवादिभिः' इत्यन्यः पाठः ।

**अन्यत्रापि,—**

आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत् ।
अति कष्टासु घोरासु तिर्य्यग्यौनिषु जायते ॥१५५७॥

1461 **प्रमादाद् हारीतः—**

प्रमादाद्व विस्मृतिं ज्ञात्वा प्रसाद्यैनं ( द्येन ) प्रयत्नतः ।
तर्पयित्वा यथा न्यायं सर्व्वं तत् फलमश्नुते ॥१५५८॥

1462. **ज्ञानपूर्व्वं त्यागे नारायणः—**

एत स्मिन् एनसि प्राप्ते ब्राह्मणोनियतःशुचिः ।
यति चान्द्रायणं कृत्वा तस्मात् पापात् प्रमुच्यत इति ॥१५५९॥
इदञ्च श्राद्धार्हं विप्रातिक्रम विषयं ज्ञेयम् ।
तेन प्रमाणानर्हंविप्रमामन्त्र्य तत्यागे न दोषः १(*) ।
ब्राह्मणाति क्रमोनास्ति मूर्खे मन्त्र विवर्जिते इति । कात्यायनोक्तेः ।
विप्रेणाप्यनि न्यामन्त्रणे न प्रत्याख्येयः ।
अनिन्द्येनामन्त्रितेनापक्रामेदन्यदन्नं न प्रति गृह्णीयादिति कात्यायन-सूत्रात् ।

1463. **हेमाद्रौ यमः,—**

आमन्त्रितस्तु योविप्रो भोक्तुमन्यत्र गच्छति ।
नरकानां शतं गत्वा चण्डालेष्वभि जायते ॥१५६०॥

1464. **देवलोऽपि—**

पूर्व्वं निमन्त्रितोऽन्येन कुर्य्यादन्य प्रति ग्रहम् ।
भुक्ताहारोऽपि वा भुंक्ते सुकृतं तस्य नश्यतीति ॥१५६१॥

1465. **मनुः—**

केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः २(†) ।
कथञ्चिदप्यतिक्राम-न्यायात् सूकरताम्व्रजेत् ॥१५६२॥
केतितो निमन्त्रितः । कथञ्चिदिति—मिष्टान्नबहुदक्षिणादिलोभेन, नत्व सामर्थ्यादिनेत्यर्थः ।

---

१(*) एतच्छिन्निति 'एकच्छिन्नति' भिन्नः पाठः । 'प्रमादेनानर्हम्' इति पाठान्तरम् ।
२(†) कीत्तनस्तु इति अन्यः पाठः । अव कीत्तनः शास्त्रोक्त श्राद्धीय ब्राह्मणः ।

विद्यमानोऽथनोविद्वान् भोज्यान्नेन निमन्त्रितः १(*)।

1466. मद्यात्लोभाद्‌तिक्रम-न्यायात् सूकरतामव्रजेदितिस्कान्दोक्तेः ।

यस्त्वामन्त्रितो यथाकालं नायाति तद्दोषान्न भोज्यान्ने

निमन्त्रितः २(†) ॥१५६३॥

आमन्त्रितश्चिरं नैव कुर्य्याद्‌ विप्रः कदाचन ।

देवतानां पितॄणाञ्च श्राद्धादौ धर्म्मकर्म्मणीति ॥

दातृ-कर्त्ता न कुर्वीत दन्तानां धावनं बुध इति ॥१५६४॥

1467. **इतिहासेऽपि,—**

दन्तधावन—ताम्बुलं क्षौराभ्यङ्गञ्च भोजनम् ३(‡) ।

रत्यौषधपराञ्चञ्च श्राद्धकर्त्ता विवर्जयेत् ॥१५६५॥

दन्तधावनमभ्यङ्गं नखकेश-निकृन्तनम् ।

कर्त्ता कुर्व्वीत पूर्व्वेद्युर्भोक्ता चैव परेऽहनि इति ॥१५६६॥

1468. **प्रमादाद् दन्तधावने यमः,—**

श्राद्धोपवास दिवसे खादित्वा दन्तधावनम् ।

गायत्र्याः शतसंपूतं अम्बु प्राश्य विशुद्ध्यतीति ॥१५६७॥

## श्राद्ध कर्त्तुस्त्याज्यम्—

पुनर्भोजनमध्वानं भारमायास मैथुने ।

दानं प्रतिग्रहं होमं श्राद्धभुक् त्वष्टवर्जयेत् ४(§) ॥१५६८॥

होममग्नि होत्रादि व्यतिरिक्तम् ।

---

१(*) मत्ततया धन लोभाद्वातिक्रमे शूकरत्वं गच्छेदिति ।

२(†) 'तद्दोषेन भोज्यान्नं' इति भिन्नः पाठः।

३(‡) 'श्राद्ध भुक् श्राद्ध कृत्तथा' इति पाठान्तरम्।

,, 'यात्रा युद्धं नदी पारं पुनर्भोजन मैथुनम्।

मपालादं रतिं स्वापं श्राद्ध कृदष्ट वर्जयेत्' इति स्मृत्यन्तरे।

,, 'दानं प्रतिग्रहमिति'—श्राद्धीय दक्षिणादिदान व्यतिरिक्तं ज्ञेयम्।

४(§) 'श्रद्धा हि दन्त काष्ठस्य त्यागः स्नानमथोषधि'। श्राद्धाहे कृते दन्तमार्जने रक्तपातादिना चताशौचं श्राद्ध-प्रतिबन्धकं स्यादिति। दन्त- धावन निषेधः।

1469 **यमश्च—**

आमन्त्रित स्तु यः श्राद्धे कलहं कुरुते नरः ।
भवन्ति पितरस्तस्य तंमासं मलभोजनाः ॥१५६९॥
आमन्त्रितस्तु योविप्रः ह्यध्वानं याति दुर्मतिः ।
भवन्ति पितरस्तस्यतंमासं पांशुभोजनाः ॥१५७०॥
आमन्त्रितस्तु यो विप्रः भारमुद्वहते स्वतः ।
पितरस्तस्य तं मासं भवन्ति स्वेद भोजनाः ॥१५७१॥
आमन्त्रितस्तु यो विप्रः हिंसां वै कुरुते तदा ।
तं मासं पितरस्तस्य भवन्ति रुधिराशनाः ॥१५७२॥

1470. **शङ्खर्षिः—**

निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः ।
श्राद्धं दत्वा च भुक्त्वा च युक्तः स्यान्महदेनसा ॥१५७३॥

**मैथुनञ्च ऋतावपि निषिद्धम् ।**

ऋतुकाले नियुक्तोवा नैव गच्छेत् स्त्रियं क्वचित् ।
तत्र गच्छन्न वाप्नोति ह्यनिष्टानि फलानित्विति ॥१५७४॥

1471. **माधवीये वृद्धमनूक्तेः ।**

भोक्ष्यन् करिष्यन् श्वः श्राद्धं पूर्व्वरात्रौ प्रयत्नतः ।
व्यवाय-भोजने वापि पता ( शक्ता )वपि विवर्जयेत् ॥१७७५॥

1472. **इत्याश्वलायनोक्तेश्च । यदत्र विज्ञानेश्वरेण—**

श्राद्धे शक्तौ स्त्रियं गच्छती न दोष इत्युक्तम् ।

1473. **तत्त्वगतिकमिति ज्ञेयम् । बृहस्पतिश्च,—**

द्विनिशं ब्रह्मचारीस्या च्छ्राद्धकृद् ब्राह्मणैः सह ।
अन्यथा वर्त्त मानौ तु स्यातां निरयगामिनौ ॥१७७६॥
पुनर्भोजन मध्वानं भारमायाश मैथुनम् १(*) ।
श्राद्धकृत् श्राद्धभुक्चैव सर्व्वमेतद्विवर्जयेत् ॥१७७७॥

---

१(*) 'अध्ययनम्' इति पाठान्तरम् ।
" अत्र 'मांसाश-मैथुनम्' इत्यन्यः पाठः ।

1474 **यदत्र श्राद्धकाशिकायां, पुराण समुच्चये—**

कृत्वातु रुधिर स्रावं विद्वान्न श्राद्ध माचरेत् ।
एकं द्वे त्रीणिवा तत्रं दिनानि परिवर्जयेदिति ॥१७७८॥
तत्तु गौरादयः आद्रियन्ते न दाक्षिणात्याः ।

1475. हेमाद्र्यादि महानिबन्धेष्वनुपलम्भादिति ।

1476. **यमः—**

कलहश्च दिवास्वापं भाराध्ययन-मैथुनम् ।
सन्ध्यां प्रतिग्रहं होमं श्राद्धकृदष्ट वर्जयेत् १(*) ॥१७७९॥
अत्र सन्ध्यादि निषेधः प्राक् प्रायश्चित्ताज् ज्ञेयः ।

1477. **यथाह, उशनाः—**

दशकृत्वः पिवेचापः गायत्र्या श्राद्धकृद्द्विजः ।
ततः सन्ध्यामुपासीत जपेत जुहुयादपि ॥१७८०॥

**जुहुयाद्धविरादित्यागं कुर्य्यात् ।**

सूतके च प्रवासे च अशक्तौ श्राद्ध भोजने ।
एवमादि निमित्तेषु हावयेन्नतु हापयेत् ॥१७८१॥

1478. **इति कात्यायनोक्तेः । सोमोत्पत्तौ,—**

वनस्पति गते सोमे-यस्तु-हिंस्याद्वनस्पतिम् ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशय इति ॥१७८२॥
एतस्मिन्विहिते व्याध्यादिव्यपदेश व्यतिरिक्त परम् ।

**तथा,—**

वनस्पतिं गते सोमेऽनडुहो यस्तु वाहयेत् २(†) ।
नाश्नन्ति पितरस्तस्य दशवर्षाणि पञ्च चेत्यादि ॥१७८३॥
एतेऽध्ययनादि निषेधाः, यथायोग्य मुभयोरपि ज्ञेयाः ।
तदाहः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यादध्व-मैथुन-स्वाध्याय-श्रमान् वर्जयेद् आमन्त्रिताश्चैवमिति—

---

१(*) अत्र श्राद्धकृत्, श्राद्धभोक्ताच एतानष्टौ वर्जयेदिति.
अत्र सन्ध्यां सायं सन्ध्यां न कुर्यात् । गायत्री मात्र जपे न दोषः ।

२(†) 'विहिते व्यध्ययनादिव्यतिरिक्त' इति पाठान्तरम् । अत्रानडुहो उपभाम् भारवहने नाभि युञ्जीत इति ।

1479. **कात्यायनसूत्रात् ।**

स्वयमशक्तो यदि पुत्रादिभिः श्राद्धं कारयति तदा तेषां स्वस्यापि नियमाः स्युः १(*)।

न शक्नोति स्वयं कर्त्तुं यदाह्यनवकाशतः ।
श्राद्धं शिष्येण पुत्रेण तदान्येनापि कारयेत् ॥१७८४॥
नियमानाचरेत् सोऽपि नियतांश्च वसुन्धरे !
यजमानोऽपि तान् सर्व्वान् आचरेत् सुसमाहितः ॥१७८५॥

1480. इति कात्यायन परिशिष्टोक्तेश्च । सः प्रतिनिधिः ।

1481. **स्त्रियास्तु पाद्मे—**

मुक्त कच्छातु या नारी मुक्तकेशी तथैवच २(†) ।
हसते रुदते श्राद्धे निराशाः पितरस्तदा ॥१७८६॥

1482. **आश्वलायनः—**

श्राद्धाहे भोजये द्वास्तौ न वालानपि यत्नतः ।
प्राक् पिण्डदानाद् गन्धाद्यै र्नालं कुर्य्यात् स्व विग्रहम् ३(‡) ॥१७८७॥
वास्तौ गृह इति ॥

—*—

## अथ श्राद्धेवस्त्राणि ।

—*—

1483. **संग्रहे,—**

कौपीनं मलिनं रक्तं चित्रं खण्डं परांशुकम् ३(‡) ।
काषायं कारु कौशेयं (पट्टं च) श्राद्धकाले प्रशस्यत इति ॥१७८८॥

---

१(*) स्व-नियमा अपर नियुक्त कर्त्रापि पालनीयाः ।

२(†) देश विशेषे नार्य्यः सकच्छाः देशान्तरेतु कच्छ हीनाः, तत्तु होलाकाधिकरणन्यायेण अस्य प्रामाण्यम् ।

अत्र विग्रहं शरीरं ज्ञेयम् ।

„ 'नरक्त मुल्वनं वा सीन मौलश्च प्रशस्तते' इति स्मृती। मन्त्रशास्त्रे, 'स्नातः शुक्लाम्बर धरः धौतांघ्रि पाण्यानन:' इति च ।

३(‡) 'द्विकच्छ: कच्छशेषश्च मुक्तकच्छ स्तथैवच। एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः' इति स्मृत्यन्तरे ।

तत्रैव, प्रातः स्नान-विधानेन श्राद्धीय-द्रव्यमाहरेत् ।
समित् पुष्पकुशादीनां द्वितीयः परिकीर्त्तित इति ॥१७८९॥

**अत्र द्वितीयः,—**

अष्टधाविभक्त-दिवस-द्वितीय भागे इत्यर्थः ।

1484. **हेमाद्रौ, यमः**—१(०) ।

समूलस्तु भवेद्दर्भः पितृणां श्राद्धकर्म्मणि ।
मूलेन लोकान् जयति शक्रस्यतु महात्मनः ॥१७९०॥

1485. **व्यासः—**

तर्पणादीनि कार्य्याणि पितृणां यानि कानिचित् ।
तानिस्युर्द्विगुणैर्दर्भैः सम्पत्रैः विशेषतः ॥१७९१॥

1486. **शालङ्कायनः—**

सपिण्डीकरणं यावद्दृजुदर्भैः पितृक्रिया ।
सपिण्डी करणादूर्द्ध्वं द्विगुणैर्विधिवद्भवेत् ॥१७९२॥

1487. पित्रे द्विगुणास्तु दर्भा इति कात्यायन सूत्रम् ।
द्विगुणा भुग्ना इत्यर्थः ।

1488. **अत्र शङ्खः—**

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेवच ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥१७९३॥

1489. समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशौ, पवित्रमिति कात्यायनश्रौतसूत्रम् ।

1490. **अत्र हारीतः—**

पवित्रं ब्राह्मणस्यैव चतुर्भिर्द्दर्भ पिञ्जलैः ।
एकैकन्यूनमुद्दिष्टं वर्णे वर्णं यथाक्रमम् ॥१७९४॥

1491. **स्मृत्यर्थसारेतु,—**

सर्व्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रथितं नवम् ।
चतुरादि पवित्रन्तु काम्यादौ परिकीर्त्तितम् ॥१७९५॥

---

(*) 'कुर्य्याद् विधवा श्राद्धं यवैनाप्यथ दूर्व्वया । न स्पृशेत्तिल दर्भांश्च सधवातु कथञ्चन्' इति ब्राह्मण सर्व्वस्वे । अततु सभ्र्या श्राद्धमपि तिलदर्भान्न स्पृशेदिति ।

1492. **स्कान्देच,—**

अनामिका धृता दर्भा ह्येक(का)नामिकया पिवा ।
द्वाभ्यामनामिकायान्तु धार्य्यं दर्भ पवित्रके इति १(*) ॥१७१६॥

1493. **पवित्राभावे सुमन्तुः—२(†) ।**

समूलाग्रौ विगर्भौ तु कुशौ द्वौ दक्षिणे करे ।
सव्येचैव तथा त्रीन्वै बिभृयात् सर्व्वकर्म्मस्विति ॥१७१७॥

1494. **कुशाभावे, अपरार्कें सुमन्तुः,—**

कुशः काशःशरोमुञ्जायवोदूर्व्वाथ वल्वजाः ।
गोकेश मुञ्जकुन्दाश्च पूर्व्वाभावे परः पर इति ॥१७१८॥

1495. **विशेष मत्राह, शङ्खः—**

कुशहस्तस्तु नाचामेत् कदाचिद्विधि शङ्कया ।
प्रायश्चित्तेन शुध्येत दूर्व्वाहस्तस्तथैवच ।
न ब्रह्मग्रन्थिनाचामेत् सर्व्वमसुरवद्भवेदिति ॥१७१९॥

1496. **ब्रह्मग्रन्थ्यादि लक्षणमुक्तं संस्कार-हेमाद्रौ, गारुड़े,—**

सन्त्यज्य वैष्णवं मार्गं ब्रह्ममार्गविनिः सृतम् ।
सकृत् प्रदक्षिणी कृत्य पवित्रमभिधीयते ।
तद्ब्रह्म ग्रन्थिमत्प्रोक्तं पवित्रं वेदवादिभिः ॥१८००॥
पवित्र कर्त्तुरभिमुखः प्रदेशो ब्रह्ममार्ग इति तत्रैव व्याख्यातम् ।
ब्रह्मयज्ञे व्रते चैव ब्रह्मग्रन्थि र्विधीयते ।
भोजने वर्त्तुलः प्रोक्तः एवं धर्म्मो न हीयते ॥१८०१॥

---

१(*) 'पूजा काले सर्व्वदैव कुशहस्तो भवेच्छुचिः ।
तर्ज्जन्या रजतं धार्य्यंस्वर्णं धार्य्यानामया ।
कुशेन रहिता पूजा विफला कथिता मया।' इत्यत्र पूजापदं धर्म्म कृत्य मात्रपरं बोध्यम् ।
इति मन्त्रशास्त्रे वरदातन्त्रं ।

२(†) अत्र पवाभावे इति भिन्नः पाठः ।

" अत्र सर्व्वकृत्यमसर कर्म्मवत् स्यादित्यर्थः ।

**अस्यार्थः—**

द्विगुणी कृतानां दर्भ शिखानां पाशं प्रदक्षिणमर्द्धवेष्टनं विधाया-पश्चादभा १(*) गेन यदा प्रविश्यते, तदा वर्त्तुलो ग्रन्थिः। यदा स एव प्रादक्षिण्येन समग्र वेष्टनं विधाय पुरोभागेन प्रविश्यते तदा ब्रह्मग्रन्थिः।

**वृत्तग्रन्थिमत्पवित्र-लक्षणमपि, तत्रैव—**

अर्द्धं प्रदक्षिणीकृत्य शिखापाशं प्रवेशयेत् ।
वैष्णवेनैव मार्गेण वृत्तग्रन्थौ पवित्रके ॥१८०२॥

इति वैष्णवोमार्गः पश्चाद्भाग इत्यर्थ इति तत्रैव व्याख्यातम् ।
दर्भग्रहणादिप्रकारस्तु आह्निकादौ द्रष्टव्यः ।

1497. **गालवः—**

अन्यानिच पवित्राणि कुशदूर्व्वात्मकानिच ।
हेमात्मक पवित्रस्य कलां नार्हन्ति षोढ़शी मिति ॥१८०३॥

—*—

## अथ हविः ।

—*—

1498. **हेमाद्रौ, प्रचेताः—**

कृष्णमासास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः २(†)।
महा यवा व्रीहि यवा स्तथैवच मधुलिकाः ॥
कृष्णाः श्वेताश्च रक्ताश्च ग्राह्याः स्युः श्राद्धकर्म्मणीति ॥१८०४॥

मधुलिका पावनाला इति हेमाद्रिः । खर्ज्जु(र्मु)जा इत्यन्ये ३(‡)।

1499. **भारते—**

वर्द्धमान-तिलं श्राद्ध मक्षय्यं मनुरब्रवीत् ।
सर्व्वकामैः सयतते यस्ति लैर्यजते पितृणिति ॥१८०५॥

---

१(*) 'विधायाथ पश्चात्' इति भिन्नः पाठः ।

२(†) अत्र घृतादि हवणीय-देयद्रव्याणि प्रोच्यन्ते ।

३(‡) 'मिष्ट खर्जुरोवा' इति पाठे सन्देहः ।

## अथ वर्द्धमानं तिलं तिलबहुलम्।

1500. **चन्द्रिकायां देवलः—**

इष्टापूर्त्तं मृताहेच दर्शवृद्ध्यष्टकासुच १(*)।
पात्रेभ्यस्त्रिषु कालेषु नैव देयं कुभोजनम् ॥१८०६॥

1501. **ब्रह्मवैवर्त्ते,—**

गोधूमाश्च यवाश्चैव समुद्गा रक्तशालयः।
एते सोमात् समुद्भूताः पितृणाम मृतन्ततः॥१८०७॥
तस्मा देवतु तैर्देया एते श्राद्धेषु वंशजैः।
अगोधूमञ्च मच्छाद्धं माषमुद्ग विवर्जितम्॥
तैल पक्वेन रहितं कृतमप्यकृतम्भवे दिति ॥१८०८॥

1502. **ब्राह्मे,—**

यवै र्व्रीहि तिलैर्माषै गोधुमैश्चणकै स्तथा।
सन्तर्पयेत् पितृण् मुद्गैः श्यामाकैः सर्षपै द्रवैः ॥१८०९॥
नीवारैर्हरिश्यामाकैः प्रियङ्गुभिर्य्थार्च्चयेदिति॥
यदिष्टं जीवतश्चासी त्तद्द्यात्तस्य यत्नतः २(†)।
स तृप्तौ दुस्तरं मार्गं ततो याति न संशयः॥१८१०॥ इति

1503. विहित द्रव्यदानं तद्धितमेव भक्ष्यनिषिद्धदाने श्राद्ध घातस्य, प्रमाणत्वात्।
श्राद्धार्ह द्रव्य कथनानर्थक्याच्च।

1504. **आश्वलायनः—**

कदल्यादिफलैः शस्तैर्मूलैरार्द्रादि कैरपि।
गोरसैर्मधुना दध्ना श्राद्धं सन्तर्पयेत् पितृण्॥
कालशाकं महाशाकं द्रोणशाकं तथार्द्रकम्॥१८११॥

---

१(*) 'इष्टं पूर्त्तं दत्तम्' इति स्मृतौ कथितम्। अत्र 'इष्टापूर्त्त-मृते' इति भिन्नः पाठः।
एतत् त्रयं धर्म्मकृत्यं अभ्युदय निश्रेयसः प्रदम्।

२(†) एतानि श्राद्धादौ प्रशस्तानि देय द्रव्याणि।

" " निषिद्ध द्रव्याणि काच शाकादीनि। एवमेव ह्रविष्यादौ देवार्चनादौच।

बिल्वामलकमृद्वीकाः पनसाम्रे च दाड़िमम् ।
चव्यं पांलकता ( आ )क्षोट खर्जुरं चक्रसेरुकम् ॥१८१२॥

कोविद्रारश्च कन्दश्च प(क)टोलं वृहती फलम् ।
पिप्पली मरीचं चैव दला शुन्ठी च सैन्धवम् ॥१८१३॥

शर्करा गुड़ कर्पूरं वदरी द्रोण पन्न(न्त)कम् ॥
गोधूमै रिक्षुभिर्मुद्गैः सती ( ची )नैश्चरकैरपि ॥१८१४॥

क्रमुकैश्च तथा कन्दैः कर्कन्धु वदरैरपि १(*) ।
पालेवतै रारुट्टैश्चाप्याक्षोटैः पणसैस्तथा ॥१८१५॥

काकोल्या क्षीरका कोल्या तथा पिण्डारकैः शुभैः ।
लाजादिभिश्च स धानाभिस्त्रपु कार्कारु ठिर्भटैः ॥१८१६॥

सर्षपैः राज शार्पकैस्त्वङ्क ट्रैराज जम्बुभिः ।
प्रियालामल कैर्नुं रव्यैः फल्गुभिश्च तिलाण्डकै ॥१८१७॥

वेत्राङ्कैः स्तालकन्दै श्चक्रिका ङ्कीमि कावचैः ।
लोटैः स मोचै र्लकुचैस्तथा च वैजपूरकैः ॥१८१८॥

मुञ्जातकैः पद्म फलैर्भक्ष्यै र्भोज्यैश्च संस्कृतैः ।
राग स खा )ण्डैः(च)श्यैश्च त्रिजातक समन्वितैः ।
दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरोनृणाम्, इति ॥१८१९

सतीनकः कलायः । 'कलायस्तु सतीनकः' इत्यभिधानात् । चरकं वर्त्तुल धान्यम् । केचकः कंचनारः । कन्दः सूरणादिः । तन्मात्रंऽवा । 'अर्शोघ्नः शूरणः कन्द' इत्युक्तेः । कर्कन्धुर्वन्य वदरम् । पालेवन्तः कोशातकी । आरुङ्कमरूपीति कान्यकुब्जा आहुः २(†) ॥

---

१(*) 'कर्कन्धु-सौवीर-वदर-घोण्टा' एषु तारतम्यं गुणानामस्ति। अत्र 'चणकैरपि' इति भिन्नः पाठः ।

'कर्कन्धु फल मिश्र शाकपचनामोदः परिस्तीर्य्यते' इति भवभूतिः।

उक्त शाकादीनां फलानाञ्च वैद्यकि द्रव्यगुण ग्रन्थे गुणदोषा उक्ताः।

,, 'लाजश्चिभीत' इत्यन्यः पाठः।

,, टिर्भटैरित्यत्र चिर्भटैरिति, अपरः पाठः।

२(†) एतेषां देश द्रव्याणां नामानि देश भेदे व्यवहारतो भिन्नानि सन्ति ।

पोथेति—महाराष्ट्राः। अक्षोटं—आखरोटेति गूर्ज्जरदेशे प्रसिद्धम्। काकोलीक्षीर काकोल्यौ गौड़देशे द्वे प्रसिद्धे। पिण्डारकं—मोहलकंदेति महाराष्ट्रे प्रसिद्धम्। डउ(यु)साद्य—स्त्रयः कर्कटी १(*) भेदाः। सार्षपेत्यत्र दीर्घश्छान्दसः। उत्तरं प्रसिद्धम्। पियालं-चिरोञ्जीति मध्यदेशे प्रसिद्धम्। फल्गु—उदुम्बरं विलण्टकं, पटोलम्। तालकन्दः—कन्दविशेषः। चक्रिका—तिन्ति (न्तिरी)णी फलम्। क्षीरिका—क्षीरिणी (औषधी) विशेषः प्रसिद्धा। वचः फल विशेषः। शेषं प्रसिद्धम्। त्रिजातकं—लवङ्गैला मरीचकम्।

मधुकं रामठंचैव कर्पूरं गुड़मेव च।
श्राद्ध कर्म्माणि शस्तानि सैन्धवं त्रसुपन्तथा इति २(†) ॥१८२०॥

1504. **पृथ्वीचन्द्रोदये, ब्राह्मे,—**

आम्र माम्रातकं विल्वं दाड़िमंवीजपूरकम्।
प्राचीनामलकं क्षीरं नारिकेलं परूषकम् ॥१८२१
नागरङ्गकश्च खर्जूरं द्राक्षानील कपित्थकम्।
एतानि फलजातानि श्राद्धे देयानि यत्नतः ॥१८२२॥ इति।

1505. **याज्ञवल्क्यः—**

हविष्यान्ने न वैमासं पायसे न तु वत्सरम्।
मात्स्य हारिणकौरभ्र-शाकुन छाग पार्षतैः ३(‡) ॥१८२३॥
ऐण-रौरव-वाराह-शाशैर्मांसै र्यथाक्रमम्।
मा (मां)स वृद्धया भितृप्यन्ति दत्तैरिह पितामहाः ॥१८२४॥

1506. **श्राद्धीयमांसाभक्षणे दोषमाह, मनुः—**

नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः।
स प्रेत्य पशुतां यति संभवानेक विंशतिम् ॥॥१८२५॥

---

१(*) द्रव्याण्येतानि, वैद्यक-निघण्टौ द्रव्यगुण-प्रकाशाभिधान-वनौषधिवर्गादिषु प्रसिद्धानि सन्ति।

२(†) 'त्रिकुचोचकुचोडङ्गुः' इत्यभिधाने। एवुषमित्यत्र केशरमिति भिन्नः पाठः।

३(‡) मात्स्य—इत्यत्र मांसैः इति भिन्नः पाठः।

४(§) सांस वृद्धया इत्यन्यः पाठः। 'मधुपर्के च यज्ञे च पैत्रेदैवत कर्मणि। अत्रैवपशवोहिंस्या-इति' श्रुतिः।

1507. **इतिहासेऽपि,—**

नियुक्तस्तु यदि श्राद्धे दैवे यो मांसमुत्सृजेत् ।
यावन्ति पशुरोमाणि तावन्नरक मृच्छतीति १(*) ॥१८२६॥
यच्छ्राद्धं मधुना हीनं तद्रसैः सकलैरपि ।
मिष्टान्नैरप्य संयुक्तं पितॄणां नैव तृप्तये ॥१८२७॥
अणुमात्रमपि श्राद्धे यदि न स्यात्तु माक्षिकम् ।
नामापि कीर्त्तनीयं स्यात् पितॄणां प्रीतये ततः ॥१८२८॥

इत्यादि बहु-स्मृतिभिः श्राद्धे मधु मांसयोर्यत् प्राशस्त्य मुक्तं तद्-युगान्तर विषयम् । कलि धर्म्मास्तु वक्तव्या इत्यृषिभिः पृष्टः पारा-
1508. शरो, वृहत्पाराशरे यतो मांसं निषेधति,—

यस्तु प्राणिवधं कृत्वा मांसैस्तर्पयते पितॄन् ।
सो विद्वां श्चन्दनं दग्धा कुर्य्यादङ्गार विक्रयम् ॥१८२९॥
क्षिप्त्वा कूपे यथा कश्चिद्वाल मादातु मिच्छति ।
एवम ज्ञानतः सोऽपि मांसेन श्राद्ध कृन्नर इति ॥॥१८३०॥

1509. **श्रीमद्भागवतेऽपि सप्तमस्कन्धे पञ्चदशाध्याये,—**

नदद्यादामिषं श्राद्धे न चाद्याद्धर्म्म तत्त्ववित् २(†) ।
मुन्यन्नैः स्यात् परा प्रीति र्यथा न पशु हिंसया ।
नैतादृशः परोऽधर्म्मः नृणां सद्धर्म्म मिच्छताम् ॥१८३१॥ इति ।

वादरायणोऽपि मांसं निषेधति,—

अक्षता गो पशुश्चैव श्राद्धे मांसं तथा मधु ॥१८३२॥

1510. देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्ज्जये दितिनिगम वचनं हेमाद्रौ ३(‡)। वरातिथि पितृभ्यश्च पशूपकरण क्रियेति कलिवर्ज्येष्वादित्य पुराण-वचनञ्च ।

---

१(*) अत्रैव पुनरुक्तम्,—
अश्वमेधं गवालम्भं सन्न्यासं पलपैतृकम् । देवरेण सुतोत्पत्तिं कलौ पञ्चविवर्जयेत्' इति।

२(†) कलिवर्ज्य प्रकरणं भागवतादित्य पुराणतो हेमाद्रि सूरिभिः संगृहीतम्। पश्चात्तथा निवन्ध कृद्भिः भट्टाचार्य्यं रघुनन्दनादिनाभिः गृहीतम्। सायणाचार्य्यैरपि 'युगेयुगेच ये धर्म्माः' इत्यादिना तत्तद् युगधर्म्मोऽभिहितः विभिन्नश्चेति अङ्गीकृतम्। यज्ञादौ पश्वालम्भनं वैधमेव, अन्यथा अश्वमेध-ज्योतिष्टोम-मांसाष्टकासु वपा होमेच तदनुपपत्तिः। "या वेद विहिता हिंसानियतेऽस्मिन् चराचरे। अहिंसा मेव तां विद्धि वेदाद्धर्मोहिनिर्बभौ' इत्यादि स्मृतेरपि व्याघातः स्यात्। वेदान्त-सांख्ययोगमते सा नैव विहिता।

३(‡) शास्त्रीय वाक्यमेव निगमवचनमिति।

1511. **तथा च वृहन्नारदीये,—**

समुद्र यात्रा स्वीकारः कमण्डलु विधारणम् ।
द्विजानाम स वर्णासु कन्यासूपयमस्तथा ॥१८३३॥
देवराच्च सुतोत्पत्ति र्मधुपर्के पशोर्वधः ।
मांसदानन्तथा श्राद्धे वानप्रस्थागमस्तथा ॥
इमान् कलियुगे धर्म्मान् वर्ज्यानाहुर्मनीषिणः ॥१८३४॥
इति वचनञ्च मांसं निषेधति ।

तस्मान्मांस विधिः कलि व्यतिरिक्त विषय इति सिद्धम् । केचिदाहुर स्वभावा यथाचारं प्रदेयन्तु मधु मांसादिकम् १(*) । तथा देशाचाराः परिग्राह्यास्तत्तद्देशीयैर्नरैरिति वृहन्नारदीय वचनाद् यथा कुलाचारं मांसादि दान—तदभावौ च व्यवस्थेयावित्याहुः । तन्न, होलाकाधिकरण न्यायेन देश विशेषेण व्यवस्था-कल्पनायोगात् । कलि निषिद्ध समुद्र यात्रादि स्वीकारापाताच्चेत्यलं प्रपञ्चेन २(†) ॥

1512. **क्षीरादौ विशेषमाह, सुमन्तुः—**

पयो दधि घृतञ्चैव गवां श्राद्धेषु पावनम् ।
महिषीणां घृतं प्राहुः श्रेष्ठं नतु पयः क्वचित् ॥१८३५॥

1513. **याज्ञवल्क्यः—**

सन्धिन्य निर्द्दशा-वत्स-गोपयः परिवर्जयेत् ।
औष्ट्रमैकशफं स्त्वैण मारण्यक मजाविकम् ॥१८३६॥

1514. **ब्राह्मे—**

माहिषं चामरं मार्गं आविकैक शफोद्भवम् ।
ऐण मौष्ट्रं पाचितञ्च दधि-क्षीरं त्यजेद्घृतम् ॥१८३७॥
स गुड़ं मरीचाक्तन्तु तथा पर्य्युषितं दधि ।
दीर्णातक्रमुपेतञ्च नष्टास्वादञ्च फेणवदिति ॥१८३८॥

---

१(*) मन्त्रशास्त्रेऽपि वैध मांसादि भक्षणे न दोषः । तथाहि 'अनिवेद्य न भुञ्जीत मत्स्य मांसादिकञ्च यत्' । 'देवान् पितृण् समभ्यर्च्च खादन् मांसं न दूष्यति' इति । देवादिभ्यः निवेद्य भक्षणे न प्रत्यवायः । हादि-काद्युभय मते दोषाभावः श्रीमद अभिनवगुप्त—भट्टभास्कर—शैवनील कण्ठाचार्य्यादिभिर्निरधारि ।

२(†) 'व्यवस्था कल्पना-अयोगात्' इति पाठान्तरम् ।

, 'स्वीकारो पातात्' इत्यन्यः पाठः ।

1315. **यद्यपि याज्ञवल्क्यो,—**

नान्नं पर्य्यूषितं भोज्यं स्नेहाक्तं चिररसं स्थितम् ।
अस्नेहा अपि गोधूम यवगोर स विक्रियाः । इति ॥१८३९॥

पर्य्यूषितं दध्यादि भोज्य मुक्तम् । तथापि गुड़ मरीचाक्तस्यात्र
1516. निषेधः, इति हेमाद्रिः ।

तथा, कालशाकं तण्डुलीयं वास्तुकं मूलकन्तथा ।
शाकमारण्यकंचैव दद्याच्छ्राद्धेषु नित्यश इति ॥१८४०॥

तन्दुलीयं महाराष्ट्रेषु—माचइति प्रसिद्धम् । मूलकं आरण्यं—नतु ग्राम्यम् । वचनं आह्निकग्रन्थादौ द्रष्टव्यम् । अन्यदपि ग्रन्थान्तरोक्तं ग्राह्यम् ॥

1517. **अथ वर्ज्यम्, मार्कण्डेय पुराणे,—**

यच्चोत्कोचादिना प्राप्तं पतिताद्व यदुपार्जितम् ।
अन्याय कन्या शुल्कार्थं द्रव्यं चात्रावि गर्हितम् ॥
'पित्रर्थं मे प्रयच्छस्वे' त्युक्त्वा यच्चाप्युपाद्द तमिति ॥१८४१॥

1518. **शङ्खः—**

भूतृणं सुरसां शिग्रुं पालङ्कची मृचुकन्तथा ।
कुष्माण्डालाबु वार्त्ताक (कुः) कोविदारांश्च वर्जयेत् ॥१८४२
पिप्पली मरीचञ्चैव तथावै पिण्डमूलकम् ।
कृत्रिमं लवणं सर्व्वं वंशाग्रञ्च विवर्जयेत् ॥१८४३॥

अत्र कोविदार-मरीचादीनां निषिद्धत्वेऽपि पूर्व्वं विहितत्वाद्(त्तु) विकल्पः । एवं हिङ्गुवीजपूरादीनामपि । यद्वा, हिङ्गुपिप्पली-
1519. मरीचानां आर्द्रकाणां निषेधः इति हेमाद्रिः १(*) ।

---

१(०) उत्कोच :— स्वकार्य्यं सिद्धौ रहसि राजकर्म्म करिभ्यो धनादानम् ।

,, कन्याशुल्कम् :— कन्या विक्रयलब्ध धनम् । तन्निषिद्धं स्मृतौ, तन्देशं पतितं मन्ये यत्रास्ते शुक्र विक्रयी, शुक्रमपत्यम्, 'अपत्यं पुत्रकन्ययोः' इति कोषकृत् ।

,, न केवलं पित्रर्थम्, सर्व्वार्थं देवातिथि कुटुम्बार्थंश्चेति । अतैव प्रतिकूले मनुः 'अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्' इति । भर्त्तव्याः—वसनान्न-स्थान-पानादिभिः पालनीया इति ।

,, आर्द्रम्—आर्द्रकम्, पाचकौषधिरिति । अन्यद्द वैद्यके शाकादीनां परिचयन मस्ति ।

,, तरुणं दधि त्याज्यम्—'तरुणं तत्तु विज्ञेयं दधि पञ्च दिनात्परम्' ।

'रोग करत्वादेतदपि अभोज्यम् । 'यातयामं गत रसं पूति पर्य्युषितञ्च यत् ।
उच्छिष्टमपि चा मेध्यं भोजनं तामस-प्रियम्' । इति गीतायाम् ।

भूतृणं, काश्मीरदेशे प्रसिद्धम्। सुरसा—निर्गुण्डीति माधवः। पालङ्क्यी-पालंकीति प्रसिद्धा। ऋचुकः जलजः शाकः।

1520. **तथाच, शङ्खः—**

राजमाषान् मसूरांश्च कोद्रवान् कोरदूषकान्।
लौहितान् वृक्ष-निर्यासान् श्राद्ध कर्म्मणि वर्जयेत् ॥१८४४॥
पिण्डालकञ्च तुण्डीरं करमर्दञ्च नालिकाम्।
कुष्माण्डं बहुवीजानि श्राद्धे दत्वा व्रजन्त्यधः, इति॥
पिण्डारकं प (पू) ति, कुष्माण्डम्। तुण्डीरं—महिषी क्षीरं, आढकी (तुमरी) राजसर्षपाः। चणका राजमाषाश्च घ्नन्ति श्राद्धं न संशयः॥

1521. **माधवीये, चतुर्विंशतिमते—**

यावनालान् कुलत्थांश्च वर्जयेत्तु विचक्षणः।
मसूराञ्जनपुष्पञ्च विडङ्गमखिलानिचेति ॥१८४५॥
अखिलानि,—प्राक् श्राद्धे निषिद्ध वस्तूनि।
अत्र यावनालादीनां विहित निषिद्धत्वाद्विकल्प एव।
यद्वा, सात्विक-राजस-तामस-विषयत्वेन व्यवस्थेयम्।
मुन्यन्नैःस्यात् परा प्रीतिरिति भागववतोक्तेः।
सात्विक-राजस-तामसा-हारा उक्ताः भगवद्गीतायाम्,—
आयुः सत्त्व बलारोग्य सुखप्रीति विवर्द्धनाः।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्विकप्रियाः ॥१८४६॥
कट्वम्ल लवणात्युष्ण तिक्तरूक्ष विदाहिनः।
आहारा राजसस्येष्टा दुःखशोकामय प्रदाः ॥१८४७॥
यातयामं गतरसं पूति पर्य्युषितञ्च यत्।
उच्छिष्ट मपिचामेध्यं भोजनं तामसप्रियमिति ॥१८४८॥

1522. **स्मृतिचन्द्रिकायां प्रमाणान्तरमाह—**

दातुश्च यस्मिन् मनसोऽभिलाषः,
श्रद्धा भवेद् यत्रच दीयमाने।
श्राद्धेषु देयं विधि सम्प्रदिष्टम्;
तदृत्तमक्षय्यमितिब्रुवन्तीति ॥१८४९॥

1523. पठीनसिः।

वृन्ताकं नालिकापोत-कुसुम्बारक्तकानिच १(*)।
भावदुष्टं क्रियादुष्टं शब्ददुष्टं तथैवच।
श्राद्धे ष्वेतान्य देयानि यच्चाभक्ष्यं प्रकीर्त्तितमिति।
पुरषार्थतया प्रतिषेधक धर्म्मशास्त्रेपु (अन्यशास्त्रेपु च) यद—
भक्ष्यत्वेनोक्तं तच्च श्राद्धे नदेय मित्यर्थः ॥१८५०॥

1524. **अथवर्ज्यं जलम्। ब्रह्माण्डे,—**

—*—

दुर्गन्धि फेलिनं क्षारं पङ्किलं पल्ललोदकम्।
न भवेद् यत्र गो तृप्तिर्नक्तं यच्चाप्युपाहृतम् ॥१८५१॥
यन्न सर्व्वार्थमुत्सृष्टं यच्चा भोज्यं निपानजम्।
तद् वर्ज्यं सलिलन्तात ! स दैव श्राद्ध कर्म्मणि ॥१८५२॥

1525. **कुत्रचित् प्रतिप्रसवमाह, नारदः—**

त्यजेत् पर्य्यूषितं पुष्पं त्यजेत् पर्य्यूषितं जलम्।
न त्यजेज् जाह्नवीतोयं तुलसी विल्वपत्रकं इति २(†) ॥१८५३॥

1526. **मात्स्ये, कुतपा उक्ताः,—**

मध्याह्नः खडग् पात्रञ्च तथा नेपाल कम्बलः।
रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥१८५४॥
पापं कुत्सित मित्याहु स्तस्य सन्तापकारिणः।
अष्टाव(म)यनकाः तस्मात् कुतपा इति विश्रुताः ३(‡) ॥१८५५॥
मध्याह्नः श्राद्धारम्भे ग्राह्यः। अन्यद् यथा योग्यं ग्राह्यम्।

---

१(*) अत्र रक्तकाणि,- रक्तवर्णं पुष्पाणि तद्वर्णं-द्रव्याणिच श्राद्धे वर्ज्याणि।

२(†) अत्र तुलसीपत्रक मिति भिन्नः पाठः।

,, अन्य त्रैतदुक्तं यथा,—'वर्ज्यं पर्य्यूषितं तोयं वर्ज्यं पर्य्युषितं जलम्। नवर्ज्यं जाह्नवी तोयं न वर्ज्यं तुलसी- दलम्' इति पुराणे !

३(‡) अत्र दौहित्रं—पारिभाषिकं विहितम्। पञ्चाक्षादिवद्‌वा। दुहितुरपत्यंपुमान् दौहित्र-इति प्रकृतः। यद्वा एतेचाष्टौ दौहित्रान्ताः श्राद्ध प्रयोजका ज्ञेयाः।

,, वमनमिति—मधुकर कीटानां वान्तंमध्विति। मृतकपंटं—कदलीत्वगिति च केचन। कुतपः—कुतपः-अष्टम मुहूर्त्ताख्यः कालश्च। रौहिणः कालः इत्यन्ये। 'आरभ्य कुतपे (ऽ:) श्राद्धं कुर्य्यादा रौहिणं बुधः'। इति एकोद्दिष्ट-विषये।

1527. **अपरार्के, स्मृत्यन्तरे—**

अपत्यं दुहितुश्चैव खड्ग पात्रन्तथैवच ।
घृतञ्च कपिलाया गोदौंहित्रमिति कीर्त्तितम् ॥१८५६॥
अमावास्यामते सोमे यातु खादति गौस्तृणम् ।
तस्यागो यंद्भवेत् क्षीरं तद्दौहित्र मुदाहृतम् ॥१८५७॥
उच्छिष्टं शिवनिर्माल्यं वमनं मृतक( म्बलम् ) पंटम् ।
श्राद्धे सप्त पवित्राणि दौहित्रः कुतपस्तिलाः इति ॥१८५८॥

अत्रोच्छिष्टं—वत्सोच्छिष्टं दुग्धम् । शिवनिर्माल्यं—गङ्गोदकम् । वमनं—मधु , मृतकर्पटम्—तसरीयं (क्षौमं पट्टं-वासोवा) ।

1528. तिलानाहापस्तम्बः—

अटव्यां ये समुत्पन्ना अकृष्टफलितास्तथा ।
ते वै श्राद्धे पवित्राःस्युरभावे ग्राम्यका अपि ।
गौराः कृष्णास्तथा नीलाश्चित्राश्च विविधास्तिला इति ॥१८५९॥

एवमुक्तप्रकारेण श्राद्धार्हं द्रव्यं सम्पाद्य पाकारम्भं कुर्य्यात् ।

1529. तथाचाशनाः—गोमयोदकैर्भूमि (मार्जन) भाजन-भाण्डशौचं कुर्य्यादिति । भूमिर्गृहप्रदेशः । भाजनं—योग्यपात्रम् । भाण्डम्—तण्डुलाद्या- सादनपात्रम् । पराशरः—

गृहाग्निशिशुदेवानां ब्रह्मचारि-तपस्विनाम् ।
1530. तावन्नदीयते किञ्चिद् यावत्पिण्डान् ननिर्वपेत् ॥१८६०॥

1531. **कौर्म्मे,—**

तिलानाविकिरेत्तत्र सर्व्वतोवन्धयेद् जान् ।
असुरोपह(ह)तं सर्व्वं तिलैः शुध्यत्यजेनचेति ॥१८६१॥

1532. **देवलः—**

तथैव यन्त्रितोदाता प्रातः स्नात्वा धृताम्बरः ।
आरभेत नवैः पात्रैं रन्ना (न्वा) रम्भञ्च वान्धवैः ॥१८६२॥

तत्रात्मनेपदात् स्वयमेव कृतोऽन्वारम्भः पाकः । अशक्तौ (पाकः) पत्न्या, तदशक्तौ वान्धवैरिति विवेचकः ।

1533. **आश्वलायनः—**

समाप्रवरैर्मित्रैः सापिण्डैश्च गुणान्वितैः ।
कृतोपकारिभिश्चैव पितृकार्य्यं प्रशस्यते ॥१८६३॥

---

१(°) गृहेत्यादि,—
यावत् पिण्डदान कृत्यं नाभूत्तावदेभ्यः किञ्चिन्न दद्यात् । पिण्डदानात् परं देयमिति ।

1534. **ब्राह्मेऽपि—**

रजस्वलाश्च पाखण्डां पुंश्चलीं पतितान्तथा ।
त्यजेच्छूद्रां तथावन्ध्यां विधवाश्चान्य गोत्रजाम् ॥१८६४॥
व्यङ्गकर्णी(ं)चतुर्थाहे स्नातामपि रजस्वलाम् ।
वर्जयेच्छ्राद्धपाकार्थम मातृपितृ-वंशजाम् ॥१८६५॥
मातृपितृवंशभिन्नान्त्यजेदित्यर्थः ।

1535. **स्मृत्यन्तरे—**

नपाकं कारयेत्पुत्री सर्न्यां वाप्यन्य गोत्रजाम् ।
मृतवत्साश्च गर्भघ्नीं गर्भिणीञ्चैव दुर्मुखामिति ॥१८६६॥
अथ पुत्री-निषेधः पत्न्यादिसम्भवे वेदितव्यः ।

1536. **चन्द्रिकायां यमः—**

कुक्कुटोविड् वराहश्च काकश्चाप(पि)विड़ालकः ।
वृषलीपतिश्च वृषलः षण्टोऽवीरा रजस्वला ।
एतेतु श्राद्ध काले वै वर्जनीयाः प्रयत्नतः इति ॥१८६७॥

**तथा—**

पादुकोपानहौ च्छत्रं चित्ररक्ताम्बरन्तथा १(*) ॥
रक्तपुष्पञ्च मार्जारं श्राद्धभूमौ विवर्जयेत् ॥१८६८॥ इति ।

—*—

## अथ पाकः, भाण्डानिच ।

—*—

1537. **हेमाद्रौ, नागरखण्डे—**

सौवर्णान्यथ रौप्याणि कांस्यताम्रोद्भवानिच ।
मृन्मयान्यपि भण्डानि नूतनानि दृढ़ानिच ॥१८६९॥

1538. **आदित्यपुराणे—**

पचेदन्नानि सुस्नातः पात्रेषु शुचिषु स्वयम् ।
अच्छिद्रेषु विलिप्तेषु तथानुप हतेषुच ॥१८७०॥

---

१(*) अधारिति केनचित् नवकाष्ट चर्मपादुकी दातव्ये प्रेतस्वर्गार्थे। श्राद्धस्थाने व्यवहृते न रचणीये।

ना पक्केषु नभिन्नेषु दूषितेष्वपि कर्हिचित् ।
पूर्व्वंकृतोपयोगेषु मृन्मयेषु नतुकश्चित् ॥१८६९॥

1539. **वायुपुराणे,—**

न कदाचित् पचेदन्नमयःस्थालीषु पैतृकम् ।
अयसोदर्शनादेव पितरोविद्रवन्तिहि ॥१८७०॥
कालायसं विशेषेण निहन्ति पितृकर्म्मणि ।
फलानाञ्चैव शाखानां च्छेदनार्थानि यानिच ॥१८७१॥
महानसे नियुक्तानां तेषामेवहि सन्निधिः ।
इष्यते नेतरस्यात्र शस्त्रमात्रस्य दर्शनम् ॥१८७२॥
श्राद्धदेशेतु विदुषा पितृणां प्रीतिमिच्छता ।
महानसे नियुक्तानामपि कार्य्यं न दर्शनम् ॥१८७३॥

**तत्रैव,—**

पचमानस्तु भाण्डेषु भक्त्या ताम्रमयेषु ।
समुद्धरति वैघोरात् पितॄन् दुःखमहार्णवात् ॥१८७४॥
तैजसानामभावेतु पिठारमृन्मयेऽपिच ।
नवे शुचौ प्रकुर्व्वीत पाकंपित्रर्थमादरात् इति ॥१८७५॥

**तथा,—**

पक्वान्नस्थापनार्थेतु शस्यन्ते दारुजान्यपि ।
दर्व्यादीन्यपि कार्य्याणि यज्ञीयैरपि दारुभिः ॥१८७६॥
विवाहे प्रेतकार्य्येच मातापित्रोः क्षयेऽहनि ।
नवभाण्डानि कुर्व्वीत यज्ञकाले विशेषतः, इति ॥१८७७॥

—*—

## अथ पचनाग्निः ।

—*—

1540. **हेमाद्रौ, प्रजापतिः—**

औपासनेनान्नसिद्धि रग्नौकरणमेवच १(*) ।
लौकिकेनाग्निना वापि श्राद्धं कुर्य्यात् प्रयत्नतः इति ॥१८७८॥

---

१(*) गार्हपत्याहवनीयाव-सथ्यौपासनादयः इत्यग्नयः । एषां नानाग्नीनां प्रभेदाः सन्ति ।

1541. **अत्र विशेषः, कर्म्मप्रदीपे—**

प्रातर्होमन्तु निर्व्वर्त्य समुद्धृत्य हुताशनात् ।
शेषं महानसे कृत्वा तत्रपाकं समाचरेत् ॥१८७६॥
पाकान्तेऽग्निं समाहृत्य गृह्याग्नौतु पुनः क्षिपेत् ।
ततोऽस्मिन् वैश्वदेवादि कर्म्म कुर्य्यादतन्द्रितः ॥१७८०॥ इति ।

1542. **कर्काचार्य्योऽप्येवमेवाह—**

उद्धृत्य मृताक्तमन्न मित्यत्रान्यत्रापि,—
ततः पचेयुरन्नानि निर्व्वापानन्तरं शनैः ।
वैवाहिकेऽग्नावन्यत्र लौकिकेवापि संयतः, इति ॥१८८१॥

1543. **निर्व्वापप्रकारस्तु, वायुपुराणे—**

पित्रर्थं निर्व्वपेद्भूमौ कूर्चेवा दर्भसंस्कृते ।
अग्निमान् निर्वपेत् पैत्रं चरुं चासममुष्टिभिः ।
पितृभ्योनिर्वपामीति सर्व्वं दक्षिणतोन्यसेदिति ॥१८८२॥

1544. अत्र चरुग्रहणानुभक्ष्य शाकादावपि हेमाद्रिः । पिण्डपितृयज्ञविषयो-
1545. यं निर्वाप इति प्राञ्चः । अत्राश्वलायनानां सत्यपि स्मार्त्तेऽग्नौ-
पचनाग्नावेव पाकः कार्य्य इत्युक्तः । 'इहैवायमितरोजातवेदा'
इत्यर्द्धर्चेण शमीमयीभ्यामरणीभ्यां अग्निं मन्थेत् । स पचनाग्निर्भव-
तीति सूत्रे तद्वृत्तौच १(*) ।

1546. **बौधायनसूत्रेऽपि,—**

अपह( हृ )तपचनाग्नि मौपासनं वाभिप्रव्रजन्तीति । इदमपि
सर्व्वाधानविषयम् । अर्धाधानपक्षेतु वैश्वदेवं श्राद्धं चोपासनाग्ना-
वेवकार्य्यमिति शिष्टा आहुः । विधूरोच्छिन्नाग्नि-ब्रह्मचार्य्यादीनां
1547. पृष्टोदिवि विधानेनाग्निं सम्पाद्य, तेनैव श्राद्धं कार्य्यमिति हरिहर-
भाष्ये प्रोक्तम् । एवं यथा सम्भवमग्निना पाकं कारयित्वा निमन्त्रित-
ब्राह्मणाह्वानार्थं शिष्यादीन् प्रेषयित्वार्च्चन-साधनद्रव्याणि सज्जीकुर्य्यात् ।

**यथाह, मार्कण्डेयः—**

अह्नः षट्सु मुहूर्त्तेषु गतेषु प्रयतो ( यातो ) द्विजान् ।
प्रत्येकं प्रेषयेत् प्रेष्यान् प्रदायामलकोदकम् ॥१८८३॥

---

१(*) एतान्यदाश्वलायन-पारस्करापस्तम्ब-कात्यायन-सूत्रेष्वपि ।

1548. **अत्रामलकमन्थोपलक्षकम् । यथाह, देवलः—**

ततोनिवृत्ते मध्याह्ने कृत्तलोमनखान्द्विजान् ।
अभिगम्य यथान्यायं प्रयच्छेद्दन्तधावनम् ॥१८८४ ।
तैलमभ्यञ्जनं स्नानं स्नानीयञ्च पृथग्विधम् १(*) ।
पात्रैरौडुम्बरैर्दद्याद्वैश्वदेविक पूर्व्वकम् ॥१८८५॥

अत्रौडुम्बरे स्ताम्रमये पात्रे । अत्र त्वौरामलकस्नानादिकं निषिद्ध-
1549 . तिथ्यादिव्यतिरिक्त विषयमिति हेमाद्रिः—निषिद्धेऽपि कार्य्यमित्येतत् ।

तैल मुद्वर्त्तनं देयं ब्राह्मणेभ्यः प्रयत्नतः ।
तैरभ्यङ्गश्च कर्त्तव्यः वर्ज्यकालेष्वपि ध्रुवममिति ॥१८८६॥

1550. **कात्यायनोक्तेरिति ।**

दन्तधावन तैलस्नानादि कर्त्तुर्निषिद्धं प्रागेव ।
स्नातोऽधिकारी भवति दैवेपित्र्ये च कर्म्मणि ।
श्राद्धकृच्छुक्लवासाः स्यान्मौनीच विजितेन्द्रियः ॥१८८७॥

1551. **महर्षि भृगुः—**

नग्नः स्यान्मलवद्वासा नग्नं कौपोन-केवलः २(†) ।
द्विकच्छोऽनुत्तरीयश्च अकच्छोऽवस्त्र एववा ॥१८८८॥
नग्नः काषायवासास्यान्नग्नश्चार्द्धपटः स्मृतः ।
नग्नोद्विगुणवस्त्रःस्यान्नग्नोरक्तपटः स्मृतः ॥१८८९॥
नग्नस्तु दग्धवस्त्रः स्यान्नग्नः स्यूत पटस्तथेति ।
ततः कर्त्ता गोपीचन्दनादिनोर्द्ध्वपुण्ड्रं कुर्य्यात् ३(‡) ॥१८८९*॥
जपे होमे तथादाने स्वाध्याये पितृकर्म्मणि ।
तत् सर्व्वं नश्यति क्षिप्रं ऊर्द्ध्व पुण्ड्रं विना कृतमिति ॥१८९१॥

---

१(*) पानीयञ्च, इति भिन्न: पाठः ।

२(†) ब्राह्मण'सर्व्वस्वे,' नग्नो मलिन वस्त्रः स्यान्नग्नः कौपीन एवच ।
नग्नश्चानुत्तरीयश्च द्विकच्छो नग्न एवच' ॥
'द्विकच्छः कच्छशेषश्च मुक्तकच्छ स्तथैव च ।
एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः' ॥ इति हलायुधः ।

३(‡) 'शिखी तिलकी कर्म्मकुर्य्यात्' इति श्रुतिः ।
'ऊर्द्ध्वपुण्ड्रं द्विजः कुर्य्यात् क्षत्रियस्तु त्रिपुण्ड्रकम् ।
अर्द्धचन्द्रन्तु वैश्यस्य वर्त्तुलं शूद्र योनिजः' इति स्मृत्यन्तरे ।

1552. **हेमाद्रावुक्तेः ।**

यज्ञोदानं जपोहोमः स्वाध्यायः पितृकर्म्मच
वृथा भवति विप्रेन्द्र ऊर्द्ध्वं पुण्ड्रं विना कृतमिति ॥१८६२॥

1553. **बृहन्नारदीयात् ।**

ऊर्द्ध्वञ्च तिलकं कुर्य्याद्दैवे पित्र्ये च कर्म्मणि ।
तिर्य्यक् पुण्ड्रं न कर्त्तव्यं श्राद्धकाले विशेषत इति ॥१८६३॥

1554. **वृद्धपराशरोक्तेश्च । अन्येतु ,—**

ऊर्द्ध्वपुण्ड्रं द्विजातीनां अग्निहोत्रसमोविधिः ।
श्राद्धकालेतु सम्प्राप्ते कर्त्ता भोक्तातु तत् त्यजेत् ॥१८६४॥

**तथा,—**

वामहस्तेतु दर्भास्तु गृहे रङ्गावलिन्तथा १(*) ।
ललाटे तिलकं दृष्ट्वा निराशाः पितरोगताः ॥१८६५॥

1555. **इति स्मृति संग्रहोक्त स्मृतेः ।**

ऊर्द्ध्व पुण्ड्रं त्रिपुण्ड्रंवा चन्द्राकारमथापिवा ।
श्राद्ध कर्त्ता न कुर्व्वीत यावत् पिण्डान्न निर्व्वपेत् ॥१८६६॥
इति विश्वप्रकाशोक्त वचनाच्चोर्द्ध्व पुण्ड्रमपिन कार्य्य मित्याह ।

**अत्राचाराद् व्यवस्था । यद्वाऽयं निषेधो गन्धपरः ।**

1556. प्राक्पिण्डदानाद्गन्धाद्यैर्नालङ्कुर्य्यात् स विग्रहं इत्याश्वलायनोक्तेः ।
ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यन्तथैवच ॥
निराशाः पितरोयान्ति दृष्ट्वाच वृषलीपति मिति हेमाद्रिधृताहृत-वचनस्थ-माल्यसाहचर्य्याच्च । यद्वा ऊर्द्ध्वपुण्ड्रविधिर्विप्रविषये

1557. निषेधः कर्त्तृ विषय इति पृथ्वीचन्द्रोदये ।
दानाध्ययन देवार्चा जपहोमव्रतादिकान् ।
न कुर्य्याच्छ्राद्धदिवसे प्राग्विप्राणां विसर्जनादिति ॥१८६७॥

---

१(*) चव रङ्ग.वलिम्, रङ्गन चित्राङ्कणम्, रञ्जितवस्त्रंव', वङ्गालये कौतुकादिकम्वेति।
,, 'व्रतकार्य्यादिकाल:' इत्यरूपि पाठान्तरम् ।

अत्र देवतार्चन-जप-होम-व्रतादिनिषेधस्तु नित्यव्यतिरिक्तकाम्यपरः ।
नित्यकर्म्मणां स्वकालकरणातिक्रमे दोषश्रवणात् ।
अहरहः१(*) कुर्य्यादिति विधिः । निषेधश्च सन्ध्याद्यकरण प्रसङ्गाच्च ।
अत्र च बह्वृच चाहिताग्निश्चेत् पृथक्पाकेन श्राद्धमण्येकेनवा वैश्वदेवं कृत्वा श्राद्धमारभेत् ।
श्राद्धात् प्रागेवकुर्व्वीत वैश्वदेवन्तु साग्निकः ।
एकादशाहिकमुक्त्वा तत्रहान्तेविधीयते इति ॥१५९८॥

1558. हेमाद्रौ शालङ्कायनोक्तेः । स्मार्त्ताग्निमात्रवतां तद्रहितानामग्नौ-करणोत्तरं विकिरोत्तरं वा होममात्रं पृथक्पाकेन कार्य्यम् ।
भूतयज्ञादिकन्तु श्राद्धान्त एव ।
वैश्वदेवाहुतीरग्नौ अर्व्वाग् ब्राह्मण भोजनात् ।
जुहुयाद्भूत यज्ञादि श्राद्धं कृत्वा समाचरेत् ॥१५९९॥

1559. इति ब्रह्माण्डोक्तेः । पित्र्यर्थं निर्व्वपेत्पाकं वैश्वदेवं न पित्र्यर्थम् ।

1560. न पित्र्यर्थं वैश्वदैविक मिति पृथक्पाको लौगाक्षिणोक्तः । सर्व्वेषां श्राद्धान्ते श्राद्धपाकेन वैश्वदेवमिति तृतीयः पक्षः ।
श्राद्धं निर्वर्त्त्य विधिवद्वैश्वदेवादिकन्ततः ।

1561. कुर्य्याद्भिक्षां ततोदद्याद्धतकार्य्यादिकन्तयेति २(†) पैठीनसिस्मृतेः ।
ततः श्राद्धशेषादित्यर्थः ।
श्राद्धाहि श्राद्धशेषेण वैश्वदेवं समाचरेदिति ॥१६००॥

1562. चतुर्विंशति मताच्च । अत्राश्वालायनेन कर्काचार्येण प्रकारान्तरेण व्यवस्थोक्ता ।
वृद्धावादौ क्षयेचान्ते दर्शे मध्ये महालये ।
एकोद्दिष्टनिवृत्तेतु वैश्वदेवोविधीयत इति ॥१६०१॥
तैत्तिरीयाणां तु साग्नीनां सर्व्वत्रादौ वैश्वदेवः ।

1563. पञ्चयज्ञास्त्वित ( स्त्वन्तरित ) इति सुदर्शन भाष्ये उक्तम् ३(‡) ।

1564. अनग्नीनान्तेषामपि पूर्व्ववत् । कात्यायनमतेनैषान्तु साग्नीनां

1565. श्राद्धपाकेनादावेव वैश्वदेव इति कर्काचार्य्यः । भिन्नपाकेनेति देव-

---

१(*) 'अहरहः सन्ध्यामुपासीत:' इति नित्यैकत्वे अग्निहोत्रादि वदित्यच श्रुतिः ।
२(†) 'पञ्चयज्ञान्वितम्' इति पाठान्तरम् ।
३(‡) 'स्त्वन्तरितास्तथा' „ „ ।

1566. याज्ञिकः । निरग्नीनां पूर्व्ववत् । वृद्धपराशरस्तु—

वैश्वदेवं कदा कार्य्यं श्राद्धे च समुपस्थिते ।
पाकशुद्ध्यर्थमेवैतत् पूर्व्वमेव विधीयते ॥१६०२॥
सम्प्राप्ते पार्व्वणश्राद्धे एकोद्दिष्टे तथैवच ।
अग्रतो वैश्वदेवंस्यात् पश्चादेकाहनीति च ॥१६०३॥
कलौ सर्वोऽपि श्राद्धं पाकेनादौ कुर्य्यादित्याह ।

**पाकशुद्धिरेकपाकेऽन्ने हेतुरुक्तः ।**
कर्त्तव्यं पाकशुद्ध्यर्थं भुक्तोच्छिष्टं विवर्जयेत् ॥१६०४॥
इति तत्रैव हेत्वन्तरं चोक्तम् ॥

—*—

## अथासादनीयानि ।

—*—

1567. **ब्रह्माण्डे—**

उपमूल सकृल्लूनान् कुशांस्तत्रोपकल्पयेत् ।
एवं तिलान् वृशीकांश्च आपःशुद्धाः समाहृताः १(*) ।
स्वार्ण (स्वर्ण) राजतताम्राणि पात्राणि स्युः शुभानिच ॥
शमींगोधुधूमगन्धादि क्षौमसूत्रञ्च मेक्षणमिति ।१६०५॥
वृशी-कुशासनम् । व्रतीनामासनं वृशीत्यमरोक्तेः ।
शमी-श्राद्धविशेषपरा ।

1568. **हेमाद्रौ, कार्ष्णाजिनिः—**

भुञ्जन्तु शिथिलीकृत्य खनित्रेण विचक्षणः ।
आदध्यात् पितृतीर्थेन पठन् हुंकार् सकृत् सकृत् इति ॥१६०६॥

**तथा,—**

आग्रहूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः ।
समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृण संज्ञकाः ॥१६०७॥
प्राह साग्रा एव कुशाःशास्त्रोक्तेन प्रमाणतः ।
कुतपा इति विज्ञेयास्तैस्तु श्राद्धं समाचरेत् ।
मध्याह्नः खड्ग पात्रञ्च तथानेपाल कम्बलः ॥१६०८॥

---

(*) 'तिलान् विकीर्णान्' इत्यन्यः पाठः ।

रौप्यं दर्भास्तिला गावोदौहित्रः कुतपाः स्मृता इति ।

1569. **पवित्रादिलक्षणमुक्तं प्रागेव १(*) । देवलः—**

ततः स्नात्वा निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः ॥१६०९॥
पाद्यमाचमनीयञ्च सम्प्रयच्छद्द यथाक्रमतिति ।

1570. **आरम्भकालमाहापरार्कें गौतमः—**

आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः २(†) ।
विधिज्ञोविधिमास्थाय रौहिणन्तु नलङ्घये दिति ॥१६१०॥

1571. **एतदेकोद्दिष्टे श्राद्धं ज्ञेयम् । पार्व्वणेतु, मात्स्ये—**

ऊर्द्ध्वं मूहूर्त्तात् कुतपाद्यन्मुहूर्त्तं चतुष्टयम् ।
मुहूर्त्तं पञ्चकं ह्येतत् स्वधाभवनमिष्यते ॥१६११॥
मध्याह्ने सर्व्वदा यस्मान्मन्दी भवति भास्करः ।
तस्मादनन्तफलद स्तत्रारंभो विशिष्यते इति ॥१६१२॥

1572. **श्राद्धकलिकायाम् । नारदीये—**

प्रायश्चित्तविशुद्धात्मा तेभ्योऽनुज्ञां प्रगृह्यच ।
दद्याद्द वै ब्रह्मदण्डार्थं हिरण्यं कुशमेवचेति ॥१६१३॥

1573. **प्रायश्चित्त प्रकारस्तु, धर्म्मप्रदीपे—**

स्नात्वा माध्याह्निकीं सन्ध्यां कृत्वाहूय निमन्त्रितान् ।
आत्मनो जनभाण्डादि-शुद्धयर्थंमन्त्रमुच्चरेत् ॥१६१४॥
पुंसूक्तं विष्णुसूक्तञ्च कूष्माण्डं पावमानकम् ३(‡) ।
म(श)तमित्यादिकान्मन्त्रान् ब्राह्मणैः सह संपठेत् ॥१६१५॥
प्रायश्चित्तनिमित्तञ्च सूक्तं पञ्च तिलोदकम् ।
कुर्य्याच्छ्राद्धेषु सर्व्वेषु तीर्थे नैव कदाचन ॥१६१६॥

---

१(*) अग्निग्रैव स्तवके पूर्व्वमुक्तम् ।

२(†) कुतपोमध्याह्नकालः । पारिभाषिक कालस्य वचनोक्तः ।

,, अत्र पाठ वैक्लव्यमस्ति ।

३(‡) जनभाण्डादीत्यत्र—जलभाण्डादि इति भिन्नः पाठः ।

,, एकोद्दिष्ट श्राद्धारम्भकालः । वृद्धिश्राद्ध-पार्वण-सपिण्डनादि-कालस्तु भिन्न उक्तः ।
अत्र पुंसूक्तम्, 'सहस्रशीर्षं, त्यादि प्रसिद्धं षोड़शसंकम्, ऋग्-यजुः संहितायाम् ।

सब्राह्मणो मन्त्रपूतैः सहिरण्यः कुशैर्जलैः ।
सर्व्वमक्षतं (मद्भिश्च) तद्वेश्म कर्त्ता श्राद्धं समाचरे दिति ॥१६१७॥
सब्राह्मणो-ब्राह्मण सहित इत्यर्थः ।

1574. **स्मृतिचन्द्रिकायाम् , वायवीयेऽपि—**
कुक्कुटोविड्वराहश्च काकश्चाथ विड़ालकः ।
वृषलीपतिश्च वृषली षण्ढोऽशीरा रंजस्वला ।
खञ्जःकाणः कुणिः श्वित्री दातुः प्रेष्य करस्तथा १(*) ॥१६१८॥
न्यूनाङ्गोऽप्यतिरिक्ताङ्गो रोगी माहिषिकस्तथा २(†) ।
अन्नं पश्येयुरेते(च)त्तु यदि वै हव्यकव्ययोः ॥१६१९॥
तत् सर्व्वं प्रक्षा (क्षा)लार्थं संस्कारस्तत्रापदि स्मृतः ।
शुद्धवत्योऽथ कुष्माण्ड्यः पावमान्य स्तरत्समाः ३(‡) ।
पूतेन वारिणा दर्भैः अन्नदोषमपानुदेदिति ॥१६२०॥

—*—

## अथ श्राद्ध परिभाषा ।

—*—

1575. **अत्र कात्यायनः—**
दक्षिणं पातयेज्जानु देवान् परिचरन् सदा ।
पातयेदितरं जानुं पितॄन् परिचरन् सदा ॥१६२१॥

1576. **बौधायनः—**
प्रदक्षिणन्तु देवानां पितॄणामप्रदक्षिणम् ।
देवानामृजवोदर्भाः पितॄणां द्विगुणास्तथा ॥१६२२॥

---

१(*) अत्र कुणिः, कुनखी कौण्ठ रोगग्रस्तः । अन्ये प्रसिद्धाः ।

२(†) 'श्वान्नं पश्येयुः' इति भिन्नः पाठः । श्राद्धीय द्रव्याणिच हीनाङ्गादि भिर्नैवावलोकनीयानि ।

" 'पाषिण्डं दुर्भगां क्लीवं नग्नमतकीर्णं नासिकाम् । धर्म्मकर्मणि नोपश्ये[illegible] न कदाचन' इति स्मृत्यन्तरं ।

३(‡) एते श्राद्धकाले श्रा कर्त्तुरनवलोकनीयाः । रोगी-महापापाज्जातरोगवान् । माहिषिकः महिषपालकः, तच्चारणकः ।

४(ऽ) शुद्धवतीसूक्तम्,—शुक्ल यजुः २४।३ ।

" कूष्माण्डीसूक्तम्, शुक्ल यजुर्वेदः २०।१४-१५-१६ ।

" पावमानीसूक्तम् – , ,, २०।८४ ।

आपोहिष्ठादि—शुक्ल यजुः ११।५५—३।२६।१४ ।

1577. **शङ्खः—**

आवाहनार्घ्यसङ्कल्पे पिण्डदानान्नदानयोः ।
पिण्डाभ्यञ्जनकालेतु तथैवांजलिकर्मणि ॥१९२३॥
अक्षय्यासनयोः पाद्ये क्षणे गन्धादिकार्च्चने ।
अवनेजनकालेऽपि नामगोत्रादि कीर्त्तयेत् ॥१९२४॥

1578. **मात्स्ये, प्रयोगक्रम उक्तः—**

सम्बन्धं प्रथमं ब्रूयाद्गोत्रं नाम तथैव च ।
पश्चाद् द्रव्यं विजानीयात् क्रम एषः सनातन इति ॥१९२५॥

1579. **वस्वादि रूपन्तूक्तं प्राक् । कश्यपः—**

सकारेण वक्तव्यंतु गोत्रं सर्व्वत्र धीमता १(*) ।
सकारः कुतपो ज्ञेय स्तस्माद् यत्नेन तम्वदेत् ॥१९२६॥

**तत् प्रयोगो यथा—काश्यप गोत्रेत्यादिः २(†) ।**

तथा, गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमुच्यते ।
तस्मादाह श्रुतिः सर्व्वाः प्रजाः कश्यपसम्भवाः ॥१९२७॥

1580 **यत्तु सत्याषाढ़ः ,—**

अथ गोत्राज्ञातबन्धोः पुरोहितगोत्रेणाचार्य्यगोत्रेणचैति ३(‡) ।
तत् क्षत्रियादिपरं विवाह परं वा द्रष्टव्यम् ॥१९२८॥

1581. **नामोच्चारणे विशेषमाह, बौधायनः,—**

शर्म्मान्तं ब्राह्मणस्योक्तं वर्म्मान्तं क्षत्रियस्यतु ।
गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ॥१९२९॥

**पित्रादि-नामाज्ञाने, सएवाह ,—**

पृथिवीवत् पितावाच्य स्तत् पिताचान्तरिक्ष वत् ।
अभिधानापरिज्ञाने दिविसत् प्रपितामह इति ॥१९३०॥

---

१(*) 'स्वकालीन भिन्नः पाठः । स्वकालः श्राद्धाना मुक्तः वैधकालः ।
२(†) 'सर्व्वाः प्रजाः काश्यप्या' इति श्रुतेः ।
'गोत्रनाशेतु काश्यपमिति' हेमाद्रौ व्याघ्रोक्तिः । गोत्रास्मरणे धर्म्मकृत्ये काश्यपगोत्रोल्लेख्यः ।
'यस्य विस्मरणादिना गोत्रनाशोभवेद ध्रुवम् । तस्य काश्यपगोत्रं स्यादित्येवं श्रुतिर ब्रवीत्' इति ।
३(‡) पुरोहित गोत्रेण गृहस्थान् । आचार्य्य गोत्रेण अन्यथा बोध्यम् ।

1582. **एतदापस्तम्बादिपरम् । आश्वलायनानान्तु ,—**

तत् पुत्रे यदि नामान्य-विद्वांश्च तत् पितामहः ।
प्रपितामहेति ब्रुयादिति विशेषोक्तेः । पुंस्त्वस्याविवक्षितत्वान्माता-
पितामहौ प्रपितामहीत्यपि ज्ञेयम् ।
विभक्तिभिस्तु यत् किञ्चिद्दीयते पितृ दैवते ।
तं सर्व्वं सफलं ज्ञेयं विपरीतं निरर्थकम् ॥१६३१॥
अत्र चतुर्थी चाविशेषः ।

1583. **स्मृत्यर्थसारे,—**

अक्षय्यासनयोः षष्ठी द्वितीयावाहने स्मृता ।
अन्नदाने चतुर्थीच शेषाः सम्बुद्धयः स्मृताः १(*) ॥१६३२॥
चतुर्थीचासने नित्यं सङ्कल्पेच विधीयते ।
1584. प्रथमा तर्पणे प्रोक्ता शेषे सम्बुद्धयः स्मृताः इति व्यासेनोक्तम् ॥१६३३॥
1585. तत्र शाखाभेदे व्यवस्थेति हेमाद्रिः ।

1586 **प्रभासखण्डे,—**

यज्ञोपवीतिना कार्य्यं दैवं कर्म्मप्रदक्षिणम् ।
प्राचीनावीतिना कार्य्यं पित्र्यं कर्म्म प्रदक्षिणम् २(†) ॥१६३४॥

1587. **अत्रापि विशेषमाह, यमदग्निः—**

सूक्तं स्तोत्रजपं त्यक्त्वा पिण्डानाञ्च प्रदक्षिणम् ।
आह्वानं स्वागतं चार्घ्यं विनाचापरिवेषणम् ॥१६३५॥
विसर्ज्जनं सौमनस्यमाशिषं प्रार्थनन्तथा ।

---

१(*) 'अर्घ्येऽक्षय्योदकेचैव पिण्डदानेऽवनेजने ।
तन्त्रता विनिवृत्तिः स्यात् स्वधावाचन एवच' ॥
'गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्यकर्म्मणि ।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति' ॥
यत्र यत्र या या विभक्ति निर्दिष्टा स्मृतौ तत्रतत्र सामा विज्ञेया ।

२(†) अत्र पातित दक्षिणजानुः उपवीती दैवे कृत्ये ।
अत्र पातित वामजानुः प्राचीनावीती पैत्र्यकृत्ये ।
अत्र पातितो भयजानुः निवीती मानुष्ये दैवेकृत्येच ॥
तर्पणेऽप्येवं ज्ञेयम् ।

विप्रप्रदक्षिणाञ्चैव स्वस्तिवाचनकं विना १(*) ॥१६३६॥
पितॄणुद्दिश्य कर्त्तव्यं प्राचीनावीतिना सदा।
स्वागते स्वस्तिवचने गोत्राशीषि प्रदक्षिणे ॥१६३७॥
अर्घ्येच दक्षिणादाने सव्यं षड्भ्यः विधीयते।

1588. संग्रहे,—
आदौ विप्राङ्घ्रि शौचान्तेऽभ्यर्च्चने विकिरे कृते।
पिण्डानभ्यर्च्चयित्वाच विसृजेद्ब्राह्मणां स्तथा ॥१६३८॥
आचामेच्छ्राद्ध कर्त्तावै स्थानेष्वेतेषु सप्तसु।
आद्यन्तयोर्द्विराचामे च्छेषेसुतु सकृत् सकृत् ॥१६३९॥
दैवार्च्चा दक्षिणाङ्गादि-पादजान्वंसमूर्द्धसु।
शिरोऽंस जानुपादेषु वामाङ्गादिच पैतृकी ॥१६४०॥

1589 कर्त्तव्येति शेषः। स्मृत्यन्तरे—
श्राद्धारम्भेतु ये दर्भाः पादशौचे विवर्ज्जयेत्।
अर्च्चनादौतु ये दर्भा उच्छिष्टांस्तान् विवर्जयेत् ॥१८४१॥
पार्व्वणादौतु ये दर्भा घ्राणान्तेतु विसर्ज्जयेत्।
मार्जणादौतु ये दर्भाः पिण्डेज्ञाने विवर्जयेत् ॥१६४२॥
उत्तानान्तेतु ये दर्भा दक्षिणान्ते विसर्ज्जयेत्।
प्रार्थनादौतु ये दर्भा नमस्कारे विसर्जयेदिति ॥१६४३॥
श्राद्धे षट् पवित्रकालः २(†) ॥

---

१(°) दर्भादीनां निर्द्देशः कर्म्म विशेषेच प्रागपिक्षतः तथा लक्षणञ्च तेषामुक्तम्।
„ प्रथमान्त–सम्बोधनान्त–षष्ठ्यन्त-चतुर्थ्यन्त-पितादिपदानां कुत्र कीदृगुल्लेखः स्यात् तदुच्यते।
„ वसु रुद्रादित्याः श्राद्धे देवाः, विश्वेदेवाः तत् स्वरूपाश्च पितरः श्राद्धे ध्येयाः। 'पिण्डस्थानेच' इति भिन्नः पाठः।

२(†) अत्र षट् पवित्रकालः षट्स्थानेषु शुध्य व्यवहार नियम-समयः इति। श्राद्धे श्रेष्ठानि-यथा, 'त्रीणि श्राद्धे परित्राणि दौहित्रः कुतपस्तिलाः। त्रीणि चात्र प्रशंसन्ति शौचम क्रोध मत्वराम्' इति स्मृत्यन्तरे।
अत्र मानवीं वाचम्, अपभ्रंसं असंस्कृतं वचः नोवदेत्। तथा च धर्म्मशास्त्रे 'नासंस्कृतं प्रयुञ्जीत' इति निषेधः।
„ विष्णोः स्मरणेन तन्मन्त्रोच्चारणेन च मोहाज्ञान-प्रमादादिकृत कृत्य-दोषोनश्यति। तथाच पुराणे,—'प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः' इति। अत्र पवित्रः शुद्ध इत्यर्थः।

तथा,—

वसुरुद्रौ तथादित्यः पित्रादि त्रितये क्रमात् ।
मातामहादि मात्रादि त्रयेच स्मृति मर्हति ॥१६४४॥

तथाच,—

पिण्डदानेतु वरुण प्रजापत्यग्नयस्तथा ।
प्रद्युम्नोवासुदेवश्च यद्वा संकर्षणस्त्रयः इति ॥१६४५॥
अन्वाच्य दक्षिणं जानुं प्राग्वोदग्वा प्रदक्षिणम् ।
यज्ञोपवीतं स्वाहेति दैवं कुर्य्याद् यवैस्तथेति ॥१६४६॥
प्राचीनावीतिना पित्र्यं सव्यं जानु निपातिना ।
दक्षिणास्येन कर्त्तव्यं तत् प्रदक्षिणतस्तिलैः ॥१६४७॥
पितृभ्योनिखिलं देयं स्वधाकारेण सर्व्वदेति ।
नाप्रोक्षितं स्पृशेत् किञ्चिन्नवदेन्मानवीं गिरम् १(*)॥ १६४८॥
नचोद्वीक्षेत भुञ्जानं न चैवाश्रूणि पातयेत् ।
त्यजेत् क्रोधं प्रमादञ्च न श्राद्धे त्वरितोभवेत् २(†) ॥१६४९॥
यदि वाग् यमलोपः स्याज्जपहोमार्च्चनादिषु ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णु मव्ययम् ॥१६५०॥

यथा,—

द्वे द्वे पवित्रे शङ्कुनी दैवे कर्म्मणि योजयेत् ।
विभज्य द्विगुणीकृत्य त्रीणि त्रीणितु पैतृके ॥१६५१॥
द्वे द्वे शलाके देवानां तिस्रस्तिस्रस्तु पार्वणे ।
एकोद्दिष्टे शलाकैका श्राद्धेष्वर्व्वेषु निक्षिपेत् ॥१६५२॥
तथा, हस्तोच्छिष्टापनयनं आवाहन विसर्जनै ।
दक्षिणा सौमनस्येच विनान्यदैव पूर्व्वकम् ॥१६५३॥
श्राद्धे विष्णुपूजा पूर्व्वकं कार्य्यन्तदित्युक्तम् । हेमाद्रौ ।

1590. विष्णुधर्म्मोत्तरे,—

श्राद्धाह्निचादौ सम्पूज्य नारसिंहं हरिं परम् ।
शिवं देवं यथान्यायन्ततः श्राद्धं समारभेदिति ॥१६५४॥

---

१(*) स्वस्ति वाचनं कर्त्तुः शिवाग्र कर्म्म सम्पन्नत्वेन, तद ऋग्-यजुः साम्नां पृथक् पृथग् भवति ।

२(†) अत्र अत्वरागोका क्रोधादिकं प्रयुक्तम ।

1591. **रामार्च्चनचन्द्रिकायाम्,—**

विष्णोर्निवेदितान्नेन यष्टव्यन्देवतान्तरम् ।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते ॥१६५५॥
पितृशेषन्तु योदद्याद्धरये परमात्मने ।
रेतोऽदाः पितरस्तस्य भवन्ति क्लेशभागिन इति ॥१६५६॥

1592. **स्कान्देच ।**

'एवं पितरः सर्व्वमनुष्या विष्णुनाशित मश्नन्ति,
विष्णुना पीतं पिवन्तीत्यादिश्रुतिश्च ।
यः श्राद्धकाले हरिभुक्त शेषं, ददाति भक्त्या पितृदेवताभ्यः ।
तेनैव पिण्डांस्तुलसीविमिश्रा, नाकल्पकोटिपितरस्तु तृप्ताः ॥१६५७॥

1593. इति ब्राह्मोक्तिश्चात्र मानम् । यत्तु दानाध्ययनदेवार्चेति निषेधकं
(वचनं) तत्तु काम्यपरमित्युक्तं प्राक् ।
अतएव, प्रतिग्रहेण दारिद्यं दानं निष्फलमेवच ।
होमी च कुष्टरोगी स्यात् स्वाध्यायी मृत्युमाप्नुयादिति—

1594. इतिहासेऽपि ॥१६५८॥

इति श्राद्ध परिभाषा ॥

—*—

## अथ क्षण-दानादि ।

—*—

1595. **हेमाद्रौ संग्रहे,—**

तिथिवारादिकं ज्ञात्वा सङ्कल्प्य च यथाविधि ।
श्राद्धमारभते प्राज्ञोह्यन्यथा निष्फलं भवेत् ॥१६५९॥
श्राद्धार्थं समनु प्राप्तान् विप्रान् भूमौ निमन्त्रयेत् इति १(*) ।

1596. **तद्विधिमाह, शौनक,—**

गृहीत्वामुक संज्ञस्यामुकगोत्रस्यचामुके ।
श्राद्धेतु वैश्वदेवार्थं करणीयः क्षणस्त्वया ॥१६६०॥
इत्येवं श्राद्धकृद्ब्रूयाद्दो तथेति वदेत्तु सः ।
श्राद्धस्य कर्त्ता स ब्रूयात्सं प्राप्नोतु भवानिति ॥१६६१॥

---

१(*) 'विप्रान् भुव !' इति भिन्नः पाठ

स वदेत् प्राप्नुवानीति इतरस्तं प्रतिद्विजः।
पित्रादेरप्यनेनैव वृणीत विधिना द्विजानिति ॥१९६२॥
अथ विश्वे देवाः १(*)।

1597. **प्रयोग पारिजाते,—**

इष्टिश्राद्धे क्रतुर्दक्षः संकीर्त्य वैश्वदेविकौ।
नान्दीमुखे सत्यवसू काम्येच धूरि लोचनौ ॥१९६३॥
पुरुरवार्द्र वौचेति पार्वणे समुदाहृतौ।
नैमित्तिके कालकामौ एवं सर्व्वत्र वर्णयेदिति ॥१९६४॥

ततः कर्त्ता बह्वृचोऽनाहिताग्निः पिण्डपितृयज्ञं परिस्तरणादीध्माधानान्तं कुर्य्यात्। इध्माधानान्त्यप्येवमिति पारिजात-आश्वलायन-परिशिष्टेष्वभिहितम् २(†)॥

—*—

## अथ पादप्रक्षालनविधिः।

—*—

1598. **हेमाद्रौ शम्भुः—**

मार्जितोपलिप्तौतु द्वारि कुर्व्वीत मण्डलम्। इति।

**अत्र द्वारि—द्वार समीपे।**

प्राङ्गने मण्डलं कुर्य्याद्दैवे पित्रेच कर्म्मणि।
उत्तरे दक्षिणे चापि पश्चिमे न गृहान्तरे ॥१९६५॥
उदङ्मुख मुदीच्यं स्याद्दक्षिणं दक्षिण-प्लवम ॥१९६६॥

---

१(*) 'ये चात्र विहिते श्राद्धे, आगच्छन्तु महाभागा विश्वेदेवा वरप्रदाः।' इत्यावाहन मन्त्रान्ते विद्यते।

अत्र छन्दोगपरिशिष्टे पाठान्तरम्, यथा—

इष्टिश्राद्धे क्रतुर्दक्षः सत्योनान्दीमुखे वसुः।
नैमित्तिके कालकामौ काम्येच धूरिलोचनौ।
पुरूरवा मार्द्रवाश्च पार्वणे समुदाहृतौ' इति ब्राह्मण सर्व्वस्वे।

„ ग्रहण कालादि श्राद्धे रात्र्यादौच पर्य्युदस्तादिकं नास्ति। यत्तु:—'रात्रौ श्राद्धं न कुर्व्वीत राचसी कीर्त्तिताहि सा' इति ग्रहणादिकाल भिन्नतज् ज्ञेयम्।

२(†) अत्र 'अग्न्याधाने' 'इध्माधानान्त्यपि' इति पाठान्तरद्वयमस्ति।

1599. **तत्प्रमाणमुक्तं, संग्रहे—**

प्रादेश मात्रं देवानां मण्डलं चतुरस्रकम्।
वितस्तिमात्रं पित्र्यन्तु मण्डलं वर्त्तुलं भवेत् ॥१६६७॥
यज्ञोपवीति देवार्थे पित्रर्थे चापसव्यवत्।
अन्तरन्तु प्रकुर्वीत तयोर्मध्ये षडङ्गुलमिति ॥१६६८॥

1600. **तत्रैव वर्णपरत्वेन विशेषमाह बौधायनः,—**

चतुरस्रं त्रिकोणञ्च वर्त्तुलञ्चार्द्ध चन्द्रकम्।
कर्त्तव्य मानुपूर्व्वेण ब्राह्मणादिषु मण्डलमिति १(*) ॥१६६९॥

1601. **स्मृत्यन्तरे गर्त्त उक्तः।**

गर्त्तः पञ्चाङ्गुलो विप्रे जानुमात्रोमहीभुजि।
प्रादेशमात्रो वैश्येच साधिकः सतु शुद्रके ॥१६७०॥
तिर्य्यगूर्द्ध प्रमाणेन संखा ( ख्या ) तोदैव पित्र्ययोः।
चतुरस्रं वर्त्तुलञ्च कथितं गर्त्त लक्षणम् ॥१६७१॥
पादप्रक्षालनं प्रोक्तमुपवेश्यासने द्विजान्।
तिष्ठन् प्रक्षालनं कुर्य्या न्निराशाः पितरोगता इति ॥१६७२॥

1602. इदं मण्डलाग्रे पृथक् कार्य्यमितिं माधवः।

1603. **अत्र भृगुश्च,—**

अत्यन्त जीर्ण देहाया बन्ध्यायाश्च विशेषतः।
आर्त्ताया नव सूताया न गोर्गोमय माहरेत् ॥१६७३॥

1604. **व्याघ्रः—**

उत्तरेऽक्षत संयुक्तान् पूर्व्वाग्रान् विन्यसेत् कुशान्।
दक्षिणे दक्षिणाग्रांस्तु सतिलान् विन्यसेत् कुशान् ॥१६७४॥

1605. **मात्स्येऽपि,—**

अक्षताभिः स पुष्पाभि स्तदभ्यर्च्चापसव्यवत्।
विप्राणां क्षालयेत् पादानभिवन्द्य पुनः पुनः ॥१६७५॥
प्रत्यङ्मुखः स्थितः कुर्य्याद् विप्र पादाभिषेचनम्।

1606. **परिजाते वसिष्ठः,—२(†)।**

दिवा वा यदि वा रात्रौ न कुर्य्यात् प्राङ्मुखः शुचिः।
प्रत्यङ्मुखस्तु कुर्व्वीत विप्र पादाभि षेचनम् ॥१६७६॥

---

१(*) अत्र वर्णा विप्रादयः, चत्वारः मण्डलानि भिन्नानि चत्वारिच।
२(†) पारिजात इति—नृसिंह भट्टीय-प्रयोगपारिजातादौ।

1607. **भविष्ये,—**

प्रक्षालयेद् विप्रपादान् शन्नोदेर्व्वीरिति तृचा १(*) ।
न कुशग्रन्थि हस्तस्तु पाद्यन्ददद्याद्विचक्षणः ॥१६७७॥

1608. **संग्रहे—**

ततः प्रक्षालयेत् पादौ भार्य्या-स्रावित-वारिणा २(†) ।
यद्वास्तेनाथ शिष्येण दक्षिणस्थेन चात्मनः ॥१६७८॥

**तथा,—**

श्राद्धकाले यदा पत्नी वामे नीरं प्रदापयेत् ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥१६७९॥
नाधः प्रक्षालयेत् पादौ कर्त्ता विप्रादि कर्म्मसु । इति ।
अत्राधः प्रक्षालन निषेधोऽन्तरिक्षे क्षालनं गमयति ।

1609. पाद्यानन्तरं पादार्घ्य मपि दद्यादिति हेमाद्रिः ।
मण्डलादुत्तरे देशे दद्यादाचमनीयकम् ॥१६८०॥

1610. **लौगाक्षिः—**

क्षालनानन्तरं तेषां द्विराचमन मिष्यते ।
स्वयञ्चापि द्विराचामे द्विधिज्ञः श्रद्धयान्वितः ॥१६८१॥

1611. **नारदीये—**

यद्याचमनवारीणि पादप्रक्षालनोदकैः ।
सङ्गच्छन्ते बुधाः श्राद्ध मासुरन्तत् प्रचक्षते ।
कर्त्तुराचमनं पूर्व्वं विप्राणान्तदनन्तर मिति ॥१६८२॥

—*—

1612. **अथासनानि । हेमाद्रौ व्यासः—**

—*—

क्षौमं दुकूलं नेपाल माविकन्दारूजन्तथा ।
तार्णं पार्णं वृशीचैव विष्टरादि च विन्यसेत् ॥१६८३॥

---

१(*) 'शन्नोदेवीर भीष्टये' इत्यादि । शुक्ल यजुः— ३६।१२ ।
स्नातः शिष्टः विश्वस्तः सुशीलः ।

२(†) 'सस्त्रीको धर्म्ममाचरेदिति' 'अर्द्धं भार्य्या शरीरस्य' 'शरीरार्द्धं स्मृताजाया' इति स्मृतिभिः भार्य्यासह धर्म्म कृत्यमाचरेदिति । श्रुतिस्तु वैवाहिकी मन्त्रोऽस्ति ।

1613. **दारुजेविशेषमाह पुलस्त्यः,—**

श्रावणी वारुणी गम्भारीजम्बुकाम्रकदम्बकम् १(*) ।
सप्तमं वाकुलं पीठं पितॄणां दत्तमक्षयम् ॥१६८४॥

1614. **संग्रहे—**

शमीच काश्मरी शेलुः डहवोवरुण स्तथा ।
पञ्चासनानि शस्तानि श्राद्धे देवार्च्चने तथेति ॥१६८५॥

**वर्ज्याणि आसनानि—**

पलाश वटवृक्षोत्थं आश्वत्थं शाकवृक्षजम् ।
मृत्तिकोडुम्बरं पीठं माधुकञ्च विवर्जयेत् ॥१६८६॥

1615. **वायुपुराणे च—**

श्लेष्मातकोनक्तमालः कपित्थः शाल्मलिस्तथा ।
निम्बोविभीतकश्चैव श्राद्धकर्म्मणि गर्हिता इति ॥१६८७॥

1616. **अत्र व्यासः—**

सव्येयेनैवासनं धृत्वा दक्षिणं दक्षिणेकरे ।
व्याहृतिभिः समस्ताभि रासनेषूपवेशयेत् ॥१६८८॥
समाध्वमिति चैवोक्त्वा दक्षिणं जानु संस्पृशेत् ।
आस्यतामिति तान् ब्रुयादासनं संस्पृशन्नपि ॥१६८९॥

1617. **शातातपः—**

द्वौ दैवे प्राक् त्रयः पित्रे उदगेकैकमेववा ।
प्रागग्रेष्वथदर्भेषु दक्षिणाग्रेषु वै तथेति ॥१६९०॥

1618. **यत्तु हेमाद्रौ, हारीतः—**

दक्षिणाग्रदर्भेषु प्राङ्मुखान् ब्राह्मणान् भोजयेत् ।
उदङ्मुखानित्येक इति । तन्मैत्रायनीय विषयम् ।
ताम्रं लौहं पीठञ्चैव प्रदेयं नोपवेशने ।
पितॄणां रजतन्देयं देवाणां स्वर्णनिर्म्मितम् इति ।

---

१(*) श्रावणी इत्यत्र 'श्रीपर्णी' इति पाठान्तरम् । नानाक्षत्ये चासन विषये,—योगदर्शने, उपनिषदि, मन्त्रशास्त्रे प्रमाणानि वह्नि सन्ति । 'गम्भारी निर्मितं शस्तं नान्य दारुमयं शुभम्' इति मन्त्र शास्त्रे । गीतायाश्चेति ।

" 'वहवो' इत्यन्यः पाठः । अत्र 'पनसः' इति च पाठः ।

**उपवेशन संस्थामाह, छागलेयः—**

दक्षिणामुखसंक्रम्य उदक्संस्थातु दैविके ।
पश्चाद्भागादुपक्रम्य प्राच्यां पंक्ति र्यथा भवेत्
दक्षिणा संस्थितिर्ह्येषा पितॄणां श्राद्धकर्म्मणीति १(*) ॥१६६१॥
केचित्तु , प्रागुपक्रस्य प्रत्यक् संस्थाच पित्र्यस्यात् पराञ्च पितर इति-
1619. श्रुतेरित्याहुः ।

1620. **आश्वलायनः—**

नीवी वासोदशान्तेन स्वरक्षार्थं प्रबन्धयेत् ।

1621. **वृद्ध याज्ञवल्क्योऽपि,—**

दक्षिणे कटिदेशेतु तिलैः सह कुशत्रयम् ।
बध्नीयाच्छ्राद्धकालेतु सा नीवीति स्मृता बुधैः २(†) ॥१६६२॥
तर्ज्जयन्तीह दैत्याश्च यथा कक्षामयन्तथेति ।
1622. दक्षिणत इवह्नीयं नीविरिति शतपथश्रुतिश्च ।

**यत्तुः—**

नीवी कार्य्या दशागुप्तिर्वामकुक्षौ कुशैः सह ॥१६६३॥
पितृकर्म्मणि सैवोक्ता वेदवेदाङ्गवेदिभिः—
1623. इति कात्यायनोक्तवचनं यत्तद्व वृद्धिश्राद्ध विषयं तत् प्रकरणपाठात् ।
पितॄणां दक्षिणे पार्श्वे विपरीतातु दैविके ।
नीविःकार्य्या प्रयत्नेन यथा शक्रकरे पविरिति ॥१६६४॥

1624. **शौनकः—**

श्राद्धे कर्त्तास्मीति वदेद्विप्रै र्व्वाच्यं कुरुष्वच ।
ततस्तिलान् गृहे तस्मिन् विकिरेद्वा प्रदक्षिणाम् ॥१६६५॥
श्रद्धया परया युक्तो जपेदपहता इति ३(‡) ।

1625. **स्मत्यर्थसारे—**

अपहता इति तिलान् विकीर्य्याद्भिरेतानि तृचा प्रोक्षयेदिति ।

---

१(*) संस्थितिर्येषामित्यन्यः पाठः । 'साऽनोवीति' पाठान्तरम् ।
२(†) अत्र 'साच वीथी' इत्यन्यः पाठः ।
तद्विष्णोरिति—शुक्ल, यजुः ६।५ ।
३(‡) गायत्रा—शुक्ल, यजुः १०।२, ११२५ ।
देवताभ्य इति—'अपहतासुरारक्षांसि वेदिषदः' इति च ।

तद्विष्णोरितिमन्त्रेण गायत्र्याच प्रयत्नतः १(*)।
प्रोक्षयेदन्नजातन्तु शूद्रदृष्ट्यादि-शुद्धये। इति ॥१९९६॥

1626. **हेमाद्रौ ब्रह्माण्डे—**

श्राद्धभूमौ गयायाश्चापसव्यः प्रवर्त्तयेत्।
देवताभ्यः पितृभ्यश्च त्रिपठेच्च नमोनमः ॥१९९७॥
आदिमध्यावसानेषु त्रिरावृत्त्य जपेदिदम्।
पितरः क्षिप्रमायान्ति राक्षसाःप्रद्रवन्ति च ॥१९९८॥

1627. **स्कान्दे,—**

तिला रक्षन्त्यथ सुरान् दर्भा रक्षन्ति राक्षसात्।
पङ्क्तिं वै श्रोत्रियोरक्षेदतिथिः सर्व्वरक्षकः ॥१९९९॥
"निहन्मि सर्व्वं यदमेध्यवद्भवे,
हताश्च सर्व्वेऽसुरदानवा मया।
यक्षाश्च रक्षांसि पिशाच गुह्यकाः,
हतामया जातु धानाश्च सर्व्वे' २(†) ॥२०००॥
इति मन्त्रं जपित्वाथ पाकं संप्रोक्ष्य मन्त्रतः।
आसनानि पवित्राणि विप्रेभ्यः प्रतिपादयेदिति ॥२००१॥

1628. **मन्त्रतः,—**

अपवित्रः पवित्रोवा सर्व्वावस्थां गतोऽपिवा।
यः स्मरेत् पुण्डरीकाक्षं स वाह्यान्तरः शुचिः ३(‡) ॥२००२॥
इति मन्त्रेणेत्यर्थः। अत्रासनाद्यर्च्चन पर्य्यन्तं प्रत्युपचार माद्यन्तयोरपः प्रदायो पचरेदिति गृह्यपरिशिष्टे स्मृत्यर्थसारेचोक्तेः। प्रत्युपचारमपोदद्यात्।

1629. **हेमाद्रौ, ब्राह्मे,—**

आसनेष्वासनन्दद्याद् वामतोदक्षिणेऽपि च।
पितृकर्म्मणि वामेच देवे दद्यात्तु दक्षिणम् ॥२००३॥

---

१(*) शाद्रीयान्नादि द्रव्याणि शूद्रादीनां दृष्टानि अपूतानि स्यु रितिप्रागपि सम्यगुक्तम्।

२(†) अत्र 'रक्षांसि यक्षाः स पिशाच संघाः' इति पाठान्तरमस्ति।

३(‡) अपवित्र इति, पौराणिक मन्त्रः। अत्र वैष्णवा वदन्ति विष्णु स्मरणे शुद्धीचायं मन्त्रः। वैदिकाः स्मार्त्ता मान्त्रिका वदन्ति अयं क्रमबोधकं वचनम्। मन्त्रस्तु—ॐ तद्विष्णो रिदं विष्णुर्वेत्यादिः। अथवा, नमोनारायणायेति। इति मतस्य पुराणीयः।

" 'प्रचरेदिति' भिन्नः पाठः।

1630. **प्रचेताः—**

आसनेष्वासनं दद्यान्नतु पाणौ कदाचन १(*) ।
'धर्म्मोऽसी' त्यथमन्त्रेण गृह्णीयुस्तेतु तान् कुशान् ॥२००४॥

1631. **गालवः—**

दर्भानादाय हस्ताभ्यां गृहीत्वा दक्षिणं करम् ।
दैवे क्षणः क्रियतान्तु ब्रूयादङ्गुष्ठवर्जितम् ॥२००५॥
ॐ तथेति द्विजा ब्रूयुः ते प्राप्नोतु भवानिति ।
कर्त्ता ब्रूयात्ततोविप्रः प्राप्नुवानीति वै वदेत् ॥२००६॥

1632. **ब्राह्मेऽत्र विशेष उक्तः ।**

पृथक् पृथगासनेतु तिलतैलेन दीपकाः ।
अविच्छिन्नार्च्चिषा देयास्तेतु रक्ष्यास्तु तैर्द्विजैः ।
उत्तरेणाहरेद्दीपान् दक्षिणेन विसर्ज्जयेदिति ॥२००७॥

**आसनेषु,—आसनसमीपेषु ।**

पितृभ्यो निखिलं देयं स्वधाकारेण सर्व्वशः ।

1633. इति परिभाषायाः, अत्रापवादमाह, श्राद्धकाशिकायां गालवः,—

अक्षय्यमासनञ्चैव वर्जयित्वार्घ्यमेवच ।
पितृभ्योनिखिलं देयं स्वधाकारेण धर्म्मवदिति २(†) ॥२००८॥

## अथ पात्रासादनम् ।

—*—

1634. **मात्स्ये—**

आसनाह्वानयोरर्घ्ये तथाप्यवनेजनेऽक्षरे ३(‡) ।
अत्र स्वाहा स्वधावार्णौ न कुर्य्यादब्रवीन्मनुरिति ॥२००९ ॥

स्मृत्यन्तरञ्च ॥

---

१(०) अत्रासनेषु, सम्बोधनानन्तर-उपवेशनार्थं दत्तदर्भेषु इति ।

२(T) अत्र धर्म्म विदिति भिन्नः पाठः ।

३(‡) अत्र पाठव्यत्ययोऽस्ति । 'अचते' इति वा ।

,, अत्र 'अत्र 'अवनेजनेऽचनेते' । इत्यन्यः पाठः ।

# अथार्घ्यपात्रासादनम्।

—*—

1635. **मात्स्ये,—**

पात्रं वनस्पतिमयन्तथा पर्णमयं पुनः।
जलजं वापि कुर्व्वीत यद्वा सागरसम्भवम् ॥२०१०॥

1636. **हेमाद्रौ, प्रजापतिः—**

सौवर्णं राजतं ताम्रं खाड़्गं मणिमयन्तथा।
यज्ञीयं चमसं वापि अर्घ्यार्थं पूरयेद्‌द्विजः ॥२०११॥

1637. **ब्राह्मे,—**

सौवर्णं ताम्ररौप्याश्मस्फटिकं शङ्खशुक्तिजम्।
भिन्नान्यपिहि योज्यानि पात्राणि पितृ कर्म्मणि ॥२०१२॥
अत्र भिन्नानीति समग्रासम्भव विषयम्।
एकद्रव्य मयान्येव ह्यर्घ्य पात्राणि कल्पयेत्।
असम्भवेऽल्प पात्रञ्च ग्राह्यं खड़्गाद्यमुत्तमम् ॥२०१३॥

1638. **इति स्मृतेः। निषिद्धमाह, वृद्धमनुः—**

मृण्मयं दारुजं पात्रमयः (मपः) पात्रञ्च यद्भवेत् १(*)।
राजतं दैविके कार्य्ये शिलापात्रञ्च वर्जयेदिति ॥२०१४॥

1639. **मृन्मये विशेषमाह, कात्यायनः—**

कुलालचक्र निष्पन्नमासुरं मृण्मयं स्मृतम्।
तदेव हस्तघटितं स्थाल्याद्यं दैविकम्भवेदिति ॥२०१५॥

दारुज निषेधोऽप्ययज्ञीयस्य। यज्ञीय वृत्तचमसेषु पवित्रान्तर्हि ते-
1640. ष्विति कात्यायन सूत्रोक्तेः। अत्र विप्रैकत्व-द्वित्व-त्रित्व चतुष्ट्यादा-
वपि, दैवेद्वे( द्वयं ) अर्घ्यपात्रे, पार्व्वणे त्रीणि, त्रीणि, एकोद्दिष्टे-
एकैकमिति प्रत्युद्देश्यं पात्रकल्पनम्, न ब्राह्मण संख्यया पात्रसंख्येति
वेदितव्यम्।

अर्घ्यस्यात्रार्घ्य हेतुत्वाद्दाता स्व पितृसंख्यया।
पूरयेदर्घ्य पात्राणि नविप्राणाञ्च संख्यया ॥२०१६॥

---

१(०) अत्र पात्राणि,—स्वर्ण-राजत-ताम्रा-श्म-तैजस-दारुज-मृण्मयेषु पूर्व्वं पूर्व्वं प्रशस्तम् परम्परमप्रशस्तम्। वानस्पत्येतु—यज्ञकाष्ठ जातं प्रशस्तम्। एषामभावे कदली-श्राल-पद्मपत्रं ग्राह्यम्। अत्रार्घ्यं हेतुत्वं-पूजनार्थत्वमिति।

इति बृहस्पत्युक्तः ।

अर्घ्येऽक्षय्योदकेचैव पिण्डदानेऽवनेजने २(†) ।
तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचन एव चेति— ।

1641. कात्यायनोक्तेश्च । यत्तु, मानवसूत्रे,—

द्वे वैश्वदेविके त्रीणि पित्रे एकैक मुभयत्रवेत्युक्तम् । तदेकमात्र—
1642. विप्र परम् । अर्घ्य पात्रालाभ परमिति हेमाद्रिः ।
वैश्वदेवे देवतैक्यादेकमेवार्घ्य पात्रमिति—

1643. कर्काचार्य्यः । पुराणसमुच्चये—

अष्टाङ्गुलं भवेद्दैर्घ्यं पितॄणां राजतं शुभम् ।
दशाङ्गुलन्तु देवानां सौवर्णं शक्तितः कृतम् ॥२०१७॥
स्थापयेदर्घ्य पात्रे द्वे न्यूब्जे तत्र कुशोपरि ।
द्वे द्वे पवित्रे विधिवत् पात्रयोश्चोपरि क्षिपेत् ॥२०१८॥

1644. पवित्र लक्षणमुक्तं कात्यायनेन,—

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेवच ।
प्रादेशमात्रं विज्ञेयं यत्र कुत्रापि कर्म्मणि ॥२०१९॥
एतदेवहि पिञ्जल्या लक्षणं समुदाहृतम् १(*) ।
आज्यस्योत् पवनार्थं यत्तदप्येतावदेवत्विति ॥२०२०॥

1645. यज्ञपार्श्वः—

पवित्रस्थेति मन्त्रेण पवित्रच्छेद एव (वते) तु ।
ओषधीरन्तरे कृत्वा ह्यङ्गुलाङ्गुलि पर्व्वणोः ॥
रूक्षेण काष्ठेन लोहेन न मृण्मये नाश्मादिभिः ॥२०२१॥

1646. वसिष्ठः—

तूष्णीं प्रोक्ष्याम्भसा पात्रे कुर्य्यादूर्द्धविले ततः ।
पूरयेदर्घ्यपात्राणि कृत्वोपरि पवित्रके ।
'शन्नोदेव्या' 'यवोऽसीति' यवाः पुष्पाणि चन्दनम् २(†) ।

---

१(*) अत्र 'बहूनां सकृदुद्देशः तन्त्रता' इति ।
२(†) अत्र दर्भपिञ्जली कुशमयी । 'शन्नोदेवीः' इत्यत्र यजुः—३६—१२ ।
,, 'यवोऽसि'—यवयास्मद्द्वेषो यवया रातीः इत्यादि ।

प्रक्षिपेत् पितृपात्रेषु 'तिलोऽसीति' तिलान्वपेत् ।
आवृत्तिः प्रति पात्रंस्यान्मन्त्रस्यात्रोह इष्यत इति ॥२०२२॥

**अत्र तिलोऽसीति मन्त्रः । हैमाद्रौ यमः—**

यवहस्त स्ततोदेयान्विज्ञाप्यावाहनं प्रति ।
आवाहयेदनुज्ञातो 'विश्वेदेवाःस' इतृचवा ॥२०२३॥
'विश्वेदेवाः श्रृणतेम' मितिमन्त्रं ततोजपेत् १(*) ।

1647. विश्वेदेव-विशेषनामाज्ञाने, बृहस्पतिः—
उत्पत्तिं नाम चैतेषां अविदुर्ये द्विजातयः ।
अयमुच्चारणीयस्तैर्मन्त्रः श्रद्धासमन्वितैः ॥२०२४॥
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः २(†) ।
ये चात्र विहिताः श्राद्धे सावधाना भवन्तु ते इति ॥२०२५॥
'उशन्त'स्त्विति पितृणावाह्य विकिरेत्तिलान् ३(‡) ।
आयान्तुन स्ततोमन्त्रं जपेत सुसमाहितैः ॥२०२६॥
दैवार्च्चा दक्षिणाङ्गादि-पादजान्वंसमूर्द्धसु ।
शिरोंऽस-जानु-पादेषु वामाङ्गादिच पैतृकीति ॥२०२६॥
अत्रोशन्तस्त्वेति मन्त्रेण माता(र)महान् हविषे अत्तवे ।
आयान्तु न इत्यत्र आयन्तुनोमातामहाः—

1648. सौम्यास इति मातामह श्राद्धे ऊहमाह ह्लण्ढुः ।
तस्मात् क्वच नोहेदिति निषेधादत्रोहोनभवेदित्यन्ये ४(S) ।
यथार्थमूहश्चोदितः, तेन (प्र)कृतावपूर्व्वत्वाद्विकृतौ वचना—

1649. दिति कात्यायनोक्तेः । मातामह श्राद्धस्य विकृतत्वाभावाच्च नोहः, इत्ययरेच । यत्तु,—
मातामहाणामप्येवं श्राद्धं कुर्य्याद्विचक्षणः ।
मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ॥२०२७॥

---

१(*) 'विश्वेदेवास' शुक्ल, यजुः—३३, ५३ ।
२(†) शुक्ल, यजुः—', ३४ । 'विश्वेदेवावर प्रदाः' इत्यन्यः पाठः ।
३(‡) 'उशन्तस्त्वा' ,, ,, १९—७० ।
,, 'आयान्तुन' शुक्ल, यजुः—१९, ५८ ।
४(S) ऊहलक्षणम्,—मीमांसादर्शने । कुवचोहः स्यात् कुववानस्यादित्यादि । नो प्रकृतावूहो विकृती चेत्यूह इति कात्याय नमतम् ।

1650. इति विष्णुवचनं तत्तु मन्त्रपरम्। तथाहि,—यथान्यायमिति। यत्र वहुवचनान्तः पितृशब्दस्तत्र सर्व्वपितृवाचित्वान्नोहः। तत्रापि, 'शुन्धन्तां पितर' इत्यादावूह एव। सर्व्वपितृवाचित्वे उत्तरमन्त्रद्वय-वैयर्थ्यात्। वहुवचनन्तु नोह्यते, प्रकृतावसमर्थत्वात् पाशानिति वत्। उक्तनिषेधात्। शेषाणामिति पितृव्याद्येकोद्दिष्टानां श्राद्धे आवाहनादि-मन्त्रवर्जं कार्य्यमित्यर्थः।

**आश्वलायन कारिकायाम् ;—**

अर्धप्रदानमन्त्रेतु मात्रादिपदमावहेत्।
शुन्धन्तामिति पित्रादौ मात्रादिपदमावपेत् ॥२०२८॥
मातृश्राद्धेष्यनूहेन कुर्य्यात् पिण्डानुमन्त्रणम्।
देशादानमुपस्थानं तद्वत्कार्य्यमितिस्थितिः ॥२०२९॥
आवाहण मनूहेन तत्र प्राशन मिष्यते १(*)।

**तथा—**

आयन्तुन स्तिलोहसीति उशन्तस्त्वेति यानि च ॥२०३०॥
अनूह्यः पितृशब्दोऽत्र पितृसामान्यवाचक इति ॥२०३१॥

1651. पूर्व्वोक्त वसिष्ठवचनन्तत्तु वहवृचव्यतिरिक्त विषयम्वेति ज्ञेयम्। आवाहनाद्युपचार आसीनेन कार्य्यः। आसीनः सर्व्वत्र इति क्लिप्त-
1652. विषयम्। सपिण्डीकरणस्यैकोद्दिष्ट विषयम्। इति कात्यायनोक्तेः।
1653. **हेमाद्रौ, जातूकर्णस्तु—**

तिष्ठन् कृताञ्जलिर्भुत्वा पठेन्मन्त्रो समाहितः।
विश्वेदेवाः श्रृणुतेत्यागच्छन्तु परन्त इति स्थितत्वमाह। आवाहनादि विसर्जनान्तं कर्त्तृ भोक्त्रोर्वाग्यमन मुक्तं कात्यायनेन। आवाहनादि-वाग्यतोपस्पर्शनादामन्त्रिताश्चैवमिति ॥२०३२॥
वाग्यतोपस्पर्शनादिति सन्ध्यभाव आर्षः। आ-उपस्पर्शनादिति पदच्छेदः। उपस्पर्शनं विसर्जनम्।

**संग्रहेऽपि—**

आवाहनादि भोक्तृणां कर्त्तृणाञ्चाविसर्जनात्।
श्राद्धे वाग्यमनं प्रोक्तमन्यन्था व्रत(त)नाशनम् २(†) ॥२०३३॥

---

१(*) 'आवाहन' मित्यत्र प्रवाहनमिति पाठान्तरम्। ''तत्र आसनमिष्यते' इति च।
यजुषान्तु, 'विश्वान् देवानावाहयिष्ये' इत्यादि तत्कृत्ये 'विश्वे देवाः श्रृणुतेमम्' इत्यावा-वाहनमन्त्रं पठेत्। शुक्ल-यजुः ३३, ५३, मः।

यंहि वाग्यमलोपः स्याज्जपहोमार्च्चनादिषु १(*)।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् इति ॥२०३४॥
एवमावाह्य पूर्व्वासादितार्घ्यपात्रैरर्घ्यन्दद्यात्।

1654. आवाहनानन्तरमेवार्घ्यपात्रासादनं कार्य्यमिति हेमाद्रिराह।

1655. कात्यायनसूत्रक्रमोऽपि तथैवास्ति।
तस्मादत्र यथारंभं नियम-व्यवस्थेयम्।

1656. **जातू कर्णः—**

ततोऽर्घ्य पात्रसम्पत्तिं वाचयित्वा द्विजोत्तमान् ॥२०३५॥
तदग्रे चार्घ्यपात्राणि स्वाहार्घ्यंमिति विन्यसेत्।
पित्रे स्वधा इत्यनेन पितृपात्राणि विन्यसेत् ॥२०३६॥
दत्वा हस्ते पवित्रन्तत् कृत्वा पूजाञ्च पादतः।
यादिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ॥२०३७॥
हस्तेष्विति बहुवचनमेकोद्दिश्ये बहुविप्र-विषयम् २(†)।

1657. **गभस्तिः—**

अर्घ्यं पिण्डप्रदानञ्च स्वस्त्यक्षय्ये तथैवच ॥२०३८॥
गन्धपुष्पादिकं सर्व्वं हस्तेनैव प्रदीयत इति।

1658. **आश्वलायनः—**

अर्घ्यं सशेषमादाय दक्षिणेनतु पाणिना।
सव्यहस्त गृहीतेन निनयेत् पितृतीर्थतः ॥२०३९॥
वह्वृचानां 'यादिव्या' इतिमन्त्रेण दत्वार्घ्यानु मन्त्रण मुक्तम्।
अन्येषा मर्घ्यंदाने करणमिति विशेषः।
ततः प्रथमे पात्रे संस्रवान् समपनीय पात्रं न्युब्जं कुर्य्यात्।
अत्र, पितृभ्यः स्थानमसीति कात्यायनसूत्रम्।

---

१(*) वाग्यमः—तूष्णीमिति गन्धपुष्पादि दान मित्यपरे। वैष्णवं मन्त्रम्,—'इदं विष्णुः' 'तद्विष्णोः' इत्यादि मन्त्रः पाठ्यः।

" 'ब्रह्मनाशनम्' इति पाठान्तरम्।

२(†) 'पादे वाग्यमं लोपः स्यात्' इत्यमपि पाठान्तरम्। अत्र एकोदिष्ट मितिच पाठ भेदः।

" 'गभस्ति' रितिक्वचित् पाठः। पितृ तीर्थन्तु, दक्षिणकरे अङ्गुष्ठ तर्जन्योर्मध्यभागे।

" दक्षिणेन कार्य्यं यद वामहस्तान्वारब्ध-पूर्व्वकन्तत् ज्ञेयम्।

तच्च, प्रतिपार्व्वणमिति केचित् ।
विशेषानुक्तेः पितृवर्गा प्रथमपात्रस्यैवेत्यपरे ।
तस्य स्थापनं पंक्तिमूर्द्धन्यं वामभागे कार्य्यम् ।

**यतः—**

पितृणां प्रथमं पात्रं वामभागे निधापयेत् ।
दक्षिणादान पर्य्यन्तं नोद्धरेत्तत् कदाचन ॥२०४०॥
नोद्धरेत् प्रथमं पात्रं पितृणामर्घ्य पातितम् ।
आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् इति ॥२०४१॥

तदुपरि स्वधावाचनीयं यज्ञीयाः कुशा अपि स्थाप्या इति तत् शाखीय पक्षे शौनकमतेन ।
केचिंदत्र देवपात्र स्थापनमिच्छन्ति ।
देवेभ्यः स्थानमित्युक्त्वा स्थापयेत् पितृदक्षिणे ॥

1659. **इति गारुडोक्तेरिति ।**

तदेत दापस्तम्बानां नियतम् ॥

1660. **अथात्रार्चनं मुक्तं पृथ्वीचन्द्रोदये शङ्खः—**

स यवं पुष्पमादाय चरणादि शिरोऽन्तकम् ।
अर्च्चतेत्यर्च्चनं कुर्य्या दन्तरे चोदकं ददेत् ॥२०४२॥
शिरः प्रभृति पादान्तं नमोऽर्च्चत पैतृके ।
अर्च्चत प्रार्च्चतेत्यृग् वेदः, नमोवः पितर इति—

1661. **यजुर्व्वेदः । मार्कण्डेयः—**

चन्दनागरु कर्पूर-कुङ्कुमानि प्रदापयेत् ।
गन्धद्वारेति वैगन्धः आयातेन च पुष्पकम् १(*) ॥२०४३॥
धूरसीत्यमुना धूप मुद्दीप्यस्वेति दीपकम् ।
युवा सुवासा मन्त्रेण वस्त्रं दद्यात् प्रयत्नतः ॥२०४४॥
आसनेस्वासनं ब्रूया दर्घ्येऽस्त्वर्घ्योद्विजोत्तमः ।
सुगन्धश्च सुपुष्पाणि सुमाल्यानि सुधूपकः ॥२०४५॥
सुज्योतिश्चैव दीपेतु वस्त्रैश्चाच्छादनं क्रमात् ।

1662. अत्र, गन्धपुष्पधूपदीपवाससाञ्च मन्त्रैः प्रदानमिति ।

---

१(*) गन्धद्वारेति—श्रीसूक्तं । धूरसीति,- यजुः—१।८। 'आयातम्' ऋक्, यजुः अः ३३।८८।
" 'युवासुवासा' । अत्र पूतिकमिति-पूतिगन्धान्वितम्वेति । अत्र 'पितृभ्यः स्थानमसि,' 'देवेभ्यः स्थानमसि' इत्युभयमपि मतान्तरे कार्य्यं शाखा चारभेदेन वेति ।

1663. **कात्यायन-सूत्रेऽपि गन्धादि ग्राह्यम् । ब्राह्मे—**

श्वेतचन्दन कर्पूर-कुङ्कुमानि शुभाणिच ।
विलेपनार्थं दद्याच्च प्रीतिदं पितृवल्लभम् ॥२०४६॥

1664. **मार्कण्डेयोऽपि—**

कस्तुर्य्यगरुकर्पूर-कुङ्कुमानि प्रदापयेत् ।
अश्वमेधमवाप्नोति पितृणामनुलेपनमिति ॥२०४७॥

1665. **वर्ज्यमाह, मरीचिः—**

श्राद्धेषु विनियोक्तव्या न गन्धा देवदारुजाः ।
कल्कीभावं समासाद्य नच पर्य्युषितन्तथा ॥२०४८॥
नातिगन्धाश्च दातव्या भक्तशेषावशेषिताः ।
पूतिकं मृगनाभिश्च रोचनं रक्तचन्दनम् ॥२०४९॥
कालीयं चौग्रकञ्चैव तुरुस्कञ्चापि वर्जयेदिति ॥२०५०॥

पूतिकं—सुगन्धितृण-(गन्धतृण) विशेषः १(*) मृगनाभिः कस्तुरी ।

1666. तस्याश्च—विहितनिषिद्धत्वा द्विकल्प इति हेमाद्रिः ।
रोचनम्,—गोरोचनम् । कालीयोग्र गन्धौ द्वौगन्धविशेषौ ।
तुरुस्कः—शिल्हकः । गन्धश्च दैवे द्वि कृत्वः ।

1667. पित्र्ये त्रिकृत्वोदद्यादित्याश्वलायन परिशिष्टे २(†) ।

विप्राश्चेद्, गन्धेनोर्द्धपुण्ड्रमेव कुर्य्युः ।
ऊर्द्धञ्च तिलकं कुर्य्यान्न कुर्य्याद्धै त्रिपुण्ड्रकम् ।
निराशाः पितरोयान्ति दृष्ट्वाचैव त्रिपुण्ड्रकमिति ॥२०५१॥

---

१(*) तुरस्क इति—नायं प्रदेशः । एतन्नामकगन्ध द्रव्यम्, अथैतन्नामक कम्बलश्चेति शिह्लकः ।
'शिह्लकः परमा मांसी देवदारुः सुरा नखम् ।
सर्व्वांमी परमा वर्ष्मा रचोघ्ना ज्वरनाशनाः'
इति शिह्लकानु लेपनगुणाः । तुरस्क इति नामान्तरम् ।

,, गन्धतृणम्,—सुगन्धि तैलजनक तृणविशेषो दाक्षिणात्ये प्रसिद्धम् ।
त्रिपुण्ड्रविषये प्रागपि उक्तम् ।

२(†) एतत् स्रग्गन्धानुलेपन परमिति पाठान्तरम् ।

तिर्य्यगप्यूर्द्धपुण्ड्रं वा धारयेत्तु प्रयत्नतः ।

1668. इति व्यासोक्तेः । तिर्य्यक् पुण्ड्रमपीति पृथ्वीचन्द्रे ।

1669. पवित्रन्तु करे कृत्वा यः समालभते द्विजान् ।

राक्षसानां भवेच्छ्राद्धं निराशाः पितरोगताः ॥२०५२॥

एतत् स्रग् गन्धानुलेपनपरम् ।

सपवित्र-करोगन्धं गन्धद्वारेति दापयेत् १(*) ।

यज्ञोपवीतं विप्राणां स्कन्धान्नैवावतारयेत् ।

गन्धादि पूजा सिद्ध्यर्थं दैवे पित्र्येच कर्म्मणीति ॥२०५३॥

उपवीतं करे कृत्वा कुर्य्याद्गु गात्रानु लेपनम् ।

एक वासाश्च योऽश्नीयान्निराशाः पितरोगता इति ॥२०५४॥

—*—

## अथ पुष्पम् ।

—*—

1670. ब्राह्मे,—

शुक्लाः सुमनसः श्रेष्ठास्तथापद्मोत् पलानिच ।

गन्धरूपोपपन्नानि यानिचान्यानि कृत्स्नशः इति ॥२०५५॥

तथा,—

कमलं कुमुदं पद्मं पुण्डरीकञ्च यत्नतः ।

इन्दीवरं कोकनदं कह्लारं श्राद्ध कर्म्मणीति ॥२०५६॥

1671. संग्रहे—

तुलसी श्राद्धकालेतु दत्ता शिरसि धारिता ।

दाता भोक्ता पिता तस्य विष्णुलोके महीयते ॥२०५७॥

1672. पारिजाते, पाद्मे—

तुलसी गन्धमाघ्राय पितरस्तुष्ट मानसाः ।

प्रयान्ति गरुड़ारूढ़ास्तत् पदं चक्रपाणिनः ॥२०५८॥

---

१( ) 'गन्धरूपोप योग्यानि' इति क्वचित् पाठः । निर्गन्ध पुष्पाणि क्षण—रक्तानि च त्याज्यानि ।

" 'तिलक'' वैद्विजः कुर्य्यात् सर्वदा यज्ञ भस्मना ।

तदभावे चन्दनेन मृदा वा वारिणा पिवा' इति स्मृत्यन्तरे ।

1673. **स्मायनीये,—**

तुलसी शतपत्रञ्च भृङ्गराजन्तथैवच ।
मरुकं मल्लिकाञ्चैव पितृणां दत्तमक्षयम् ॥२०५६॥

1674. **मार्कण्डेयः—**

पितृपिण्डार्च्चनं श्राद्धे यैः कृतं तुलसी दलैः ।
प्रीणीताः पितरस्तेन यावच्चन्द्रार्कमेदिनीति ॥२०६०॥

1675. **यस्तु,—**

केतकीं तुलसी पत्रं विल्वपत्रञ्च वर्जयेत् ।
द्रोणञ्च करवीरञ्च धत्तूरं किंशुकन्तथेति ॥२०६१॥
यः तुलसीनिषेधः ।
सच वहुस्मृति पुराण विरोधान्निर्मूल—

1676. **इति हेमाद्रिः ।**

तुलसी विधिः, पिण्डपूजापरो वा इत्यन्ये ।

1677. **स्मृतिसारे,—**

आगस्त्यं भृङ्गराजञ्च तुलसी शतपत्रकं (त्रिका) ॥२०६२॥
चम्पकं तिलपुष्पञ्च षड़ेते पितृवल्लभाः ।

1678. **वर्ज्यपुष्पञ्च, पारिजाते—**

कदम्वं विल्वपत्रञ्च केतकी वकुलन्तथा ।
वर्वरी कृष्णपुष्पाणि श्राद्धकाले नदापयेत् ॥२०६३॥

1679. **शङ्खः—**

पर्य्युषितान्युग्रगन्धानि चैत्यवृक्षोद्भवानिच ।
पुष्पाणि वर्जनीयानि श्राद्धकर्म्मणि नित्यशः ॥२०६४॥
कृष्णानि यानि रक्तानि श्राद्धेषु वर्जयेद्वुधः ।
कमलानिच देयानि रक्तान्यपि विशेषतः ॥२०६५॥

---

१(क) श्रीविष्णु पूजने पितृ पूजने च श्वेतपुष्प-तुलसी च प्रशस्ता ।
गणेशार्च्चने कालिकार्च्चने च तुलसी वर्ज्ज्या । आदित्यपूजने विल्वपत्रं वर्ज्यम् ।
„ वर्वरी—अतसीति केचित् । अन्यदाह्निकाचारतत्त्वे ; मन्त्रशास्त्रेच पुष्कलमस्ति ।

1680. **अत्र चकारात् सप्तविधमपि देयमेव । वृद्धपराशर :—**

न जाति कुसुमैर्विद्वान् विल्वपत्रैश्च नार्च्चयेत ।
जपादि कुसुमं झिन्टी रूपिका सकुरण्टिका १(*) ॥२०६६॥
पुष्पाणि वर्जनीयानि श्राद्ध कर्म्मणि नित्यशः ॥२०६७॥
अत्र जाती कुसुम-निषेधोरक्तादिपरः, पिण्डपूजापरोवा ।
श्राद्धे जात्यः प्रशस्ताः स्युर्म्मल्लिकाः श्वेतयूथिकाः ।
रक्त वर्णास्तु वर्ज्याः स्युः पिण्ड पूजा नतैः स्मृतेति ॥२०६८॥
विशेषोक्तेः ।
कुन्दं शम्भवर्च्चने दद्यान्नोन्मत्तं गरुड़ध्वजे २(†) ।
पिण्डे जातीश्च नोदद्याद्देवी मर्केण नार्च्चयेदिति ॥२०६९॥

1681. वृद्धयाज्ञवल्क्योक्तेश्च ॥

—*—

## अथ धूपः ।

—*—

1682. **विष्णु धर्मोत्तरेः—**

धूपस्तु गुग्गुलुर्देयस्तथा चन्दन सारजः ।
अगरुश्च सकर्पूरस्तुरस्कत्वक् तथैव च ॥२०७०॥

### अत्र तुरस्कः—शिल्लकी वृक्षः ।

1683. **विष्णुः,—**

घृतमधुयुक्तं गुग्गुलुं श्रीखण्ड-देवदारुसरलादीनि च ।

1684. **वर्ज्यमाह, देवलः—**

येहि प्राण्यङ्गजा धूपा हस्तवाताहताश्च ये ।
नते श्राद्धे नियोक्तव्या येच केचोग्रगन्धयः ॥२०७१॥

---

१(*) अत्र श्वेत-रक्त-पीत-नील रूपाणि सर्व्वाणि जपापुष्पाणि निषिद्धाणि ।

२(†) अत्रोन्मत्तः धत्तूरः । 'धत्तुरः कनकाह्वयः' । तद्बीजमुन्मत्तताजनकम्, सन्निदावत् ।
एतत् पुष्पं शौशिव पूजने प्रशस्तम् । धत्तुरं पुष्पं शिवायावश्यं देयम् ।

,, कुन्दम्—माघ्य पुष्पम् । गरुड़ध्वजे-विष्णवेचोन्मत्तं धुस्तुर पुष्पं न दद्यात् ।

,, नानाविधा धूपाः चतुर्थ स्तवके प्राक्टिप्पण्यामुक्ताः ।
'वनस्पति रसोद्दिव्यः गन्धाढ्यः सुमनोहरः ।
आघ्रेयः सर्व्वदेवानां धूपोऽयं प्रति गृह्यताम्' इति धूपमन्त्रः ।

वस्त्रवातोत्थितं धूपं हस्तवातोत्थि तन्तथा।
मुखेन धमितं दृष्ट्वा निराशाः पितरोगताः ॥२०७२॥
गोघृताक्तं सदा दद्याद्देवपित्रर्च्चनादिषु।
घृतं न केवलं दद्याद्दुष्टं वा तृणगुग्गुलमिति ॥२०७३॥

—※—

## अथ दीपः।

—※—

1685. **अत्र विष्णुः,—**
घृतेन दीपोदातव्यस्तिलतैलेन वा पुनः १(*)।
वसा मेदोद्भवं दीपं यत्नेन परिवर्जयेत् ॥२०७४॥

—※—

## अथ वस्त्रम्।

—※—

1686. **ब्राह्मे,—**
कौशेयं क्षौम-कार्पासं दुकुलं अहतन्तथा।
श्राद्धेष्वेतानि योदद्यात् कामानाप्नोति पुष्कलान् ॥२०७५॥

1687. **वायवीये,—**
आच्छादनन्तु योदद्यादहतं श्राद्धकर्म्मणि।
आयुः प्रकाम मैश्वर्य्यं रूपञ्च लभते फलम् ॥२०७६॥
मातापित्रोः क्षयाहेतु नदद्याद्वाससीतु यः।
सप्तजन्मसु नग्नः स्यात् पितृवस्त्रापहारकः ॥२०७७॥

1688. **वर्ज्यमाह, यमः,—**
न कृष्णवर्णं दातव्यं नापि कार्पाससम्भवम्।

---

१( ) 'घृतवती भुवनानामभि' यजुः–३४।४५। घृतेन प्रदीपः प्रशस्तः। अन्यथा तिल-तैलेन। 'सुप्रकाशो महादीपः सर्वतस्तिमिरापहः।
स वाह्याभ्यान्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम्'। अन्यत् कार्त्तिके दीपदान माहात्म्यं स्मृतौ पुराणेचास्ति। 'दीपदश्चक्षुरुत्तमम्' इति मानवे। दीप दाता उत्तमं चक्षुः सदा लभते इत्यर्थः।

उपभुक्तञ्च मलिनं नादशं च्छिद्रितन्तथेति कार्पास वस्त्र निषेधः ।
कार्पासवस्त्र-कौशेयादि सम्भवविषयः पूर्व्वोक्तस्मृतेरेव ॥

—*—

## अथ यज्ञोपवीतम् ।

—*—

1689. **ब्रह्मवैवर्त्ते,—**

पितॄन् संस्तुत्य वासोभिर्दद्याद्यज्ञोपवीतकम् ।
यज्ञोपवीतदानेन विना श्राद्धन्तु निष्फलम् ॥२०७८॥
तस्माद्यज्ञोपवीतस्य दानमावश्यकं स्मृतम् ।
यज्ञोपवीतं दातव्यं वस्त्राभावेऽपि जानता ।
पितृभ्यो वस्त्रदानस्य फलं तेनाश्नुतेऽखिलम् ॥२०७९॥

1690. **हेमाद्रौ, पाद्मे,—**

निष्क्रयोवा यथाशक्ति वस्त्राभावे प्रदीयते १(*) ।

1691. **धर्म्मसारे,—**

दद्याच्छ्राद्धेषु विप्रेभ्योगन्धमाल्याम्बराणि च ॥२०८०॥
ब्रह्मसूत्रं पवित्रञ्च शक्तितः कर्णभूषणम् ।
सद्यस्तद्धारयेद्विप्रो विधिवन्मन्त्र पूर्व्वकम् २(†) ॥२०८१॥
उपानच्छत्त्र मुकुरं भोजनान्ते यथाविधीति ।

1692. उपवीतं यति स्त्री-शूद्र-श्राद्धेऽपि देयमिति हेमाद्रिः ॥२०८२॥

**तथा,—**

यः कञ्चुकं तथोष्णीषं पितृभ्यः प्रतिपादयेत् ।
ज्वरोद्भवानि दुःखानि स कदाचिन्न पश्यति ॥२०८३॥

---

१(*) 'निःस्वो यो वेति' भिन्नः पाठः ।

२(†) मन्त्रः—'यज्ञोपवीतमसीति' श्रुत्युक्तः ।
'यज्ञोपवीतं परमं पवित्रम्' इत्युपनिषदि । अन्यत् स्मृतौच ।

स्त्रीणां श्राद्धेतु सिन्दूरं दद्यस्तारङ्गमेवच १(*) ।
निमन्त्रिताश्च स्त्रीभ्योये ते स्युःसौभाग्य संयुताः ॥२०८४॥

## इति विष्णु धर्म्मोत्तरे ।

1693. **नृसिंहपुराणे,—**

कमण्डलुं ताम्रमयं श्राद्धेपु प्रददाति यः ।
काष्ठेन निर्म्मितं वापि नारिकेलमथापिवा ॥२०८५॥
हैमं वा राजतं वापि स श्रीमानभिजायते ।
योमृत्तिकाविरचितां च्छाद्धेपुच घटांच्छुभान् २(†) ॥२०८६॥
प्रदद्यात् करकान्वापि सोऽक्षयं विन्दते फलम् ।
अधौतं कारुणा वस्त्रं तथा भोजन-भाजनम् ॥२०८७॥
शयनासनयानानि दर्पणव्यजनानि च ३(‡) ।
अन्नं सुसंस्कृतं गन्धां स्ताम्बुलं दीप चामरे ॥२०८८॥
पितृभ्यो यः प्रयच्छेत विष्णुलोकं स गच्छतीति ॥

1694. **नन्दोपुराणे,—**

अलङ्काराः प्रदातव्या यथाशक्ति हिरण्मयाः ।
केयूरहार कटक मुद्रिका कुण्डलादयः ॥२०८९॥
स्त्री श्राद्धेपु प्रदेयाःस्युरलङ्कारास्तु योषिताम् ।
मञ्जीर मेखला दाम-कर्णिका कुण्डलादयः ॥२०९०॥
आदर्शं व्यजनच्छत्र चामरासनपादुकाः ।
मनोज्ञाः पटवासाश्च सुगन्धाश्चूर्णमुष्टयः ॥२०९१॥
भोजनाधार यन्त्राणि तथा भोजन पात्रकम् ।
एतान्दद्यात्तु यः सम्यक् सोऽश्वमेध फलं लभेत् ॥२०९२॥

---

१(०) समर्थपच्चे, मृत्ताम्र-रजत-स्वर्ण तैजसाश्म-काष्ठादिनिर्म्मित घटेषु, स्वर्ण-रौप्य-तैजस-ताम्र-घटा देयाः । निःस्वस्य च अश्म-मृद्घटादि दातव्यः ।

" कलशपरिमाणं यथा, मन्त्रशास्त्रे —

'पञ्चदशाङ्गुलायामोच्छ्रुतसीधः षोड़शाङ्गुलः ।
कलशानां प्रमाणन्तु मुखमष्टाङ्गुलं स्मृतम्' ॥

अन्यत्र—'साधकः कलशं कुर्य्यान्नित्र'ण मर्यादिरं दृढ़म्' ।
षट् त्रिंशदङ्गुलं कुम्भ विस्तारोन्नति शालिनम् ।

तत्रैव,— षोड़शं द्वादशं वापि ततो न्यूनं न कारयेत्' ॥ इति

1695. **स्कान्दे,—**

सौवर्ण राजतञ्चापि कांस्येनाप्यथ निर्म्मितम् ।
दत्वा भोजनपात्रन्तु सम्राड् भवति भूतले इति ॥२०६३॥

1696. **अत्र काण्डानु समय उक्तः,१(*) नारदीये,—**

देवैश्च समनुज्ञातो यजेत् पितृगणांस्तथेति ।

1697. **कात्यायन मतेन तु,—**

आवाहनादौ पदार्थानु समय- स्तत्सूत्रेऽभिहितः ।
एवं यथाविध्युपचर्य्य पूजासम्पूर्णतां वाचयित्वा,
विप्रानुज्ञया पात्राण्यासादयेदित्युक्तम् ।

1698. **हेमाद्रौ कालिकापुराणम्—**

यथा विध्युपचर्य्यातु पूजां सम्पूर्णतान्तथा ।
वाचयित्वा ब्राह्मणैस्तु विप्राणामेवचाज्ञया ॥२०६४॥
भाजनानि ततो दद्यान्मण्डलेतु ततः क्रमादिति ।

1699. **ब्राह्मे,—**

मण्डलानिच कार्य्याणि नैवारैश्चूर्णकैः शुभैः ।
गौरमृत्तिकयावापि भस्मना गोमयेऽपिवा ॥२०६५॥

1700. **भृगुः,—**

चतुष्कोणं द्विजाग्रयस्य त्रिकोणं क्षत्रियस्यतु ॥२०६६॥
मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ।
पित्र्ये कर्म्मणि सर्व्वेषां वर्तुलं समुदीरितम् २(†) ॥२०६७॥

---

१(*) 'कालानुसारं' इत्यन्यः पाठः ।

२(*) स्मृत्यन्तरं, चतुरस्रं त्रिकोणञ्च वर्त्तुलं चार्द्ध चन्द्रकम् ।
कर्त्तव्यमानु पूर्व्व्येण ब्राह्मणादिषु मण्डलम्' इति ॥
सर्व्वत्र मण्डलकार्य्ये एवं ज्ञेयम् । मण्डलविषयं प्रागपि कथितम् ।

1701. **आश्वलायन गृह्यपरिशिष्टेऽपि,—**

भोजने चासने दैवे चतुरस्रेण मण्डलम् ।

पित्रे वृत्तानि,– गोमयेनोपलिप्य, सग्रवान् सतिलान्दर्भान्-

प्रसार्य्य तेपु पात्राणि विन्यसेदिति ।

1702. **पात्राण्याह, अत्रिः—**

भोजने हैम रौप्याणि दैवे पित्रेय यथाक्रम् ।

तदभावे स्वर्णरौप्ये घृष्टं तैजसमुत्तमम् ॥२०६८॥

1703. **द्विपञ्चाशदिति– संग्रहे,—**

तदभावे कांस्यपात्रं द्विपञ्चाशन् पलं स्मृतम् ।

अत्र द्वाभ्यामधिकं पञ्चाशन् पलपरिमितमित्यर्थः ॥ २०६६॥

श्राद्धे पलाशपत्राणि मधुकोदुम्बराणिच ।

पारिकाकुटप्लक्षानिक्र(क्र)कचानि क्रमाज्जगुः ॥२१००॥

कदली चूत-पनस-जम्बूपुन्नाग-चम्पकाः १(*) ।

अलाभे मुख्यपात्राणां ग्राह्याः स्युः पितृकर्म्मणीति ॥२१०१॥

1704. **हेमाद्रौतु कदली निषिद्धा, यतः—**

असुराणां कुले जाता रम्भा पूर्व्वं परिग्रहे ।

तस्या दर्शन मात्रेण निराशाः पितरोगताः ॥२१०२॥

रम्भानिषेधो द्वादशीपर इत्यन्ये ।

1705 **वर्ज्यपात्र माह, श्राद्धे—**

सौवर्णानीह पात्राणि मृन्मयानि नतु क्वचित् ।

नायसान्यपि कुर्व्वीत पैत्तलानि नचैवहि ॥२१०३॥

नच सीसमयानीह शस्यन्ते त्रपूजान्यपीति ॥

**तथा,—**

व्यञ्जनानां भाजनानि स्थाप्यानि वहिरेवचेति ।

एवं पात्राण्यासाधनीयानि । चर्णादिना—

भस्मना वा मर्य्यादां कुर्य्यादित्युक्तं संग्रहे ।

नैर्ऋतीं दिशमारभ्य नैर्ऋ त्यन्तं समापयेत् ॥२१०४॥

---

१(*) पयः पात्रं मृत्पात्रञ्चाप्रशस्तम् । यथोक्त पात्राणामभावे शालपत्र कदली पत्रञ्च ग्राह्य मित्यन्ये बुधाः प्रोचुः ।

" अत्र नवं तैजसं घृष्टं मृष्टं परिमार्जितं वा प्रशस्तमिति ।

ता (स्या)मेवदिशमारभ्य पित्रादीनामथान्तिके ।
अकृत्वा भस्म मर्य्यादां यः कुर्य्यात् पाणि शोधनम् ॥२१०५॥
आसुरन्तद् भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥२१०६॥

1706. **ब्रह्माण्डे,—**

प्रक्षाल्यहस्तपात्रादि पश्चादद्भिर्विधानवत् १(*) ।
प्रक्षालनजलं दर्भैस्तिलैर्मिश्रं क्षिपेद्भुवि इति ॥२१०७॥
दर्भैस्तिलैर्वैदिक भस्मनाचेत्युक्तं प्राक् ॥

## अथाग्नौकरणम् ।

—*—

1707. **हेमाद्रौ, मार्कण्डेयः—**

आहिताग्निस्तु जुहुया द्दक्षिणाग्नौ समाहितः ।
अनाहिताग्निस्त्वौपसदे अग्न्याभावे द्विजोऽप्सु वा ॥२१०८॥

अप्स्विति-तीर्थविषयम् । तथाहि—अनग्निः सर्व्वतीर्थेषु जले होमं
1708. समाचरेदिति । नारदोक्तेः । आहिताग्निः सर्वाधानी अर्द्धाधानीचेत्,
1709. सोऽपिगृह्याग्नावेव जुहुयादिति—स्मृतिचन्द्रिकाकारा-परार्क-मिताक्षरा-
माधवादयः। अनाहिताग्नि रौपासनमात्रवान् । औपसदे औपास२(†)-
नाग्नौ, इदं यजुर्व्वेद विषयम् , आश्वलायनस्यतु आहिताग्नेरपि
1710. क्षयाहादौ पासणादेव होम इति वृत्तिकृदुक्तेः ।

आन्वष्टक्यश्च पूर्व्वेद्युर्मासि मास्यथ पार्वणम् ।
काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमः ॥२१०९॥
चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते ॥
पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि,

1711. इत्याश्वलायन गृह्यकारिकोक्तेश्च ।
एकोद्दिष्टं सपिण्डनमत्र, अन्यत्राग्नौकरणनिषेधात् ।
1712. बह्वृचभाष्यकारास्तु—सर्व्वेष्वेकोद्दिष्टेषु पाणिहोम माहुः ।
श्रौतस्मार्त्ताग्न्यभावे पाणि होम एव विधेयः ।

---

१(*) 'हस्तपादादि' इत्यन्यः पाठः । 'पासनाग्नौविध' इति च पाठः । गार्हपत्याहवनीया-वसंथ्य-
२(†) औपासन-श्रौत-स्मार्त-गृह्यादि-नाम-भेदोऽग्नीनां कल्पभेदे अस्ति । अन्यत् खादिर गृह्यसूत्रा-
दौविद्यते ।

**यत्तु,—**

पितृयज्ञे तु जुहुयाद् दक्षिणाग्नौ समाहितः ।
श्राद्धेत्वौपासनाग्नौतु निरग्निर्लौकिकेऽनले ॥२११०॥
अनग्निर्द्विर भार्य्यश्च पार्वणे समुपस्थिते १(*) ।

1713. सन्ध्यायाग्निं ततः कुर्य्याद्धोममग्निं समुत्सृजेदिति त्रिकाण्डमण्डनोक्त-लौकिकाऽन्यादि विधानं तैत्तिरीयविषयम्, तेषान्तथैवाचारात् ।

1714. कात्यायनाश्वलायनादीनां तु स्मार्त्ताभावे पाणि होम एव २(†) ।

अग्निपाणिभ्यामृते तत् सूत्रे विधानान्तरानुक्तेः ।
अग्न्यभावेतु विप्रस्य पाणावेवोप पादयेत् ।

1715. **इति मनूक्तेश्च ।**

अग्नौकरण प्रकारस्त्वाश्वलायनसूत्रे,—

यथा,—उद्धृत्यघृताक्त मन्नमनुज्ञाय, यत्यग्नौ करिष्ये, करवै, करवाणीतिवा, प्रत्यनुज्ञा क्रियतां कुर्वित्यथाग्नौ जुहोति ।

यथोक्तं-पुरस्तादिति ।

पुरस्तात्—पिण्डपितृयज्ञे इत्यर्थः ।

1716. **शौनकः—**

स्वाहाकारेण होमेतु भवेद् यज्ञोपवीतवान् ।
तत्र प्रागग्नये हुत्वा पश्चात् सोमाय हूयते ।
अग्नौ यज्ञोपवीत्येव प्रक्षिपेन्मेक्षणन्ततः ॥२१११॥

होमोऽत्रावदान धर्म्मेणकार्य्यः । मेक्षणेनावदाय अवदानं जुहुयात् । सोमाय पितृमते स्वधा, नमोऽग्नयेकव्यवाहनायस्वधा नम इति स्वाहा-कारेण हेत्युक्तेः । अवदानसमग्ररूपदा(दाय)स्त्वादिः ३(‡) । आप स्तम्बानान्तु, मासि(क)श्राद्ध मुपक्रम्य अन्नस्योत्तराभिर्जुहोत्याज्या-हुतिभिरुत्तराः, तद्वा विपरीतमिति विशेषः ।

अग्नौकरण होमश्च कर्त्तव्य उपवीतिना ।
अग्रं सव्येन वा कार्य्यो दक्षिणाभिमुखेनचेति ॥२११२॥

---

१(*) 'विधूर भार्य्यश्च' इति पाठान्तरम् ।

२(†) स्मार्त्ताग्न्यभावे इत्यन्यः पाठः ।

३(‡) अवदान विषये 'समादाय त्वादि' इत्यन्यः पाठः ।

कातीयमतिना मपसव्येनैव होमः । उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्य इति, कुरुष्वेत्यनुज्ञानः । पिण्डपितृयज्ञवहुत्वेऽतिदेशे मेक्षणादि-

1717. व्यावृत्त्यर्थं इति कर्कोक्तेः ।

1718. **कात्यायनः,—**

अग्नौकरणस्याग्रेतु मधुसूक्तं जपेद्बुधः १(*) ।
सव्येनैवतु पृष्ट्वाऽपसव्येन होमयेदिति च ॥२११३॥

—*—

## अथ पाणिहोम प्रकारः ।

—*—

1719. **सचाश्वलायनसूत्रे,—**

अभ्यनु ज्ञायां पाणिष्वेव वेति ।
पिण्डपितृयज्ञकस्य(कल्पा)भावे नाग्न्यभावे च काम्यादिष्वत्यर्थः ।

1720. पाणिष्विति—बहुवचनात् सर्व्वे विप्रपाणिषु होम इति वृत्तिकृत् ।
सर्व्वेषामुपविष्टानां विप्राणामथ पाणिषु ।
विभज्य जुहुयात् सर्व्वं सोमायेत्यादि मन्त्रत इति २(†) ॥२११४॥
कात्यायनानान्तु पङ्क्ति मूर्द्धन्यपाणावेव होमोनान्यत्र पित्र्ये ।
यः पङ्क्ति मूर्द्धन्यस्तस्य विप्रपाणावनग्निमान् ।
हुत्वा मन्त्रव दन्येषां तूष्णीं पात्रेषु निक्षिपेत् ॥२११५॥
पितृस्थाने यदैकस्मिन् भवेयुर्द्वयादयोद्विजाः ।
तदैकपाणौ होतव्यं स्याद्विधि विहितस्तदाः ॥२११६॥
मातामहेषु योदद्यादग्नौकरण-आहुतीः ।
निराशाः पितरस्तस्य पैशाचं श्राद्ध मुच्यते ॥२११७॥
अग्न्यभावेतु विप्रस्य पाणौ वाथ जलेऽपिवा ।
अजकर्णेऽश्वकर्णे वा गोष्ठेवाथ शिवान्तिके ३(‡) ॥२११८॥

---

१(*) मधुसूक्तम्, 'मधुवातेति-सूक्तद्वयम्' । अन्यंतु याजुष्या मधुमन्त्राः सन्ति ।

२(†) पंक्ति मूर्द्धना :—पङ्क्ति पावनः अग्रासन योग्योवेदाभिज्ञः । 'स विप्रः पङ्क्ति पावनः, इति स्मृतिः । 'मिश्रमेचर्ण' इति पाठान्तरम् 'न स्यातामि'त्यत्र न स्यातामिति पाठान्तरम् ।
'यत्राभावे' इत्यत्र पत्राभाव इति पाठान्तरम् ।

३(‡) देवमन्दिरे शिव सन्निधौ, विष्णु सन्निधौ वेति ।

तद् यदापां समीपे स्याच्छ्राद्धं ज्ञेयोविधि स्तदेति ॥
निर्जलतीर्थेऽज कर्णादो जलोत्सेके तत्रैवेति विवेकः १(*) ।
यत्तु, देव विप्रकरे नाम्नः कृत्वाग्नौ करणं द्विजः २(†) ॥२११९॥

1721. इति यत् पृथ्वी चन्द्रोदये यम वचनं तद् (स) पत्नीक परम् ।
अपत्नीको यदा विप्रः श्राद्धं कुर्वीत पार्व्वणम् ।
पित्रं विप्रैरनुज्ञाते विश्वेदेवेषु हूयते इति ॥२१२०॥

1722. तत्रैव कात्यायनोक्तेः ।
हुयते—जुहोतीत्यर्थः, छान्दसत्वात् ३(‡) ।

1723. **हेमाद्रौ, वायवीयेऽपि,—**
विधुरादौ विधावेकं कुर्य्याच्छेषं विप्रे निवेदयेत् ।
यत्र देवे यदैकस्मिन् भवेयुर्द्व्यादयोद्विजाः ४(S) ।
तदैकपाणौ होतव्यः स्याद्विधि-विहितस्तदेति ॥२१२१॥
अनुपनीत ब्रह्मचार्य्यादेः पित्र्ये पाणि होमः परिशेषात् ।
अत्रायमाशयः—अग्न्यभावः पञ्चविधः । प्राक् · अध्वरा —
सन्निधानाधिकारात्यन्ताभावादि भेदात् । तत्र विवाहात् पूर्व्वमग्नेः
तदूर्द्धमाहितस्याग्नेः प्रमादादिना नाशे पुनराधानात् पूर्व्वम्,
प्रध्वंसाभावः, देशोपप्लवादिना अरणिमारोपे सन्निधानाभावः ।
अशुद्ध द्रव्यादि स्पृष्टेऽग्नौ प्रायश्चित्तं विनाधिकाराभावः ।
नैष्ठिक ब्रह्मचर्य्ये यत्नाभावेनात्यन्ता भाव इति ५(SS) ।
तत्र प्रागभावात्यन्ताभावयोः पाणि होमः ।
प्रध्वंसाधिकारा भावयो रावश्यकविधौ, सांकल्पिकं श्राद्धम् ।
सन्निधानाभावेत्वावश्य कविधौ, साग्नेरपि द्विजपाणावग्नौ करणमिति ।

1724. **तथाच, श्राद्धकाशिकायाम् , व्यासः—**
त्यक्ताग्नेः पार्वणं नास्ति नैकोद्दिष्टं सपिण्डनम् ।
त्यक्ताग्नेस्तु स पिण्डोक्ति स्तस्मात् संकल्प्य भोजयेदिति ॥२१२२॥

---

१(*) अश्वत्थ, तुलसी, बिल्व समीपंवेति ।
२(†) यद्वा विवचात ; कारकानि भवन्ति ।
३(‡) दुर्निमित्तं, भूमिकम्प, वारिप्लावन, वज्रपात, महामार्य्यादयः । अन्यद्द अद्भुत सागरयर्य्य ज्योतिस्तत्त्वे च ।
४(S) अथ द्व्यादयः—एकाधिका विप्राः ।
५(SS) 'यथाभावे' इत्यत्र यत्नाभावे इति पाठान्तरम् :

1725. **पाणि होमे इति कर्त्तव्यतामाह, यमः—**

अग्नौ करणवत्तत्र होमो विप्रकरे भवेत् ।
पर्य्युक्ष्य दर्भानास्तीर्य्य यतोह्यग्नि समोद्विजः १(*) ॥
करेण वा मेक्षणेन मेक्षणाहरणं नहि ।२१२३॥

1726. **स्मृति संग्रहेतु,—**

नानुज्ञा पाणि होमे स्या न्नाग्नेः पर्य्यूहनाक्षणे ॥
नाग्नेः( ग्निः )तमद्यादितिच न स्याता मिष्यते क्षणे २(†) इति ॥२१२४॥
अनग्निश्चे दाज्यं गृहीत्वा भत्रतसुविप्रेष्वेवा-ग्नौ करिष्ये इति पृच्छत ।

1727. अपरार्के शौनकेन प्रश्नाद्यस्तीत्युक्तम् । तेन विकल्पः सोऽप्याचारा-द्व्यवस्थेयः ।

पाणौहुतं पात्रेनिधाय्य विप्रैः आचम्य, हुतशेषं पात्रेषु दद्यादित्युक्तमा-

1728. श्वलायन सूत्रैः --

यदि पाणिष्वाचान्तेष्वन्यदग्नि मनुदिशत्यन्नमेऽन्नेसृ(इ)ष्ट दत्त मधुकमिति ।
सृष्ट प्रभून नैमित्तिकश्चेदनाचमनम् । नहुत भक्षणनिमित्तम् ।
अन्नं पाणितले दत्तं पूर्व्वमश्नन्त्य बुद्धयः ।
पितरस्ते न तृप्यन्ति शेषान्नं न लभन्ति ते ।।२१२५॥
यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् ।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यत इति ॥२१२६॥

1729. परिशिष्टोक्तेः । केचित्तु, पाणिहुतं तदानीं प्राश्य पश्चाद्दत्तमन्नं भुञ्जीरन्निष्टौ पुरोडाशभक्षणवद् शुद्धि हेतुत्वा भावादित्याहुः ॥

**यतः—**

पितृपाणिहुताच्छेषं पितृपात्रेषु निक्षिपेत् ३(‡) ।
अग्नौकरण शेषन्तु नदद्याद्वैश्वदेविके ।
पिण्डेभ्यः शेषयेत् किञ्चिदंदंधर्म्मः सनातन इति ।२१२७॥

---

१(*) 'अग्नि समोद्विजः' इति । 'अग्नि मुखा वै ब्राह्मणाः' इति स्मृतिः । 'देवा अग्नि मुखाः सर्वे' इति च । अत्र 'मेक्षणाहरणं नहि' इत्यन्यः पाठः ।

„ 'यद् ब्राह्मणास्तुष्टतमावदन्ति तद्देवताः कर्म्मानुराचरन्ति' इति स्मृतिश्च ।

२(†) वं गृहीत अग्नः पञ्चात्पश्चाताव्यः, नेदां पादेशादि नास्ति ।

३(‡) 'पिण्ड' इति भिन्नः पाठः ।

1730. **कर्कस्तु,—**

वैश्वदेविकेऽपि हुत शेषन्दद्यात् पात्रालम्बन सामर्थ्यादित्याह । **अतएव**

1731. घृताभ्यक्तमन्यदन्नं वैश्वदेविके दद्यादिति ढुण्ढुराह ।

1732. **तैत्तिरीयास्तु,—**

अनग्नयोऽप्यग्नौ करणं कुर्य्युरित्युक्तम् १(*) ।

1733. **विश्वप्रकाशे,—**

साग्निरौपासनेऽनग्नि रग्नौ कुर्व्वीत लौकिके ।
पाणौ होमे प्रशंसन्ति नत्वापस्तम्बशाखिनः ॥२१२८॥
स्नातका विधूरा वास्युर्यदिवा ब्रह्मचारिणः ।
अग्नौकरण होमन्तु कुर्य्युस्ते लौकिकेऽनले ॥२१२९॥
अयाश्चाग्ने मनोज्याति रुद्रध्य व्याहृतीर्हुनेत् ।
सन्ध्यायाग्निं तत्र होमं कृत्वा तं विसृजेत् पुनरिति ॥२१३०॥

1734. **तत्प्रकारस्तु,—**

अग्नीन्धानाद्याज्यभागान्ते यन्मेमतेत्याद्यैर्मन्त्रैः सप्ताज्ञाहुतयः ।
षडाज्यस्येति त्रयोदश व्यत्ययश्चोवृहतोनामिति २(†) ।
अयं होम प्रकारस्तु मासे श्राद्ध एव तत् क्रमोक्तेः ।
सोऽपि स्मार्त्ताग्न्यभावे न कार्य्यः । कार्य्योवेत्यन्ये । **आब्दिकादि**
श्राद्धेषु स्मार्त्तपार्वणविधिरेव विशेषानुक्ते रिति दिक् ॥

—*—

# अथ परिवेशनम् ।

—*—

1735. **अत्र शौनकः,—**

भाजनान्यथ संशोध्य घृतमादाय मन्त्रतः ।
विधिना दैव पूर्व्वन्तु परिवेशंस ( वेषण ) माचरेत् ।
इति । मन्त्रोमूर्द्धानंदिव-आमासुपक्वमित्यादिः ३(‡) ।

---

१(*) अग्नौकरणमिति छान्दसः ।

२(†) षडाज्याहुतीः त्रयोदश संख्यकाः । अन्या आहुतयः । अत्र 'मासिक श्राद्धे इत्यन्य पाठः' तन्मन्त्रा यथा—'अग्निरैतु प्रथमः' (१) 'इमामग्निस्त्रायताम्' (२ 'द्यौस्तेपृष्ठन' (३) मा ते गृहेषु' (४) अप्रजस्यं पौत्रमर्त्याम' (५) 'परैतु मृत्युरमृतम' (६) इति विवाहप्रकृतौ श्रुत्युक्तामन्त्राः ।

३(‡) शुक्ल यजुः सं ७,२४।१९।८ ।

1736. **भविष्ये,—**

फलस्यानन्तता प्रोक्ता स्वेनैव परिवेषणे ।
भार्य्यया श्राद्धकालेतु प्रशस्तं परिवेषने १(*) ॥२१३१॥

1737. **ब्रह्माण्डे,—**

ना पवित्रेण नैकेन हस्तेन नविना कुशम् ।
नायासेनायसेनैव श्राद्धेतु परिवेषयेत् २(†) ॥२१३२॥

1738. **वसिष्ठः—**

आयसेनतु पात्रेण यदन्नं सम्प्रदीयते ।
भोक्ता विष्ठासमं भुङ्क्ते दाताच नरकं व्रजेत् ॥२१३३॥

1739. **हारीतः—**

सौवर्णराजताभ्याञ्च खड्गेणोदुम्बरेण वा ।
दत्तमक्षयतां याति फल्गुपात्रेण वा पुनः ॥२१३४॥

1740. **यमः—**

शाकादि पुरतः स्थाप्यं भक्ष्यं भोज्यञ्चवामतः ।
अन्नंम(सं)ध्ये प्रतिष्ठाप्यं दक्षिणे घृत-पायसे इति ३(‡) ॥२१३५॥

1741. **संग्रहे,—**

काष्ठेनायसदर्व्यान्नं यद्दत्तं श्राद्धकर्म्मणि ।
हस्तेनापिच यद्दत्तं तद्वै रक्षांसि भुञ्जते ॥२१३६॥

1742. काष्ठदर्वीनिषेधस्तू दुम्बरान्यपरः । हारीतेन तद्विधानात् ।

1743. **आचार्य्यस्तु,—**

औदुम्बरमयाः शस्ता दर्व्याद्याः श्राद्धकर्म्मणि ।
दर्व्यैव सर्व्वं दातव्यं न हस्ताद्यैस्तु किञ्चन ॥२१३७॥

1744. **कार्ष्णाजिनिः—**

दर्व्या दीयते यच्चान्नं समस्तव्यञ्जनानि च ।
उदकञ्चैव पक्वान्नं नोदर्व्यातु कदाचन ॥२१३८॥

---

१(*) भार्य्ययेति—'गृहान्नः पितरो दत्त' इति गृहिणीं पश्येत्। दर्शपौर्णमासेच पत्न्या वेक्षितमाज्यं प्रशस्तं विहितम् ।

२(†) अत्र घृत पायस मित्यन्यः पाठः ।

३(‡) अत्र आयासेन अतिक्लेश स्वीकारेण, अनिच्छयावा ।

हस्तदेयानि दर्व्याच दर्व्या देयानि हस्ततः ।
दत्तानि विप्रोयोऽश्नीयात् सोऽश्नीयानमूत्ररेतसी ॥२१३६॥

1745. **वृद्धशातातपः—**

हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनं समम् ।
भोजनादौतु तद्देयं न देयं श्राद्धकर्मसु १(*) ।

1746. **विशेषः, प्रचेताः—**

ओदने परमान्नेवा पात्र मासाद्य मूढ़धीः ॥
घृतेन पूरयेत् पात्रं करस्थं नकदावन ।
शून्ये करे पूरितं यद् तदघृतं रुधिरम्भवेत् ।
तस्माद् घृतादि पात्राणि भुमावेव निधापयेत् ॥२१४१॥

1747. **संग्रहे,—**

हस्तदत्तन्तु नाश्नीयाल्लवणं व्यञ्जनादिकम् ।
अपक्वं तैल पक्वञ्च हस्ते नैव प्रदीयते ॥२१४२॥
इष्टमुष्णं हविष्यञ्च दद्यादन्नं शनैः शनैः २(†) ।
असं कलिपतमन्नं यत् पाणिभ्यां यदुप स्पृशेत् ॥२१४३॥
अभोज्यन्तद्भवेदन्नं पितॄणां नोप तिष्ठति ।

1748. **अत्रि :—**

अकृतेत्वन्न संकल्पे यः पात्रं चोद्धरेद् द्विजः ॥२१४४॥
वृथा भवति तच्छ्राद्धं दाताच नरकं व्रजेत् ।
अन्नं दत्तं न गृह्णीयाद् यावत्तोयं न संपिवेत् ।
अपीत्वा ( दत्वा ) मर्इयदन्नं निराशाः पितरोगताः इति ॥२१४५॥

परिवेषणं सव्येनैव पित्र्येऽपि कार्य्यम् , सव्यहस्तेन । नच परिवेषण-मिति पारिजातोक्तेः । ३(‡) ढुण्ढुस्तु—ततोऽपसव्ये न दैव पितृतीर्थेन पित्रे परिवेषणं कार्य्यम् । हुत शेषन्दत्वा पात्रमालभ्यभुक्त्वावशिष्ट-

1749. मन्नन्दद्यादिति कात्याय नोक्तेरित्याह ॥

---

१(*) 'मूर्द्धानमिति' शुक्ल यजुः ७।२३।२३।८ । 'मनोज्योतिः' शुक्ल यजुः, २।६३। 'उद्बुध्यस्व शुक्ल यजुः—१५।५५ ।
श्राद्ध पूजनादौ पात्रेण देयं न तु हस्तेन इति ।
अत्र [illegible]प्नोति इति भिन्नः पाठः ।

२(†) अत्र 'इष्टवदुष्णं', 'दुग्धदुष्णम्' इति च पाठान्तरमस्ति ।

३(‡) परिवेषोक्तेः इति भिन्नः पाठः ।

## अथ पात्रालम्भः ।

—*—

1750. **चतुर्विंशतिमते,—**

उत्तानं दक्षिणं सव्यं नोचं पात्राण्युप स्पृशेत् ।

1751. **हस्तं कृत्वेति शेषः । याज्ञवल्क्य :—**

दत्वान्नं पृथिवी पात्रमिति पात्राभि मन्त्रणम् १(*) ।

कृत्वेदं विष्णु रित्य ने द्विजाङ्गुष्ठं निवेशयेत् ॥२१४५॥

1752. **बौधायन :—**

विप्राङ्गुष्ठेनानखेनानु दिशनीति ।

1753 **अत्र विशेषमाह, धौम्य :—**

परिवर्त्त्य नखाङ्गुष्ठं द्विजस्यान्ने निवेशयेत् ।

**तथा,—**

उत्ताने नतु हस्तेन द्विजाङ्गुष्ठ–निवेशणम् ॥२१४६॥

यः करोति द्विजो मोहात्तन्न रक्षांसि भुञ्जते ।

1754. **अङ्गुष्ठ निवेषन फलमाह, यम :—**

निरङ्गुष्ठन्तु यच्छ्राद्धं वहिर्जानुच यत् कृतम् ॥२१४७॥

वहिर्जानुच यद् भुक्तं सर्व्वमेवासुरम्भवेदिति ।

**तथा, —**

विष्णो हव्यञ्च कव्यञ्च ब्रूयाद्रक्षस्व च क्रमात् ॥२१४८॥

सम्बन्ध नाम गोत्राणि इदमन्नं ततः स्वधा ।

पितृ क्रमादुदीर्य्येति स्वसत्तां विनिवर्त्तयेत ॥२१४९॥

हस्तेनामुक्त मन्नाद्यमिद मन्न मुदीरयेत् । २(†)

चतुर्थ्या दैव पूर्व्वन्तु ब्राह्मणाय निवेदयेत् ॥२१५०॥

दत्तं यद्दास्यमानञ्च आतृप्तो न ममेति च ।

अत्र सङ्कल्प्योदकं द्विजहस्ते देयम् ॥२१५१॥

---

१(*) 'पृथिवीते पात्रं द्यौः पिधानम्, ब्राह्मणस्य मुखेऽमृतेऽमृतम् जुहोमि' इति : 'इदं विष्णु विंचक्रमे' ऋक्, यजुः ५।१५ । अवाङ्मुख तर्जन्योर्मध्यपेतांग तीर्थम् ।
'स्थाने भ जनकालेतु सन्ध्ययोरुभयोरपि ।
वहिर्जानुनं कार्य्याणि तद्वदाचमनं स्मृतम्' । इति ।

२(†) अत्र 'अभुक्तमन्नादि' इत्यन्यः पाठः ।

1755. **तथाच, धर्म्मप्रदीपे,—**

सिद्धान्नस्यतु सङ्कल्पो भूमावेव प्रदीयते ।
हस्तेषु दीयमानं यत् पितृणां नोपतिष्ठते ॥२१५२॥
भूमिर्जनित्री सर्व्वेषां भूतानाञ्च विशेषतः ।
तत्रोपतिष्ठते दत्तं नच हस्ते कदाचन ॥२१५३॥
वैश्वदेवस्य वामे तु पितृ पात्रस्य दक्षिणे ।
सङ्कल्पोदक दानं स्यान्नित्य श्राद्धे यथारुचि इति ॥२१५४॥

**ततः,—**

येदेवासो-येचेह-जपेण्मन्त्रो यथाक्रमम् १(*) ।
देवताभ्य स्तथा मन्त्रं जप्त्वा ब्रह्मार्पणञ्चरेत् ॥२१५५॥

1756. **प्रचेता :—**

आपो ( अपो ) शानं प्रदायाथ सावित्रीं त्रिर्जपेदथ ।
मधुवाता इति तृचं मध्वित्येतत्त्रिकन्तथा ॥२१५६॥
सव्याहृतिकां गायत्रीं मधुवाता इति तृचम् ।
जप्त्वा यथा सुखं वाच्यं भुञ्जीरं स्तेऽपि वाग् यताः ॥२१५७॥
यथा सुखं जुषध्वमिति वाच्य मित्यर्थः ।

1757. **अपोशाने विशेषः, संग्रहे,—**

अपोशानं वामभागे सुरापान समं भवेत् ।
दक्षभागेतु यः कुर्य्यात् सोमपान फलं लभेत् ॥२१५७॥
पुनरापूर्य्यापोशानं सुरापान समं भवेत् ।
तस्माद् पोशानं सद्योग्राह्यं नैव विलम्बयेत् ॥२१५८॥
अपोशान ग्रहणं नित्य भोजनाश्रित-पर्य्युक्षणादीनां अपि प्रसाधति ।
अत्र बलिदानन्तु निषिद्धम् ।

---

१(*) 'ये देवासो दिव्येकादशस्थ' इत्यादि शुक्ल, यजुः ७।१९ ।
" 'येचेह पितरो येचनेह' इत्यादि " " १९।६७ ।
" 'देवताभ्यः पितृभ्यश्चेति' स्मार्त्ताः ।
" 'ब्रह्मार्पणम्,—'तत् कुरुष्व मदर्पणम्' इति श्रीभगवद्वाक्याद्, येन यद् धर्म्मकृत्यं अनुष्ठितं तत्तदन्त तत्, तस्मै परमगुरौ परमेष्ठि समर्पणं विहितम् ।
" 'मधुवातेति ऋक्त्रयं, जपेत् । सावित्रीं गायत्री मित्यर्थः ।
'आपोशान' मित्यत्र भिन्नः पाठः ।

1758. **तथाच, भरद्वाजः** —

पर्य्युक्षणमपोशानं बलिदान-विवर्जितम् ।
श्राद्ध भोक्ता विशेषेण कुर्य्यात् प्राणाहुतीरथ ॥२१५६॥
पितृणा मन्न मादाय बलिं यस्तु प्रयच्छति ।
आसुरन्तद्भवेच्छ्राद्धं पितृणां नोपतिष्ठते ॥२१६०॥

1759. **हेमाद्रा वत्रिः,—**

दत्त्वेवाप्यथवाऽदत्त्वै भूमौ यो निक्षिपेद्बलिम् ।
तदन्नं निष्फलं याति निराशैः पितृभिर्गतम् ॥२१६१॥
केचिदाज्येन कुर्व्वन्ति भूमावन्नेनवै बलिम् ।

**तन्न,—**

पायसेन तथाज्येन माषान्नेन तथैवच ।
प्र(न)कुर्य्याद्बलि दानन्तु औदनेन प्रकल्पयेदिति ॥२१६२॥
नित्य भोजने तन्निषेधाद्विध्य भावाच्च ।

**यत्तु,—**

स्पर्शनान्ते स्पृशेदन्नं कल्पनान्ते बलिंहरेत् ।
इति वचनं तदेव (क) कर्म्म विषयम् ।

1760. **कात्यायन सूत्रे,—**

अनश्नत्सु जपेद्व्याहृति पूर्व्वां गायत्रीं-सप्त (कृत्) त्रिवारांच ( त्रिर्वा ) रक्षोघ्नीः, पित्र्यमन्त्रान्, पुरुषसूक्तम प्रतिरथ मन्यानित्र पवित्राणि, इति (†) ।

1761. **अनश्नत्सु अभुञ्जानेषु । सौरपुराणे,—**

रौद्रञ्च पौरुषं सूक्तं श्रावयेद् ब्राह्मणांस्ततः १(०) ।
ब्रह्मविष्ण्वर्क रुद्राणां स्तोत्राणि विविधानिच ।
वैष्णवं सोमसूक्तञ्च पावमाणीश्च शक्तितः ॥२१६३॥

---

प्राणाहुती रिति बहुवचनं प्राहुतेः पञ्चत्वात् प्राणादिश्च ।

१(०) पुरुषसूक्तं 'सहस्रशीर्षा' इत्यादि षोडर्च मंत्रकम् । शुक्ल यजुः ३१।१।

" 'अप्रतिरथम्' अच प्राप्नोति इति भिन्न: पाठः ।

" अपराणि पवित्राणि सूक्तानि जपेत् । सौरसूक्तं—'उदुत्यमित्यादि' १।४।७।—७।८।११। १।८।९; ४।२।११। ७.८।२।

मण्डल ब्राह्मणन्तद्वत् प्रीतिकारिच यत् पुनः ।
अभावे सर्व्वविद्यानां गायत्री-जपमाचरे दिति ॥२१६४॥

1762. **अत्रिः,—**

हुंकारेणापि यो ब्रूयाद्रस्ताद्वापि वदेद्गुणान् ।
भूतलाद्वाद्धरेत् पात्रं भुञ्जन हस्तेन वा पिबेत् ॥२१६५॥
पौढ़ पादोवहिः कच्छो वहिर्जानु करोऽपिवा ।
अङ्गुष्ठेन विनाश्नाति मुख शब्देन वा पुनः ॥२१६६॥
आपोनिपिवेऽन्नञ्च पीताञ्चेद्भाजनेऽपिवा ।
इत्थमश्नन्द्विज-(: श्राद्धं हत्वा गच्छत्यधोगतिमिति ॥

1763. **वृद्धशातातपः—**

अपेक्षितं याचितव्यं श्राद्धार्थमुप कल्पितम् ।
न याचते द्विजो मूढ़ः स भवेत् पितृ घातकः ॥२१६८॥

**यत्तु,—**

श्राद्धे द्विजो नैवदद्यान्न वा चेन्नैवदापयेत् । इति मद्गु यत् वचनं तस्य
1764. (तु) सम्पादित वस्तु विषयम् । श्राद्धाजईद्रव्य विषयंमिते हेमाद्रिः ।

1765. **हारीतः—**

ऊर्द्धपाणिश्च विहसन् सक्रोधो विलंबाञ्चितः ।
भग्न पृष्ठश्च यद् भुक्ते न तत् प्रीणाति वै पितृन् १(*) ॥२१६९॥
नान्नपानादिकं श्राद्धे धारयेत् खलतः क्वचित् ।
अनिरुत्वाद्धहुत्वाद्धा धारयेद्धस्त संश्रयेति ॥२१७०॥

1766. **नारदः—**

पादेन पादमाक्रम्य यो भुङ्क्ते नापदि द्विजः ।
नचात्र भुञ्जते श्राद्धं निराशः पितृभिर्गतः ॥२१७१॥

---

१(*) रौद्र सूक्तम्, रुद्रपञ्चाध्यायी, [illegible] वा ।
„ विष्णु-सूक्तम्— परं मात्रया' इत्यादि—सहस्र वितद्देरयेयाम्' इत्यन्तम् ।
५।६।२४, २।२।२४, ५।[illegible], ८।७। १ । एतद वचनोक्तानां सर्व्वसूक्तानामभावे परमाचरौं गायत्रीं जपेदिति । निम्नोक्तानपि पठेत्,—
„ सौमसूक्तम्
„ पावमानीसूक्तम्
„ मण्डलब्राह्मणम् ।

भोजनन्तु न निःशेषं कुर्य्याद्व विप्रः कथञ्चन ।

अन्यत्र—

दध्नः क्षीराद्वा क्षौद्राद्वा तथासक्तुभ्य एव च ॥२१७२॥
भुक्त्वा पीत्वा च यः कश्चिद्रिक्तं पात्रं समुत्सृजेत् ।
सनरः क्षुत्पिपासार्त्तो भवेज् जन्मनि जन्मनि ॥२१७३॥

तथा—

न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कथञ्चन १(*) ।
न पादं न शिरोवस्ति न पदा भाजनं स्पृशेत् ॥ २१७४॥

1767 वृद्ध शातातपः—

पिबति पतितं तोयं यदि भोजन-भाजने ।
अभोज्यं तद्ध भवेदन्नं भुक्त्वा चान्द्रायण ञ्चरेत् ।

1768. इतिहासे—

यावदुष्णमभवत्यन्नं यावद्भुञ्जते वाग्यताः २(†) ।
पितर स्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः ॥२१७५॥
हविर्गुणा न वक्तव्याः पितरो यावदर्पिताः ३(‡) ।
पितृभिस्तर्पितैः पश्चाद्वक्तव्यं शोभनं हविरिति ॥२१७६॥

1769. विप्राणां मिथस्पर्शे शङ्खः—

श्राद्धपङ्क्तौतु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत् ॥२१७७॥

1770. अन्योच्छिष्टस्पर्शेतु, सएव—

उच्छिष्टलेप संस्पर्शे प्रक्षाल्यान्येन वारिणा ।
भोजनान्ते नरः स्नात्वा गायत्रीत्रिशतं जपेत् ॥२१७८॥

1771. अन्योन्यं भोजनपात्रस्योच्छिष्टस्पर्शे, व्यासः—

उच्छिष्टोच्छिष्टसंस्पर्शे स्पृष्टपात्रं विहत्य च ।
सर्व्वान्नं पूर्व्ववत् क्षिप्त्वा भोजयेत्तद्द्विजोत्तमः ॥२१७९॥

---

१(*) 'भुञ्जानोऽन्नं कथञ्चन' इत्यपि पाठः ।

२(†) 'इतिहासः पुराणं वाकोवाक्यामि कायथ' इति श्रुतिः ; भुञ्जन्ति इति भिन्नः पाठः । विप्रयोश्चाद्धयोर्द्वयोः मिथो भुञ्जानयोः स्पर्शे इति ।

३(‡) तर्पिताः इति पाठान्तरम् ।

1772. **विहत्यापसार्य्य । गुदप्रसारेतु, भरद्वाजः—**

भुञ्जानेषु च विप्रेषु प्रमादात् स्रवते गुदम् ।
पादकृच्छ्रं व्रतं कृत्वा त्वन्यविप्रं वियोजयेत् १(*) ॥२१७९॥

तदानीं तत्क्षणे, पाद्यादिना सम्पूज्य भोजयेदित्यर्थः ।
सर्व्वस्रावेतु, सर्वेषान्तु गुदस्रावे पुनः श्राद्धं समाचरेदिति ।

**स एव ।**

चण्डालादिभिर्दृष्टः सन् श्राद्धं भुञ्जन् द्विजोत्तमः ।
तदन्नमत्यजन् भुक्त्वा स्नात्वा देवी सहस्रकम् २(†) ।

1773. **जपेदिति शेषः ।**

वमने तद्भक्ष्यः । निमन्त्रितस्य श्राद्धेवै भोजने मुखनिः सृते ।
तदैव होमं कुर्व्वीत स्वाग्नौ कर्त्ता समाहितः ३(‡) ।
प्राणादि-पञ्चभिर्मन्त्रै यावद्द्वात्रिंश संख्यया ॥२१८०॥
द्वात्रिंसदाहुतीर्हुत्वा श्राद्धशेषं समापयेत् ।
ब्राह्मणस्तु ततः स्नात्वाह्यन्नप्राशनमाचरेत् ४(§) ॥२१८१॥
इन्द्राय सोमसूक्तेन श्राद्धयिग्नो यदाभवेत् ।
अग्न्यादिभि र्भोजनेन श्राद्धं सम्पूर्णमेवहीति ॥२१८२॥

1774. **अत्राग्न्यादिभिरिति,—**

लौकिकाग्निस्थापन-चरुभिर्वा आज्यभागान्ते, पितृनाम गोत्र पूर्व्वकं, अग्नौ पितृनावाह्य सम्पूज्यान्नत्यागं कृत्वा, प्राणादिभिर्द्वात्रिंशदाहुती-श्चरुणाहुत्वा सूक्तं जपेदित्यर्थः। भोजनेति—पुनः श्राद्धेनेत्यर्थः। तेन होमः पुनः श्राद्धश्चेति ऋग्विधाने यज्ञद्वयमुक्तम्। सूक्तजप-स्तूभयानुगतः। तत्रेयं व्यवस्था—पिण्डदानोत्तरं वचने सति होम एव, न श्राद्धमावर्त्तयेत्। पिण्डदानात् प्राग्वमनेतु तद्दिने श्राद्धेन श्राद्धशेषं समाप्योपोस्यच परेद्युः श्राद्धावर्त्तनं कुर्य्यात्।

---

१(*) अत्र पादप्रक्षालनं कृत्वा इत्यन्यः पाठः। पादकृच्छ्रं प्रायश्चि कृत्वा अन्य विप्रं नियोजये दितिच पाठार्थः।

२(†) 'देवी सहस्रकम्' सहस्र संख्याकं देवी सूक्त श्रीसूक्तञ्च जपेत्। अथवा तन्मितां गायत्रीं जपेत्। 'अष्ट प्राशन माचरेत्' इत्यत्रान्न प्राशन माचरेदितिच पाठः सङ्गतः।

३(‡) 'सूक्तजपस्तु' इति पाठः सम्यक्।

,, स्वाग्नौ = स्वीय गृहीताग्नाविति।

४( पुनः श्राद्धं विदध्यात्।

प्राधान्यं पिण्डदानस्य भोजनस्य तदङ्गता ।
अतो भुक्ति क्रियाहानौ श्राद्धं नैवानु मन्वत १(*) ॥२१८३॥

1775. इति स्मृति संग्रहोक्तः,—

अत्र श्राद्धावृत्ति न मन्वान इत्युक्त्या पिण्डदा-
नोत्तरं वमने होममात्रं कार्य्यमिति गम्यते ।

तथा,—

श्राद्ध पङ्क्तौतु भुञ्जानो ब्राह्मणोवमते यदि ।
लौकिकाग्निं प्रतिष्ठाप्य त्वर्च्चयेत्तु हुताशनम् ॥२१८४॥

तथा,—

एकत्रैव यदा विप्रा भोजने च्छर्दितो यदि ।
तदैवाग्नि समादाय होमं कुर्य्याद्व यथाविधि ॥२१८५॥
इत्यादि [द्दौ] प्रथमपक्ष साधकानि वचनानि ।
द्वितीय पक्षेतु—स(श)म्विधाने,—
भोजनोपक्रमादूर्द्धं प्रक्रमात् पूर्व्वतो यदि ।
श्राद्धविघ्ने पुनः कार्य्यं जपहोमो न तृतिद्दौ ॥२१८६॥

1776. स्मृतिसंग्रहे—

अकृते पिण्डदानेतु भुञ्जानो ब्राह्मणो वमेत् ।
पुनः पाकात्तु कर्त्तव्यं पिण्डदानं यथाविधि ॥२१८७॥
पिण्डदानं श्राद्धमित्यर्थः । तथा,—
अकृते पिण्डदानेतु पिता यदि वमेत्सदा ।
पुनः पाकं प्रकुर्वीत श्राद्धं कुर्य्याद्व यथाविधि ॥२१८८॥

तथा,—

पित्रर्थानां त्रयाणांहि पिता च वमते यदि ।
तद्दिने चोपवासः स्यात् पुनः श्राद्धं परेऽहनि ॥२१८९॥

तथा,—

दैवात् कर्त्तुर्वमनेवा तद्दिनं परिवर्जयेत् ।

१(*) 'नैवानु मन्यते' इति भिन्नः पाठः ।

उपोष्याथ द्वितीयेऽह्नि पुनः श्राद्धं समाचरेदिति—
द्वितीयपक्ष साधकं वचनम्। अत्र पुरोडाश-चतुर्द्धाकरणन्यायेन-
ब्राह्मण शब्दस्य पित्र्यब्राह्मण परत्वात्, पिण्डदानात् पूर्व्वमपि
दैवविप्रवमने होम एव, पुनः श्राद्धं विधेयम्. अङ्गत्वात्तस्य, एवं
पितेति विशेषश्रवणात् पितामहादावपि ज्ञेयम्। तयोः प्राधान्येऽपि
वाचनिकत्वात्। एतेन पितामहादिवमने पुनः श्राद्धवादी परास्तः।
अथ पितृशब्द आद्यपरः, तेन मातामहादि श्राद्धेऽप्येवमेवेति प्रष्टव्यम्।
द्वितीयेऽह्नि श्राद्धविधानमपि मासिकाब्दिकेष्वयम् १(*)।
दर्शादौतु तदैवामश्राद्धं कार्य्यम्।
श्राद्धविघ्ने द्विजातीनामाम श्राद्धं प्रकीर्त्तितम्।
1777. अमावास्यादि नियतं मासं वत्सरादृत इति मरीच्युक्तेः।
1778. श्राद्धेपिण्डदानमेव प्रधानमिति कर्काचार्य्यः २(†)।
भोजनाग्नौकरण-पिण्डदानानि त्रीण्यपि प्रधानमिति हेमाद्र्यादयः।
तेनात्र सर्व्वेषामविरोधः। यान्यपिण्डकानि, संक्रान्तिनित्य-
सांकल्पिक-वृद्धि-मघा-श्राद्धादीनि, तेषु भोजनस्यैव प्राधान्यात्, पुनः
श्राद्धकरणमेव।
भुजि क्रियायाः प्राधान्यं श्राद्धे संकल्प संज्ञके।
तत्रैव पितृविप्रस्य रूपज्ञाते पुनः क्रियेति ॥२१६०॥
संग्रहोक्तेरिति सर्व्वमनवद्यम्।

## तथा,—

अर्द्धभुक्तेतु यो विप्र स्तस्मिन् पात्रे जलं पिवेत्।
हतं दैवञ्च पित्र्यञ्च आत्मानञ्चोप पातयेत् ॥२१६१॥
अत्र जलपानमाचमनम्।
भुञ्जानेषुच विप्रेषु योऽग्र पात्रं विमुञ्चति।
स मूढः सच पापिष्ठो ब्रह्मघ्नः स खलूच्यते ३(‡) ॥२१६२॥

---

१(*) आब्दिकादि ष्वपम्।
२(†) कर्काचार्यः- -कात्यायन श्रौतसूत्रादि भाष्यकारः। 'मासिकाब्दिक श्राद्ध परम्' इति भिन्नः पाठः।
३(‡) स मूढः इत्यत्र पा ो दृश्यते

1779. **इति स्मृतेः।**

1780. भोजनानन्तरं कर्त्तव्यमाहाश्वलायनः—

तृप्तान् ज्ञात्वा मधुमतीः श्रावये'दक्षन्नमी मदन्ते'तिच सम्पन्नं पृष्ट्वा यद् यदन्नमुपभुक्तं तत्तत् स्थाली पाकेन सह पिण्डार्थ मुद्धृत्य शेषं निवेदयेत् 'अभिमतेऽनुमते वेति'। अभिमते विप्रैः स्वीकर्त्तु मिष्टे १(*)।

1781. कात्यायनस्तु, तृप्तान् ज्ञात्वान्नं प्रकीर्य्य स्वकृते सकृदपोदत्वा पूर्व्ववद् गायत्रीं जपित्वा 'मधुमती र्मधुमध्विति च' तृप्ताः स्थेति पृच्छति तृप्ताः स्म इत्यनु ज्ञातः। शेषमन्न मनुज्ञाप्य सर्व्वमन्नमेकतः उद्धृत्योच्छिष्ट समीपे दर्भेषु त्रीं स्त्रीन् पिण्डानवनेज्य दद्यादित्याह। क्रमोऽत्र यथा शाखं ज्ञेयः।

1782. **शौनकः।**

अन्नशेषैश्च किं कार्य्यमिति पृच्छेत्।

तां स्ततः तदिष्टैः सहभोक्तव्यमिति प्रत्युक्ति पूर्व्वकं प्रदद्युः।

सकलं तस्मिन् स्वीकुर्य्यु र्व्वा, यथारुचि प्रश्ने विशेषमाह,—

1783. **विष्णुः—**

पित्रे स्वदितमिति गोष्ठ्याम्, सुश्रुतं सम्पन्न मित्यभ्युदये दैवैरोचत इत्यायुष्यमिति स्वैरिषु,—स्वैरिष्वैच्छिक श्राद्धेषु।

1784. **याज्ञवल्क्य :—**

अन्नमादाय तृप्ताः स्थः शेषं चैवाणु मान्यच।

तदन्नं प्रकिरेद्भूमौ दद्याच्चापः सकृत् सकृत् ॥२१६२॥

1785. अत्र विकिरविधिः, कातीये—

आलापमानां पिण्डान्ते तथा तत् सूत्रात् २(†)।

1786. **माधवीये प्रचेताः—**

सार्व्ववर्णिकमादाय 'ये अग्नीति' भुवि क्षिपेत्।

विकिरं दर्भपक्वा ( पंक्त्यांचै )यां जलेन परिषेचयेत् ॥२१६३॥

1787. **वृद्ध याज्ञवल्क्य :—**

विकिरं भुवि सन्दद्या दुच्छिष्टेभ्यः षड़ङ्गुलम्।

उच्छिष्ट स्योत्तरे भागे पिण्ड' दद्यात् षड़ङ्गुलम् ॥२१६४॥

---

१(*) अत्र 'अभिमते' इत्यत्र पाठः।

२(†) 'पिण्डान्ते पिण्ड शेषान् विकिरे दिति।'

1788. **गोभिल :—**

असोमपाश्च ये देवा यज्ञ भाग विवर्जिताः ।
तेषा मन्नं प्रदास्यामि विकिरं वैश्व देविकम् ॥२१९५॥
असंस्कृत प्रमीता ये भागिन्योयाः कुलस्त्रियः ।
दास्यामि ताभ्योविकिरमन्नं ताभ्यश्च पैतृकम् ।
इति मन्त्रौ समुच्चार्य्य विकीर्य्यान्नं यथाक्रमम् ॥
'येऽग्निदग्धा' मन्त्रेण शेषं भूमौ निवेदयेत् १(*) ॥२१९६॥

**मन्त्रस्तु :—**

'येऽग्नि दग्धा नाग्नि दग्धा जीवा जाताः कुले मम ।
भूमौ दत्तेन पिण्डेन तृप्ता यान्तु पराङ्गति मिति ॥२१९७॥

1789. **उच्छिष्टं प्रति प्रतिपत्तिमाह, मनु :—**

उच्छेषणं भूमिगतं अजिह्मस्याशठस्यच ।
दासवर्गस्य तत् पित्र्यै भागधेयं प्रचक्षते ॥२१९८॥
यजमानस्य दासादीनुद्दिश्य द्विज सत्तमः ।
तस्मादन्नं त्यजेद् भूमौ वामभागेषु(तु) पैतृके ॥२१९९॥
यजमानकुलेजाता दासा दास्योऽन्नकाङ्क्षिणः ॥
ते सर्व्वे तृप्ति मायान्तु मया दत्तेन भूतले इति ॥२१००॥

**इत्ययञ्च मन्त्रः ।**

ततश्चापोशनं दद्याद्द विप्राणां पितृ पूर्व्वकम् ।
दैवपूर्व्वं भवेच्छाद्धं वर्जयित्वा विसर्ज्जनम् ॥२२०१॥
प्रश्नं च दक्षिणाश्चैव भूक्तेष्वाचमनं विनेति ।

1790. **विष्णुः—**

उदङ्मुखेष्वाचमन मादौ दद्या त्ततः प्राङ्मुखेष्विति ।

1791. **हेमाद्रौ, वाराहे—**

हस्तं प्रक्षाल्य यश्चापः पिवेद्भुक्त्वाद्विजोत्तमः ।
तदन्नम शूरै र्भुक्त्वा निराशाः पितरो गताः ॥२२०२॥

---

१(*) 'येऽग्निदग्धा येऽनग्नि दग्धाः' इत्याथर्वणो मन्त्रः । —मन्त्रस्य 'अग्नि दग्धाश्च ये जीवा येऽप्य दग्धाः कुलेमम । भूमौ दत्तेन तोयेन तृप्ता यान्तु पराङ्गतिम्' इति स्मृत्यन्तरे ।

,, तस्मादन्नं—इत्यस्य तेभ्योऽन्न मित्यर्थः ।

प्राणाग्नि होत्री गण्डूष करणात् पूर्वं हस्तं प्रक्षालये द्व्यदि ।
हतं दैवं च पित्र्यञ्च आत्मानं चोपघातयेत् ॥२२०३॥

1792. **संग्रहे**---

पवित्रं ग्रन्थिमुत् सृज्य मण्डले भुवि निक्षिपेत् ।
हस्तादीन् क्षालयेद् विद्वान् चक्रावादौ च कुत्रचित् ॥२२०४॥

1793. **व्यास :—**

ताम्बूलोद्गीरणं चैव गण्डूषोद्गीरणन्तथा ।
कांस्य पात्रे तथा ताम्रे न कुर्वीत कदाचन ॥२२०५॥
उष्णादकैर्धान्य चूर्णैः करौ श्मश्रुणि शोधयेत् ।
कर्त्ता पवित्र मुत्सृज्य क्षालयेत् पाणि पादकम् ॥२२०६॥
आचम्योच्छिष्ट सामीप्ये पिण्डदानं समाचरेदिति १(*) ॥

1794. **अथ पिण्डदानम् ।**

तच्चार्चनोत्तरं , प्र(अ)करणोत्तरं, २(†) भोजनोत्तरं, विकिरोत्तरम् , स्वधावाचनोत्तरम् , विप्रविसर्जनोत्तरंचेति ।

1795. **हेमाद्रौ, स्मृतिषु, सूत्रेषु पक्षा उक्ताः ।**

तेषां यथावत्तद्द्रव्यवस्था द्रष्टव्या ।
प्रेत श्राद्धेषु पूर्व्वम् , अन्येषु भोजनोत्तरमिति शिष्टा अप्याहुः । तत्रापि विसर्जनात्पूर्व्वमाचान्तेषु, नाचान्तेषु वा विप्रेषु पिण्डदानं कार्य्य-
1796. मित्याश्वलायन-कात्यायनौच वदतः । तथा च तत् सूत्रम्—
भुक्तवत् स्वाचान्तेषु पिण्डान्निदद्ध्यात् । आचान्तेष्वेक इति ।
अनाचान्तेष्वाचान्तेष्वित्य पर इति च ।

1797. **आपस्तम्बस्तु,** —

विसर्जनोत्तरमाह । भुक्तवतोऽनुव्रज्य प्रदक्षिणीकृत्य द्वैषम् , दक्षिणा-
1798. प्रागग्रान् दर्भान् संस्तीर्य्यति सूत्रेणजातूकर्णः ।
व्यास(म)मात्र समुत् सृज्य हस्तमात्रमथापिवा ।
उच्छिष्ट—देशान् पिण्डांस्तु शुद्धभूमौतु निर्वपेत् ॥२२०७॥

---

१(*) 'उच्छिष्ट समाप्य' इत्यन्य पाठः । 'आचम्योच्छिष्टं त्यक्त्वा' इति वा पाठः ।
२(†) अत्र पाठोव्यर्थः ।
,, अत्र 'यथातत्त्व व्यवस्था' इति भिन्नः पाठः ।

सिकताभि र्मृदात्रापि वेदी दक्षिणनिम्नगा।
कार्य्या सा पिण्डदानाय गोमयेनोपलेपनम् ॥२२०८॥

1799. **आश्वलायनः—**

स्फ्येण लेखामुल्लिखेत्। अपहता असुरा रक्षांसि वेदिषद इति तामभ्युक्ष्य, सकृदच्छिन्नैरवतीर्य्यं प्राचीनावीती रेखां त्रिरुदकेनोपनयेत्! शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति, तस्यां पिण्डान् प्रीणियात्। पराचीनं ते पाणिना पित्रे पिता महाय, प्रपितामहायैतत्तेऽसौ येनान्नत्वा मन्त्रानिति १(*)।

1800. उल्लेखनं कराभ्यामुक्तम्, पारस्करेण।

कराभ्यामुल्लिखेत् स्फेण कुशैर्व्वापि महीं द्विजः ॥२२०९॥
अथ वैककरेणैव लेखां यत्नेन कारयेत्।
एवं मातामह श्राद्धे एकोद्दिष्टे विकल्पिता ॥२२१०॥

1801. अत्रोल्मुख निधान मुक्तं, कात्यायनसूत्रे—२(†)।

1802. उल्मुकं परस्तान्निदध्यादिति ये रुपाणीति। अकरणेऽनर्थः शतपथ ब्राह्मणे उक्तः। यद् ब्राह्मणः अनिधायोल्मुकं पितृभ्यो ददाति असुररक्षांसि हैषां तद्धि मन्थत इति ३(‡) अत्र भिन्नः पाठः।

1803. तच्च प्रतिपादंणं कार्य्यमिति ढुन्टुः।

आरादुपकारकारकत्वादेकमेवेत्यन्ये।

1804. **याज्ञवल्क्य :—**

सर्व्वमन्नमुपादाय सतिल दक्षिणा(युतः)मुखः।
उच्छिष्ट सन्निधौ पिण्डान् दद्याद्वै पितृ यज्ञवत् ॥२२११॥
केचित् पिण्डेषु मासान्नं वर्जयन्ति।
माषा श्राद्धेषु वैग्राह्या वर्ज्याश्चैवाग्निपिण्डयोः।
ब्राह्मणेषु यथामद्यं तथा माषोऽग्निपिण्डयो रिति ॥२२१२॥

**तथा,—**

माषान्नं पायसं दद्यात् श्राद्धे गव्यं विशेषतः।
माषान् सर्व्वत्र वैदद्यात् पिण्डेचाग्नौच वर्जयेत् ॥२२१३॥

---

१(*) सकृदाच्छिन्नैः कुशैरित्यर्थः।

" अत्र पाठान्तरं 'यद्वान्नवीति येऽनिधायोल्मूकं पितृभ्योददत्यसुराराक्षसांसि हैषां तद्विमन्थरा इतिच।

२(†) अत्र केचिदाहुः, उल्मुखः ज्वलितदीपवदुल्कीति।

३(‡) अत्रापि भिन्नः पाठः।

इति स्मृतिभ्याम् १(*) ।

तिलमन्नं चपानीयं धूपदीपं पयस्तथा ।

मधुसर्पिः खण्डयुतं पिण्डमष्टाङ्गमुच्यते ॥२२१४॥

अत्र खण्डः शर्करा २(†) ।

अत्राष्टमत्वमन्नपरित्यागेन तस्य प्रधान द्रव्यत्वात् ।

1805. **कात्यायनः—**

दक्षिणाग्रेषु दर्भेषु अवनिज्य यथार्हतः ।

पिण्डदानं प्रकुर्वीत पित्रादीनां यथा क्रमम् ॥२२१५॥

तथा, अपः क्षिपेन्मूलदेशेऽवनेश्चेति पात्रतः ।

द्वितीयश्च तृतीयश्च मध्यदेशाग्रदेशयोः ॥२२१६॥

मातामह प्रभृतीनां मेतेषामेव नामतः ।

सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरूप सिच्यच ॥२२१७॥

अवनेजनवत् पिण्डान् दद्याद् विल्व प्रमाणकान् ।

दर्भाश्च-सकृदाच्छिन्नाः । तल्लक्षणन्तु—

समूलोत्खातदर्भास्तु सकृदाच्छिन्न संज्ञकाः ।

तन्मूल भाग देशेषु पिण्डदानं प्रशस्यते ॥२२१८॥

1806 **शतपथेऽपि—**

'उपमूलोदितानि सकृदाच्छिन्नानि भवन्त्यग्रमिववै देवानाम्, मध्यमिव मनुष्याणाम् , मूलमिव पितॄणामिति ।

उदितानि सकृदाच्छिन्नानीत्यर्थः ।

1807. **पिण्डप्रमाणमाह,—अङ्गिराः ।**

कपित्थविल्वमात्रान् वा पिण्डान्दद्याद्विधानतः ।

कुक्कुटाण्ड प्रमाणान् वाऽऽमलकैर्वदरैः समान् ॥२२१९॥

1808. **धूम्रः—**

कपित्थस्य प्रमाणेन दद्यात् पिण्डान् समाहितः ३(‡) ।

तत् समं विकिरन्दद्यात् पिण्डान्तेतु षडङ्गुले ॥२२२०॥

---

१(*) स्मृति भ्यामिति—द्वयोर्वचनयोर्मूलाभ्या मित्यर्थः ।

२(†) खण्डः सितोपलंवा पक्व शर्करया सितोपलं पाकानन्तरं भवति कठिनम् ।

३(‡) अपरञ्च—एकोद्दिष्टे पूर्णं विल्वमर्द्धविल्वञ्च पार्व्वणे । शमी पुष्प प्रमाणेन पिण्डं 'दद्याद गयाशिरे ॥ इति पुराणे ।

पिण्डान्त इति वह्वृच परम् ।

**तथा,—**

एकोद्दिष्टे सपिण्डेच कपित्थन्तु विधीयते ।
नालिकेर प्रमाणन्तु प्रत्यब्दे मासिके तथा ॥२२२१॥
तीर्थे दर्शेच संप्राप्ते कुक्कुटाण्ड प्रमाणतः ।
महालये गयाश्राद्धे कुर्य्यादामलकोपमम् ॥२२२२॥

**तथा,—**

यत्र स्यु र्वह्वः पिण्डा स्तत्रविल्व फलोपमाः ।
यत्र चैको भवेत् पिण्डस्तत्र खर्ज्जुर सन्निभः ।
प्रेत-पिण्डस्तु दैर्घ्येण द्वादशाङ्गुल उच्यते ॥२२२३॥

1809. **इति वायवीये ।**

पत्नी पिण्डांस्तु मृतस्त्रीया १(*) त्रिवर्गस्य सहायिनी ।
स्वहस्त-घटितं दद्यात् पत्नी-घटितमेव च ॥२२२४॥

1810. **हेमाद्रौ, लोगाक्षिः—**

असावेतत्त इत्युक्त्वा तदन्ते च स्वधानमः ।
चतुर्थ्याथ तमुद्दिश्य पिण्डं दद्याद्यथाविधि ॥२२२५॥

**तथा,—**

महालये गयायाञ्च प्रेतश्राद्धे दशाहिके ।
पिण्ड शब्दः प्रयोगः स्यादन्न मन्यत्र कीर्त्तयेत् ॥२२२६॥

1811. **नामाज्ञानेत्वापस्तम्बः,—**

यदि नामानि न विद्यात् स्वधापितृभ्यः-पृथिवि षड्भ्य इति प्रथमं २(†) पिण्डं दद्यात् ।
स्वधापितृभ्योऽन्तरिक्षषड्भ्य इति द्वितीयं पिण्डम् ।
स्वधापितृभ्योदिविषद्भ्य इति तृतीय मेवञ्च, मातामहेषुच ।
वह्वृचानान्तु पूर्व्वमेव विशेष उक्तः ।
पिण्डप्रयोगस्त्वेकश्वासेन कार्य्यः ।

---

१(*) 'स्त्रीया' दिति पाठान्तरम् । षड्भ्य इत्यत्र सद्भ्य इत्यन्यः पाठः ।
दिवि सीदन्ति येते दिवि सद्भ्यस्तेभ्य इति ।

२(†) अत्र सन्दिग्धः पाठः । दिविसद्भ्यः, पृथिवी सद्भ्यः, अन्तरिक्ष सद्भ्यः इति अन्ये पाठाः ।
मन्त्रोच्चारण समयेचचिन्तस्य व्याधि प्राणवायोः कुम्भकं कुर्य्यादिति ।

यावदेवोद्ध रेत्मन्त्रन्त्वावत् प्राणान् निरोधयेदिति
स्मृतेः (*) ॥२२२७॥

1812. **मात्रादि-पिण्डस्थान माह, सांख्यायनः—**

येषान्तु गृह्ये दर्शादौ मातृ श्राद्धं पृथगुक्तम्, तेषां पितृभ्यः पश्चिमे मातृभ्यस्तत् पश्चिमे मातामही ( हे ) भ्योऽपि दद्यादिति ।

1813. **हेमाद्रौ, वराहः,—**

पूर्व्वासु पितृभ्योदद्यादपरासु स्त्रीभ्य इति सूत्रान्तरञ्च ।
पराञ्चः पितर इति श्रुतिश्च । एव मेकोद्दिष्टेभ्योऽपि वामभागे पिण्डदानमिति ।

1814. **शङ्खः,—**

आचार्य्य गुरु-शिष्येभ्यः सखि-ज्ञातिभ्य एव च २(†) ॥२२२८॥
तत् पत्नीभ्यश्च सर्व्वाभ्यस्तथैवच जलाञ्जलीन् ॥२२२९॥
पिण्डांस्तेभ्यः सदा दद्यात् पृथगभाद्र(पात्रा)पदे नरः ।
तीर्थेषुचैव सर्वेषु माघमासे पघासुच ॥२२३०॥
दौहित्र पुत्र दाराश्च ये कनिष्ठाः सहोदराः ।
निः सन्ताना मृता येच तेभ्योप्यत्र प्रदीयते ॥२२३१॥
पितॄणां वामभागेषु पिण्डमेषान्तु निर्वपेदिति ।
सपत्नीकाय ससुतायेति प्रयोगोऽत्र ज्ञेयः ।
'भुञ्जते भर्त्तृभिः स्त्रियः' इति स्मृतेः ।
अन्वष्टका गयामातृ-श्राद्धेचैव मृतेऽनि ।

1815. एकोद्दिष्टं तथा मुक्त्वा स्त्रीषु नान्यत् पृथगभवेदिति ॥२२३२॥
शङ्खोक्तेश्च ।

1816. **मनुः—**

तेषु नैषु युतं हस्तं निमृ जेल्लेपभागिनाम् ।
तेनैव तृप्तिमायान्ति लेप भाजः सदैवहि ॥२२३३॥

1817. **विष्णुश्च—**

अत्र पितरोमादयध्वमिति दर्भमूले करावमर्षणमिति ।

---

१(*) 'मुतः हस्त' इति भिन्नः पाठः । [illegible] कुर्य्यान् मनमः [illegible] पितृणा [illegible]ति [illegible] ।

२(†) [illegible] । [illegible] ।
[illegible] इति ।

1818 **सुमन्तुः—**

एकोद्दिष्टेषु सर्वेषु दर्भलेपोन विद्यते । १(*)

सपिण्डीकरणादौतु लेपः सर्व्वत्र शस्यते ॥२२३४॥

1819. **मनुः—**

आचम्योदक् परावृत्य त्रिराचम्य शनैरसून् ।

षडृतूंस्तु नमस्कुर्य्यात् पितॄनेव च मन्त्रवत् ॥२२३५॥

1820. **कात्यायनः—**

अत्र पितर इत्युक्तोदग्मना आवृत्यामीमदन्तेति जपति, पूर्व्ववदवनेनेज्य, निर्वी विस्रंस्य, नमोव इति षडञ्जलीन करोतीति ।

1821. प्राणरोधस्त्वत्रामन्त्रक इति-कर्काचार्य्यः २(†) ।

आश्वलायनसूत्रेऽपि, निवृतानन्तु मन्त्र्योपेतानत्र पितरोमादयध्वं यथाभागमावृषायध्वमिति, सव्यावृत्य यथा शक्त्या प्राणानायम्या (आसित्वा)भिपर्य्यावृत्यामीमदन्तः पितरो यथाभागमावृषायि(षि) षतेति । चरोः प्राणभक्षंभक्षयेन्नित्यं निनयनमिति । नित्य ग्रहणं शेष(:)पर्य्यावृत्यामी मदन्तपितरोयथाभागमावृषायिषतेति, चरोः प्राणभक्षं भक्षयेन्नित्यं निनयनमिति ।

नित्यग्रहणं शेषाभावेऽपि कार्य्यमित्यर्थः ।

1822. **शौनकोऽपि,—**

पिण्डशेषाच्चरोरन्नं किञ्चिदाघ्राय तन्त्यजेत् ।

प्रक्षाल्याचम्य शुन्धन्तामित्याद्यैरेव पूर्व्ववत् ॥२२३६॥

मन्त्रैः पिण्डेषु पानीयं निषिञ्चेत् पितृतीर्थतः ।

ततः सम्यगद्भिराचम्य नीवींविस्रंस्य नमोव इति ॥२२३७॥

1823. **आश्वलायनसूत्रे विशेषः—**

असावाचम्यरक्ष स्वासवरक्षेति ३(‡) ।

---

१(*) अत्र वर्षासु, वर्षेसुच । इत्यन्यः पाठः 'मन्त्रवित्' इति भिन्नः पाठः । अत्र षडृतून् कुवेर दिशि तान् वसन्तादीन् नम स्कुर्य्यात् । अत 'स व्याहृत्यगावृत्य' इति भिन्नः पाठः । अत्र प्राणरोधः—चित्तस्थैर्य्याय कुम्भकः कार्य्यः ।

२(†) अत्राधिकं वारत्रयं पाठो दृश्यते । 'नित्यग्रहणांशे पर्य्यावृत्य इत्यादि, निनयनमिति द्विवारः पाठोऽस्ति ।

३(‡) आसावाचम्यरक्षेति भिन्नः पाठः । 'ऊर्जं क्षितीति' इति भिन्नः पाठः । 'अत्रो ऽनुकूलोरसं' इति मन्त्रः । शुक्ल यजुः, अः २ । ३४ ।

'भैवस्य लोकावा' इत्यन्यः पाठः ।

पिण्डेष्वभ्यञ्जनान्ते वासोदद्याच्छुल्कवस्त्रदशाभवम्, दशामूर्णभवंवा । पञ्चाशद्वर्षताया ऊर्द्ध्वं स्वंलोम्नेतद्वः पितरोवासो, मानतोऽन्यत् पितरोयुङ्ग्ध्वं ( युषध्वं ) इति कात्यायनसूत्रे एतद्व इत्युपास्यति । सूत्राणि प्रतिपिण्डमूर्णा दशावा यवस्योत्तरे यजमानः लोमानि वोर्ज्जमित्यपोनिषिञ्चतीति ।

1824. **व्याघ्रोऽत्र विशेषमाह,—**

अद्भिः प्रक्षाल्य तत्पात्रं प्रतिपिण्डन्तु पूर्व्ववत् ।
आनिषिच्य ततः कुर्य्यात् पिण्डपात्रमधोमुखम् ॥
गन्धपुष्पाणि धूपञ्च दीपञ्च विनिवेदयेत् ॥२२३८॥

1825. **देवलश्च,—**

दक्षिणां सर्व्वभोगांश्च प्रतिपिण्डं प्रदापयेत् ।
भक्ष्याण्यपूपानि इक्षुंश्च व्यञ्जनान्यशनानितेति ॥२२३९॥
पिण्डपूजन सव्येनेति केचित् १(*) । पित्र्यत्वादपसव्येनोदकं च दद्यात् । अघोराः पितरः सन्तु, सन्त्वित्युक्ते, गोत्रंनोवर्द्धतां वर्द्धतामित्युक्ते । दातारोनोऽभिवर्द्धन्तां वेदाः सन्ततिरेवच । श्रद्धाचनोमाव्यगमद्बहुदेयञ्च नोऽस्त्वित्याशिषः प्रतिगृह्य, स्वधावाचनीया , स पवित्रान् कुशानास्तीर्य्य, स्वधां वाचयिष्ये, इति पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामिति । अस्तु स्वधाइत्युच्यमाने, स्वधावाचनीयेष्वपोनिषिञ्चत्यूर्जमिति । २(†)

1826. **मात्स्येऽपि,—**

अथात्रान्तेषुचाचम्य वारि दद्यात् सकृत् सकृत् ।
तिलपुष्पाक्षतान् पश्चादक्षय्योदकमेवच ।
दत्वाशीः प्रतिगृह्णीयाद्विप्रेभ्य प्राङ्मुखोबुध इति ॥२२४०॥
अक्षय्योदकञ्च प्रत्येकं देयम् ।
अर्घेऽक्षय्योदकेचैव पिण्डदानेऽवनेजने ।
1827. तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचन एवचेति कात्यायनोक्तेः ॥२२४१

१(*) सव्य हस्ताभ्यारम्भ पूर्व्वकं दक्षिणेन कुर्य्यादित्यन्ये । मेषस्यलोम्ना वा इत्यन्यः पाठः ।
२(†) 'ऊर्ज्जं वहन्तीरमृतं घृतम' इत्यादि मन्त्रः । शुक्ल यजुः अ०. २।३४ ।

अन्नाद्योदकदानञ्च अर्घ दानवदिष्यते । इति स्मृत्यन्तराच्च ।
षष्ठ्यैव नित्यं तत्कुर्य्यात् तुर्य्या न कदाचनेति ॥२२४२॥
इदन्तु, पित्र्येऽपि सव्येनकार्य्यम् । विसर्जनं सौमनस्यमाशिषा प्रार्थन-
1828. न्तथेतिपरिभाषोक्तेः । अपसव्येनेति कर्काचार्य्यः । स्वधावाच-
नीयानिति,—स्वधा वाचनीयाः । कुशास्तु-अर्घ्यपात्रोपरि स्थापिताः ।
पवित्राण्यर्घ्यसम्बन्धीनि । तेषा मर्घ्येविनि युक्तत्वात् ।
1829. अन्यादन्यान्युत् पाद्यानीतिढुण्ढुः । १(*) इदन्तु कात्यायनमतीनाम् ।
बह्वृचादीनां जलनिषेकमात्रम् । अथैतान् प्रवाहयेत्परैतरः ।
1830. सोम्यास इत्याश्वलायनोक्तेः । अत्रावसरे न्युब्जार्घ्यपात्रात् पान-
(त्थानं) पिण्ड-भुक्तपात्रोत्थानंच कार्य्यम् । उत्तानपात्रं कृत्वा

1831. **यथाशक्ति दक्षिणान्दद्यादिति कात्यायन सूत्रात् ।**
स्वस्तिवाचनकं कुर्य्यात् पिण्डानुद्धृत्य यत्नतः ।
ततस्तु दक्षिणान्दद्यात् पात्रोच्चालन पूर्व्वकम् ॥२२४३॥

1832. **इति मात्स्योक्तेश्च ।**
भाजनेषु प्रतिष्ठासु स्वस्ति कुर्व्वन्ति ये द्विजाः ।
तदन्नमसुरैर्भुक्तं निराशैः पितृभि र्गतम् ॥२२४४॥

1833. **इति हेमाद्रौ बृहस्पत्युक्तेश्च । जातूकर्ण्यः—**
पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः ।
नस्त्रीभिर्नचबालेन ना स्व(स)जात्या कथञ्चन ॥ २२४५॥ इति ।

1834. **हेमाद्रौ, नागरखण्डे—**
उत्थानमर्घ्यपात्रन्तु कृत्वा दद्याच्च दक्षिणाम् ।
हिरण्यं देवतानाञ्च पितॄणां रजन्तथा ॥२२४६॥

1835. दक्षिणा दानं सव्येनेति परिभाषायामुक्तम् । पितृपक्षे ऋत्विज्यः
प्राचीणावीतिनान्वाहार्य्यदक्षिणा, आसादनादत्राप्यपसव्येनैवपित्रे

1836. **दक्षिणादानमिति ढुण्ढुः ।**
पित्र्यमानिधनात् कार्य्यं विधिवद्दर्भपाणिना ।
1837. प्राचीनावीतिनासम्यगपसव्यमतन्द्रिणेति, ॥२२४७॥ मनुवचनञ्च

१(*) 'अन्यानि अर्घ्याण्युत् पादनीयानि' इत्यन्यः पाठः ।

1838. **आ निनयनादासमाप्तेः । विश्वामित्रः—**

हेमञ्च रजतं वापि यतये ब्रह्मचारिणे ।
यो(नो) ददाति कृते कृत्ये सभवेद्ब्रह्मघातकः १(*) ॥२२४८॥
दक्षिणादानानन्तरं पिण्डोत्थानं कार्य्यम् ।
सतिलं नामगोत्रेण दद्याच्छक्त्याच दक्षिणाम् २(†) ॥२२४९॥
स्वस्तिवाचनकं कुर्य्यात् पिण्डानुद्धृत्य भक्तितः ॥२२५०॥

1839. **इति कूर्म्मोक्तेरिति ढुण्ढुराज् ।**

अत्र स्वस्तिवाचनं नाम, पिण्डस्थानस्थित जलेन स्वशिरसि-शान्तिरस्तु शिवञ्चास्तु पुष्टिरस्तु इत्यादिमन्त्रेणाभिषेचनम् । पिण्डास्तरणानां दर्भाणामुल्मूकस्याचाग्नौ प्राश(स)नं कार्य्यम् । उल्मूकं—सकृदाच्छिन्नान्यग्नावादध्यादिति कात्यायनोक्तेः । पात्रस्थपिण्डाघ्राणं कार्य्यम् । अवध्रौवा आजिघ्रतीति तदुक्तेरेवः३(‡)। मध्यमपिण्डं पत्नी प्राश्नाति पुत्र कामाचेदिति ( कात्यायनः ) ।

1840. **कात्यायनः—**

दक्षिणान्दत्वा, विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा, वाजेवाजेऽवतेत्यनया ३(०) विसृज्य, आमावाजस्येत्यनुवृत्य, प्रदक्षिणीकृत्योपविशेदिति ।

1841. **मात्स्ये,—**

स्वस्तिवाक्यं ततः कृत्वा पितृपूर्व्वं विसर्जयेत् ।
वाजे वाजे इति जपन् कुशाग्रेणाथ वामतः इति ॥२२५१॥

1842. **ब्रह्मवैवर्त्ते,—**

आमावाजस्य मन्त्रन्तु पठित्वाच प्रदक्षिणम् ४(S) ।
द्वारोपान्ते ततः कृत्वा संयतः प्रविशेद्गृहमिति ॥२२५२॥

---

१(*) 'यो ददाति स्निग्वस्त्रं' इति भिन्नः पाठः । अतत् पितृकृत्यं रजतं दक्षिणा वर्ज्यम् । देवेतु हेमाद्रि इति शास्त्रोक्तम् । 'न भवेद् ब्रह्मघातकः' इति भिन्नः पाठः ।

२(†) 'सजलं दक्षिण' मितिवान्यः पाठः ।

३(‡) 'अत्रास्तां पिण्डमिति' भिन्नः पाठः । शुक्ल यजुः २१. ११ । मन्त्रश्च । अत्र स्वस्तिवाचनं—शान्त्यर्थं शिरसि मन्त्रेण जलदानम् । नतु कर्मादौ स्वस्तिवाचनम् ।

४(S) „ „ यजुः, ९ । १९ । „

1843. **हेमाद्रौ, बृहस्पतिः—**

अद्य मे सफलं जन्म भवत्पादाब्ज वन्दनात् ।
अद्य मे वंशजाः सर्व्वे याता वोऽनु ग्रहाद्दिवम् १(*) ॥२२५३॥
पत्रशाकादिदानेन क्लेशिता युयमीदृशाः ।
तत्क्लेशजातं चित्तात्तु विस्मृत्य क्षन्तुमर्हथ ॥२२५४॥
इति विप्रान् समाप्याथ विसृजेद् भक्तिसंयुतः ।
आसीमान्तमनु व्रज्य उच्छिष्टान्यथ चालयेदिति ॥२२५५॥

1844. **मनुश्च,—**

उच्छेषणन्तु तत्तिष्ठेद् यावद् (दयेवा) विप्रा विसर्जिताः ।
ततो गृहवलिं कुर्य्यादिति धर्म्मो व्यवस्थितः ॥२२५६॥ इति ।

1845. **हेमाद्रौ, वसिष्ठः—**

श्राद्धेनोद्वासनाद्या(पा)नि उच्छिष्टान्यादिनक्षयात् ।
श्चोतन्ते वै सुधा याश्च स्ताः पिबन्त्य कृतोदकाः२(†) ॥२२५७॥ इति ।

इदन्तु गृहान्तरसत्त्व विषयम् । एवञ्च, उच्छिष्टा यस्यानेक कालावा-यथा संख्यं व्यवस्थेयाः ।

1846. **ब्रह्माण्डे—**

शूद्राय चानुपेताय श्राद्धोच्छिष्टं न दापयेत् ।
यो दद्याद् भान्त्या सन् मोहान्नतद् गृह्णाति(गच्छति)वै पितॄण् ॥२२५८॥
तस्मान्नदेयमुच्छिष्टं मन्नाद्यं ( र्थं ) श्राद्ध कर्म्मणि ।

---

१(*) 'पितॄण् नमस्ये दिवि ये च मूर्त्ताः'
स्वधाभुजः काम्य फलाभिसन्धौ ।
प्रदान शक्ताः सकलेप्सितानाम्,
विमुक्तिदा येऽनभि संहितेषु' ॥
'पिता स्वर्गः पिता धर्म्मः पिताहि परमन्तपः ।
पितरि प्रीतिमापन्ने प्रीयन्ते सर्व्वदेवताः' ।
अन्यद्रुचिस्तवे मार्कण्डेय पुराणे ।
अत्र पितृपदं स्वर्गस्य मातायुपलक्षणम् ।

२(†) 'वसुधाऽधस्तात् तं पिबन्ति कृतोदकाः' इति भिन्नः पाठः । 'ताः पिबन्ति सुधाधाराः' इत्यपरः पाठः ।
मूलंतु पाठव्यत्ययोऽस्ति । 'अत्र भागधोमोहात' इति भिन्नः पाठः । 'भाग्यन्मोहात्' इत्यपरः पाठश्च ।

**अन्यत्र—**

दधिमधुचसर्पिभ्यो शिष्याय च सुताय च ॥२२५९॥

1847. **जातूकर्ण्यः—**

द्विज-भुक्तावशिष्टन्तु शुचि भूमौ निखानयेत् ।
स्वमार्जारादिदुः सत्त्व स्पर्शे श्राद्धं विनश्यतीति ॥२२६०॥

—*—

## अथ पिण्ड प्रतिपत्तिः ।

—*—

1848. **ब्रह्माण्डे—**

पिण्ड मग्नौ सदा दद्याद् भोगार्थी प्रथमं नरः ।
पत्न्यै प्रजार्थं दीर्घमायुष्यं वायसेभ्यः प्रयच्छति ॥२२६१॥
दद्याद्वै मध्यमं पिण्डं अजेभ्यः मन्त्र पूर्व्वकम् ।
उत्तमां गतिमन्विच्छन् गोषु नित्यं प्रदापयेत् १(*) ॥२२६२॥
आज्ञां प्रजां यशः कीर्त्तिं अप्सु पिण्डं प्रदापयेत् ।
प्रार्थयन् दीर्घमायुष्यं वायसेभ्यः प्रयच्छति ॥२२६३॥
आकाशं गमयेदप्सु स्थितो वा दक्षिणामुखः ।

**मन्त्रस्तु—**

आधत्त पितरो गर्भमिति याज्ञुषोवैदिकः २(†) ।

1849. **शङ्खः,—**

पत्नी वा मध्यमं पिण्डं अश्नीयादार्त्तवान्विता ॥२२६४॥

**पत्नी बहुत्वे-स्छागलेय :—**

प्राचीनावीतिना मन्त्र पत्न्या पिण्डो विभज्यते ।
प(प्र)तिपत्न्यस्य मण्त्रस्य कर्त्तव्याऽऽवृत्तिरेवतु ॥२२६५॥

---

१(*) 'पिण्डांस्तुगोऽज विप्रेभ्यो दद्यादग्नौ जलेऽपि वा' इति स्मृत्यन्तरात्, गवादिभ्यो दद्यात् । अस्या परार्द्धं ब्राह्मण सर्व्वस्वे विद्यते । अत्र आज्ञामित्यत्र प्रज्ञामित्यन्य पाठः ।

२(†) 'आधत्तपितरोगर्भम्'—शुक्ल यजुः २अः, ३३मः । अत्र पिण्डाशनं अनपत्यायानार्य्या यज्ञीय चरु-भक्षणात् पुत्रलाभवत् आत्मजलाभः स्यात् । अत्र 'आदत्तो' इति भिन्नः पाठः ।

1850. **विष्णु धर्म्मोत्तरे,—**

तीर्थे श्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः।
यतः सन्निहितास्तत्र देवताः पितरश्च हीति ॥२२६६॥

1851. **याज्ञवल्क्यः—**

पिण्डांस्तु गोऽजं विप्रेभ्यो दद्यादग्नौ जलेऽपिवा ॥२२६७॥

1852. **बृहस्पतिः—**

अन्यदेश गता पत्नी रोगिणी गर्भिणी तथा।
तदा तं जीर्ण-वृषभश्छा गोवा भोक्तु मर्हति ॥२२६८॥

**अत्र तं पिण्ड मित्यर्थः।**

अथ पिण्डोपघाते प्रायश्चित्तमाह, देवलः—
श्व शृगाल खरैः पिण्डः पृष्टो भिन्नः प्रमादतः।
कर्त्तु रायुष्प्रणाशः स्यात् प्रेतस्तं नोप सर्पति ॥२२६९॥

1853. **जातुकर्ण्यः—**

श्व-शृगालोप सर्प तीत्युक्त्वाह,
तद्दोष परिहार्थं प्राजापत्यं प्रकल्पयेत्।
पुनः स्नात्वा तदा कर्त्ता पिण्डं दद्याद्व यथाविधि ॥२२७०॥

1854. **स्मृति दर्पणे, अत्रिः—**

मार्जार मूषकस्पर्शे पिण्डे च विदली कृते।
पुनः पिण्डाः प्रदातव्यास्तेन पाकेन तत्क्षणात् ॥२२७१॥

**यथा,—**

धर्म्मस्य तु विनाशः स्यात् काक स्पर्शादिकं विनेति १(*)।
न काकस्पर्शे दोषः।

1855. **बौधायनश्च,—**

श्वचाण्डालादिभिः स्पृष्टः पिण्डे यद्यपहन्यते।
प्राजापत्यं चरित्वाऽथ पुनः पिण्डान् समाचरेदिति ॥२२७२॥

---

१(*) 'काकस्त्वं यम दूतोऽसि गृहाण बलिमुत्तम'मिति काकाय बलिदान मन्त्रः।
केचनाचार्य्याः—मक्षिका पिपीलिका मार्जार स्पर्शेनदोष इत्याहुः।
एतैर्भक्षणे दोषः स्यात्।

## अथ पिण्डदाने निषिद्धकालोऽभिधीयते ।—

स च प्रागाह्निकादौ निरूपि तोऽपिं, सुज्ञानायात्रपुनरुच्यते,

1856. **बृहत्पराशर:—**

युगादिषु मघायाञ्च विषुवत्ययने तथा ।
भरणीषु च कुर्व्वीत पिण्ड निर्व्वपणं न हि ॥२२७३॥

1857. **स्मृतिरत्नावल्याम—**

पुत्रे जाते व्यतीपाते ग्रहणे चन्द्रसूर्य्ययोः ।
श्राद्धं कुर्य्यात् प्रयत्नेन पिण्ड निर्वपणादृते ॥२२७४॥

1858. **कार्ष्णाजिनि:—**

विवाहव्रत चूड़ासु वर्षमर्द्धं तदर्द्धकम् ।
पिण्डदानं मृदा स्नानं न कुर्य्यात्तिल तर्पणम् ॥२२७५॥

1859. **बोधायन:—**

संस्कारेषु तथान्येषु मास-मासार्द्धमेवच ।
पिण्डदानं मृदा स्नानं न कुर्य्यात्तिल तर्पणम् ॥२२७६॥

1860. **कात्यायनः —**

वृद्धेरनन्तरं चैव यावन्मासः समाप्यते ।
तावत् पिण्डान्नैव दद्यान्न कुर्य्यात्तिल तर्पणम् ॥२२७७॥

1861. **हेमाद्रौ ज्योतिः-पराशर :—**

विवाहे विहिते मासांस्त्यजेयुर्द्वादशैवहि ।
स पिण्डाः पिण्ड निर्व्वाप-मौञ्जीवन्धे षडेवहि ॥२२७८॥

1862. **सपिण्ड लक्षणमाह, शङ्खः,—**

सपिण्डतातु सर्वेषां गोत्रतः साप्त पौरुसी १(*) ।

1863. पिण्डश्चोदक दानञ्च आशौचञ्च तदानुगमिति, कात्यायनः ॥२२७९॥
महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।
यस्य कस्यापि मर्त्त्यस्य सपिण्डीकरणे तथा ॥
कृतोद्वाहोपि कुर्व्वीय पिण्ड निर्व्वपणं सदेति ॥२२८०॥

---

१(*) 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्ड भागिनः
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्त पौरुषम्' ।
'सपिण्डतातु पुरुषे सप्तमे विनिवर्त्तते' इति स्मृत्यन्तरंच ।

मातापित्रोरित्युपलक्षणम्, हविश्वमयत्ववत् १(*) ।
तेन भ्रातृपितृव्यादि वार्षिकं(के) पिण्डदानं कार्य्यम् ॥२२८१॥

1864. तथा सपिण्डीकरण—पूर्व्वभावि—श्राद्धोपलक्षणमिति—निर्णयामृते उक्तम् ।

1865. पिण्डे विशेषः संग्रहे,—

मातापित्रोराब्दिकेतु विवाहादि-कृतावपि ।
तिलैः पिण्डाः प्रदातव्याः अन्य-श्राद्धे विवर्जयेत् ॥२२८२॥

1866. राम कौतुके,—

नन्दाम्ब-काम-रव्यार भृग्वग्नि—पितृ-कालभे(भे) २(†) ।
गण्डे वैधृति पातेच पिण्डा स्त्याज्याः सुतैरपि,
पिण्डान् विवर्जयेदिति ३(‡) ॥२२८३॥

भृगुभूमिः । नन्दाः—प्रतिपत्षष्ठ्येकादश्यः । अम्बः सप्तमी । कामः-त्रयोदशी । आरो मङ्गलवारः । अग्निः कीर्त्तिका । पितरो मघा । कालोभरणी । अन्यत् प्रसिद्धम् । अत्र विशेषो विम्बरूप-

1867. निबन्धे,—तिथिवार प्रयुक्तो यो दोषो वै समुदाहृतः ।
स श्राद्ध-तन्निमित्ते स्यान्नाम श्राद्धे कदाचनेति ॥२२८४॥

तथाच संग्रहे,—

अमावास्यां क्षयाहे च प्रेतपक्षे तथैवच ।
श्राद्धं सपिण्डकं कुर्य्या त्तिथिवारं न शोधयेत् ॥२२८५॥

1868. कालनिर्णयदीपिकायाम्,—

तीर्थे सम्वत्सरे प्रेते पितृपक्षे शशिक्षये ।
पिण्डदानं प्रकुर्व्वीत युगादौ (द्रा) भरणीमघे, इति ॥२२८६॥

---

१(*) पव हविश्चभयत्वे साम्यादिति।
२(†) 'पितृकालभे' इत्यन्यः पाठः ।
" 'भूम्यपि' रित्यपरः पाठः । अन्यत्र पचान्तरे 'भृगुप्रपातः'
अत्र स, दोष इत्यर्थः । तीर्थे हचायाद भगवत् प्रासार्थं भूमी वा प्रपातः ।
'अमामायां वा' इति साधुः पाठः ।
३(‡) 'अप पाठोव्यतिक्रान्तः' । 'पिण्डास्त्याज्याः सुतैष्वुभिः' इत्यं पाठः सम्भवति ।
पादद्वौ पाठः—'सुतैषादौ विवर्जिते' इति वा सम्यक् ।

**युगादौ—१(*) ।**

भरणांमघे, तीर्थादि प्राप्ताविति योजना ।

**तथा—**

दर्श श्राद्धे गया श्राद्धे श्राद्धे चापरपाक्षिके ।
पिण्डदानं प्रकुर्व्वीत भरण्यां नैव दुष्यति ॥२२८७॥

**तथाच—**

तीर्थे महालये चैव मातापित्रोः क्षयेऽहनि ।
यस्य कस्यापि मर्त्यस्य सपिण्डीकरणे तथा ॥
कृतोद्वाहोऽपि कुर्वीत पिण्ड निर्वपणं सदेति ॥२२८८॥
अत्र मातापितृ शब्दो भ्रात्राद्युपलक्षकः ।
मातापितृ—सुत भ्रातृक्षयाहे श्राद्ध कृन्नरः ।
पिण्डदानं प्रकुर्वीत निषिद्धेऽपिच सर्वदेति ॥२२८९॥

1869. स्मृत्युक्तेः । इदमपि साग्निक विषयम् ।
त्यक्ताग्नेः पार्व्वणं नास्ति नैकोद्दिष्टं च सर्व्वदा ॥२२९०॥

1870. त्यक्ताग्नेश्चैव पिण्डाक्ति स्तस्मात् संकल्प्य भोजयेदिति व्यासोक्तेः, ॥ विकल्प इत्यन्ये । इति पिण्डदाने निषिद्धकालः प्रासङ्गिक—मुक्त्वा प्रकृतमुच्यते ॥

1871. **हैमाद्रौ, मार्कण्डेय :—**

ततोनित्य क्रियां कुर्य्याद्भोजयेच्च ततोऽतिथीन् ।
ततस्तदन्नं भुञ्जीत सहभृत्यादिभिर्न्नरः ॥२२९१॥

नित्य क्रियां वैश्व देवादिकम्, तत्र श्राद्ध पाकोवा पाकान्तरोवाग्राह्य —

1872. इत्युक्तं देवलेण ।

श्राद्ध शेषेण कर्त्तव्यं वश्व देवादिकं बुधैः ।
संभोज्यश्चागतो यद्वा पृथक् पाकेन नैत्तिकमिति ॥२२९२॥

1873. **नित्य श्राद्धे, व्यासः—**

एकमप्याशयेद्विप्रं षण्णामप्यण्वहं गृही ।
नामन्त्रणं न होमश्च नाह्वाणं न विसर्जनम् ।
न पिण्डदानं विकिरं न दद्यादत्र दक्षिणाम्, इति ॥२२९३॥

---

१(*) युगादौ,—युगाद्यासु चतसृषु तिथिषु ।
'वैशाखमासस्य सिता तृतीया नवम्यसौ कार्त्तिक शुक्लपक्षे ।
नाभस्य-मासस्य तमिस्रपक्षे त्रयो'दशी पञ्चदशीच माघे ।
एता युगाद्या :कथिताः पुराणे अनन्त पुण्यास्तिथयश्चतस्रः' । इति ।

1874. **भविष्ये,—**

आवाहन-स्वधाकार-पिण्डाग्नौ करणादिकम् ।
ब्रह्मचर्य्यादि नियमा विश्वेदेवा नचैवहि ॥
दातॄणामथभोक्तॄणां नियमोनच विद्यते । इति ॥२२९४॥
एतद्रात्रावपि कार्य्यं, रात्रौ प्रहर पर्य्यन्तं दिवाकृत्यानि कारयेत् १(*) ।
ब्रह्मयज्ञञ्च सौरञ्च वर्जयित्वा विशेषतः ॥२२९५॥

1875. **इति पृथ्वीचन्द्रे संग्रहोक्तेः । दर्शादौ नेदं कार्य्यम् ।**

नित्यश्राद्धं न कुर्वीत प्रसङ्गाद् यत्र सिद्ध्यति ।
श्राद्धान्तरे कृतेऽन्यत्र नित्यत्वात्तन्नदापयेदिति ॥२२९६॥

1876. **नागरखण्डात् ।**

अत्र विशेष आह्निकेऽवगन्तव्यः ।

1877. **मात्स्ये—**

ततस्तु वैश्वदेवान्ते सभृत्यसुतवान्धवः ।
भुञ्जीतातिथि संयुक्तः स्वर्व्वं पितृ निषेवितम् ॥२२९७॥
सर्व्वं पर्वादौ निषिद्धं माषादीत्यर्थः । वैधत्वेननिषिद्धा प्रवृत्तेः ।
निषिद्धं कुर्व्वतां दोष स्तद्वद्वैधमकुर्व्वताम् ।
माषाशनस्य वैधत्वान्नव्रतच्युतिरश्नताम् ॥२२९८॥

1878. **इति स्मृतिचन्द्रिकोक्तेश्च ।**

केचित्तु—व्रतस्थस्य वर्ज्यमाहुः । एकादश्यादौतु,—
उपवासो यदा नित्य श्राद्धं नमित्तिकं भवेत् ।
उपवासन्तदाकुर्य्यादाघ्राय पितृसेवितम् ॥२२९९॥

1879. **इति यमर्षिः । यत्तु, देवलः—**

श्राद्धं कृत्वातु यो विप्रोन भुङ्क्ते पितृसेवितम् ।
हविर्देवा न गृह्णन्ति कव्यानि पितरस्तयेत्याह ॥२३००॥
तत्तु, एकादश्यादिव्यतिरिक्त विषयम् २(†) ।
आघ्राणेनापि भोजन कार्य्यसिद्धेः ।

---

१(*) अत्र दिनकृत्य रात्रिकृत्ययोर्भेदाद्रात्रिकृत्यं न निषिद्धमिति ।

२(†) श्राद्धीय शेषाघ्राणन्तत् कर्त्तुरेकादश्युपवास दिनेऽवश्यं कार्य्यम् । नतु भोजनम् । 'एकादश्यामुपवसे' दिति शास्त्रात् । तदा घ्राणेऽशन सिद्धिः ।

1880. **जातूकर्ण्यः—**

अहन्येषतु भोक्तव्यं श्राद्धं कृत्वा द्विजन्मभिः ।
अन्यथा ह्यासुरं श्राद्धं पर पाकेच सेविते ॥२३०१॥

1881. **संग्रहे—**

अयने रविसंक्रान्तौ रविवारेषु पर्वसु १(*) ।
मृताहे जन्मदिवसे नकुर्य्याद्रात्रि-भोजनम् ॥२३०२॥
योऽश्नाति परगेहेषु श्राद्धं कृत्वातु तद्दिने ।
श्राद्धशेषं न चाश्नाति सचापि श्राद्धघातकः ॥२३०३॥

1882. **काशीखण्डे,—**

श्राद्धं कृत्वा परश्राद्धे योनरो भोक्तुमिच्छति ।
त्रयस्ते नरकं यान्ति दाता भोक्ता च तत्पिता ॥२३०४॥ इति ।

1883. **हेमाद्रि-प्रायश्चित्तकाण्डे मार्कण्डेयः—**

पुत्रादीनामथान्येषां श्राद्धशेषेण भोजनम् ।
व्रतीनांविधवानाञ्च यतीनाञ्चै द्विगर्हितम् ॥२३०५॥
अन्येषां भिन्नगोत्रिणां सम्बन्धिनाम्, व्रतिनो ब्रह्मचार्य्यादयः ।

**तथा,—**

श्राद्धावशिष्ट भोक्तारस्तेवै निरयगामिनः ।
सगोत्राणां स्वकुल्यानां ज्ञातिनांचैव दोषकृदिति ॥२३०६॥

1884. **प्रायश्चित्तमाह, जावालिः—**

विप्रस्त्वन्याहितश्राद्धे शिष्टाश्नाद्भोजनञ्चरेत् ।
प्राजापत्यं विशुद्धौस्याद् ज्ञातिगोत्रे न दोषकृत् ।
यतिनां वपनं २(†) लक्षं प्रणवस्य जपो भवेत् (?) ॥२३०७॥

1885. **अपवाद माह, स एव—**

श्वशुरस्य गुरोर्वापि मातुलस्य महात्मनः ।
ज्येष्ठभ्रातुश्च पुत्रस्य ब्रह्मिष्ठस्य च योगिनः ॥२३०८॥

---

१(*) अत्र पर्व्वसु—चतुर्द्दश्यष्टम्यमावास्या-पूर्णिमासु एव चसु ।
२(†) 'यतीनां वपनं लक्षं ( संज्ञं )' इत्यपि पाठ भेदः दृश्यते ।
" अत्र वपनं मुण्डनम् । अपरः लक्षमितः प्रणव मन्त्रजपः ।

एतेषां श्राद्ध शिष्टान्नं भुक्त्वा दोषोन विद्यते ।
इति केचित् प्रशंसन्ति मुनयस्तच्च साम्प्रतमिति ॥२३०९॥

1886. **जाबालः**—

ताम्बुलं दन्त काष्ठञ्च स्नेहस्नानञ्च भोजनम् १(*) ।
रत्यौषध परान्नानि श्राद्धकर्त्ता विवर्जयेत् ॥२३१०॥

1887. **आचार्य्यः**,—

न शूद्रं भोजयेत्तस्मिन् श्राद्धे यत्नेन तद्दिने ।
श्राद्धशेषं न शूद्रेभ्यः प्रदद्यादखिलेष्वपीति ॥२३११॥

—*—

## अथ श्राद्धभोजिनां प्रायश्चित्तम् ।

—*—

1888. **दिवोदास-निबन्धे, हारीतः**—२(†) ।

सपिण्डीकरणा दूर्द्ध यावदब्द त्रयम्भवेत् ।
तावदेव न भोक्तव्यं क्षयेऽहनि कदाचन ॥२३१२॥
यदि भुङ्क्ते पादकृच्छ्रं कृत्वा शुध्यति मानवः ।
प्रथमेऽस्थीनि मज्जाच द्वितीये मांसभक्षणम् ॥२३१३॥
तृतीये रुधिरंचैव श्राद्धं शुद्धं चतुर्थकम् ।
अत्र शुद्धं तृतीया पेक्षया किञ्चिच्छुद्धम् ॥२३१४॥

1889. **तथाहि, हेमाद्रौ यमः**—

मृतस्याहनि संप्राप्ते यावदब्द चतुष्टयम् ।
वह्निः श्राद्धं प्रकुर्वीत न कुर्य्याच्छ्राद्ध भोजनमिति ॥२३१५॥
अत्र क्षयाहनि विशेषणाद्वर्षत्रयादर्वागपि क्रियमाण-दर्शापरपक्ष श्राद्ध-
भोजन-(ने)दोष इति गम्यते ।

**अन्यत्रतु**—

दशकृत्यंपिवेदापो गायत्र्या श्राद्ध भुग्जनः ।
ततः सन्ध्यामुपासीत जपेच्च जुहुयादपीति ॥२३१६॥

---

१(*) श्राद्ध कर्त्तुः पुनर्भोजन निषेधः । ताम्बुलादौ नामवापि निषेधः । तथाच कुल्मरे,—
'यात्रायुद्धं नदीपारं मिथ्यालापं द्वि भोजनम् ।
रतिर्गति दिवानिद्रा श्राद्ध कृदष्ट वर्जयेत' इति । अत्र गति वहिर्गमनम् ।

२(†) ग्रन्थ दिवोदासो वैद्यः, वैद्यकेतु 'धन्वन्तरिर्दिवोदासः' इत्यादि । घवेम्नाना ऋषिरेव ।

1890. **तदभ्यासेतु स्मृत्यन्तरे—१(*) ।**

सप्तत्रिंशांश्च यो मासांश्च्छ्राद्धं भुङ्क्ते तमोवृतः ।
स पङ्क्ति-दूषकः पापः प्रेताशी च भवेज्जनः (त्तुसः) इति ॥२३१७॥

**अत्रान्यो विशेषः,—**

सपिण्डीकरण प्रकरणे द्रष्टव्यः । एवं श्राद्धस्य बहुधर्म्मकत्वेन गहनत्वेऽपि स्व स्व सूत्रोक्तरीत्या कार्य्यम् २(†) ।

बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रचोदितम् ।
तेन तावदि शास्त्रार्थे कृते सर्वः कृतो भवेदिति,कात्यायनोक्तेः ॥२३१८॥
यस्य सूत्रादि नास्ति । तस्य गृह्यादि येषां यत् श्राद्धादावुप लभ्यते ।
कर्त्तुमर्हन्ति ते सर्वे पारस्कर—मुनीरितम् ३(‡) ।
तदभावे यथालब्ध प्रकारेण समाचारदिति,
1891. ( पारस्करेण मुनिनेरितमादिष्टम् ) । इति कात्यायन सूत्रम् ॥२३१९॥

इति श्रीमद्विद्वज्जन कृपापात्र—भुतेन श्रीमन्नाग देवभट्टात्मजेनानन्तभट्टेन विरचिते
विधान पारिजाते श्राद्ध सामान्य-धर्म्मकथनम्—
पञ्चमेऽध्याये ॥

—*—

## अथोक्त प्रकारेण श्राद्ध करणेऽसमर्थस्या ४(ऽ)नुकल्प विधानम् ।

—*—

**तत्र विप्राभावे देवा भावेच,—**

भोजयेदथवाप्येकं ब्राह्मणं पङ्क्ति पावनम् ।
दैवे कृत्वातु नैवेद्यं पक्वान्नस्यतु निर्व्वपेत् ॥२३२०॥

---

१(*) तदभ्यासे,—प्राग्वचन निषिद्धस्य पुनः पुनः कृते इति ।

२(†) अत्र स्व स्व सूत्रोक्तम्,—स्व स्व गृह्य सूत्राद्यनुसारेण कृत्यं सम्पाद्यम् । यथा सामगां गोभिल गृह्य सूत्र छन्दोग परिशिष्टादि । यजुषां पारस्कर गृह्य सूत्रादि ।

३(‡) यस्य श्रौत-धर्म्म-गृह्य सूत्रादिकं स्मृति पथं नारोहति तेन धर्म्म-कृत्यादौ पितामह-पितृ वचनेन कुलपुरोहित वचसाच सर्व्वं सम्पाद्यम् । नतु कदापि तत्त्यजेदिति । अत्र पाठ विकृतिरस्ति ;—'अयनाग्नौच' 'अनग्नौवापि तौधच' इतिच ।

४(ऽ) 'अनुकल्पं नृणांप्रोक्तः क्षीणानाञ्चैव सर्व्वदा' इति अशक्त स्यानुकल्प विधानं ग्रन्थान्तरे, प्रोक्तम् । क्रियालोपे पापाधिक्यश्चेति ।

इत्येक विप्रपक्षः।

निधाय वा दर्भ बटून् इत्यादिना दर्भवटु पक्षश्च प्रागुक्तः।

तत्राप्य शक्तावाम श्राद्धं कार्य्यम्।

अयने द्वौच तीर्थेच प्रवासे पुत्रजण्मनि।

आमश्राद्धं प्रकुर्व्वीत भार्य्यारजसि संक्रमे ॥२३२१॥

1892. इति कात्यायनोक्तेः—

अनग्निरधनोवापि तथैव व्यसनान्वितः।

आमश्राद्धं द्विजः कुर्य्यात् वृषलस्तु सदैवहीति ॥२३२२॥

1893. कौर्म्मो क्तेश्च।

आहिताग्नौ प्रवासस्थे सति तत्पत्न्या स्वगृहे दर्श श्राद्धादि कार्य्यम्।

1894. इत्युक्ते पृथ्वीचन्द्रे लघुहारीतेन।

अमावास्यादि नियतं प्रोषिते-धर्म्मचारिणी।

पत्यौ तु कारयेन्नित्यं अन्येन ऋत्विगादिना ॥२३२३॥

इति। इदं भर्त्राज्ञायां सत्याम्।

पक्वाभावेऽधिकारः स्याद्विप्रादीनां नराधिप।

अपत्नीनां महाबाहो विदेशगमनादिभिः॥

1895. सदाचैवतु शूद्राणामामश्राद्धं विदुर्बुधाः ॥२३२४॥

1896. इति सुमन्तूक्तेः।

विदेश गमनादिभिः अपत्नीनामसन्निहितपत्नीनामित्यर्थः।

स्त्री शूद्रःस्व पचश्चैव जातकर्म्मणि वाप्यथ।

आमश्राद्धं सदा कुर्य्यां द्विधिना पार्व्वणेनतु ॥२३२५॥

1897. इति प्रचेतसः स्मृतेश्च।

स्वयं पचतीति स्वपचः स्वयं पाकी १(*)।

आत्मनो देश कालाभ्यां विप्लवे समुपस्थिते ॥२३२६॥

आपद्यनग्नौ तीर्थंच प्रवासे पत्युः सम्भवे।

चन्द्रसूर्य्यग्रहे चैव दद्यादामं विशेषतः ॥२३२७॥

---

१(*) अन्यत्र,—श्वपचः शुनां सारमेयानां पक्ता, एष चण्डाल तुल्यः। नाय सः। एतेऽप्यधिकारी भवेदिति। अनर्घ-स्वपाकेरेव बोध्यम्।

नपक्वं भोजयेद् विद्वान् सच्छूद्रोऽपि कदाचन ।
भोजयन् प्रत्यवायीस्यान्नच तस्यफलं लभेत् ॥२३२८॥

1898. इति विष्णु स्मृतेः ।

1899. प्रवासतीर्थादौ द्विजातेरपि आमश्राद्धमेवेति हेमाद्रिरुवाच

1900. विज्ञानेश्वरस्तु—पाकाभावेद्विजातीनामिति सुमन्तूक्तेः ।

साग्निकैर्निरग्निकैश्च प्रवासादौ पाका सम्भवे
सत्यामश्राद्धं कार्य्यम् ॥२३२४॥

पाकासम्भवेत्वामान्ने नैत्याह । उत्सन्नाग्नीनामाम श्राद्धमेव ।
यावत्स्यान्नाग्निसंयुक्त उत्सन्नाग्निरथापिवा ।

1901. आमश्राद्धं तदा कुर्य्याद्धस्तेऽग्नौ करणं भवेदिति जमदग्निस्मृतेः १(*) ।

1902. अत्र विशेषमाह, मरीचिः—

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम् ।
अमावास्यादिनियतं मास-सम्बराहते ॥२३२९॥

1903. स्मृतिदर्पणेच—

मृताहे च सपिण्डश्च गयाश्राद्धं महालयम् ।
आपन्नोऽपि न कुर्व्वीत श्राद्धमामेन कर्हिचिदेति ॥२३३०॥

आदिशब्देन संक्रान्त्यादिश्राद्धं माससंवत्सराहते—मासिकाब्दिक-श्राद्धं च वर्जयित्वेत्यर्थः ।

1904. आमधर्म्मानाह, व्यासः—

आमं ददतु कौन्तेय दद्यादामं चतुर्गुणम् ।
त्रिगुणं वापि नत्वेकं गुणञ्च सममर्पयेदिति ॥२३३१

अत्राति दरिद्रस्यच—सममपि देयम् ।

अन्यत्रापि—

आमं चतुर्गुणं दद्यादथवा द्विगुणस्मतम् ।
देयमष्टगुणं तद्वद् आमे हैमे(तथा)ऽप्यसौ विधिः ॥२३३२॥

---

१(*) अन्नेन,—अपक्वेन, आमतण्डुलादिनेति । तथाहि,—
सस्यं चेत्रगतं प्राहुः सतूषं धान्य मुच्यते ।
आमं वितूषं मित्युक्तं स्विन्नमन्न मुदाहृतम्' स्मृत्यन्तरे इत्यपि ।
अत्राम धर्म्मान्—आमान्नानाम् परिमाणानि बोध्यानि । 'पिण्डदानस्तदा भवेत्' इति भिन्नः पाठः ।

आमे हैमे तथा नित्ये नान्दीश्राद्धे तथैवच।
व्यतीपातादिके श्राद्धे नियमान् परिवर्जयेत् ॥२३३॥

तथा,—

सिद्धान्नेतु विधिर्यःस्यादामश्राद्धेऽसौ विधिः।
आवाहनादि सर्व्वं स्यात् पिण्डदानञ्च भारत ॥२३४॥
दद्यादनुद्विजातिभ्यः शृतं वाऽशृतमेववा।
तेनाग्नौकरणं कुर्य्यात् पिण्डांस्तेनैव निर्वपेत् ॥२३५॥

1905. षड्विंशन्मते,—

आमश्राद्धं यदा कुर्य्यात् पिण्डदानञ्च यद्भवेत् १(*)।
गृहपाकात् समुद्धृत्य शक्तुभिः पायसेनवा ॥२३६॥
पिण्डंदद्याद्द्विजातिभ्यः शृतं वाऽशृतमेववा।
पिण्डं दद्याद् यथालाभं तिलैः सह विमत्सरः ॥२३७॥ इति

यत्तु—

आमेन पिण्डं दद्याच्च विप्रान् पक्वेन भोजयेत्।
पक्वेन कुरुते पिण्डं आमान्नं यः प्रयच्छति।
तावुभौ मनुज प्रोक्तौ नरकार्हौ न संशय ॥२३८॥ इति।
तद्दर्शश्राद्धपरमिति त्रिस्थली सेतौ। अत्र देशाचाराद् व्यवस्थेत्यन्ये।
अत्र भोजनं (सद्‌ब्राह्मण) सम्बद्धाद् अपोशानादयो निवर्त्तन्ते।
प्रयोजनाभावात्, कृष्णलेऽवघातवत् २(†)।

1906. मरीचिश्च—

तृप्त प्रश्नोऽवगाहश्च जुष प्रश्नो यथासुखम्।
आमश्राद्धे भवेन्नैतदपो शानञ्च पञ्चममिति ॥२३९॥

1907. अवगाहोऽङ्गुष्ठनिवेशः। हैमश्राद्धपक्षे पिण्डनिवृत्तिरप्रीति-निर्वोदासीये,
1908. विकल्प इति स्मृत्यर्थसारे। आमश्राद्धे केषाञ्चिन्मन्त्राणामूहोऽपि भवति।

---

१(०) अनुद्विजातिभ्य इत्यपरः भिन्न पाठः।

२(†) कृष्टव होमेतु, आदौ ग्रहण-निर्वाप-प्रोक्षणावघात-पाकहोमाश्च। कृष्णलः लोह गोलकः सुवर्णमणिर्वा। 'सु स्वागत मित्यादि प्रश्नेषु' इति वा पाठः।

" अवागुष्ठं निवेशये दित्यन्नपात्रे। अतास्, जलेषु इति। येष प्राप्तस्य लोपेकृते प्रत्ययायाधिक्यम्भवेत्।

1909. **यथाह, मरीचिः—**

आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्ज्जने १(*) ।

अन्य कर्मण्य नूह्याः स्यु रामश्राद्ध-विधिः स्मृत ॥२३४०॥ इति ।

**यथा,—**

आवाहने हविषे अत्तवे इत्यत्र स्वीकर्त्रेवेत्यूहः ।

**स्वाहाकारे,—**

नमोवः पितर इत्यत्र तत् पदस्थाने आमावे त्यूहः २(†) ।

विसर्जने वाजेवाजे इत्यत्र तृप्ता इति पदस्थाने तृप्यते इत्यूहः ।

यद्यपि तस्मात्तन्नोहे दिति शब्देन ऊहो निषिद्ध स्तथापि वचनादूहः ।

अन्य कर्म्मणि विष्णो हव्यं (कव्यं) रक्षस्वे त्यादौ ।

**तथा,—**

गृहपाकात् समुद्धृत्य शक्तुषु (भिः) पायसेन वा ।

पिण्डदानं प्रकुर्व्वीत आमे हैमे कृते सति ॥२३४१॥

आम श्राद्धेच वृद्धौच प्रेतश्राद्धे तथैवच ।

1910. विकिरं नैव कुर्वीत मुनिः कात्यायनोऽब्रवीत् ॥२३४२॥

**तथा,—**

आवाहनाग्नौ करणं विकिरं पात्र पूरणम् ।

तृप्ति प्रश्नं न कुर्व्वीत आमे हैमे कदाचनेति ३(‡) ॥२३४३॥

एतच्च तीर्थ-सम्बन्ध्यामश्राद्ध-विषयम् ।

1911. आवाहनं भवेत् कार्य्य मर्घ्यदा नन्तथैवचेति हेमाद्रौ, भविष्योक्तेः ।

1912. हस्तेऽग्नौ करणं भवेदिति, पूर्वोक्त जमदग्नि स्मृतेश्च ।

विकिरोप्यामेनेति हेमाद्रिः ।

1913. शूद्रस्याग्नौ करणमुक्तं हेमाद्रौ ।

अग्नौकरणमन्त्रश्च नमस्कारे विधीयते ।

मन्त्रवर्जं हि शूद्रस्य सर्व्वमेव विधीयते ॥२३४४॥ इति ।

---

१(*) अत्रावाहनेच, विश्वान् देवान् आवाहयिष्ये, आवाहय इति प्रतिवाक्यम् । तत्र यःगुण मन्त्रेच ।

२(†) इत्यत्र पितृपदस्थाने इति ।

३(‡) तृप्यध्वमिति प्रश्ने तृप्ताःस्म इति विप्रोक्तिः ।

,, प्रणव-स्वाहा-स्वधासु शूद्रादीनां नमस्कार इति ।

**नमस्कारः इति—**

अग्नये कव्यवाहनाय नमः ।

सोमाय पितृमते नमः, इति मन्त्र इत्यर्थः ।

**तथा,—**

आम श्राद्धन्तु पूर्व्वाह्णे एकोद्दिष्टं तु मध्यतः ।

पार्वणं चा पराह्णे तु प्रातर्वृद्धि निमित्तकम् ॥२३४५॥

एतद्द्विजाति विषयम् ।

मध्याह्नात् परतो यस्तु शूद्रस्य समुदाहृतः ।

1914. आम श्राद्धन्तु तत्रैव पितृणान्दत्त मक्षयमिति ॥२३४६॥

सुमन्तुना शूद्रस्य विशेषोक्तेः ।

**ब्राह्मणाभावे,—**

पात्रे तु निधाय दर्भं वटूनासनेषु समाहितः ।

प्रैषानुप्रैष संयुक्तं विधानं प्रतिपादयेत् ॥२३४७॥

सर्व्वाभावे क्षिपेदग्नौ गवे दद्याद्यथाप्सु वा ।

नैव प्राप्तस्य लोपोऽस्ति पितृ कार्य्ये विशेषतः १(*) ॥२३४८॥

1915. इति देवलः ।

प्रैषानु प्रैषसंयुक्तं स्वागतं सुस्वागत मित्यादि प्रश्ने(×)प्रतिवचने-स्वयमेव वदेदित्यर्थः ।

क्षिपेदग्नौ करणे पिण्डादिकमिति विशेषः ।

आमन्तु कालान्तरे ब्राह्मणाय दद्यात् ॥

—*—

## इत्याम श्राद्ध विधानम् ।

—*—

1916. **अथामश्राद्धाभावे हैममाह, मरीचिः—**

आमान्नस्याप्य भावेतु श्राद्धं कुर्व्वीत बुद्धिमान् ।

धान्याच्चतुर्गुणेनैव हिरण्येण सुरोत्तिमेहि ॥२३४९॥

---

यवतु वैदिकः मन्त्र स्तवतु स्त्री-शूद्रय नमोनम इति वदे१ ।

विप्राभावे सर्व्वतः अग्नौ गोषु वारिषुचार्पये येन न-पितृकार्य्य हानिः स्यादिति ।

1917. **स्मृत्यर्थसारे—**

हिरण्यमष्टगुणं चतुर्गुणं द्विगुणं समं वा दद्यादिति ।

1918. **भविष्ये—**

अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मणि ।
हेमश्राद्धं प्रकर्त्तव्यं तथास्त्री शूद्रयोरपि ॥२३५०॥
गृह पाकात् समुद्धृत्य शक्तुभिः पायसे नवा ।
यदि पिण्डं प्रकुर्वीत हेमश्राद्धे कृते सति ॥२३५१॥

1919. **षट्त्रिंशन्मतेच,—**

आमन्त्रेणाग्नौकरणे विकिरो नैवदीयते ।
तृप्ति प्रश्नोऽपि नैवात्र कर्त्तव्यः केनचिद्भवेत् ॥२३५२॥ इति

1920. **अत्र मरीचिना प्रोक्तम्—**

आमाभावे हेमविधाने तत्स्थानापत्त्या तद्धर्म्मप्राप्तेः पूर्व्ववन्मन्त्रोहः ।
पूर्व्वाह्नकालताच हैयेति कश्चित् ।
एवमपि सपिण्डश्राद्धाशक्तौ संकल्पश्राद्धमाह,—

1921. **हेमाद्रौ सम्वर्त्तः—**

समग्रं यस्तु शक्नोति कर्त्तुं नैवेह पार्वणम् ।
अपि संकल्प विधिना काले तस्य विधीयते ॥
पात्रे भोज्यस्य चान्नस्य त्यागः सङ्कल्प उच्यते ॥२३५३॥

1922. **अत्र व्यासः—**

सङ्कल्पन्तु यदाकुर्य्यान्न कुर्य्यात् पात्र पूरणम् ।
आवाहनाग्नौकरणे पिण्डांश्चैव नदापयेत् ॥२३५४॥
पात्रपूरणमर्घ्यदानं समन्त्रकावाहन निषेध स्तूष्णीं १(*) ।
भवत्येवावाहनमिति हेमाद्रिः ।

1923. **स्मृत्यन्तरेऽपि—**

त्यजेदानीयमर्घ्यच अग्नौकरणमेवच ।
पिण्डांश्चविकिरान्त्यये श्राद्ध संकल्प संज्ञके ॥२३५५॥

---

१(*) मौं मन्त्रोच्चारण शून्यं मनसा विधेयम् ।

1924. वृद्ध शातातपस्तु,—

पिण्डं निर्व्वापरहितं यत्तु श्राद्धं विधीयते ।
स्वधावचनो-लोपोऽस्ति विकिरस्तु न लुप्यत ॥२३५६॥ इति ।

1925. चन्द्रोदये वसिष्ठः—

आवाहनं स्वधा शव्दं पिण्डाग्नौ करणन्तथा ।
विकिरं पिण्डदानञ्च सङ्कल्पे षड् विवर्ज्जयेत् १(*) ॥२३५७॥ इति ।
एवञ्च विहित प्रतिषिद्धत्वाद् विकिरे विकल्पः ।
आमानि पितृ यज्ञस्य यदा कर्त्तुं न शक्नुयात् ।
स तदा वाचये द्विप्राण् संकल्पात् सिद्धिरस्त्विति ॥२३५८॥

1926. यच्च, च्छागलेयः —

पिण्डो यत्र निवर्त्तेत मघादिषु कथञ्चन ।
सांकल्पिभिस्तदा कार्य्यं नियमाद्ब्रह्मवादिभिः ॥२३५९॥

1927. कार्ष्णाजिनिः—

मौञ्जी बन्धाद् वत्सरार्द्धं वत्सरं पाणि पीड़नात् ।
पिण्डान् सपिण्डा नोदध्युः प्रेतपिण्डं विनात्रतु ॥२३६०॥
आब्दिकादावपवादस्तूक्तमेव ।
त्यक्तवाग्नेरपि सांकल्प मुक्तम्,—

1928. षड् त्रिंशन्मते—

अनग्निको यदा विप्र उत्सन्नाग्नि स्तथैवच २(†) ॥२३६१॥

तथा,—

सच वृद्धिषु सर्व्वासु सांकल्प श्राद्धमाचरेत् ॥२३६२॥
पाकेनाब्दिकादि श्राद्ध कार्य्यं मित्युक्तम् ।

1929. तदसंभवे वृहन्नारदीये विशेष उक्तः ।

द्रव्याभावे द्विजाभावे अन्नमात्रन्तु पाचयेत् ।
पैतृके न तु सूक्तेन होमं कुर्य्याद् विचक्षणः ॥२३६३॥

---

१(*) अत्र षड् विकल्पयेदिति भिन्नः पाठः ।
२(†) अत्र सांकल्पं सङ्कल्पकृत्यमिति । अनग्निः अगृहीताग्निः । उत्सन्नाग्निः—अवैध त्यक्ताग्निः ।

पैतृकं सूक्त मुदीरतामित्यादि १(*) ।
पिण्डदानं ततः कुर्य्यात् शक्तः सुसमाहितः :
होमं समाप्य स भवेत् ।

1930. देवलः—

पिण्डमात्रं प्रदातव्यं अभावे (द्रव्यं) विप्रायचैवहि ।
श्राद्धीयाऽहनि संप्राप्ते भवेन्निरशनोऽपिवा ॥२३६४॥

1931. वृद्ध वसिष्ठस्तु,—

किञ्चिद्दद्यादशक्तस्तु उद कुम्भादिकं द्विजे ।
तृणानि वा गवे दद्यात् पिण्डान् वा प्यथनिर्वपेत् ॥२३६५॥
अत्रोद कुम्भादिदान भोजनस्थानाय ।
तत् कृत्वा पिण्डंदद्यादित्यर्थः ।
तिलदर्भैः पितृन् वापि तर्पयेत् स्नान पूर्व्वकम् ।
इदमपि पक्षान्तरम् ।

1932. हेमाद्रौ भविष्ये·—

अग्निना वा दहेत् कृच्छ्रं ( कक्षं ) श्राद्धकाले समागते ।
तस्मिन्ने वोपसदग्निं जपेद्वा श्राद्ध संहिताम् ।
अत्र श्राद्ध संहिता—समन्त्र श्राद्धकल्पः ।

1933. वाराहे,—

असामर्थ्येऽन्न दानस्य धान्यं माघं स्व शक्तितः २(†) ।
प्रदद्याद्व तिलान् वापि स्वल्पाल्पां वापि दक्षिणाम् ॥२३६६॥
सर्व्वाभावे वनं गत्वा कक्षामूल-प्रदर्शकः ।
सूर्य्यादि लोक पालानामिद मुच्चैः पठेन्नरः ॥२३६७॥

---

१(*) पितृसूक्तम्—मृत्युक्तम् ।
" 'पितृमात्रं प्रदातव्यं तदभावे द्रव्य विप्रयोः' इति पाश्यः पाठः ।
अत्र निरशनोहि श्राद्ध कर्त्ता भवेत् ।
२(†) अत्र श्राद्ध संहितां, पितृ संहितां इत्यन्ये । अत्र मांसमिति पाठान्तरम् ।
एतत् पुनरपि स्वानुशोचन मात्मापराध क्षमापनञ्च ।

नमेऽस्ति वित्तं न धनं न चान्य-
च्छ्राद्धोपयोगि स्वपितॄन्नतोस्मि ।
तृप्यन्तु भक्त्या पितरोमयैतौ,
भुजौ कृतौ वर्त्मणि मारुतस्य ॥२३६८॥
इत्येतत् पितृभिर्गीतं भावाभाव प्रयोजनम् ।
यः करोति कृतन्तेन श्राद्धं भवति भारत ॥२३६९॥

1934. 'प्रभास खण्डे' पि—

गत्वारण्य मुमानुष्य मूर्द्ध्वबाहु विरोत्यदः ।
निरन्नो निर्धनो देवाः पितरो माऽनृणं कृथाः ॥२३७०॥
नमेऽस्ति वित्तं न धनं न भार्य्या,
श्राद्धं कथं वः पितरः करोमि ।
वने प्रविश्यवे इतु तणमयोच्चैः १(*) ।
भूजौ कृतौ वर्त्मणि मारुतस्य ॥२३७१॥
श्राद्धर्णमेतद्भवतां प्रदत्तम्,
भद्रां दयध्वं पितृ देवताद्याः ।
आख्याय चो(त्)त्तिप्य भुजौ ततो वै
दिवा च रात्रिं समुपोष्य तिष्ठेत् ।
भवेत् स वै तेन कृतेन सेवा,
ऋणेन मुक्तः पितृ देवतानाम् ॥२३७२॥
इति अनन्त भट्ट विरचिते विधान पारिजाते (पञ्चमस्तबके)
श्राद्धानु-कल्पविधानम् ॥

—*—

## अथ कलिवर्ज्ज्यान्युच्यन्ते ।

—*—

1935. बृहन्नारदीये,—

समुद्र यात्रास्वीकारः कमण्डलुविधारणम् २(†) ।
द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥२३७३॥

---

१(०) 'घनं इन्द्रादिलोक पावानाम्' इति भिन्नः पाठः । 'येइतु मयोच्चैः' इत्यन्यः पाठः ।

२(†) बोधायनसूत्रे, उद्वाहतत्त्वे कलिवर्ज्यं प्रकरणे, हेमाद्रौचास्ति । तत् प्राक्तने श्रौते स्वर्त्ते नासीत् । कलिरित्यपि कतीति पाठः असम्यक् ।

देवराच्च सुतोत्पत्ति र्मधुपर्के पशोर्वधः ।
मांस दानं तथा श्राद्धे वानप्रस्था श्रमस्तथा ॥२३७४॥
दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ।
दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ ॥२३७५॥
महाप्रस्थान गमनं गोमेधश्च तथा मखः ।
इमान् धर्म्मान् कलियुगे वर्ज्यानाहु र्मनीषिणः, इति ॥२३७६॥
कमण्डलु–मृण्मयी । दत्ता विवाहिता ।
ऊढ़ायाः पुनरुद्वाहं ज्येष्ठांशंगोवधन्तथा ।
कलौ पञ्च न कुर्व्वीत भ्रातृजायां कमण्डलुम् ॥२३७७॥

1936. इति वसिष्ठोक्तेः । आदित्य पुराणे च,—
विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।
बालायां क्षतयोन्यांस्तु वरेणान्ये न संस्कृतिम् ॥२३७८॥
कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः ।
आततायि-द्विजाग्र्याणां धर्म्म युद्धेन हिंसनम् ॥२३७९॥
द्विजस्याब्धौ तु नौ यातुः शोधितस्यापि संग्रहः १(*) ।
सत्र दीक्षातु सर्व्वेषां कमण्डलु विधारणम् ।
महाप्रस्थान गमनं गो संज्ञप्तिश्च गो सवे ॥२३८०॥
सौत्रामण्यामपि सुरा ग्रहणस्य च संग्रहः ।
अग्निहोत्राऽहवन्याश्च लेहोलीढ़ा परिग्रहः ॥२३८१॥
श्रु(वृ)तस्वाध्याय सापेक्ष मघ संकोचनन्तथा
प्रायश्चित्त विधानञ्च विप्राणां मरणान्तिकम् ॥२३८२॥
संसर्गदोषस्तेयान्य महापातक निष्कृतिः ।
वरातिथि पितृभ्यश्च (या) पशूपकरणक्रिया ॥२३८३॥
दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः ।
सवर्णान्यांगणादुष्टैः संसर्गः शोधितैरपि ॥२३८४॥
अयोनौ संग्रहे वृत्ते परित्यागोगुरुस्त्रियः ।
परोद्देशात्म संत्याग उद्दिष्ट स्यापि वर्जनम् ॥२३८५॥

---

१(*) अस्मिन् 'शोधितस्याप्य संग्रहः' इति भिन्नः पाठः । शोधितस्यकृत प्रायश्चित्तस्यापि विप्रस्य, अत्र उद्दिष्टस्य शास्त्रोक्तस्य वर्जनत्याग इति । असंग्रहः श्रौते स्मार्त्ते चायोग्य इति भिन्नः पाठः । अत्र शोधितस्य कृतप्रायश्चित्त स्यापि, 'कामतोऽ व्यवहार्य्यस्तु वचनादिह जायते' इति ।

प्रतिमाभ्यर्च्चनार्थाय संकलश्च सधर्म्मकः १(*) ।
अस्थिसञ्चयनादूर्द्ध अङ्गस्पर्शन-मेवच ॥२३८६॥
शा(सा)मित्रञ्चैव विप्राणां सोमविक्रयणन्तथा ।
षड्भक्तान शनेचान्नहरणं हीनकर्म्मणः २(†) ॥२३८७॥

1937. इति चन्द्रोदये । ब्राह्मे च—

शूद्रेषु दास गोपाल कुलमित्रार्द्धसीरिणः ।
भोज्यान्नता गृहस्थस्य तीर्थासेवाति दूरतः ॥२३८८॥
शिष्यस्य गुरुद्वारेषु गुरुतद्वृत्तिशीलता ३(‡) ।
आपद्वृत्ति द्विजाग्रयाणां अश्वस्तनिकता तथा ॥२३८९॥
प्रजार्थन्तु द्विजाग्रयाणां प्रजारमणी परिग्रहः ४(§) ।
ब्राह्मणानां प्रवासित्वं मुखाग्निधमन क्रिया ॥२३९०॥
वलात् कारादि दुष्टस्त्री संग्रहोऽविधिचो(नो)दितः ।
यतेश्च सर्व्ववर्णेषु भिक्षाचरण मेवच ॥२३९१॥
नचोदके दशाहञ्च दक्षिणा गुरु चोदिता ।
ब्राह्मणादिषु शूद्रस्य पचनादि क्रियापिच ॥२३९२॥
भृग्वग्नि पतनैश्चैव-वृद्धादि-मरणन्तथा ५(॥) ।
गोतृप्तिशिष्टे पयसि शिष्टैराचमन क्रिया ॥२३९३॥
पितापुत्र विरोधेषु साक्षिणां दण्डकल्पनम् ।
यतेः सायं गृहत्वञ्च सूरिभिस्तत्त्व दर्शिभिः ६(०) ।
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ॥
निवर्त्तितानि विद्वद्भिः व्यवस्थापूर्व्वकं बुधैरिति ॥२३९४॥
संसर्ग दोष इति—स्तेयभिन्ने महापापे रहस्ये कृते प्रायश्चित्तं नेत्यर्थः ।
सवर्णान्योऽसवर्णादिस्तयादुष्टैः । अयोनौ शिष्यादौ ।

---

१(*) 'संकल्पश्च' इत्यपरः पाठः । अत्र, शामित्रं, गोचारणे भृत्यत्वम्, पशु बन्धनञ्चेति । 'होमकर्म्मणः' इति भिन्नः पाठः ।

२(†) अन्यद्, अग्निहोत्र सन्दर्भे वर्त्तते । 'अग्निहोत्रं त्रयो वेदा त्रिदण्डं भस्म गुण्ठनम्' इत्यंशेऽस्ताम् ।

३(‡) 'गुरुदारासु' इति अन्यः पाठः । अत्र 'संभक्तानशने' इत्यन्यः पाठः ।

४(§) 'जाररमणी' इति पाठान्तरम् ।

५(॥) 'पतनञ्चैव' इत्यन्यः पाठः । 'भद्रादि-'युद्धादि' इत्यपि अन्यत् पाठान्तरम् ।'

६(०) 'सायं गृहस्थत्वं' इत्यन्यः पाठः ।

परीद्देशेन ब्राह्मणाद्यर्थत्वेन । उद्दिष्टस्य प्रतिग्रहस्य ।
सङ्कल्पोत्तेतनग्रहणेन पूजाकरणं, अन्यन्नूस्पष्टम्-निगमे ।
अग्निहोत्रं गवालम्भं सन्न्यासं पलपैतृकम् ।
देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् ॥२३६५॥
अग्निहोत्रं सर्व्वाधानपक्षेण—आधानं स्मृतम् ।
श्रौतस्मार्त्ताग्न्योस्तु पृथक् कृतिः ।
सर्व्वाधानं एतयोरैक्यकृतिः ।

1938. पूर्व्वयुगाश्रितेति स्मृतिचन्द्रिकोक्तेः ।
एतेन, चत्त्वार्य्यब्द सहस्राणि चत्वार्य्यब्दशतानिच ।
कलिर्यदागमिष्यन्ति तदा त्रेता परिग्रहः ॥२३६६॥

1939. सन्न्यासश्च न कर्त्तव्यो ब्राह्मणोन विजानतेति, व्यासवाचा व्याख्यातम् ।

1940. त्रेतापरिग्रहोऽग्निहोत्रपरिग्रह इत्यर्थः । सर्व्वाधानेऽपि विशेषमाह,देवल'
यावद्वर्ण विभागोऽस्ति यावद्वेदः प्रवर्त्तते ।
सन्नयासं चाग्निहोत्रञ्च अस्ति तावत् कलौ युगे, इति १(*) ॥
इति विधान पारिजाते कलिकालवर्ज्याणि ।

—*—

## अथ वानप्रस्थाश्रमः ।

—*—

### सच कलौ यद्यपि निषिद्धः, तथापि—

वानप्रस्थ्यं कलौ कुर्य्यात् सन्नयासो ।
यावदेवश्रीति वचनात्त्रापि कार्य्यः ॥२३६७॥

1941. अत्र याज्ञवल्क्यः—

सुतविन्यस्त पत्नीकस्तयावानुगतोवने २(†) ।
वानप्रस्थो ब्रह्मचारो साग्निः सोपायनो व्रजेत् ॥२३६८॥

---

१(*) 'वर्म्मं संचयात्' इत्यन्यः पाठः । 'अग्नि होत्रश्च तावत् कलौ युगे' इत्थं पाठान्तरं दृश्यते ।

२(†) 'सुत विन्यस्त पत्नीकः' इति चान्यः पाठः । सन्न्यासे श्रुतिः जाबालोप निषदिच । अन्यच
'पुत्रेषु दारान् निक्षिप्य वनं गच्छेत् सहैव वा' इति स्मृति सन्दर्भः ।

" अत्र सन्न्यासो विधेयः ।

" तया परिहितो रतः इत्यन्य. पाठः ।

1942. **मनुः,—**

गृहस्थ स्तु यदा पश्येद्वलीपलितमात्मनः ।
अपत्यस्येव चापत्यं तदारण्यं समाश्रयेत् ॥२३९९॥

1943. **याज्ञवल्क्य :—**

अफालकृष्टेनाग्नींश्च पितृदेवातिथीनपि ।
भृत्यांश्च तर्पयेत्श्मश्रुजटालोमभृदात्मवान् ॥२४००॥
अह्नोमासस्य षड्वापि तथा सम्वत् सरस्य वा ।
अर्थस्य सञ्चयं कुर्य्यात् कृतमाश्वयुजि त्यजेत् ॥२४०१॥
दान्तस्त्रिषवण-स्नायी निवृत्तश्च प्रतिग्रहात् ।
स्वाध्यायवान् दानशीलः सर्व्वत्रतु हितेरतः १(*) ॥२४०२॥
दण्डोलूखलिकः कालपक्वाशी वास्मकुट्टकः ।
श्रौतं स्मार्त्त फलस्नेहैः कर्म्मकुर्य्यात् क्रियास्तथा २(†) ॥२४०३॥

**अत्र क्रिया भोजनाद्याः ।**

चान्द्रायणै र्नयेत् कालं कृच्छ्रैर्वा वर्त्तयेत् सदा ३(‡) ॥
पक्षे गते वाप्यश्नीयान्मासे वाऽह्निवा गते ।
स्वप्याद्भूमौ शुचीरात्रौ दिवासंप्रपदैर्नयेत् ॥२४०४॥
स्थानासन विहारैर्वा योगाभ्यासेनवा तथा ।
ग्रीष्मे पञ्चाग्निमध्यस्थोवर्षासु स्थण्डिले शयः ॥२४०५॥
आर्द्रवासास्तु हेमन्ते शक्त्या वापि तपश्चरेत् ।
यः करङ्कैर्विक्रदति चन्दनैर्यश्च लिम्पति ॥२४०६॥
अक्रुद्धोऽपरितुष्टश्च स(श)मस्तस्य च तस्य च ।
अग्नीन्वाप्यात्मसात् कृत्वा वृक्षावासोमिताशनः ॥२४०७॥
वानप्रस्थगृहेष्वेव यात्रार्थं भैक्ष्यमाचरेत् ।
ग्रामादाहृत्यवा ग्रासानष्टौ भुञ्जीत वाग्यतः ॥२४०८॥
वायुभक्षः प्रागुदीचीं गच्छेदा वर्ष्मसंक्षयात् ।

---

१(*) 'सर्व्वस्व सहिते रतः' इति पाठान्तरम् ।
सर्व्वेषां सत्त्वानां जीवानां हिते शुभाय निरतः परायण इत्यर्थः स्यात् ॥
" एतत् सर्व्वं वानप्रस्थादीनां वैधं कृत्यं ज्ञेयम् ।
२(†) अत्र पुनः क्रियाः स्वीयाश्रमोपयुक्ताः शास्त्रविहिताः ।
३(‡) अत्र चान्द्रायण व्रतं धर्म्म शास्त्रोक्तम् ।
'तिथि वृद्धान् चरेत् पिण्डान' इत्यादि स्मृतौचोक्तम् ।
" अत्र विक्रदति—इत्यत्र 'विकृरति' चेत्यन्यः पाठः ।

प्रागुदीचीं ऐशानीं दिशम् । आवर्ष्मसंक्षताद्देहपातपर्य्यन्तं गच्छेदित्यर्थः ।

वानप्रस्थोवीराध्वानं ज्वलनाम्बु प्रवेशनम् ।
भृग्वग्नि पतनं वानुतिष्ठेत् । इति स्मृत्यन्तरे ॥२४०९॥

इति विधान-पारिजाते वानप्रस्थाश्रम विधानम् ।

—*—

## अथ सन्न्यासः ।

—*—

1944. **तत्र याज्ञवल्क्यः—**

वनाद्गृहाद्वा कृत्वेष्टिं सार्व्ववेद(स)सदक्षिणाम् १(*) ।
प्राजापत्यं तदन्ते तानग्नीनारोप्य चात्मनि ॥२४१०॥
अधीत वेदोजपकृत् पुत्रवानन्नदोऽग्निमान् ।
शक्त्याच यज्ञ कृन्मोक्षे मनः कुर्य्यात्तु नान्यथा ॥२४११॥

1945. एतच्चाश्रम-समुच्चय पक्षे । अन्यत्र जावालश्रुतिः—
'यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद् गृहाद्वनाद्वा,
यः पुनरव्रती व्रतीवा स्नातकोवाऽस्नातकोवोत्सन्नाग्निकोवा,
1946. यदहरेवच, विरजे त्तदहरेव प्रव्रजेदिति' ।

प्रव्रजेद् ब्रह्मचर्य्याद्वा प्रव्रजेच्च गृहादपि ।
वनाद्वा प्रव्रजेद् विद्वानातुरोवाथ दुःखितः २(†) ॥२४१२॥

**अत्रातुरो मुमूर्षुः ।**

दुःखितश्च चोरव्याघ्रादिभिः ।

---

१(*) अत्राश्रम क्रमपरा श्रुतिर्यथा—'ब्रह्मचारी गृही भवेद् गृहाद्वनी भुत्वा प्रव्रजे' इति । अक्रमेतु विरक्तस्य सद्यन् सन्न्यासः, यद हरेव विरजेत्त दहरेव प्रव्रजेत् इति । विरक्तस्य सद्यः सन्न्यास ग्रहणम् । अन्यत् सन्न्यासोपनिषदि, यति धर्म्म समुच्चये, ब्रह्मोपनिषदि, वेदान्त कल्पतरौ, चास्ति ।

२(†) आतुर सन्न्यासः, विद्वत् सन्न्यासः, विविदिषा सन्न्यासश्चास्य भेदोहि शास्त्रोक्तः : जावालोपनिषदि ब्रह्मोपनिषदिच । 'विदग्ध' विधत्ते' इति पाठान्तरम् । 'सर्व्वदण्ड त्यथैवच' इत्यमपि भिन्नः पाठः ।

1947. **महाभारते —**

आतुराणाञ्च सन्नयासे न विधि र्नैवच क्रिया ।
प्रैषमात्रं समुच्चार्य्यं सन्न्यासं तच्च पूरयेत् ।
यद्यातुरः स्यान्मनसा वाचा वा सन्नयसेदिति ॥२४१३॥
जावालश्रुतिश्च—अत्र सन्नयासे विप्रस्यैवाधिकारः ।

1948. आत्मन्यग्नीन् समारोप्य ब्राह्मणःप्रव्रजेद्गृहादिति मनूक्तेः ।

**तथाहि—**

चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः १(*) ।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेकौ वैश्यशूद्रयोः ॥२४१४॥

1949. **इति याज्ञवल्क्योक्तेश्च ।**

1950. माधवाचार्य्यस्तु—द्विजातेरधिकारमाह ।

ब्राह्मणः क्षत्रियोवाथ वैश्योवा प्रव्रजेद् गृहादिति, कूर्म्मपुराणात् ।
पूर्व्ववाक्यन्तु, ( अवैध केवल ) काषायदण्डधारणनिषेध परम् ।
मुखजानामयं धर्म्मोयद्विष्णोर्लिङ्गधारणम् ।
राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचः ॥२४१५॥

1951. **इति बौधायनोक्तेश्च ।**

अत्र देशाचारतोऽव्यवस्था वा । योऽपि, सन्यासं पलपैतृकमिति कलौ-निषेधः सोऽपि व्यवस्थितः प्राक् २(†) ।

195'. **सन्नयासश्चतुर्द्धा यथाह, हारीतः,—**

कुटीचको बहूदकोहंसश्चाथतृतीयकः ।
चतुर्थः परमोहंसःयश्च पश्चात् स उत्तमः ॥२४१६॥

आद्यः पुत्रादिना कुटीं कारयित्वा तत्र गृहेच वसन् काषायवासाः । शिखोपवीती त्रिदण्डवान् बन्धुषु, स्वगृहेवा भुञ्जन्नात्मज्ञोभवेदेत-दत्यन्ताशक्तः परः । (२) द्वितीयस्तु बन्धून्हित्वा सर्व्वागाराणि-भैक्ष्यं चरन् पूर्व्वोक्तवेषः स्यात् । हंसस्तु पूर्व्वोक्त-वेशश्च ।
हंसोहि--पूर्व्वोक्तवेषोक्तैकदण्डः इति ग्रन्थान्तरे ।
एकन्तु वैणवं दण्डं धारयेनित्यमादरादिति ॥२४१७॥

---

१(*) अत्र श्रुतिनोदिता इत्यपरः पाठः। 'वागदण्डः' इति श्लोकः सन्न्यासः ग्रन्थे यतिधर्म्म पद्धतौ चास्ति: गीता टीकायाञ्च। वाग् मनः कायानां दण्डवत् नित्यं स्थैर्य्यं विधेयम्। तथैवेन्द्रियाणाञ्चेति ज्ञेयम्॥

२(†) प्रागिति—कलिवर्ज्ज प्रकरणे इतः पूर्व्वमुक्तम् ।

1953. **स्कान्दात् ।**

यज्ञोपवीतं दण्डश्च वस्त्रं जन्तुनिवारकम् ।
तावान् परिग्रहः प्रोक्तोनान्योहंस-परिग्रहः ॥२४१८॥

1954. **इति विष्णु स्मरणात् ।**

क्वचित्तु परमहंस्य यज्ञोपवीत—निषेधः ।

1955. **तथाहि स्कान्दे,—**

परमहंस स्त्रिदण्डंच रज्जुगोवाल निर्म्मिताः ।
शिखां यज्ञो पवीतं च नित्यं कमपरित्यजेदिति ॥२४१९॥
अयमप्येकदण्डएव । येतु शिखोपवीतादित्यागनिषेधा,
स्ते कुटीचकादिपराः ।

1956 **यच्चात्रिः—**

चतुर्धा भिक्षवः प्रोक्ताः सर्व्वेचैव त्रिदण्डिनः ।
इति सर्व्वेषां त्रिदण्डविधानं तद्वाग् दण्डादिपरम् ॥२४२०॥

**तथाहि, —**

वाग्दण्डोऽथ मनोदण्डः कायदण्ड स्तथैव ।
यस्यैते कथिता दण्डाः स त्रिदण्डीति चोच्यते ॥२४२१॥

1957 **इति मनूक्तेः ।**

सर्व्वभूत हितः शान्तस्त्रिदण्डी सकमण्डलुः ।
एकारामपारि व्राज्यं भिक्षार्थी ग्राम माश्रयेदिति ॥२४२२॥

1958. **याज्ञवल्क्योक्तेः ।**

चतुर्थमाश्रमं गच्छेद्ब्रह्मविद्या परायणः ।
एक दण्डी त्रिदण्डीवा सर्व्वसङ्गविवर्जितः ॥२४२३॥

1959. इति चतुर्विंशति मतोक्तेश्च । त्रिदण्डादिधारणमव्यवस्थितं वा । अति विदुष एक दण्डोऽपिन, 'नदण्डोनशिखा नाच्छादनं यस्य सःपरमहंस इति महोपनिषदुक्तेः १(*) ।

---

१(*) अव्यक्त भिक्षु कोपनिषदि ब्रह्मोप निषदि महोपनिषदि सन्नयासोप् निषदिचास्ति ।

1960. **अत एव यमः—**

कायदण्डो धृ(वृ)तोयेन सर्व्वांशी ज्ञानवर्जितः।
सयाति नरकान् घोरान् महारौरव संज्ञितान् ॥२४२४॥

1961. **इत्याह। भारते आश्वमेधिकेऽपि—**

एकदण्डी त्रिदण्डीच १(*) शिखी मुण्डित एववा।
काषाय मात्र सारोऽपि यतिः पूज्यो युधिष्ठिर इति ॥२४२५॥

—*—

## अथ सन्न्यास ग्रहण विधानम्।

—*—

1962. **अत्र बोधायनः—**

कृत्वा श्राद्धानि सर्व्वाणि पित्रादिभ्योऽष्टक पृथक्।
वापयित्वा ततः केशान् मार्जये न्मान्त्रका इमाः इति ॥२४२६॥

अत्र सर्व्वाणीति—स्वस्य नवश्राद्ध-षोड़श श्राद्धानि सर्व्वाणि। पित्रादिभ्योऽष्टक पृथक् श्राद्धादिकं कृत्वेत्यर्थः।

1963. **स्मृत्यर्थसारेऽपि,—**

एकोद्दिष्टविधानेन कुर्य्याच्छ्राद्धानि षोड़श।
अग्निमान् पार्वणे नेव विधिना निर्व्वपेत् स्वयम्, इति ॥२४२७॥

1964. **अधिकारार्थं प्रायश्चित्तमाह, कात्यायनः—**

कृच्छ्रांस्तु चतुरः कृत्वा सन्न्यसे च्चेद्नाश्रमी २(†)।
आश्रमी चेत्तप्तकृच्छ्रं तेनासौ योग्यतां व्रजेदिति ॥२४२८॥

1965. **अष्टौ-श्राद्धान्याह, बोधायनः—**

सदैवमार्षकंदिव्यं पित्र्यं मातृकं मानुषे।
भौतिकं चात्मनश्चान्ते ह्यष्टौ श्राद्धानि निर्वपेत् इति ॥२४२९॥

1966. **अत्र देवताक्रममाह हेमाद्रौ शौनकः—**

देवश्राद्धे ब्रह्मविष्णु महेश्वराः, आर्षे ब्रह्मर्षि महर्षि देवर्षयः, दिव्ये वसुरुद्रादित्याः, मानुषे, सनक सनन्दन सनातनाः, भौतिके पृथिव्यादिपञ्चभूतानि, चक्षुरादीन्द्रियाणि, चतुर्विधभूतग्रामश्चेति तिस्रः।

---

१(*) एक दण्डादि विषयेप्राक् पश्चादुक्त वक्ष्यते च।
कृच्छ्रव्रत नियमादिकं प्रायश्चित्त विवेकादावस्ति।

२(†) अत्र चत्वारि कृच्छ्र व्रतानि प्रायश्चित्तानि चतुर्वारं, अनुष्ठाय पश्चात् सन्न्यसनम्।

पित्रे—पित्रादयोमातामहादयश्च । मातृके मात्रादयस्तिस्रः । आत्मश्राद्धेतु—आत्म—पितृ—पितामहप्रपितामहा देवताः । सर्व्वत्र नान्दीमुखत्वं विशेषणं ज्ञेयं, सर्व्वत्र पिण्डदानं, सर्व्वत्र युग्मा विप्राः, दक्षक्रतू सत्यवसू वा(च)विश्वेदेवौ१(*) अन्यत् सर्व्वंनान्दीमुखवदिति ।

1967. **स्मृत्यर्थ सारेच—**

केशश्मश्रू लोमनखान् वापयित्वोप कल्पयेत् २(†) ।
दण्डं जपं पवित्रञ्च शिक्यपात्रं कमण्डलुम् ।
आसनं कौपीनमाच्छादनं कन्थाञ्च पादुके इति ॥२४३०॥

1968. **दण्डलक्षण माह, बौधायनः—**

त्रीन्दण्डानङ्गुलिस्थलान् वैणवान्मूर्द्ध संस्थितान् ।
एकं वा दण्डमादाय रात्राण्यग्नौ क्षिप्त्वा, भू र्भुवः स्वरिति अपःस्पृष्ट्वा मन्त्राणि जप्त्वा विप्रान् सम्भोज्य, पुण्याहं वाचयित्वा, अत्रवा वपनम्, तत्तन्मन्त्राणि स्वेष्ट (मन्त्राणि)—
कृत्वा हैम-रौप्य-कुश-जलैः स्नात्वा पुरुषाय चरुं श्रपयित्वा,
प्राणायस्वाहेत्यादिना पञ्चाज्याहूतीर्हुत्वा,
पुरुष-सूक्तेन प्रत्यृच माज्यं चरुञ्च जुहुयात् ॥२४३१॥
अत्रैके विरजाहोम मिच्छन्ति ।

**यथोक्तं शिव गीतासु—**

जुहुयाद्विरजामन्त्रैः प्राणाऽपानादिभिस्ततः ।
अनुवाकान्तमेकाग्रः समिदाज्यचरून् पृथक् ॥२४३२॥
आत्मन्यग्नीन् समारोप्य याते अग्नेति मन्त्रतः ।
भस्मादायाग्निरित्यादौ विसृज्याङ्गानि संस्पृशेत् ॥
महापापोहि पापौघै र्मुच्यते नात्र संशयः, इति ॥२४३३॥

1969. **अनुवाकान्तविरजा मन्त्रा उच्यन्ते ।**

ॐ (अं) प्राणापानव्यानो ३(‡) दानसमाना मे शुध्यन्ताम् ।

---

१(*) 'विश्वे दिवाः' इति वा पाठान्तरम् । दण्ड जपमित्यत्र दण्डवयं इत्यन्यः पाठः ।

२(†) केशादीनां वापनं सर्व्वं मुण्डनं विध्यनुसारेण दण्डादि ग्रहणं कार्य्यम् ।

३(‡) [illegible] जीवच्छ्राद्धं [illegible] ऽष्टाविंशतिकर्म [illegible] जीवच्छ्र [illegible] । सत्यस्नात प्रागपि तेनेद मनुष्ठेयम् । विरजा होमस्तु सन्न्यास ग्रहणात् प्रागनुष्ठेयः ।

ज्योतिरहं बिरजा विपाप्मा भूयासं ॐ स्वाहा ।

अ॰ सर्व्वत्र लिङ्गोक्तदेवताभ्य इदं नममेति त्यागो ज्ञेयः ।

वाङ्मनश्चक्षुः श्रोत्र जिह्वा प्रातंगतो १(*) बुद्धयाकूति सङ्कल्पा मे शुद्धयन्तां, ज्योतिः त्वक्‌च कोर्म्म-मांस रुधिर मेदोमज्जा स्नायवोऽस्थीनिच मे शुध्यन्तां । ज्योतिः शिरः ।

पाणि पाद-पार्श्व पृष्ठोरूदर जङ्घे शिश्नोपस्थवायवोमे-शुध्यन्ताम् । ज्योतिः( रूप )उत्तिष्टदुपरिरूपम् । हरित-पिङ्गल लोहितान्निदेदे देहि दापयितारःशुध्यन्ताम् । वि-पृथिव्याप स्तेजो-वायुराकाशा मे शुध्यन्ताम् । शब्दस्पर्शरूपरसगन्धा मे शुद्धयन्ताम् । ज्योति र्मनोवाक्‌का कर्म्माणि मे शुध्यन्ताम् । ज्योतिरायुरीशाणामे शुध्यन्ताम् । (ज्योतिः शब्द स्पर्शरूप रसगन्धा मे शुद्धयन्ताम् ) । ज्योतिः परमात्मा मे शुध्यताम् । ज्योतिः क्षुधे स्वाहा । क्षुतपिपाभ्यां स्वाहा । वि-विद्यायै स्वाहा । अग्विधानाय स्वाहा । केशोत्‌काय स्वाहा ।

'क्षुत् पिपासामलां ज्येष्ठाम लक्ष्मीं नाशयाम्यऽम् ।

अभूतिमसमृद्धिञ्च सर्व्वाणिनुदमे पाप्पान उ स्वाहा २(†) ॥२४३४॥

अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयाः शुध्यन्ताम् ।

ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा । एवं समिदाज्यचरून् पृथक् पृथग् हुत्वा असम्भवे आज्येनैव विरजा होमं कृत्वा, अन्यदाज्येन जुहुयात् । अग्नये स्वाहा, प्रजापतये स्वाहा, आत्मने स्वाहा, अन्तरात्मने स्वाहा, परमात्मने स्वाहेति हुत्वा, यथा दैवतं त्यागं कृत्वा, स्विष्ट कृदादि होमं समाप्य, ब्रह्मणे सुवर्ण साज्य पात्रञ्च दत्वा, समासिञ्चत्वित्यग्निमु पतिष्टेत् । अत्र केचित् अग्नेः सवितृ-(सावित्री) प्रवेशं पूर्णाहुतिञ्च कुर्य्यादित्याहुः । ततो प्राते अवि(स्व) इति त्रिस्त्रिरेकैकं जिघ्रन्नात्मन्यग्नीन् समारोप्य, गुरवे सर्व्वस्वं दत्वा, हरिं स्मरनूर्द्ध वाहुस्तिष्ठन्देवान् सं स्मृत्वा दक्षिणाः कृत्वा (दत्वा) तेनोपदिष्टः ॐ भूर्भुवः स्वः स्वाहेति सन्न्यस्तं सर्व्वं मयेति,

---

१(*) 'प्रातरीता' इत्यत्र प्रावरेत इत्यन्यः पाठः । 'रमासृङ् मांस मेदोऽस्थिमज्जा शुक्राणि धातवः' । 'देहस्य रुधिरं मूलं रुधिरे णैव धार्य्यते' । 'तद्द विशुद्धं हि रुधिरं बलवर्ण-सुखायुषाम् । युनन्ति प्राणिनां प्राणाः शोणितं ह्यनुवर्त्तते'

इत्यादि वैद्यके । श्रीसूक्ते, एतत् सूक्तमस्ति । अत्र काचित् परिहृत्तिर्दृश्यते ।

,, उपनिषदि, अन्नमयादि पञ्चकोषाः सन्ति । चतुर्विंशति तत्त्वाणि च । एतत् श्रीसूक्ते प्रोक्तम् ।

२(†) 'देवान् प्रदक्षिणी कृत्य' । 'देवान् सा दक्षिणाः कृत्वा' इत्थं पाठान्तरमस्ति ।

त्रिरुपांशु त्रिरुच्चैः त्रिरत्युच्चैश्चोक्त्वा, जल समीपं गत्वा स्नात्वाच, अभयं सर्व्वभूतेभ्यो मत्तः स्वाहेति त्रिरञ्जलिं क्षिप्त्वा, 'युवासुवासा' इत्यनेन काषायं कौपीनं वासश्च परिधाय, सखे मां गोपायीतेति सुरम्यं १(*) वैणवं पालाशं वा दण्डं गृह्णीयात्। अत्र पुत्रकामो गृहस्थः शङ्खेन, पुरुष सूक्तेन दण्डमभिषिच्य दद्यादिति शिष्टाचारः।

ततः शिखामुत् पाट्य ॐभूः २(†) स्वाहेति अग्नौ जले वा हुत्वा, तथै वोपवीतं हुत्वा, येन देवापवित्रेणेति मन्त्रेण जलं पवित्रम्, यदस्य पारइति शिक्यम्, सावित्र्या कमण्डलुम्, महाव्याहृतिभिः काष्टमयं भोजन पात्रम्, इदं विष्णुरिति सप्तदशीच गृहीत्वा ॐभूः तीर्थयामीति व्यस्त समस्ताभि(र्व्याहृतिभिः सप्तभिः)।

महर्जन इत्यन्तैः तर्पयित्वा, ॐभूः स्वधा, ॐभुवः स्वधा, ॐस्वः स्वधा, ॐभूर्भुवः स्वर्महर्जनः स्वधेति पितृंस्तर्पयित्वा, उदुत्यं, चित्रम्, तच्चक्षुः, हंसः शुचिषत्, नमोमित्रस्येति, येनेदमञ्जौ, नमः सवित्र इति पौराणमन्त्रेणच सूर्य्यमुपस्थाय, पुनः स्नात्वा, जङ्घे क्षालयित्वा, ॐचिदिति ब्रह्माहमिति, इदं सर्व्वमोमिति, ब्रह्मवा स्वराड्ज्योतिर्वर्ष-प्रवेशे दोष एषः, तपति वेद्यमे वैतद्य एवं वेदोपवेद (देव) न परतां-जपित्वा, त्रिसहस्रगायत्रीर्जपेदेतिः ३(‡)।

अथ तद्धर्म्माः कथ्यन्ते।

प्रातरुत्थाय ब्रह्मणस्पते इति जपित्वा, दण्डादी निनिधाय, मूत्रपुरीषयोः गृहस्थ-चतुर्गुणं शौचं कृत्वाचम्य, पर्व्वद्वादशी वर्जम्, प्रणवेन दन्तधावनं कृत्वा, तेनैव मृदावहिः कटिं प्रक्षाल्य, जलतर्पण वर्जं स्नात्वा पुनर्जङ्घे प्रक्षाल्य, वहिःद्वित्रिचतुपञ्चमसप्तान्यतमपर्व्व-

---

१(*) 'सुव्यं' सुव्यं च इति भिन्नः पाठः। शङ्खन-इत्यत्र 'शङ्खेन वारिणा' इति भिन्नः पाठः।

२(†) 'अग्निरिवशिखा यस्य यस्य ज्ञानमयी शिखा' इति। 'शिखां यज्ञोपवीतश्च वहिः सूतं त्यजेद्बुधः' इति च। ॐभूः इति मन्त्रो लिखितः। ॐ भूः तर्पयामिति, एवमपि पाठः स्यात्।

३(‡) 'दशभि र्जन्मजनितं शते नच पुराकृतम्।
त्रि युगन्तु सहस्रेण गायत्री हन्ति पातकम्'॥ इति स्मृतिः।
'गायत्री वा इदं सर्व्वं यत् किञ्च भूतम्' इति श्रुतिः।
'गायति च त्रायति च'। 'गायन्तं त्रायते यस्मात् गायत्रीत्वि सतः स्मृता' इति च स्मृतिः।

वेष्टित वस्त्रादीनि गृहीत्वा, मार्जनान्तं कृत्वा, केशवादीन् नमोन्तनामभि स्तर्पयित्वा ॐभू १(*) स्तर्पयामीत्यादि-व्यस्त-समस्त-एकादश-नव-द्वित्रिचतुः सप्तान्यतमपर्व्ववेष्टितान् वृक २(†) गोवालरज्ज्वातु चतुरङ्गुलान्।

1970. एकोवालदशोदण्डो गोवाल सदशोभवेत् ॥२४३५॥
अनग्निरग्निमुत्पाद्यनित्येन विधिना ततः।
नित्योविधिः पृष्टोदिवि विधिः सप्राग विहितः ॥२४३६॥
स्वाग्नावेवाग्निमान् कुर्य्यादपवर्गोऽय मादितः।
आज्यं पयोदधीत्येतत्त्रिविद्वान् जलमेववा ॥२४३७॥
ॐभूरित्यादिना प्राश्य रात्रिंचोपवसेत्ततः ३ ‡)।
अथादित्यस्यास्तमयात् पूर्व्वमग्नीन् विहृत्य सः ॥२४३८॥
आज्यमग्नौ गार्हपत्ये सुसंस्कृत्येतर स्रुचा।
पूर्ण पात्राऽऽवनीयेतु जुहुयात् प्रणवेनतु ॥२४३९॥
ब्रह्माण्व धानमेतत्स्या दग्निहोत्रेऽस्ते ततः।
सत्रीये गार्हपत्यस्य दर्भानुत्तरतीऽत्रतु ॥२४४०॥
पात्राण्यासाद्य दर्भेषु ब्रह्मासनमेवतु ४(०)।
जागृयाद्रात्रिमेतांवैयावद्ब्राह्म-मुहुर्त्तकः ॥२४४१॥
अग्निहोत्रं स्वकालेतु हुत्वा प्रातस्त्वनन्तरम्।
इष्टिं वैश्वानरीं कुर्य्यात् प्राजापत्यामथापिवा ॥२४४२॥

1971 **जाबाल श्रुतौतु—**

तद्धैके प्राजापत्यामेवेष्टिं कुर्व्वन्ति, तदुतथा नकुर्य्यादाग्नेयीमेव कुर्य्यात् त्रैधातवीयामेव कुर्य्यादित्युक्तम्।'

---

१(०) ॐ भूः इत्यादिमन्त्रे अ-उ-म- एतत्त्रय योगाद ॐकार इति महामन्त्रः प्रज्ञातः। अत्रार्द्ध मात्राऽनुच्चार्य्या। ॐकारवृत्तं माण्डुक्योप निषदि विद्यते। 'तस्य वाचकः प्रणवः' इति योगसूत्रम्। 'सर्व्वमन्त्र प्रयोगेतु ॐ इत्यादौ प्रयुज्यते' इति स्मृतिः। ॐ इत्येकाक्षर ब्रह्म व्याहरन् मामनुस्मरन्' इति गीतायाञ्च। अकारादि मकारान्त वर्णत्रये ब्रह्मविष्णु महेश्वराः क्रमशः सन्ति। अत्र ॐ इति मन्त्रोल्लेखे अकारः वासुदेव इति। प्रजापति श्चेति।

२(†) 'ग्र:. गो..'ल' इति पूर्व्वमुक्तम्। गोः पुच्छस्थवालरज्जुः। अत्र, ऐणोवाल इत्यन्यः पाठः। ~~ मृगः। तद् वालजाता रज्जुः।

३(‡) इति रू ... ाश्य मन्त्रंजपन् रात्रिं नयेदिति।

४(०) 'ब्रह्मान्वासन एव' इत्यपि पाठः स्यात्। 'अपिहं वैप्राणः प्राणमेव तथा करोति' इति श्रुतेरन्तरा पाठः पतितः।

**तेनात्र विकल्पः—**

अना हिनाग्नेस्तु इष्टिस्थाने वैश्वानर आग्नेयोवा चरुर्भवतीति माधवः ।

1972. **कात्यायनस्तु—**

आत्मन्यग्नीन् समारोप्य वेदिमध्यस्थितोहरिम् ।

ध्यात्वा हृदि त्वनुज्ञातो गुरुणा प्रैषमारभेत ॥२४४३॥

1973. **कपिलः—**

विधिवत् प्रैषमुक्त्वाथ त्रिरुपांशु द्विरुच्चकैः ।

अभयं सर्व्वभुतेभ्योमत्तः स्वाहेत्यथोभुवि १(*) ॥

निनयेद्व दण्डशिक्यादि गृहीत्वाथ वहिर्व्रजेत् ॥२४४४॥

1974. **बौधायनः—**

सखेमेत्यादि, २(†) अथैषां वचनानामेकवाक्यतया प्रयोगः प्रदर्श्यंते। तत्र सन्न्यासाश्रमाधिकार सिद्ध्यर्थं स्वस्य नवश्राद्ध-षोड़शश्राद्ध-सपिण्डनानि साग्निः पार्व्वणेन विधिना, अनग्निरेकोद्दिष्ट विधिनाच, सन्न्यासाश्रमाधिकारसिद्ध्यर्थं,स्वस्य नवश्राद्ध-षोड़श श्राद्ध-सपिण्ड-नानि, साग्निः पार्व्वण विधिनाऽनग्निरेकोद्दिष्ट विधिनापि कुर्य्यात्।

1975. शक्तश्चेद्वोधायनोक्तं दैवं आर्षं दिव्यं पित्र्यं मातृकं मानुषं भौतिकंचेति पूर्व्वोक्त प्रकारेण सप्तश्राद्धानि। नान्दीश्राद्धंविश्वेदेव-पूर्व्वकं ३(‡) कृत्वाऽन्ते, स्वस्य नवश्राद्ध सपिण्डनानि कुर्य्यात्। ततोऽनाश्रमीचेत् सन्न्यासयोग्यता सिद्ध्यर्थं चतुः कृच्छ्रान्, आश्रमीचेत्ततकृच्छ्रं कृत्वा, उदगयने सुमुहूर्त्ते एकादश्याम्वा, साग्निरमावास्यायां पौर्ण-मास्यां वा, यथा पर्वणि प्राजापत्यादीष्टिः स्यात् , तस्मिन् कालदेशादि-संकीर्त्य, परमहंसादि सन्न्यासग्रहणमहं करिष्ये इति सङ्कल्प्य, गणपं सम्पूज्य, पुण्याहं वाचयित्वा मातृकापूजा पूर्व्वकं वृद्धिश्राद्धं कृत्वा, अस्तमयात् प्रागौपासन समिधा होमं विधेयम्। आहिताग्निस्तु

1976. गार्हपत्यम् , विधुरोऽग्निहोत्रं, त्रिकाण्डमण्डनोक्तरीत्या कुशपत्न्या-सह, पवमानाद्यन्तं पूर्णाहुत्यन्तं वाधानं कृत्वा, तमग्निं स्थापयेत्। ब्रह्मचारी विधुरश्च व्याहृतिभिः प्रणवेनचाग्निमादायान्वग्निरूप-

---

१(*) 'वेदि मध्यस्थितं हरिम्' इत्यन्यः पाठः। 'अभयं सर्व्वभूते भ्योदत्वा यश्चरते मुनिः। न तस्य सर्व्वभूतेभ्यो भयमुत्पद्यते क्वचित्' इति महाभारते।

२(†) खेमं सैत्याद्विति भिन्नः पाठः।

३(‡) अथ इत्यतः इति भिन्नः पाठः।

क्वचिद् इ विश्वे देवाः, सत्यवसूच, एवं पाठोऽस्ति।

समिन्पाणितु गृष्टोद्विवीति तं प्रतिष्ठाप्य, तेनैव समिध्यताम्, सवितुः, ततसवितुः, विश्वानिदेव सवितर्दुरितानीति तिसृभिः समिधोऽभ्याद्ध्याद्। एवमग्निमृद्धिं कृत्वा, शिखाकक्षोपस्थवर्जं वपनं कृत्वा शक्तुमुष्टित्रयं प्राश्याचम्य, पयोदधियुतमाज्यमपोवा, ॐ भूः सावित्रीं प्रविशामि१(।) ततसवितुर्व्वरेण्य मिति प्राश्याचम्य पुनस्तदापः अं भुवः सावित्रीं प्रविशामि, 'भर्गोदेवस्य धीमहि' इति प्राश्याचम्य पुनरादाय 'अं स्वः सावित्रीं प्रविशामि, धियो यो नः प्रचोदया दिति' प्राश्याचम्य चतुर्थमादाय अं भू र्भुवः स्वः सावित्रीं प्रविशामि, ततसवितुः प्रचोदयादिति प्राश्याचामेत्। ततः प्राक्स्थापितेऽग्नौ आज्यं संस्कृत्य, चतुर्व्वारं द्वादशकृत्वोवा, ततस्रुच्यादाय १(*) अं स्वाहा परमात्मने इदं न ममेति हुत्वोपवसेत्। ततो वैश्यदेवं सायं होमञ्च कृत्वा, अग्नेरुदग्भागे कुशानास्तीर्य्य दण्डादीनि दशपञ्चवा, वस्तून्यासाद्य ब्रह्मसदने कृष्णाजिनोपविष्टोरात्रौ जागरणं कृत्वा, प्रातःस्नानहोमानन्तरं वैश्वानरीं वा प्राजापत्यां वा (आ)ग्नेयीमिष्टिं कुर्य्यात्। अनाहिताग्निस्तु वैश्वानराद्यन्यतम-स्थालीपाकं कुर्य्यात्। ततः सति सम्भवे।

जुहुयाद्विरजामन्त्रैः प्राणाऽपानादिभिस्ततः।
अनुवाकान्तमेकाग्रः समिदाज्यं पृथगिति ॥२४४५॥

1977. शिवगीतोक्त प्रकारेण, प्राणादिपञ्चनाम-पुरुषसूक्त-चरुहोम-पूर्व्वकं-विरजाहोमं च कृत्वा, २(†) होमशेषं समाप्य, 'याते अग्ने' इति मन्त्रेणात्मनि अग्निं त्रिसमारोप्य भस्मादाय, अग्निरिति भस्मेति मन्त्रेणाङ्गानि विमृज्य, गुरवे-सर्व्वस्वं, ऋत्विग्भ्यो दक्षिणाञ्च दत्वा, ब्रह्मणे मधुपूर्ण-तैजसपात्रं दत्वा, दारु पात्राण्याहवनीयेऽग्नौ क्षिप्त्वा अश्म मृण्मयानि जले प्राश्य कृष्णाजिन माद्धीत, जलेवा क्षिपेत्। ततो गुरूपदिष्ट मार्गेण हरिं स्मरन्नूर्द्ध्व बाहुस्तिष्ठन् देवान् साक्षिणः कृत्वा, अं भूर्भुवः स्वः सन्न्यस्तं मया इति निरुपांशुः त्रिरुच्चैश्च प्रैष मुक्त्वा, जल समीपमेत्य स्नात्वा, अभयं सर्व्वभूतेभ्यो-मत्तः स्वाहेति त्रिर्जलाञ्जलिं क्षिपेत् ॥

---

१(*) अत्र ॐ इत्यत्र अं इति पाठो विद्यते। अत्र तत् श्रुत्या प्रागुक्त सावित्र्या वा इति।

२(†) 'हुत्वोपविशेत्' इत्यन्यः पाठः। अत्र विरजा होमः प्रागुक्तः। वि-गतं दुःखपापकामादिकं येन होमेन स विरजा होमः श्रुत्यादिभिर्ज्ञेयः।

1978. **हरिध्यानं कात्यायनः—**

पञ्चायुधधरं सौम्यं सर्व्वाभरणभूषितम् ।
ध्यात्वादित्यं त्वनुज्ञातो गुरुणा प्रैषमीरयेदिति ॥२४४६॥

ततो 'युवासुवासा' इति मन्त्रेण काषायं कौपीनं वासश्च परिधाय, 'सखे मां गोपायेति' दण्डं गृह्णाति । 'यदस्य पारे रजसः' इति शिक्यम् 'ये न देवा पवित्रेणे'ति जल पात्रञ्च,अं कमण्डलुं महाव्याहृतिभिः ब्रह्मभाजनंच गृहीत्वा शिखा मुत्खाय अं भूः स्वाहेत्यग्नौ जले वा हुत्वा, तथैवोपवीतं हुत्वा, अरणीद्वयं विसृज्य'ॐ १(*) मित्युक्त्वा, बन्धून् विसृज्य विहरेदिति ॥

—*—

## इति सन्न्यासविधिः ॥

—*—

### आतुर-सन्न्यासविधिः ।

आतुराणान्तु सन्न्यासे न विधिर्नचवै क्रिया ।
प्रैषभावं समुच्चार्य्य सन्न्यासं तत्र कारयेत् २(†) ॥२४४७॥
अथ चेत् सोऽपि जीवितः सन्न्यास विधि माचरेदिति ।
उत्पन्ने संकटे घोरे चोर व्याघ्रादि गोचरे ।
भय-भीतस्य सन्न्यासं अङ्गिरा मुनिर ब्रवीत् इति ॥२४४८॥

### अथ सन्न्यासिनां धर्म्मः ।

तिसृष्वपि च सन्ध्यासु मृदा जङ्घे प्रक्षाल्य स्नात्वा, गायत्र्या त्रिर्जलाञ्जलिं दत्वा, अं भूः तर्पयामि, इत्यादि व्यस्त समस्ताभिर्व्याहृतिभि र्महर्नम स्तर्पयामीति तर्पयित्वा, ३(‡) अं भूः स्वाहेति स्वाहा शब्दान्तैः, अं भूः स्वधेति स्वधा शब्दान्तै श्चैभिरेव पुनस्तर्पयेदिति केचित् । तत उदुत्यम , चित्रम् , तच्चक्षुः, हंसः शुचिषत्, न मोमित्रस्येति च ।

---

१(*) - 'रावणी त्रय' इत्यन्यः पाठः । अत्र 'आत्मौपम्येन सर्व्वत्र विहरे'दिति ।

२(†) अचिकित्स्य-रोगिणां विपन्नानां निरुपायाणां वृद्धादीनां अयं सन्न्यासः स्यात् ।

३(‡) सर्व्वत्र 'अंनमः' इत्यत्र ॐ नमः इति भिन्नः पाठः ।

नमः सवित्रे जगदेक चक्षुषे,
जगत्प्रसूति स्थितिनाश हेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे,
विरिञ्चि नारायण शङ्करात्मने ॥२४४६॥

इत्यादित्य मुपतिष्ठेत । तत आचम्याञ्जलि मापूर्य्य प्रणवेन जलमादाय, सव्याहृति गायत्र्याच त्रिः क्षिप्त्वा, गायत्रीं जपेत् । उदिते सूर्य्ये प्रणवेन व्याहृतिभि र्वार्घ्यं त्रिर्दत्वा, 'मित्रस्य चर्षणी' त्याद्यैः पूर्व्वोक्त सौर मन्त्रैः इदं विष्णुः, अग्निर्देवो, ब्रह्मज ज्ञानमिति चोपस्थाय, सर्व्वभूतेभ्यो नमः इति प्रदक्षिण मावर्त्य, नमस्कृत्य ओम् आदित्याय विद्महे सहस्राक्षाय धीमहि तन्नः सूर्य्यः प्रचोदयात् १(*) । इति त्रिर्जपेत् । एवं त्रिकालं सन्ध्यां विष्णुपूजां ब्रह्मयज्ञञ्च कुर्य्यात् । एवं प्रणवजपञ्च ॥

## अथ भिक्षाचारः ।

विधूमे सन्नमूषले व्यङ्गारे भुक्त वर्ज्जने २(†) ।
कालेऽपरा भूयिष्ठे नित्यं भिक्षां पतिश्चरेत् ॥२४५०॥

इत्युक्ते काले, 'उद्व(ह)यमि'त्यादि चतसृभिर्ऋगिभ रादित्यमुपास्य, 'आकृष्टेने'ति प्रदक्षिणं कृत्वा, येते पन्था' इति जप्त्वा, योऽसौवि(श्वा) ष्णवाख्य आदित्ये पुरुषोहि सद्धदि स्थितः सोऽहं नारायणोदेव इति ध्यात्वा प्राणानायस्य प्रणस्य तन्देवं ।

त्रिदण्डं दक्षिणे कृत्वा ततः सन्ध्याय बाहुना ।
पात्रं वामकरे क्षिप्त्वाश्लिषयेद्द दक्षिणेनत्विति ॥२४५१॥

बौधायनोक्तरीत्या त्रीन् पञ्च सप्तवा गृहस्थगृहान् गत्वा 'भवति भिक्षां देहीति, भिक्षां याचयित्वा गृहीत्वाथ 'पूर्णमसि-पूर्णं मेभूयात्' इति जपित्वा मौनी पुनरावृत्य शुचौदेशे शुचिर्भूत्वा चतुरः पिण्डान् निर्वपेत् । 'ॐ (अं)भूःस्वधानमः' इत्यादि व्यस्त-समस्ताभिःव्याहृतिभिः सूर्य्यादिदेवेभ्योभूतेभ्यश्च सार्वभौतिकं

---

१(*) ब्रह्मचारि-परिव्राट्-भिक्षुक-सन्यासि-लिङ्गिना दीनां निर्दोष भक्ष्य संग्रहे भिक्षैव पवित्रोपायः धर्म्मशास्त्रे विहितः । एषा सूर्य्यस्य गायत्री । यथा शक्ति जपे दिति । 'पथि चरेत्' इति पाठान्तरम् ।

२(†) अथ भुक्त वर्जने इत्यन्यः पाठः ।

बलिं भूमौ क्षिप्त्वा शेषं भुक्त्वा प्रणवेन षोड़शं प्राणायामांश्चरेत् ।

1979. एव मनुतिष्ठन् ब्रह्मभूयाय कल्पत इत्याह भगवान् बौधायनः १(*) ।

1970. **भृगुः—**

य(प)तिहस्ते जलन्दद्याद्भैक्ष्यन्दद्यात् पुनर्जलम् ।
भैक्ष्यं पर्व्वत मात्रं स्यात्तज्जलं सागरोपमम् इति ॥२४५२॥
भारते आदि पर्व्वणि, उत्तरया........
आस्येनतु यदाहारं गोवन्मृगयते मुनिः ।
अथास्य लोकः सर्व्वोऽयं सोऽमृतत्वाय कल्पते, इत्युक्तम् ।
मुनेर्गो मुखत्वमपि विहितम् ॥

1971. **शङ्खः—**

एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र शालाग्निस्थण्डिलेषु निकेतनः, इति ।

1972. **मात्स्ये—**

अष्टौमासान् विहारः, स्याद्यतीनां संयतात्मनाम् ।
एकत्र चतुरोमासान् वार्षिकान्निवसेत् पुनः ॥२४५३॥
मपिपक्षामासा इति श्रुतेः २(†) ।
अविमुक्ते प्रविमुक्ते प्रविष्टानां विहारस्तु न विद्यते ॥२४५४॥

1973. **बाधे मासद्वय—अत्रिः—**

भिक्षाटनं जपः स्नानं ध्यानं शौचं सुरार्च्चनम् ।
कर्त्तव्यानि यदेतानि सर्वथा नृपदण्डवत् ३(‡) ॥२४५५॥
मञ्चकं शुक्लवस्त्रञ्च स्त्री कथा लौल्यमेव च ।
दिवास्वापश्च पानञ्च यतीनां पतनानि षट् ॥२४५६॥

---

१(*) अपरं तीर्था श्रमादिनाना सन्न्यासिनां दशसंख्यकानां इत्थं हस्तङ्कर दिग्विजये विद्यारण्य कृते अस्ति। कौर्म्मं पुराणे उपरि भागे यति धर्म्मोऽध्याये च विद्यते। एवं श्रीमच्छङ्कराचार्य्य कृते सप्तम सूत्रेऽपि अस्ति। तथा मन्त्रशास्त्रे महानिर्व्वाणतन्त्रे अष्ट मोल्लासे सन्न्यासग्रहण-विधानादीनि सर्व्वाणि च। ह्रीं त्र्यम्बकं यजामहे इत्यारभ्य 'तीर्थव्रत तपोदान सर्व्व यज्ञ फलं लभेत्'। इत्यन्तानि सम्यगुक्तानि।

२(†) अत्र बाधे प्रतिवन्धे इति। राधेतु पाठे—वैशाखमासे इति।

३(‡) अत्र 'यतेस्तानि' इति भिन्नः पाठः।

आसनं पात्र शिक्येच धारयेल्लोह दण्डवत् ।
मञ्चांशुकञ्चे त् सदैव अर्थाय शिष्य संग्रहः ।
दिवास्वापोवृथाजल्पः यतेर्व्याधिकरानि षट् १(*) ॥२४५७॥

1974. **दक्षः—**

नाध्येतव्यं न वक्तव्यं वेदाध्ययनवत् सदा ।
अध्येतव्यश्च श्रोतव्यं शिष्ये वेदस्य सर्व्वदा ॥२४५८॥

1975. **याज्ञवल्क्यः—**

यति-पात्राणि मृद्वेणु दार्व्वलावुमयानि च ।
सलिलैः शुद्धिरेतेषां गोवालैश्चावमर्षणम् ॥२४५९॥

1976. **मदनरत्ने—**

त्रिः पित्रर्थं कल्पितं पूर्व्वमन्नं देवादिकारणात् ।
वर्जयेत्तादृशीं भित्तां परवाधा-करीन्तथा ॥२४६०॥

1977. **बृहस्पतिः—**

स्नानं सुरार्च्चनं ध्यानं प्राणायामोवलिः स्तुतिः ।
भित्ताटनं जपः सन्ध्या त्यागः कर्म्मफलस्य च ॥२४६१॥
एव मन्येऽपि यति धर्म्मा माधवीयादौ ज्ञेयाः ॥
इति श्रीमदनन्तभट्ट विरचिते विधान पारिजाते
सन्न्यास विधानम् ॥

—*—

## अथ योगः २(†) ।

—*—

1978. **अत्र याज्ञवल्क्यः—**

सन्निरुध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च ।
भयं हृत्वा च भूतानां अमृती भवति द्विजः ॥२४६२॥

---

१(*) एव सौम्यवेशश्च इति भिन्नः पाठः ।

२(†) सम्प्रति चतुर्थाश्रम कथन प्रसङ्गे योगउच्यते, यथाहि,—योगः समाधिः । 'हिरण्य—गर्भोयोगस्य वक्ता नान्यः पुरातनः' इति व्यास भाष्ये । 'एष वैपरमोधर्म्मः यद योगेनात्म-दर्शनम्' । 'नास्ति योगसमं वलम्' । 'तस्माद योगी भवार्जुन !' । अयं योगः सम्प्रज्ञा-तासं प्रज्ञातभेदेन द्विविधः ।' अष्टाङ्गरूपश्च । अस्य चरम फलं कैवल्यम् । अन्य दुपनिषदि योगदर्शने योगचिन्तामनौ च पुष्कलमस्ति ।

कर्त्तव्याशयशुद्धिस्तु भिक्षुकाणां विशेषतः ।
ज्ञानोत्पत्तिनिमित्तत्वात् स्वातन्त्र्यकरणाय च ॥२४६३॥
अवेद्या गर्भवासाश्च कर्म्मजा गतयस्तथा ।
आधयो व्याधयः क्लेशाः जरा रूपविपर्य्ययः ॥२४६४॥
भवो जातिसहस्रेषु प्रियाप्रियविपर्य्ययाः ।
ध्यानयोगेन सन्दृश्याः सूक्ष्म आत्मनि संस्थिताः ॥२४६५॥
नाश्रमः कारणं धर्म्मे क्रियमाणं भवेद्धि सः ।
अतो यदात्मनोऽपथ्यं परेषां न तदा चरेत् ॥२४६६॥
सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्म्मतः ।
संयतेन्द्रियता विद्या धर्म्मः सर्व्व उदाहृतः ॥२४६७॥
अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् ।
ध्येय-आत्म स्थितोऽसौ च हृदये दीपवत् प्रभुः ॥२४६८॥
शरीरे सत्यतां ज्ञात्वा शुक्रशोणितनिर्म्मिते १(*) ।
फेणबुद्बुदसंकाये जन्ममृत्यु जरान्विते ॥२४६९॥
स्त्रीपुंसयोगेऽविशुद्धे शुक्रशोणितसम्भवे ।
पञ्चवायून् स्वयं षष्ठ आदत्ते युगपत् पुमान् २(†) ॥२४७०॥
इन्द्रियाणि मनः प्राणो ज्ञानमायुः सुखं स्मृतिः ( धृतिः ) ।
धारणा प्रेरणा दुःखमिच्छाहंकार एव च ॥२४७१॥
प्रयत्न आकृतिर्वर्णः स्मरद्वेषौ भवत्तयौ ।
तस्मै तदात्मजं सर्व्वं अनादेरादिमिच्छतः ॥२४७२॥
प्रथमे मासि संक्लेदभूतो धातुविमूर्च्छितः ।
मास्यर्वुदं द्वितीये तु तृतीये इन्द्रियैर्युतः ॥२४७३॥

---

१(*) अन्यत्रच—'अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्म्मसञ्चयः' इति स्मृतौ ।
'मनुष्ये कदलीस्तम्भे निःसारे सारमार्गणम् ।
२(†) यः करोति स संमूढो जलबुद्बुद-सन्निभे' ॥ इतिच स्मृतौ ।
अन्यद्द योगदर्शनभाष्ये 'अनित्याशुचि' इत्यादि सूत्रे । गर्भोपनिषदि चाप्यन्यदस्ति ।
,, 'शरीरं चणविध्वंसि कल्पान्तस्थायिनो गुणाः' इति च ।
शीर्य्यते रोगादिना इति शरीरम्' वैयाकरणाः प्रोचुः । अध्यात्मशास्त्रे उपनिषदिवह्नस्त ।
,, 'पञ्च ... स्वयं षष्ठ आत्मा दत्ते पुमांस्ततः' इति भिन्नः पाठः ।

आकाशान्तैः पञ्चभूतैः क्रियाचोत् पद्यते पुनः।
रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्द्दवम्।
भूमेर्गन्धं तथा घ्राणं गौरवं मूर्त्तिमेव च ॥२४७४॥
आत्मा गृह्णात्यजः सर्व्वं तृतीये स्पन्दते ततः १(*)।
तत-इति चतुर्थे मासि।
दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्।
वैश्यं (भैक्ष्यं) असङ्गतश्चापि तस्मा कार्य्यं प्रियं स्त्रियाः २(†) ॥२४७५॥
स्थैर्य्यं चतुर्थेत्वङ्गानां पञ्चमे शोणितोद्भवः।
षष्ठे बलस्य वर्णस्य नखरोम्णांश्च संभवः ॥२४७६॥
मनश्चैतन्ययुक्तोऽसौ नाड़ीस्नायुशिरायुतः।
सप्तमे चाष्टमे चैव त्वङ्मांसस्मृतिमानपि ॥२४७७॥
नवमे दशमे वापि प्रवलैः सूतिमारुतैः।
निःसार्य्यते वाण इव यन्त्रच्छिद्रेण सत्व(ज्व)रः ॥२४७८॥
पुनर्धात्री पुनर्गर्भमोजस्तस्य प्रधावति।
अष्टमे वायुतो गर्भो ( त्तो ) जातः प्राणैर्वियुज्यते ॥२४७९॥
एवञ्चानन्तजन्मानि प्राप्नोत्येव स्वकर्म्मतः ३(‡)।
कर्म्मभोगस्तु बलवान् इति मत्वाश(स)ङ्गं व्रजेत् ॥२४८०॥
आत्मज्ञः शौचवान्दान्त स्तपस्वी विजेतेन्द्रियः।
धर्म्मकृद्वेदविद्द्याति साधको मुक्तिगो भवेत्।
आचार्य्योपासनं वेदशास्त्रार्थेषु विवेकता ॥२४८१॥
तत् कर्म्मणामनुष्ठानं सङ्गः सद्भिः गिरः शुभाः।
सर्व्वद्वैश्वरध्यानवतेन्मो दस्य साधक(न)मिति ॥२४८२॥

इति विद्वज्जनकृपापात्रीभूत-श्रीमत्परमवैदिकानन्त भट्ट विरचिते
विधानपारिजातनिबन्धे योगः समाप्तः ४(ऽ) ॥

—※—

१(*) प्रसंगाद्द देहोत्पत्ति रुच्यते तज्जन्यत्वेन अनित्यत्व प्रदर्शनार्थम्। अत्र भवाप्नयो इत्यन्यः पाठः। तस्यं तत् इत्यपरः पाठः।
अपरं कठोपनिषदि, तट्टीकायाञ्चास्ति। अत्र पाठच्युतिरस्ति।

२(†) अन्यद्द वैद्यकी गर्भोपनिषदि तद्द व्याख्याने पुराणेषु च।

३(‡) पातञ्जलि योगदर्शने, समाधिः, साधनः, विभूतिः, कैवल्यम्, इति चत्वारः पादाः सन्ति।
अपरं योगि याज्ञवल्क्ये, हठ प्रदीपिकायां, योगचिन्तामणौ, शिव गीतोपनिषत्सु-विद्यते।

## अथ परिव्राजकसंस्कारविधानम् ।

—*—

1979. **स्मृत्यर्थसारे—**

ग्रामाद्बहिः प्राचीमुदीचीं वा दिशं मृतं यतिं नीत्वाऽश्वत्थमूले नदीतीरेवा शुचौ देशे, दण्डप्रमाणां भूमिं व्याहृतिभिः खात्वा प्रणवेण महाव्याहृतिभिस्तां भुवं सम्प्रोक्ष्य, दक्षिणाग्रान् दर्भानास्तीर्य्य, तच्छरीरं स्नापयित्वा सावित्र्या प्रोक्ष्य, पुरुषसूक्तेण पञ्चरत्नोदकैर भिषिच्य, नारायणं महाज्ञेयमित्यभिमन्त्र्य, गन्धपुष्प धूपादिभिः सम्पूज्य, गर्ते पञ्चरत्नाणि हिरण्यशकलञ्च निधाय, विष्णो हव्यं रक्षस्व, इति शवं तत्र निधाय इदं विष्णुर्विचक्रम, इति मन्त्रेण तद्दक्षिण हस्ते दण्डं दत्वा, यदस्य मारेरजस इति मन्त्रेण सव्यहस्ते शिक्यं दत्वा, येन देवाः पवित्रेणेति मन्त्रैण मुखे पवित्रं जल दत्वा, सावित्र्योदरे ब्रह्मभोजनपात्रन्दत्वा,—सावित्र्या कमण्डलुं गुह्ये दत्वा, 'हंसः शुचिषदिति' हृदये जपेत् । पुरुषसूक्तन्तु भ्रूमध्ये जप्त्वा, ब्रह्मजज्ञानमिति मूर्द्धि जपेत् । ततोऽश्मना परशुना च शङ्खेन वा, भूमिर्भूमिमगान् माता मातरमभ्यगात्, भूयास्मत्पुत्रैः पशुभिर्य्योनौद्वेष्टसभिद्यतामिति— मन्त्रेण व्याहृतिभिर्वा पुत्रकामो मूर्द्धानं भित्वा । व्याहृति भिर्व्वा पुनः पुत्रकामो मूर्द्धाणंभित्वा त्रिरेवामन्त्र्य, दर्भैराच्छाद्य, पुरुषसूक्तं जपन् प्रणवेण गर्त्तं पूरयित्वा मृत्तिकया च्छाद्य विक्ति(वि)सुगितिदशहोतृभिरनुमन्त्रयेत् । नान्यसंस्कारः कार्य्यः—तस्य पूर्व्वमनुष्ठितत्वादिति । तदेतत् परमहंस विषयत्वम् १(*)।

**तथाहि,—**

सर्व्वसङ्गनिवृत्तस्य ध्यानयोगपरस्य च ।
न तस्य दहनं कार्य्यं नाशौचं नोदकक्रिया ॥२४८३॥

कुटीचकन्तु दहेत पूरयेच्च बहूदकम् ।
हंसो जलेषु निक्षिप्यः परं हंसं प्रपूरयेत् ॥२४८४॥

यतिं पुरुषसूक्तेण स्नापयित्वावटं गतः ।
प्रणवेन द्व्यष्टवारं प्रोक्षयेद्देहं सर्व्वतः ॥२४८५॥

'विष्णो हव्यं रक्षस्वेति' शवं तत्रनिधापयेत् ।
'इदं विष्णिणति' मन्त्रेण दण्डं दक्षकरे ददेत् ॥२४८६॥

---

१(*) ननु गृहस्थ परं बोध्यम् । गृहस्थानां धर्म्मशास्त्रे व्यवहारा अन्यथाउक्ता । समर शास्त्रे च—'परिव्राड् योगयुक्तश्च रणेचाभिमुखे हतः' 'ततो व्रतानां परमं हंस व्रत मनुत्तम्' इत्यपि । इति ।

मूर्द्धानं भूर्भुवः स्वरित्युक्त्वा शङ्खेन भेदयेत् ।
गर्त्तं पुरुषसूक्तेन लवणेन प्रपूरयेत् ।
शृगालश्वादिरक्षार्थं सम्यग्गर्त्तं प्रपूरयेत् ॥२४८७॥

यदि शृगालादिभिर्भक्ष्येत तर्ह्यनावृष्ट्यादित्वं भवेत् इति शौनकोक्तेः । कुटीचकस्य दाहः कार्य्यः, यथा सर्व्वं प्राणिवत् कृत्वाऽग्निं प्रोज्वाल्य, साग्नेर्दक्षिणकरे अयन्ते योनिरिति मन्त्रैण, अवरोह्य चितौ शवमारोप्य 'अग्निनाग्निं समिध्यते' इत्यग्निं दत्वा, सावित्र्या प्रणवेन वा दहेत् ! ततो भस्मास्थीनि तीर्थे क्षिप्त्वा स्नायात् । नास्यौर्द्धदेहिकं नाशौचं कुर्य्यात् । एकादशेऽह्नि पार्व्वणं कार्य्यम् । द्वादशे नारायणः वलिः १(*) कार्य्यः । तद्विधानादि पूर्व्वमेवोक्तम् । इत्यलं प्रपञ्चेन ॥

इति श्रीमदनन्त भट्टविरचिते विधान-पारिजाते
संक्षिप्त यति संस्कारः समाप्तः ॥

—*—

## अथाचारनिरूपणम् ।

—*—

साङ्गोपाङ्गमथाचारं निरूप्य परमार्थतः ।
1980. याज्ञवल्क्योक्तमार्गेण व्यवहारो निरूप्यते (क) ॥
व्यवहारान्नृपः पश्येद्विद्वद्भिः ब्राह्मणैः सह (ख) ।
धर्म्मशास्त्रानुसारेण क्रोधलोभविवर्जितैः ॥२४८८॥
श्रुताध्ययनसम्पन्नाः धर्म्मज्ञाः सत्यवादिनः ।
राज्ञा सभासदः कार्य्या रिपौ मित्रे च ये समाः ॥२४८९॥

---

१(*) 'नारायण वलिं कृत्वा ततः श्रा ' समाचरेत्' इति प्रागुक्तम् ।
'आचार हीना न पुनन्ति वेदाः' ।
'आचार प्रभवो धर्म्मस्य प्रभुरच्युतः' ।
'श्रुति स्मृति सदाचारः स्वस्य च प्रियमात्मनः' ।
'पूर्व्वैराचरि तोयश्च स सदाचार उच्यते' । इति स्मृतयः ।
अत्र पूर्व्वैः शिष्टेराप्तैरिति । अत्र पश्चात् व्यावहारिकं महर्षिभिः कृतमर्थं शास्त्रोक्त-मार्गेणोच्यते । 'सुखं वैवर्ण्यमिति च' इति भिन्नः पाठः । अथाचार पदेन व्यवहारः स्यात् । अत नृपस्य राष्ट्ररक्षणे विद्वत् सभ्यै सहार्थशास्त्रोक्तं सर्व्वं विचार्य्य राष्ट्रपालनं विधेयम् । प्रसङ्गादेतदत्र उच्यते ।

२(†) व्यवहार तत्त्वं महर्षि-मनु-याज्ञवल्क्यादीनां ग्रन्थे तत्तद्व्याख्यानेच विज्ञानेश्वर वीर मित्रोदयकृते सन्दर्भे, व्यवहार तत्त्वे, विवादार्णवसेतौ, भारते राजधर्म्मे, व्यवहार मयुखे, वार्हस्पत्यार्थं शास्त्रे, व्यात्स्यायनीये अर्थशास्त्रे चास्ति ।

अपश्यता कार्य्यवशाद् व्यवहारान्नृपेण तु ।
सभ्यैः सह नियोक्तव्यः ब्राह्मणः सर्व्वधर्म्मवित् ॥२४६०॥
रागलोभभयाद्वापि स्मृत्यपेतादि-कारिणः ।
सभ्याः पृथक् पृथग् दण्ड्या विवादाद् द्विगुणं दमः ॥२४६१॥
अर्थं तु लेखयेत्तावद् यावद् वस्तुविवक्षितम् ।
श्रुतार्थस्योत्तरं लेख्यं पूर्व्वावेदकसन्निधौ ॥२४६२॥
ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम् ।
तत् सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ॥२४६३॥
चतुष्पाद् व्यवहारोऽयं विवादेषू पदर्शितः ।
प्रत्यर्थ्यग्रे लेखनं प्रथमं पादः (१)
श्रुतार्थस्योत्तरं लेख्यमिति द्वितीयः (२)
ततोऽर्थान् लेखयेत् सद्य इति तृतीयः (३) १(*)
तत्सिद्धौ सिद्धमिति चतुर्थः (४) एवं चतुर्थश्चरणा दित्यर्थः २(†) ।
अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तेन चान्येन नचोक्तं विप्रकृतिं नयेत् ॥२४६४॥
कुर्य्यात् प्रत्यभियोगञ्च कलहे साहसेषु च ।
उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्य्य निर्णये ॥२४६५॥
निह्नवे भाविनो दद्याद्धनं राज्ञे च तत्समम् ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ॥२४६६॥
साहसस्तेयपारुष्ये गोऽभिशापात्यये(ः)स्त्रियाम् ३(‡) ।
विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥२४६७॥
देशाद्देशान्तरं याति सृक्किणी परिलेढ़ि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यं (तद्गतमिति) ४(§) ॥२४६८॥
परिशुष्यत् स्खलद् वाक्यो विरुद्धं बहुभाषते ।
वाचः [चारः] चक्षुः पूजयति नो ततोऽष्ठौ निभुजत्यपि ॥२४६९॥

---

१(*) अत्र अर्थं तु इत्यत्र अर्थी तु इति भिन्नः पाठः । 'तथार्थाह्' इत्यन्यः पाठः ।

२(†) 'चतुर्थं पादकारणात्' इति भिन्नः पाठः ।

३(‡) 'गोभिशापेषुच स्त्रियाम्' इभिन्नः पाठः :

४(§) 'राजानश्चार-चक्षुषः' इत्यर्थ शास्त्रे । 'मुखं विवर्णतान्गतम्' इत्यन्यः पाठः ।
अत्र 'निघुनक्त्यपि' इत्यन्यः पाठः ।

स्वभावाद्विकृतिं गच्छेन्मनो वाक्कायकर्म्मभिः ।
अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्त्तितः ॥२५००॥

वाचः चक्षुः प्रतिवादिनः । न पूजयति प्रतिवचन-वीक्षरणाभ्यामितिशेषः १(*) ।

सन्दिग्धार्थं स्वातन्त्र्यो यः साधयेद् यश्च निष्पतेत् ।
नचाहुतो वदेत् किञ्चिद्धीनो दण्ड्यश्च सः स्मृतः ॥२५०१॥

निष्पतेत् पलायतेच ।

साक्षिप्रभयतः सत्सु साक्षिणः पूर्व्ववादिनः ।
पूर्व्वपक्षेऽधरी भूते तद्भयात्युत्तर वादिनः ॥२५०२॥

सपणश्चेद्विवादः स्यात्तत्र हीनन्तु दापयेत् ।
दण्डञ्चस (स्व)पणञ्चैव धनिने धनमेव च २(†) ॥२५०३॥

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।
भूतं चाप्युभयं न्यस्तं हीयते व्यवहारतः ॥२५०४॥

निह्नुते लिखितं नैकमेकदेश विभावितः ।
दाप्यः सर्व्वन्नृपेणार्थं (र्थं) न ग्राह्यस्त्वनिवेदितः ॥२५०५॥

नैकमनेकं सुवर्णादि द्रव्यम् । लिखितं राज्ञा प्रत्यर्थी यदि निह्नुते, तत्रार्थिना एकदेशे साक्ष्यादिभिर्भावितोऽङ्गीकारितः । प्रत्यर्थी राज्ञा सर्व्वं दाप्यः । तत्रापि पूर्व्वं भाविकालेऽनिवेदितः । पश्चान्मया विस्मृत इति निवेद्यमानो नदाप्यः ।

स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ३(‡) ।
अर्थशास्त्रात्तु बलबवद्धर्म्मशास्त्रमिति स्थितिः ॥२५०६॥

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥२५०७॥

सर्व्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया ।
आधौ प्रतिग्रहे क्रीते पूर्व्वातु बलवत्तरा ॥२५०८॥

---

१(*) जो विश्वसिति इत्यर्थः ।

२(†) 'राजा दण्डधरो देवः हिते दण्डप्रदः सदा' इति ।
दण्डनीतिः राजनीतिर्विका चेति नीति शास्त्रं चास्ति । 'यतः राजा दण्डधरोभवे'दिति राजशास्त्रे ।

३(‡) श्रुत्यासह स्मृतिः, स्मृतेः स्मृतिभिः सह, स्मृतेर्न्यायेनार्थ-शास्त्रेण च सह विरोधे सति बलाबल-निरूपणं मीमांसा दर्शने वेदान्तद र्शनेचानयो र्भाष्यादिषु निरूपितम् ।

" अत्र 'अधः प्रति ग्रहे' इत्यन्यः पाठः । अधः पश्चादित्यर्थः ।

उत्तरा-क्रिया ऋणापाकरणरूपा । आध्यादौ तु पूर्व्वा, यथा एकमेव क्षेत्रमेव, क्षेत्रमेकस्याधिकं कृत्वा द्रव्यमादाय पुनरन्वितं भूक्तिः । साक्षिणश्चेति कीर्त्तितम् ।

एष्वन्यतमाभावे दिव्यान्यतममुच्यते ।
सर्व्वेष्वर्थविवादेषु वलवत्युरा क्रिया ॥२५०९॥
आधौ प्रदायाप्युन्मनस्याधि कृतवतः पूर्व्वो वलीयान् ।

पश्यतो ब्रुवतो भूमेर्हानिर्विंशति वार्धिकी ।
परेण भुज्यमाणाया धनस्य दश वार्षिकी ॥२५१०॥
आधि-सी(सा)मोपनीते च जड़वालधनैर्विना १(*) ।
तथोपनिधि-राजस्वी श्रोत्रियाणां धनैरपि ॥२५११॥

उपनिक्षेपो न्यासः ।

आध्यादीनां विहर्त्तारं धनिने दापयेद्धनम् ।
दण्डञ्च तत् समं राज्ञे शक्त्यापेक्षमथापि वा ॥२५१२॥
आगमोऽभ्यधिको भोगाद्विनापूर्व्वक्रमागतात् ।
आगमोऽपि वलेनैव भुक्तिः स्तोकापि यत्र नो ॥२५१३॥

आगमः,—प्रतिग्रहादि क्रयादि रूपः ।

आगमस्तु कृतो येन सोऽभियुक्तः, आगमाद् आगमं समुद्भावयेदित्यर्थः ।

योऽभियुक्तः परेतः स्यात् तस्य रिक्थी तमुद्धरेत् ।
न तस्य कारणं भुक्तिरागमेन विना कृता ॥२५१४॥
नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।
पूर्व्वं पूर्व्वं गुरुः स्याच्च व्यवहारविधौ नृणाम् ॥२५१५॥

पूगाः—भिन्नजातीनां जनानां समूहाः ।

श्रेणयोनानाजातीयानां अप्येककर्म्मोपजीविनां संघाताः ।

कुलानि,—ज्ञाति-सम्बन्धि-बान्धवानां समूहा इत्यर्थः ।

मत्तोन्मत्तार्त्तव्यसनि-वालभीतादि-योजितः ।
असम्बद्धकृतश्चैव व्यवहारो न सिद्ध्यति ॥२५१६॥

योजितः—आत्म-निर्णीतः ।

---

१(*) 'सीमोपनिक्षेपे' इत्यन्यः पाठः । अत्र पूगशब्दस्यार्थमेवार्थः ।
" अत्र धनानां जनहितार्थे त्याग विशेषोन्यास इति ।

वनष्टाधिगतं गतं देयं नृपेण धनि नेधनम्।
विभावयेन्नचेल्लिङ्गैस्तत् समं दण्डमर्हति ॥२५१७॥
राजा लब्ध्वा निधिं दद्याद्विप्रेभ्यो धर्म्मकृत्यके।
हिते सर्व्वस्य लोकस्य ज्ञाने तीर्थेच सर्व्वदा ॥२५१८॥
विज्ञातोऽशेषमादद्यात् स सर्वस्य प्रभुर्यतः।
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् १(*) ॥२५१९॥
षष्ठांशमधिगन्त्रे दत्त्वा सर्वं स्वयमाहरेदित्यर्थः।
अनिवेदितविज्ञातः दाप्यस्तं दण्डमेव च ॥२५२०॥
देयंचौरहतं द्रव्यं राजाजनपदात्तु यत् २(†)।
अददद्धि समाप्नोति किल्बिषं यस्य तस्य तत् ॥२५२१॥
चौरेभ्योवीक्षितमिति शेषः।

—*—

## इति संक्षिप्त व्यवहार मातृकाप्रकरणम् ३(‡)।

—*—

### अथर्णदानविधिः ४(§)।

अशीतिभागो वृद्धिः स्यान्मासि मासि च बन्धके।
वर्णक्रमाच्छतं द्वित्रि चतुः पञ्चकमन्यथा ॥२५२२॥

**अन्यथा,—**

बन्धकरहिते द्रव्यप्रयोगे, द्वित्र्यादिना वर्णक्रमादधिकं शतं दद्यात् प्रतिमासमित्यर्थः।

कान्तारगास्तु दशकं सामुद्रा विंशकं शते।
दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्व्वासु जातिषु ॥२५२३॥

---

१(*) मानवे, आंगिरसे, भार्गवे, वैयासिके, वात्स्यायनीयेच। इति राजशास्त्रे। 'षष्ठांश-वृत्तेरपि धर्म्म एषः' 'तपः षड्भागमक्षय्यं ददत्यारण्यका द्विजः'। इति च।

२(†) 'राजा जन पदात्तु स्वयं' इत्यन्यः पाठः।

३(‡) अत्र व्यवहार मातृका—व्यवहारोपयोगिक्रिया। साच मिताक्षरायां त्रिंशत् संख्यक-भिन्नाः सन्ति।

४(§) पश्चात्क्रोध्य त्वेनाङ्गीकृत्य गृहीतं द्रव्यमृणम्। उत्तमर्णः—ऋणदाता, गृहीताचाधमर्णः। भवतु त्रिषु-देव-पितृ-मानुष-ऋणेषु। विद्यया देवर्णम्। श्रौतीय कर्मणा पितृणम्। इष्ट-दत्त-पूर्त्तादिभिः मानवर्णं स कथ्योच्यम्।

सन्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणाः पराः ।
वस्त्रधान्य हिरण्यानां चतुस्त्रिद्विगुणाःपराः १(*) ॥२५२४॥

**वहुकालावस्थितिपरमेतज् ज्ञेयम् ।**

प्रपन्नं साधयन्नर्थं नवाच्यो नृपतेर्भवेत् ।
साध्यमानोनृपे गच्छन् दण्ड्योदाप्यश्च तद्धनम् ॥२५२५॥

**वहुषूपस्थितेष्वृणदानक्रममाह,—**

गृहीतानुक्रमाद्दाप्योधनिको योऽधमर्णिकः २(†) ।
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥२५२६॥
राज्ञा धमर्णिकोदाप्यः साधिकाद्दशकं शतम् ।
पञ्चकञ्च शतं दाप्यः प्राप्तार्थोह्युत्तमर्णिकः ॥२५२७॥
राजाऽधमर्णाद्दशमांशमुत्तमर्णाद्विंशांशं गृह्णीयादित्यर्थः ॥

**अधुना निःस्वं प्रत्याह,—**

हीन(क्षीण) जाति परिक्षान मृणार्थञ्कर्म्म कारयेत् ।
ब्राह्मणास्तु परिक्षीणा ऋणंर्द्दाप्यो यथोदयम् ॥२५२८॥
दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम् ।
मध्यस्थस्थापि तं तत्स्याद्वर्द्धते न ततः परम् ॥२५२९॥
अविभक्तैः कुटुम्बार्थैर्यद्दृणन्तु कृतं भवेत् ।
दद्युःस्याद्रिक्थिणः प्रेते प्रोषिते वा कुटुम्बिनि ॥२५३०॥
न योषित् पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्नमतिः स्त्रीकृन्तथा ३(‡) ॥२५३१॥
कुटुम्बार्थादृते इति सर्व्वत्र सम्बध्यते ।
सुराकामकृतं दण्डं शुक्तावशिष्टकं वृथा ॥
वृथादानं तथैवेह पुत्रोदद्यान्न पैतृकम् ॥२५३२॥
सुरापानार्थे कामार्थं द्रव्यं दण्डशुक्तयोरवशिष्टं च पितृकृतं न दद्या-दित्यर्थः ।
गोप-शौण्डिक-शैलूष-रजक-व्याध-योषताम् ।
ऋणं दद्यात् पतिस्तासां यस्माद्वृत्तिस्तदाश्रया ॥२५३३॥

---

१(*) 'जुणा परा' इति भिन्नः पाठः । सन्तति समत्वादेवं भवति ।
२(†) अत 'धनिका येऽधर्णिकाः' इति भिन्नः पाठः ।
३(‡) नयतिः, न प्रति, पतिः अन्येते पाठ-भेदाः सन्ति ।

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत् कृतम् ।
स्वयं कृतं वा यदृणं नान्यत् स्त्री दातुमर्हति ॥२५३४॥
पितरि प्रोषिते प्रेतः व्यसनाभिप्लुतेपि वा १(*) ।
पुत्रपौत्रै ऋणन्देयं निह्नवे साक्षि-भावितम् ॥२५३५॥
रिक्थग्राही ऋणंदेयो योषिद्ग्राहस्तथैव च ।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥२५३६॥
भ्रातृणामथदम्पत्योः पितुः पुत्रस्य चैवहि ।
प्रतिभाव्यमृणं साक्ष्यमविभक्तेषु न स्मृतम् ॥२५३७॥

इति ऋण नियम प्रकरणम् ॥

—*—

## अथ ऋण दानम् ।

—*—

दशमे प्रत्यये दाने प्रातिभाव्यं विधीयते २(†) ।
आद्यौ तु वितथ-दाप्यावितरस्य तु ताअपि (तावपि) ॥२५३८॥
दशमे प्रति भूपेऽत्र मृतः प्रात्ययिकोऽपि वा ३(‡) ।
न तत् पुत्रा मृणं दद्युः दद्युर्दानाय यः स्थितः ॥२५३९॥
बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवोधनम् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथा रुचि ॥२५४०॥
एकच्छायाश्रिता-अधमर्णाः द्रव्यदानायोपस्थितास्तेष्वित्यर्थः ।
प्रतिभूर्दापितो यत्तु प्रकाशं धनिने धने ।
द्विगुणं प्रतिदातव्यं ऋणिकैस्तस्य तद्भवेत् ॥२५४१॥
अत्र प्रकाशं लोकान्त[र]म् । ऋणिकैस्तु प्रतिभुवे द्विगुणन्तद्दातव्य-मित्यर्थः ।
सन्तति-स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च ।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा ॥२५४२॥

---

१(*) 'प्रोषिते प्रेत:' इत्यत्र प्रेतेवेति भिन्नः पाठः । अत्र पाठव्यत्ययोऽस्ति ।

२(†) दैवादि—ऋणविपर्ययेतु, शास्त्रीयवचो यथा, 'जायमानोवै ब्राह्मणस्त्रिभिः ऋण—वान-जायते' इति । 'ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत्' इति मनुः । अत्र कौमोदेन ऋणदानं ग्रहणमपि व्यावहारिकं बोध्यम् ।

३(‡) अत्र दशमे इति भिन्नः पाठः ।

### पूर्व्वोक्तस्यापवादोऽयम् ।

आधिः प्रणश्येद्विगुणे धने यदि न मोक्ष्यते ।
काले कालकृतो नश्येत् फलभोग्यो न नश्यति ॥२५४३॥

फलं भोग्यं यस्य स तथा, क्षेत्रारामादि न नश्यतीर्थः ।

गोप्याधिभोगो नो वृद्धिः सोपकारेऽथ हारि(वि)ते ।
नष्टो देयः विनष्टश्च दैवराजकृताहते ॥२५४४॥

हारि(वि)तव्यवहाराक्षमे आधौ, नष्टो नाशितः । पूर्व्ववत् कृत्वा देयः । विनष्टो हारितः, सोऽपि मूल्यादिना दातव्यः ।

आधेः स्वीकरणात् सिद्धिः रक्ष्यमाणोऽप्यसारताम् ॥२५४५॥
यातश्चेदन्य आधेयो धनभाग् वा धनी भवेत् ।
चरित्रबन्धककृतं सवृद्धया दापयेद्धनम् ॥२५४६॥

सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिपादयेत् । चरित्रेण शोभनाचरितेन । अल्पं वा महद्वा वस्तु, आधीकृत्य अल्पम् , महद्वा धनमधमर्णेन गृहीतम् । तत्राधिं दापयित्वा वृद्धयासह राजा धनं दापयेदित्यर्थः ।

तथा क्रयविक्रयादि-व्यवस्थानिर्वाहाय, यदङ्गुलीयादिकं च हस्ते कृत्वा सत्यंकारकृतम् । तत्र व्यवस्थातिक्रमेण द्विगुणं देयमित्यर्थः ।

उपस्थितस्य मोक्तव्ये आधिस्तेनोन्यथा भवेत् ।
प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात् ॥२५४७॥

प्रयोजके उत्तमर्णे सति, असन्निहिते कुले तदाप्तोधनं कलासहितं न्यस्याधिमाप्नुयादित्यर्थः ।

### तदाप्तस्याभावेतु (विष्णुः) विधिमाह,—

तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।
विना तु धारकाद्वापि विक्रीणीत ससाक्षिकम् ॥२५४८॥

### धारकादिना, ऽधमर्णा १(*) भावे,—

यदा तु द्विगुणीभूत मृणमाधौ तदा खलु ।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥२५४९॥

एतदुत्पन्ने—आध्युत्पन्ने । द्विगुणे धने प्रविष्टे सति, धनिना आधिर्मोक्तव्यः न स्थापयितव्यः ॥

---

१(*) 'अधमर्णाभावे' इत्यत्र अधमर्णाभावे इत्यन्यः पाठः । अधमर्णः—ऋण गृहीता ।

## इत्यृणदानप्रकरणम् ॥❀॥

—*—

### अथ निक्षेपः ।

वासनस्थमनाख्याय हस्ते न्यस्य यदर्प्यते ।
द्रव्यन्तदौपनिधिकं प्रतिदेयं तथैव तत् ॥२५५०॥

**वासनं तदाधारभूतं करण्डकादि ।**

न दाप्योऽपहृतं तन्तु राज-दैविक-तस्करैः ।
भ्रेषश्च मार्गिते दत्ते दाप्यो दण्डञ्च तत् समम् ॥२५५१॥

द्रव्यं राजा गृह्णीयादित्यर्थः । स्वामिना मार्गिते याचिते सति । यदि नदत्ते-नदत्तवांस्तदुत्तर कालं राजादिना तन्नाशेपि धानिते तं १(*) दापयित्वा, तत् समं द्रव्यं राजा गृह्णीयादित्यर्थः ।

आजीवनेच्छया दण्ड्योदाप्य स्तञ्चापि सोदयम् ।
याचितान्वाहितन्यासनिक्षेपादि( ष्टे )ष्वयं विधिः ॥२५५२॥

स्वेच्छयैव आजीवन्निक्षेपेण व्यवहरण् सोदय संवृद्धिकं याचितं अलङ्कारादि । अन्वाहितं नाम, अन्यहस्ते स्वामिने देहीति निहितम् ।

न्यासोनाम,—गृहस्वाम्य समक्षं गृहस्थजनहस्ते प्रक्षेपः ।

गृहस्वाम्यग्रे समर्पणं निक्षेपः ।

आदि शब्देन स्वर्णकारादि हस्ते कटकादि निर्माणाय यद्दत्त वस्तु, तेषु अयमेव वा निधिर्न्यासः ॥

इति निक्षेप प्रकरणम् ॥*॥

### इदानीं साक्षिस्वरूप मुच्यते २(†)।

—*—

तपस्विनोदान शीलाः कुलीनाः सत्यवादिनः ।
धर्म्मप्रधाना ऋजवः पुत्रवन्तोधनान्विताः ॥२५५३॥

---

१(*) अत्र 'अपिधानिते' इति ऽन्यत्र: पाठः । अत्र न्यासनिक्षेपौ द्वावुक्तौ पृथग् लक्षणौ इति ।

२(†) विषयं साक्षात् द्रष्टा, जनोहि साक्षिः साक्षीवेति । स यद् द्राक्षीतद्देश विचार काले-वक्ष्यतीति । 'साक्षाद् द्रष्टरि संज्ञायाम्' इति साक्षिः । तेन विचारक-सन्निधौ अर्थेन यदुक्तं तत् साक्ष्यमिति ।

अम्बराः साक्षिणोज्ञेयाः श्रौतस्मार्त्तक्रिया पराः ।
यथाज्ञाति यथावर्णं सर्व्वे सर्वेषु वा स्मृताः १(*) ॥२५५४॥
स्त्री-वाल-वृद्ध-कितव-मत्तोन्मत्ताभिशस्तकाः ।
रंगावतारि-पाषण्डि-कूटकृद्विकलेन्द्रियाः ॥२५५५॥
पतिताः स्वार्थसम्वन्धि-सहाय-रिपुस्कराः ।
साहसी दृष्टदोषश्च निर्द्धू(र्द्ध)ताद्यास्त्व साक्षिणः २(†) ॥२५५६॥

कितवोद्युतकर्त्ता, मत्त–पानादिना । उन्मत्तोग्रहाविष्टः चित्तवि-भ्रमश्च । अभिशस्तः व्रह्महत्यादिना । रङ्गावतारी चारणः। पाषण्डिनोवेदवाह्याः । कूटकृत् कपटलेख्यादिकारी । विकलेन्द्रियो वधिरादिः । आप्तः—सुहृत् अतिशिष्टश्च । स्वार्थसम्बन्धी प्रति पन्नः । सहायः एक कार्य्यः । साहसी-अविचारितकारी । दृष्टदोषो दृष्टवितथ-वाक् ३(‡) । निर्धूतोवन्धु-त्यक्तः । अन्ये प्रसिद्धाः ।

## तथा,—

उभयानुमतःसाक्षी भवत्येकोऽपि धर्म्मवित् ।
सर्व्वः सहचरो साक्षी चौर्य्य-पारुष्य-साहसे ॥२५५७॥

## संग्रहणे,—

बलात्कारादौ । सर्व्वः स्त्रीवालादिव्यतिरेकेन ।
साक्षिणः श्रावयेद्वादि-प्रतिवादि समीपगान् ।
ये पातक कृतां लोका महापात किनान्तथा ॥२५५८॥
अग्निदानाञ्च ये लोका येच स्त्रीवालघातिनाम् ।
स तान् सर्व्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ॥२५५९॥
यत् पापात् सुकृतं किञ्चिज्जन्मान्तर शतैः कृतम् ।
तत् सर्व्वन्तस्य जानीहि यं पराजायते मृषा ॥२५६०॥
अब्रुवन् हि नरः साक्ष्य मृणं सद्रशवन्धकम् ।
राज्ञा सर्व्वश्च दाप्यः स्यात् षट्त्वारिं शकेऽहणि ॥२५६१॥

---

१(*) इति साक्षिणां प्रकृतलक्षणम् । अर्थिप्रत्यर्थिनो र्विपर्ययोः प्रामाण्य प्रकाशे साक्षी सहचरः स्यादिति ।

२(†) 'यत्परा जयते मृषा' इत्यन्यः पाठः । एते विकृत स्वभावाः साक्ष्यदाने अयोग्याः । वितथं वा वदिष्यन्ति ।

३(‡) मिथ्या साक्ष्यदाता, धनादि लोभेन द्वेषादिना वा ।

सद्दशवंधकं-दशमां शसहितं सव्वं राज्ञा दाप्यः (म्) ॥२५६२॥
तत्र दशमांशं स्वयं गृह्णीयादित्यर्थः ।
नददाति हि यः साक्ष्यं जानन्नपि नराधमः ॥
सकूट साक्षिणं पापि स्तुल्योदण्डे न चैवहि ।
द्वैधे वहूनां वचनं समेषु गुणिनान्तथा ॥२५६३॥
गुणि-द्वैधेतु वचनं ग्राह्यं ये गुणवत्तमाः ।
यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ॥२५६४॥
अन्यथा वादिनोयस्य ध्रुवं तस्य पराजयः ।
उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः ॥२५६५॥
द्विगुणा वान्यथा व्रयुः कू(स्कु)टाः स्युः पूर्व्वसाक्षिणः ।
पृथक् पृथग् दण्डनीयः कूटकृत्साक्षिणस्तथा ॥२५६६॥
विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ।
यः साक्ष्यं श्राबितोऽन्यभ्यो निह्नुतो ह्यत्तमोवृतः ॥२५६७॥
सद्दाप्योद्विगुणं दण्डं ब्राह्मणन्तु विवासयेत् ।
वर्णिनान्तु वधोयत्र तत्र साक्ष्यानृतं वदेत् ॥२५६८॥
तत् पावनाय निर्वाप्यश्चरूः सारस्वतोद्विजैः १(*) ।
अत्र वर्णिनां विप्रादीनामिति २(†) ॥

—*—

## इति साक्ष्य-प्रकरणम ३(‡) ॥

—*—

### अधुना लिखितं प्रमाणं निरूप्यते ।

तच्च द्विविधं, शासनं जानपदञ्चेति ।

**तत्राद्य मुक्तं प्राक् ।**

द्वीतीयं निरूप्यते । यः कश्चिदर्थो विज्ञातः स्वरूच्याहि परस्परम् ।
लेख्यन्तु साक्षिमत् काय्यं तस्मिन् धनिक पूर्व्वकम् ॥२५६९॥

---

१(*) निह्नुतो ह्युत्तमो व्रतः इत्यन्यः पाठः । अत्र 'त्रयोवर्णा द्विजातयः' इति स्मृतिः ।

२(†) तत् पावनाय–तत् पाप विशुद्धये इत्यर्थः । सारस्वतीं इष्टिं पुरोहितैः वेदोक्तां कारयेदिति । अत्र विवासयेद्देशान्तरे-निर्वासयेन्नतु तस्य शारीरिकार्थिकोदण्डः ।

३(‡) 'प्राणात्यये सर्व्व धनापहारे, विवाहकाले रति सम्प्रयोगे । विप्रस्य चार्थेऽनृतं वदेच्च, पञ्चानृतान्याहुर पातकानि' । इति भारते । अत्र विप्रस्यचार्थे इत्यन्यः पाठः । 'दिव्याणीह' इति पाठान्तरम् । इति याज्ञवल्क्यः । दिव्यतत्त्वे अपरमस्ति ।

तस्मिन् निष्णातेऽर्थे । समा मास-तदर्द्धाहर्नाम ज्ञाति स्वगोत्रकैः ।
सब्रह्मचारिकात्मीय-पितृनामादि चिह्नितम् ॥२५७०॥

**समा--वर्षम् । मासः—१ *)**

वैशाखादि प्रसिद्धः । तदर्द्धः पक्षः । अहस्तिथिः । नाम—
धनिकर्णिकयोः । जाति ब्राह्मणत्वादिः । स्वगोत्रकं वसिष्ठादि ।
स ब्रह्मचारिकं—बह्वृचादिशाखाया मुक्तम् ।

समाप्तेऽर्थे ऋणिनाम स्वहस्थे न निवेशयेत् ।
मतं मेऽमुक पुत्रस्य यदत्रोपरि लिखितम् ॥२५७१॥
साक्षिणश्च स्वहस्तेन पितृनामक पूर्व्वकम् ।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥२५७२॥
उभयाभ्यर्थितेनैतन्मयात्व (मयेत्थ) ममुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततोलिखेत् ॥२५७३॥
विनापि साक्षि भिर्लेख्यं स्वहस्तलिखितन्तु यत् ( तत् ) ।
तत्र प्रदीयते त्रिभिरधमर्ण ( तत् ) पुत्र पौत्रकैः ॥२५७४॥
देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टेह्युन्मर्दते ३(‡) ।

**तथा,—**

भिन्ने दग्धेऽथवाच्छिन्ने लेख्य मन्यं प्रकारयेत् ॥२५७५॥
सन्दिग्ध-लेख्य-शुद्धिः स्यात् स्वहस्त लिखितादिभिः ।
युक्ते ख्याति-क्रिया-चिह्न-सम्बन्धागम हेतुभिः ॥२५७६॥
लेख्यस्य पृष्ठे निर्लिखेद्दत्वादत्वा नं ऋणी ।
धनीचोपगं( तं )तन्दद्यात् स्वहस्त परिचिह्नितम् ॥२५७७॥
उपगतं प्रविष्टञ्च धनपत्रम् ।
दत्वर्णं प्राप्योल्लेखं शुच्यैवान्यत्तु कारयेत् ४(ऽ) ।
साक्षिमच्च भवेद्युद्वा तद्दातव्यं स साक्षिकमिति ॥२५७८॥

इति लेख्यप्रकरणम् ॥

---

१(*) अत्र 'तिथिश्चान्द्रमसं दिनम्' इति ज्योतिषे ।

२(†) मास द्वादश घटकात्मककालः वर्षम् । पञ्चदश-त्रिंशद्दिनात्मकः कालः मासः ।

३(‡) 'मृष्ट नष्टो विमर्द्दिते' इति पाठान्तरम् ।

४(ऽ) अत्र 'सूच्यैवान्यत्तुकारये' दित्यन्यः पाठः ।

,, गङ्गाजल-परमेशनाम्ना, धर्म्मोद्देशेन वा शपथ करणादि कृत्यं दिव्यम् । अत्र विचार्य-तथ्यावधारणार्थं दिव्यमाश्रयणीयम् । विशेष विधिरपवादः बोध्यः ।

## अथ दिव्यम् १(*)।

—*—

तुलाग्न्यापोविषं कोषोदिव्यमाह विशुद्धये।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥२५७९॥
कोशोनरोवर्त्तयेच्छिरः इति शिरः पराजितः ॥ शिरोदण्ढः।

**अपवाद माह—**

विनापि शीर्षकं कुर्य्यात् नृपद्रोहेथ पातके।
सचैलं स्नात माहूय सूर्य्योदय-उपोषितः ॥
कारयेत् सर्वदिव्यानि नृप-ब्राह्मण-सन्निधौ ॥२५८०॥
उपोषितं पूर्वेद्युरुपवस्तम् २(†)।

**तुला,—**

स्त्रीवाल वृद्धान्धपङ्गु ब्रणगुण्मादि रोगिणाम्।
अग्निर्जलं वाशूद्रस्य (त्तत्रादेः) यवाः सप्त विधस्य वा ३(*) ॥२५८१॥
अर्थात्(ः)तत्र वैश्ययोरग्निर्जलं वेति गम्यते।
ना सहस्राद्धरेत् कालंन विषं न तुलान्तथा।
नृपार्थेष्वभिशापेच वहेयुः शुचयः सदा ॥२५८२॥
पणसहस्रादर्व्वाक् फलादिकं न कारयेत्।
नृपार्थमल्पसंख्यामपि कारयेदित्यर्थः।
तुलाधारण विद्वद्भिरभियुक्तः तुलाश्रितः ॥२५८३॥
प्रतिमान मयीभूतो रेखां कृत्वावतारितः।
त्वं तुले सत्यनामासि पुरा देवैर्विनिर्मिता ॥२५८४॥
तत् सत्यं वद कल्याणि संशयान्मां विमोचय।
यद्यस्मि पापकृन्मातस्ततोमां त्वमधोनय ॥
शुद्धश्चोद्गमयोर्द्ध्वं मां तुलामित्यभि मन्त्रयेत् ॥२५८५॥

---

१(*) द्यो दिने कृतोपवासः इति। सूर्य्योदये—तत् समयमारभ्य उपवासः कार्य्यः सचग्रचिरन-ग्रनः। अन्यद दिव्य तत्त्व सन्दर्भे। अपरं ब्रह्म वैवर्त्तपुराणे, बृहस्पति स्मृती च। घटः तुला, तदारोहणेन। दिव्यानि, यथा—घटः, अग्निः, उदकम्, विषं, कोषः, तण्डुलः, तप्तमाषः, फलं धर्म्मजः, इति नव दिव्याश्रयाणि द्रव्याणि।

२(†) 'पङ्गु ब्राह्मण रोगिणाम्' इति पाठान्तरम्।

३(‡) न विप मित्यत 'न विनयम्' इत्यन्यः पाठः।

,, अभिमन्त्रये—दिव्य' आञ्जलिः स्नातः पूतः प्रार्थये तुलासन्निधौ।

## इति तुलादिव्यप्रकरणम् ।

—*—

### अथाग्नि दिव्यम् ।

करौ विमृदितव्रीहिं-र्लक्षयित्वा ततोन्यसेत् १(*) ।
सप्ताश्वत्थस्य पत्राणि तावत् सूत्रेण वेष्टयेत् ॥२५८६॥
त्वमग्ने सर्व्वभूतानां अन्तश्चरसि पावक ।
साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥२५८७॥
तस्येत्युक्तवतोलौहं पञ्चाशत् पलिकन्ततः (समं) ।
अग्निवर्णं न्यसेत् पिण्डं हस्तयोरुभयोरपि ॥२५८८॥
सतमादाय सप्तैव मण्डलानि शनैर्व्रजेत् ।
षोड़शाङ्गुलकं ज्ञेयं मण्डलन्तावदन्तरम् ॥२५८९॥
मुक्त्वाग्निं मृदित-व्रीहिरदग्धः शुद्धिमाप्नुयात् ॥
अन्तरा पतिते पिण्डे सन्देहेवा पुनर्हरेत् ॥२५९*॥

—*—

## इत्यग्निदिव्यप्रकरणम् ।

—*—

### अथोदक दिव्यम् ।

सत्यं नमामि रक्ष त्वं वारुणे यामि शीघ्रकम् २(†) ।
नाभिद्घ्नोदकस्थस्य गृहीत्वोरू-जलं विशेत् ॥२५९१॥
समकालमिषु-मुक्तं आनयाम्योजवा नरः ।
तत (गतस्तस्मि) स्तस्मिन्निमग्नाङ्गं प्रेक्ष्यंचेच्छुद्धि माप्नुयात् ॥२५९२॥

—*—

## इत्युदकदिव्यम् ।

—*—

### अथ विष दिव्यम् ।

त्वं विष ! ब्रह्मणः पुत्रः सत्यधर्म्म-व्यवस्थितः ।
त्रायस्वास्मात्( न् ) महाशापात् सत्येन भवमेऽमृतम् ॥२५९३॥

---

१(*) अत्र 'करविमर्दितान् व्रीहीन्' इत्यन्यः पाठः। 'चपित्वा च ततः' इति भिन्नः पाठः। अत्राग्नि समीपे-प्रागवत् प्रदर्शनम्। अत्र 'साक्षित्वं पुण्य पापाणाम्' इत्यपरः पाठः।

२(†) 'वरुणीयामि, आभिशाप्यकं' इत्यादि पाठान्तरम्।

" अत्र 'प्रविशन्' 'पश्यन्' 'प्राग्जन्' इत्येते भिन्नाः पाठाः।

एव मुक्त्वा विषं शाङ्गं भिक्षयेद्धिमशैलजम् ।
यस्यो द्वेगैर्विनाजीर्य्येच्छुद्धिं तस्य विनिर्द्दिशेत् १(*) ॥२५९४॥
अत्र यस्य भक्षकस्य इति ॥

—*—

## इति विषदिव्यम् ।

—*—

### अथ कोशदिव्यम् ।

देवानुग्रान् समभ्यच्चर्य तत् स्नानोदक माहरेत् ।
संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृति-त्रयम् ॥२५९५॥
अर्व्वाक् कर्त्तुर्दशस्याह्नोदहन्मे राजदैविकम् ।
व्यसनं जायते घोरं स शुद्धःस्यान्न संशयः ॥२५९६॥

—*—

## इति कोशदिव्यमः ।

—*—

### अथ तण्डुलदिव्यम् ।

तण्डुलानां प्रवक्ष्यामि विधिं भक्षण-चोदितम् ।
पौ(चो)रेतु तण्डुला देया नान्यस्येति विनिश्चयः ॥२५९७॥
तण्डुलान् कारयेत् शुक्लान् शालेर्न्यान्यस्य कस्यचित् ।
मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥२५९८॥
स्नानोदकेन सम्मिश्रान् रात्रौ तत्रैव वासयेत् ।
प्राङ्मूखोपोषितं स्नातं शिरोऽपि आतपत्रकम् ॥२५९९॥
तण्डुलान् भक्षयित्वातु पत्रे निष्ठीपयेत्ततः २(†) ।
पिप्पलस्य तु नान्यस्य अभावे भूर्जे एवतु ॥२६*०॥
लोहितं दृश्यते यस्य हनुः तालुच शीर्य्यते ।
गात्रञ्च कम्पते यस्य तमशुद्धं विनिर्दिशेदिति ३(‡) ॥ २६०१॥

—*—

१(*) अत्र 'शार्ङ्गम्' इति 'साङ्गम्' इति भिन्नः पाठः । साङ्गं सम्पूर्णमिति ज्ञेयम् । तस्य गरल भक्षकस्य जनस्येति बोध्यम् ।

२(†) अत्र 'कर्त्तुर्दशस्याह्नान् दहन्मे' इति भिन्नः पाठः अयमयुक्त इति मन्ये । 'निक्षिपयेत्ततः' इति भिन्नः पाठः ।

३(‡) इति तण्डुल मद्दीव-निर्दोषयोर्विनिश्चयः ।

## इति तण्डुलदिव्यम् ।

—*—

### अथ धर्म्माधर्म्म दिव्यम् ।

राजतं कारयेद्धर्म्ममधर्म्मं सीसकायसम्
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्च्चयेत् ॥२६०२॥
सितपुष्पस्तु धर्म्मःस्याद धर्म्मोऽसित पुष्पकः ।
एवं विधायोपलिप्य पिण्डयोस्तौ निधापयेत् ॥२६०३॥
गोमयेन मृदा वापि पिण्डौ कार्यौ समन्ततः ।
महान्दुकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ॥२६०४॥
उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ ।
आवाहये त्ततोदेवान् लोकपालांश्च सर्व्वतः ॥२६०५॥
यदि पापविनिर्मुक्तोऽहं धर्म्मस्त्वायातु मे करे ।
अभियुक्तस्तयोश्चैकं प्रगृहीता विशेषतः १(*) ॥२६०६॥
धर्म्मे गृहीते शुद्धः स्यात् अधर्म्मेतु स हीयते ।
एवं समासतः प्रोक्तं धर्म्माधर्म्म परीक्षणमिति ॥२६०७॥

—*—

## इति संक्षेतोधर्म्माधर्म्मदिव्यम् ।

—*—

### अथ दाय विभागः ।

प्रमाणं मानुषं दैव मिति भेदेन वर्णितम् २(†) ।
अधुना वर्ण्यते दाय विभागोयोगमूर्त्तिना ॥२६०८॥
विभागं चेत् पिता कुर्य्यात् इच्छया विभजेत् सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्व्वेवांस्युः समांशिनः ॥२६०९॥

---

१(*) 'निगृहीता विशेषतः इत्यन्यः पाठः ।

२(†) खल्व निरूपणे द्वे प्रमाणे, तयोरेकं दैवं, अन्यच्च लौकिकम् । अत्र श्रुतिरवादीत्, 'अस्य पुत्रा दायमुपयन्ति सुहृदः साधु कृत्यम् । द्विषन्तः पापकृत्यमिति' ।

,, अथ ज्येष्ठादिक्रमेण धनविभागः कथ्यते ।

,, वंश क्रमागतं पूर्व्वपुरुषक्रमेणायातम् ।

ज्येष्ठं वेति—

ज्येष्ठं श्रेष्ठभागेन, मध्यमां मध्यमभागेन,
कनिष्ठं कनिष्ठभागेन विभजेदित्यर्थः।
अयं विषय विभागः स्वार्जिते द्रव्य-विषयः।
वंशक्रमागते (यते) तुस्यात् समन्चात् सम एव च ॥२६१०॥

1981. अत्र नारदः—कालान्तरमप्याह।

अयं विषय विभागः स्वार्जित द्रव्य विषयः, वंशक्रमागनेतु—
तदूर्द्धं पितुः पुत्राश्च विभजेयुः र्धनं सममिति।
आशुनिवृत्ते रजसि प्रत्तासु भगिनीषु च ॥२६११॥
निवृत्तेचापि रमणे पितुर्य्यु परतस्पृहे इति।
अत ऊर्द्ध—मृतेरूर्द्धम्। समविभागे विशेषमाह योगि ॥२६१२॥

1982 याज्ञवल्क्यः—

यदि कुर्य्यात् समानां शं पत्न्यः कार्य्याः समांशिकः।
नदत्तं स्त्रीधनं यासां भर्त्रावा श्वशुरेण वा ॥२६१३॥
दत्तेतु स्त्रीधनेऽर्द्धांशं वक्ष्यति। दत्वेऽर्द्धं प्रकल्पयेदिति।
उक्तस्यापवादमाह क्वचित्।
शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक्क्रिया।
न्यूनाधिक विभागाणां धर्म्म्यः पितृकृतः स्मृतः ॥२६१४॥
विभजेरन् सुताः पित्रोरूर्द्धं रिक्थमृणं समम्।
मातुर्दुहितरः शेषमृणात्ताभ्यः ततोऽन्वयः ॥२६१५॥
मातुर्धनं मातृकृत्येना वशिष्टं दुहितरोगृह्णीयुः।
तत्रापि प्रत्ताप्रत्तासमवायेऽप्रत्ताः प्रतिष्ठिताः ॥२६१६॥
प्रतिष्ठितासमवाये निर्द्धना गृह्णीयुः १(*)।
दुहित्रभावेऽन्वेयः ज्ञेयः, पुत्रादिर्गृह्णीयादित्यर्थः।
पितृद्रव्याविरोधेन यदन्यत्स्वय मर्जितम्।
मैत्रमौद्वाहिकञ्चैव दानार्हन्तंतु तद्भवेत् ॥२६१९॥

---

१(*) अत्र 'अप्रत्ता.' इत्यत्र 'प्रत्ताः प्रतिष्ठिताः' इत्यन्यः पाठः। अत्र प्रत्ता, दत्ताः। अप्रत्ता, अदत्ताः। समवायै, युक्तोपस्थिते। निःस्वाः निर्धनाः याक्षालभेरन्। दुहित्रभावे.— कन्यानां अभावे तद्द रित्थं पुत्रादिभिः ग्राह्यमिति।

क्रमादभ्यागतं द्रव्यं हृतमप्युद्धरेत्तुयः ।
दायादेभ्योनतद्दद्याद्विद्यया लब्धमेवच १(०) ॥ २६१८॥
औद्वाहिक इति—विवाहे लब्धः । दायादाः—भ्रातरः ।

1983. **अन्योदधृते विशेषमाह, शङ्खः—**

पूर्व्वनष्टान्तु योभूमिमेकश्चे दुद्धरेत् क्रमात् ।
यथाभागं लभन्तेऽन्ये दत्वांशन्तु तुरीयकम् इति ।
सामान्यार्थं समुत्थाने विभागस्तु समः स्मृतः ॥२६१९॥
समुत्थानेऽविभक्तद्रव्यस्यैकेन वर्द्धने ।

**इदानीं पौत्राणां पितामह द्रव्यविभाग उच्यते ।**

अनेक पितृकानान्तु पितृतोभागकल्पना ।
भ्रातरोऽविभक्ताः, पपुत्रान् समान् विषम संख्यकान् ये गाद्योमृताश्चेत्तत् पुत्राः पौत्रावा पितृक्रमेणां शभाजः कार्य्या न स्वसंख्ययेत्यर्थः २(†)।

**अधुनेच्छया विभजतः सुतानित्यस्यापवाद माह—**

भूर्या पिता महोपन्ना निवन्धो द्रव्यमेववा ।
तत्र स्यात् सदृशं साम्यं पितुः पुत्रस्य चैवहि ॥२६२०॥
भुः क्षेत्रादिका निवन्धा(वा) एकस्य पूर्णभारस्य इयंति ।
पूर्णानि ग्राह्याणीत्येवं रूपः । शुल्कः परमपरागतः ।
द्रव्यं सुवर्णादि । तत्रोभयेच्छया विभागः ।
अधुना, विभागादूर्द्धमुत् पन्न पुत्रस्यतु विभागभाक् ।
विभक्तेषु सतोजातः सवर्णायां विभागभाक् ॥२६२१॥
असत्यां दुहितरि पित्रो र्द्रव्यभाक्च इत्यर्थः ३(०)।

---

१(०) अत्र 'दायादः सुत वान्धवः' ।

२(†) अत्र विषय संख्यकान् इत्यन्य न समसंख्यया इति भिन्नः पाठः ।

" अत्र 'पितामहोपपन्ना' इत्यन्यः पाठः । अत्र दायविषयं,—श्रीमज्जीमुतवाहनीय दायभागः । दायतत्त्वम् । दायकौमुदी, विवादार्णव सेतुः । विवाद भङ्गार्णवः । दायक्रमसंग्रहः । अन्यं संहिता-पुराणादिषूक्ताय ।

३(†) अत्र 'द्रव्यभाक्तः' इत्यन्यः पाठः ।

" अवध्ययांशा शोधिताद' इति भिन्नः पाठः ।

पित्र्युपरत्यनन्तरं विभागे सगर्भायां मातरि को विशेषः, इत्याशङ्क्य आह—द्वादशांशाद्वा तद्विभागः स्यादायव्ययविशोधितात्। पितृकृताद्य व्ययां पशाधिता दवशिष्ट द्रव्यात् पितुरूर्द्धमुत्पन्नस्य पुत्रस्य स्वसमोविभागोदातव्यः। आत्म-स्वस्वभागैः पूरणीयम्। महत्त्वे किञ्चित् किञ्चिदादाय स्वभाग समं कार्य्यमित्यर्थः॥

—*—

## अधुना विभागानन्तरं विशेषमाह।

—*—

1984. **पितृभ्यामिति,—**

पितृभ्यां यस्य यद्द दत्तं तत्तस्यै व भवेद्द ध्रुवम्।
विभक्तजः पुत्रोननिवारयेन्न प्रत्याह्रियेतेत्यर्थः॥२६२२॥

**किञ्च—**

पितुरूर्द्ध विभजतां माताप्यंशं समाहरेत्। इदं स्त्री धनाभावे।
भावेत्वर्द्धमेव। असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः।
भगिन्यश्च निजादंशाद्दत्वांशंतु तुरीयकम्॥

1985. **तुरीयकमिति—**

निजांशस्य चतुर्थांशं कन्यायै दद्यादित्यर्थः॥२६२३॥

**अधुना भिन्नजातीयान्तरं पुत्राणां विभागमाह।**

चतुस्त्रिद्व्येकभागाः स्युर्वर्णशोब्राह्मणात्मजाः।
क्षेत्रास्त्रिद्व्येक भागाहि प्रजास्तु द्व्येकभागिनः १(*)॥२६२४॥
सर्व्वाविभागेषु क्षेत्रेषु किञ्चिदुच्यते।
अन्योन्यापेक्षितं द्रव्यं विभक्ते यत्तु दृश्यते।
तत् पुनस्ते समैरंशं विभजेरन्निति स्थितिः॥२६२५॥
विभक्ते पितृधने सतीत्यर्थः।

**अधुनाद्व्यामुष्यायणे विभागमाह—२(†)।**

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः।
उभयोरप्य सौ रिक्थः पिण्डदाताच धर्म्मतः॥२७२६॥

---

१(*) अव चंवादित्यत्र 'पुत्रात् विद्रोक। चे पुत्रा, इत्यन्यः पाठः। अत्र 'समैरंशैः' इति भिन्नः पाठः।

,, 'विभक्तं यत्तु दृश्यते' इत्यन्यः पाठः।

२(†) द्व्यामुष्यायण विषये दत्तकः सर्व्वस्वादावस्ति। 'द्व्यामुष्यायणस्तु जनक प्रतिग्रहीतृभ्यां भावयोरयमिति संप्रतिपन्नः स उभयोरपि पुत्रः' इति मिताक्षरा।

इदं वीजिणः पुत्रासत्त्वे,—

फलन्त्वभि सन्धाय क्षेत्रिणा वीजिणातथा ।
प्रत्यक्षं क्षेत्रिणामर्थो वीजाद्योनि र्बलीयसी १(*) ॥२६२७॥

1986. इति स्मृतिः । पुत्रान्तरानाह,—

औरसो धर्म्मपत्नीजः तत् सुतः पुत्रिका सुतः ।
क्षेत्रजः क्षेत्रजातस्तु स्व गोत्रेणेतरेणवा ॥२८२८॥
गृहे प्रच्छन्न उत्पन्नः गूढ़जस्तु सुतः स्मृतः ।
कानीनः कन्यका जातो मातामह सुतो मतः ॥२६२९॥
अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ।
दद्याण्माता पिता यं वा स पुत्रो दत्तको भवेत् ॥२६३०॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं कृतः ।
दत्तात्मातु स्वयं दत्तः गर्भे विन्नः सहोरजः ॥२६३१॥
उत्सृष्टो गृह्यते यस्तु सोपविद्धो भवेत् सुतः ।
पिण्डदोंऽशहरंश्चैषां पूर्व्वाभावे परः पर इति—

1987. कात्यायनः ।

उत्पन्नेत्वौरसे पुत्रे चतुर्थांशहराः सुताः ।
सवर्णा असवर्णास्तु ग्रासाच्छादन भागिनः ॥२६३२॥

1988. पुत्रिकायां विशेषमाह, मनुः—

पुत्रि कायां कृतायान्तु यदि पुत्रोऽनु जायते ।
समस्तत्र विभागः स्याज् ज्येष्टता नास्तिहि स्त्रियाम्, इति ।
सजातीये स्वयं प्रोक्ते स्तनयेषु अयं विधिः ॥२६३३॥
न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ।
शूद्रा पुत्र स्त्वौर सोऽपि रिक्थभागं न लभतेऽन्या भावेऽपि ।

यथाह, मनुः—

यद्यपि स्यात्तु सत्पुत्रो यद्य पुत्रोऽपि वा भवेत् ॥
नाधिकं दशमादद्याच्छूद्रा पुत्राय धर्म्मतः, इति ॥२६३४॥

---

१(*) अत्रौ रस चवज पुत्रयोर्विशेष-उक्तः । 'स्वजातीयैः स्वयं प्रोक्ते' रित्यन्यः पाठः ।

**अधुना शूद्रधन विभागे विशेषमाह,—**

जातोऽपि दास्यां शूद्रेण कामतोऽं शहरो भवेत् ।
मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धं भागिणः १(*) ॥२६३५॥
अभ्रातृ कोहरेत् सर्व्वं दुहितृणां सुताहृते ।

कामतः पितुरिच्छयैव । अत्र शूद्र ग्रहणाद् दास्यामुत्पन्नो द्विजाति पुत्रः किमपि नलभते । अनुकूलश्चेज्जीवनमात्रं लभत इति गम्यते । मुख्य गौण सुता दायं २(†) ।

**गृह्णीयुरिति निरूप्य, तदभावे क्रममाह,—**

पत्नी दुहितरश्चैर पितरौ भ्रातरस्तथा ।
तत्सूता गोत्रजा बन्धु-शिष्य-स ब्रह्मचारिणः ॥२६३६॥
एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः ।
स्व र्यातस्य ह्य पुत्रस्य सर्व्ववर्णे ष्वयं विधिः ३(‡) ॥२६३७॥

पत्नीति-जात्येक वचनम् , तेन पत्नी द्वित्वादौ विभाज्य ग्राह्यम् ।
इदन्तु भक्तु विभक्तत्वेऽसंसृष्टत्वेच वेदितव्यम् ।

विभक्ते संस्थिते द्रव्यं पुत्राभावे पिताहरेत् ॥
भ्राता वा जननी चाथ माता वा तत् पितुः क्रमादिति ॥२६३८॥

1989. कात्यायनोक्तैरेव च-शब्दाद् दुहित्रभावे दौहित्रो धनभाक् ।
1990. यथाह विष्णुः—

अपुत्र पौत्र सन्ताने दौहित्रा धन माप्नुयुः ।
पूर्वेषान्तु स्वधाकारे पौत्रा दौहित्रिका मता, इति ॥२६३९॥

तदभावे मातापितरौ धनभाजौ । पित्रभावे भ्रातरोधन भाजः । त्रिष्वपि सोदराणामभावे, भिन्नोदरा धदभाजः । तदभावे तत्पुत्राः, तद भावे गोत्रजाः, तत्रापि सपिण्डाः, तदभावे समानोदकाः ।

**तल्लक्षणन्तु—**

सपिण्डतातु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदक भावस्तु निवर्त्तेता चतुर्द्दशात् ॥२६४०॥
जन्मनाम्नोः स्मृते रेके तत् परं गोत्र मुच्यते, इति ॥२६४१॥

---

१(*) अव ष्यंश भागिनम् इति पाठान्तरम् ।

२(†) 'गृह्णीयुः नियमाद यतः' इति अपरः पाठः ।

३(‡) अव 'स्वर्यातस्य—इत्यादि—'वर्णेष्वयं विधिः' इत्यवाधिकः पाठः प्रतीयते । —स्व र्यातस्य निधनं गतस्येति ।

## गोत्राभावे बान्धवाः ।

तेऽप्यात्म पितृमातृ-बन्धुभेदेन त्रिधा ।
आत्मपितृस्वसुः पुत्रा आत्ममातृस्वसुः सुताः ।
आत्ममातुल पुत्राश्च विज्ञेया आत्मबान्धवाः ॥२६४२॥

एवं पितुः पितृस्वसुः पुत्रा इत्यादिना वचनात् तेष्वप्याद्यावात्मबान्धवाः, १(*) धनभाज इति क्रमो वेदितव्यः ।

1991. तदभावेत्वाचार्य्य, स्तदभावे शिष्यः इति विशेष आपस्तम्बोक्तः ।

तदभावे स ब्रह्मचारी, तदभावे श्रोत्रियः २(†) ।
तदभावे ब्राह्मण मात्रम् धनभाक् ।
न राजा विप्रद्रव्यं गृह्णीयात् ।
ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्नकश्चन ।
ब्राह्मणायैव दातव्यं अनस्वः स्यान्नृपोऽन्यथा ३(‡) ॥२६४३॥

1992. इति नारदोक्तेः ।

तन्नाशे—ब्राह्मणार्थनाशे। ब्राह्मणग्रहणात्क्षत्रियादिधनं पूर्वोक्ताभावे राजा गृह्णीयात् ।

इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृपः ॥२६४४॥

1993. इति मनूक्तेः ।

पुत्राः पौत्राः पत्नादयश्च, पूर्व्व पूर्वाभावे धनभाज इत्युक्तम् ।

## तदपवादमाह,—

वानप्रस्थ-यति-ब्रह्मचारिणां रिक्थभागिनः ।
क्रमेणाचार्य्य तच्छिष्य धर्म्म भ्रात्रेक तीर्थिनः ॥२६४५॥

---

१(*) तदभावे पितृबान्धवाः, तदभावे मातृबान्धवाः ।
अत्र 'पितुः पितुः स्वसुः पुत्राः' इति भिन्नः पाठः ।
'भ्राता चैकत्र संस्थितः' इति भिन्नः पाठः ।

२(†) अन्यत् सर्व्व-दायभागे, दायक्रम संग्रहे, जगन्नाथ न्यायपञ्चाननस्य विवाद भङ्गार्णवे, दायमयूखेचास्ति। 'श्रोत्रियश्छन्दोऽधीते' इति महाभाष्ये। 'एकां शाखां सकल्पां वा षड्भिरङ्गैर धीतवान्। षट्कर्म्म निरतो विप्रः सवै श्रोत्रिय उच्यते' इति स्मृतिः ।

३(‡) 'अग्नीयाद विषमत्युग्रं ब्रह्मस्वं न कदाचन' इति स्मृतिः। अत्र हरेन्नृप इति नृपस्य धन हरणं धनं संरक्ष्य राष्ट्र हिताय रक्षणं बोध्यम ।

अत्र क्रमेण प्रतिलोमक्रमेण । ब्रह्मचारिणो धनमाचार्य्यो गृह्णीयात् , इत्यादि । धर्म्मभ्राता सत्यतो मानित-भ्राता । एक तीर्थी एकाश्रमी । धर्म्मभ्राताचासावेकतीर्थी चेति कर्म्मधारयः ॥

इदानीम पुत्रस्य पत्न्यादयः धनभाज इत्युक्तस्यापवादमाह,—

संसृष्टिनस्तु संसृष्टी सोदरस्यतु सोदरः ।
दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च ॥२६४६॥

विभक्तं धनं पुनर्मिश्रितं चेत् तत् संसृष्टमिदमुच्यते । तद्वान् संसृष्टी ।

1994. यथाह, बृहस्पतिः—

विभक्तोयः पुनः पित्रा भ्रात्रैकत्र च संस्थितः ।
पितृव्येनाथवा प्रीत्या स तत् संसृष्ट उच्यते, इति ॥२६४७॥

तस्यासंसृष्टिनो मृतस्यांशं जातस्य तत् पुत्रस्य संसृष्टी दद्यात् , तदभावे स्वयमेवाददीत ।

एवं सोदरस्य सोदरः संसृष्टीदद्यादपहरेच्च । न तत् पत्न्यादिः । इदानीं संसृष्टिन्यपुत्रेमृते, संसृष्टिनो भिन्नोनरस्य सोदरस्यचासं सृष्टिणः सम्भवे, कस्य धनग्रहणमिति-विवक्षायां, द्वयोर्ग्रहणे—

कारण माह,—

अन्यौदर्य्यस्तु संसृष्टी नान्यौदर्य्यो धनं हरेत् ।
असंसृष्ट्यपि चादद्यात् संसृष्टोनान्यमातृजः ॥२६४८॥

अन्यौ दय्यः सापत्न्योभ्राता संसृष्टीचेद्धनं हरेत् ।
नपुनरन्यौ दय्यो ऽसंसृष्टी धनं हरेत् ॥२६४९॥

तथा—

असंसृष्ट्यपि संसृष्टः एकोदरसंवद्धः सोदर इत्यर्थः ।
सोऽन्य संसृष्टिनोधनमाददयात् १(*) ।

अत्र संसृष्टित्वं सोदरत्वञ्च क्रमेण धनग्रहणे कारणमित्युक्तं भवति । अन्य मातृजः अत्रैवाध्याहार्य्यः ।

संसृष्टी भिन्नोदर एव संसृष्टिनो धनं नाददीत । अपित्व संसृष्टिनः सोदरा अपि चादध्युरिति तात्पर्य्यार्थः ॥२६५०॥

---

१(*) अत्र संसृष्टि नः इति भिन्नः पाठः ।

इदानीं पूर्व्वोक्तस्य सर्व्वस्यापवादमाह,—

क्लीवोऽथ पतिनस्तज्जः पङ्गुरुन्मत्तकोजड़ः १(*) ।
अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्याःस्यु र्निरंशकाः ॥२६५१॥

अत्र पतितो ब्रह्महादिः । तज्जस्तदुत्पन्नः उन्मत्तोग्रहाद्याविष्टः चित्तविभ्रान्तश्च । जड़ोऽमनस्कः । अचिकित्स्यरोगोऽनिवार्य्यरोगग्रस्तः । 'चिकित्सारुक्प्रतिक्रिया' इत्यभिधानात् । आदिशब्दादाश्रमान्तरंगतः ।

पितृद्विट् पतितः षंढो यश्च स्यादौपपातिकः ।
औरसा अपि नतेऽंशान् लभेरन् क्षेत्रजाः सुताः ॥२६५२॥

1995. इति नारदोक्तेः ।

अत्रानंशका,—इत्युक्तेऽन्नाद्याच्छादनभाजोभवन्त्येव ।

सर्व्वेषामपितु न्याय्यं दातुं शक्त्यं मनीषिणः ।
ग्रासाच्छादन मत्यन्तं पतितोप्यपद्धवेत् ॥२६५३॥

1996. इति मनुक्तेः । अत्यन्तं,—यावज्जीवनमित्यर्थः ।

क्लीवादि पुत्राणामंशभागित्वमाह,—

औरस क्षेत्रजास्तेषां निर्दोष भागहारिणः ।
सुताश्चैषां प्रभर्त्तव्या यावद्वै भर्तृसात्कृताः ॥२६५४॥

अत्र सुताः कन्या इत्यर्थः । क्लीवादिपत्नीनां विशेषमाह,—

अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः ।
निर्व्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैवव ॥२६५५॥

इदानीं स्त्रीधन-विभागं वक्तुं तद्धन स्वरूपमाह,—२(†)

पितृ-मातृ-पति-भ्रातृ-दत्तमध्याग्न्युपागतम् ३(‡) ।
आधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्त्तितम् ॥२६५६॥

आध्याग्नीति—अग्नावधित्य विवाहवर्द्धितम् ४(§) ।

---

१(*) तज्जीवा—पतित तज्ज्ञः इत्यत्र पतित स्तज्ञ इत्यन्यः पाठः । पतज्ञ इति पातित्यादि युक्तोऽयमिति ग्रानविषयः इति ।

२(†) संप्रति योषितां लब्धधन विभागे विशेषमाह पित्रादीति

३(‡) 'दत्त मध्यादुपागतम्' 'दत्त मन्यादुपागतम् वेति' वा दत्त मध्युग्रुपागत मितिच । अत्र भिन्नः पाठः ।

४(§) अत्र विवाहाग्नि माश्रित्य लब्धधनं वा वोध्यम् ।

वधूदत्तं तथाशुल्कं अन्वाधेयकमेवच ।
अतीताया (मप्रजसि) रजसिवा बान्धवास्तदवाप्नुयुः ॥२६५७॥

अन्वाधेयकं—विवाहादनन्तरं दत्तम् । अप्रजसि-दुहितृ-दौहित्रादौ दुहितृ पुत्रपौत्ररहितायामित्यर्थः । बान्धयाः—भत्रादयाः ॥

**अत्रैवं विशेष माह,—**

अप्रजः स्त्रीधनं भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपि ।
दुहितॄणां प्रसूताचेच्छेषेषु पितृगामि तत् ॥२६५८॥

शेषेषु—आसुरादिषु विवाहेषु—पितृगामि,—मातृ वितृगामि । सर्व्वत्र प्रसूताच—दुहितॄणामेवभवति । तत्रापि—प्रत्ताऽप्रत्तासमवाये,

1997. अप्रत्तानां प्रतिष्ठिता समबायेऽप्रतिष्ठितानामिति गौतमः । प्रतिष्ठिता-अप्रतिष्ठिता, अनपत्या निर्धनावा १(*) ॥

**अधुना वागूदत्ताविषये, आह—**

दत्वा कन्यां हरन् दण्ड्यो व्ययं दद्याञ्च सोदयम् ।
मृतायान्दत्तमा दद्यात् परिशोध्यो भवेत्वयम् ॥२६५९॥

सोदयं—सवृद्धिकम्, आय-व्ययितं द्रव्यम् । दत्तमङ्गुलीयादिकम् । उभयोः—आत्मणः कन्यादातुश्च व्ययं परिशोध्य दत्वाऽवशिष्ट-माद्धीतेत्यर्थः ।

**किञ्च—**

दुर्भिक्षे धर्मकार्य्ये च व्याधौ संप्रतिरोधके ।
गृहीतं स्त्रीधनं भर्त्ता न स्त्रियै दातुमर्हति ॥२६६०॥
अधिविन्ना स्त्रियै दद्यादाधि वेदणिकं समम् ।
न दत्तं स्त्रीधनं यस्यै दत्तेत्वर्द्धं प्रकीर्त्तितम् ॥२६६१॥

**समं पुनर्विवाह द्रव्येण । विभागसन्देहे निर्णयमाह,—**

विभाग-निह्नवे ज्ञातिवन्धुं साक्ष्यभि लिखितैः ।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥२६६२॥

यौतकैः पृथक्कृतैः ॥

—*—

---

१(*) 'अति प्रतिष्ठिता, अप्रतिष्ठिता' इत्यपि पाठान्तरम् । अत्र कली धर्म्मे ह्रासान् स्वपा-प्राबल्याद् वागदाना भावः इति निबन्ध काराद्यः ।
अनपत्या, पुत्र कन्यारहिता ।

## इति रिकूथ विभाग प्रकरणम्।

—*—

### अधुना सीमा विवादादि निर्णय उच्यते।

सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरादयः।
गोपाः सीम्नः कृषाणाश्च सर्वेये वन गोचराः ॥२६६३॥
नयेयुरेते सीमानं स्थलाङ्गारन्तु यद्रु द्रुमैः
सेतु वल्मीक निम्नास्थि चैत्याद्यैरूपलक्षिताम् ॥२६६४॥

**नयेयुः—**

स्थलाङ्गारादि पूर्व्वकृतलक्षणै र्निश्चित्य ज्ञापयेयुः।

**स्थलादि चिह्नाभावे साक्षि-सत्त्वे निर्णयमाह,—**

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापिवा १(*)।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥२६६५॥
क्षितिधारिणः मूर्द्धंणि मृत्पिण्डाः॥ सामन्तादीनां मृषावादित्वे-

**आह,—**

अनृतेतु पृथग् दण्ड्या राज्ञा मध्यम साहसम् ॥२६६६॥

**मध्यमेति—**

चत्वारिंशदधिकपण पञ्चशतेनेत्यर्थः।

**चिह्न साक्षिणोरभावे आह,—**

अभावेऽज्ञातृ चिह्नानां राजा सीम्नः प्रवर्त्तकः २(†)।
उक्त मन्यत्राति दिशति, —
आरामायतन ग्रामनिपानोद्यानवेश्मसु।
एष सर्व्वविधि र्ज्ञेयो वर्षाम्बु प्रवहादिषु ॥२६६७॥

---

१(*) अंव सीमान्ता वा इति भिन्नः पाठः। अपरे सामन्ता नृपाः।

२(†) 'राज्ञो सीम्नः प्रवर्त्तिका' इत्यन्यः पाठः। सीम्नो निरूपणाभावे कस्य कियत् स्थानं, एतन्ममान्यवा इति निश्चयो न स्यादतः स्थल-निरूपणे तदावश्यकम्। अन्यथा विवादे महती हानिः।

**पूर्व्वंकृत मर्य्यादाभङ्गे दण्डमाह,—**

मर्य्यादायाः प्रभेदेतु सीमाति क्रमणे तथा ।
क्षेत्रस्य हरणे दण्ड्या अधमोत्तम मध्यमाः ॥२६६८॥
न निषेध्योऽल्प वाधस्तु सेतु कुल्याद्य कारकः ।
परभूमिंहरन् कूपः स्वल्पक्षेत्रो बहूदकः १(*) ॥२६६९॥

**न निषिध्य इत्यनुवर्त्तते ।**

स्वामिणे योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्त्तयेत् ।
उत्पन्ने स्वामिनोभोग स्तदभावे महीयते ॥२६७०॥

**उत्पन्ने—तदुत्पन्ने फले २(†) ।**

फालाहतमपि क्षेत्रं न कुर्याद्योन कारयेत् ।
स स्रदाप्योऽकृष्ट फलं क्षेत्रमन्येण कारयेदिति ॥२६७१॥

—*—

## इति सीमा विवाद प्रकरणम् ।

—*—

माषानष्टौतु महिषी सस्य घातस्य कारिणी ३(‡) ।
दण्डनीयः तदर्द्धंतु गौस्तदर्द्धमजाधिकम् ॥२६७२॥
महिष्यादि स्वामी दण्डनीय इत्यर्थः ।
माषोऽत्र, ताम्रपणस्य विंशतितमोभागः ।
भक्षयित्वो पविष्टानां यथोक्ताद्द्विगुणोदयः ॥२६७३॥
समस्तेषां विवीतेऽपि खरोष्ट्रं महिषी समम् ।
विवीतोनाम, प्रचुरतरेणफल गृहीतो भूप्रदेशः ॥२६७४॥
यावत् सस्यं विनश्येत्तु तावत्स्यात् क्षेत्रिणः फलम् ।
गोपस्याढ्यस्तु गोमांस्तु पूर्व्वोक्तं दण्डमर्हति ॥२६७५॥

---

१(*) 'न निषेधोऽल्प' इति पाठान्तरम् । उत्तमाधम मध्यमैः इत्यपरः पाठः ।
अत्र 'य एव सेतुर्विधरणम्' इति श्रुतिः ।
'सेतुरालिः, संक्रमणं, सरिदुत्तरणम्' इति कोषकृत् । 'पानीयान' इति भिन्नः पाठः ।

२(†) अत्रायं अधिकः पाठः क्वचिदस्ति । 'निषिध्यो ह्लप' इत्यपरः पाठः ।

३(‡) 'स्वल्प चैवोवहूदवः' इति भिन्नः पाठः ।
अत्रैकस्य चैवस्य सस्यस्यान्य स्वामिकप शुभिर्नाशे दण्ड उक्तः ।
माषोऽत्र द्रव्यभागः नतु कलायसस्यम् । अन्यत् हेमाद्रौ द्रव्य परिमाणेऽस्ति ।

अत्र, तु शब्दात्पूर्व्वोक्तदण्डोगोपस्य १(*) ।
गोपाभावे गोमत एवदण्डः । क्षेत्रिणः फलम् ।
गोपस्ताड्यस्तु गोमांस्तु पूर्व्वोक्तं दण्डं मर्हति ॥२६७६॥

**द्रव्यदानञ्च कुत्रचि दपवाद माह,—**

पथिग्राम विवीतान्ते क्षेत्रे दोषोन विद्यते ।
अकामतः कामचारे चौरवद्द दण्ड मर्हतीति ॥२६७७॥

**तथा,—**

महोक्षोत्सृष्ट-पशवः सूतिकागन्तुकादयः ।
पालोयेषाञ्च ते मोच्या दैव-राज-परिप्लुताः ॥२६७८॥
उत् सृष्टपशवो, वृषोत् सर्गादि विधिना मुक्तपशवः ।
सूतिका अनिर्दशाहा, आगन्तुकः स्वयूथाद्भ्रष्टः २(†) ।

**तथा,—**

येषां पालोविद्यते तेऽपि दैव-
राजोपहताश्चेत् सस्य-भक्षिणोन दण्ड्याः ॥

**गोप धर्म्ममाह ३(‡),—**

यथाऽर्पितान् पशूनापः सायं प्रत्यर्पयेत्तथा ।
प्रमादमृत-नष्टाश्च प्रदाप्याः कृतवेतनाः ॥२६७९॥

**प्रमादेन स्वापराधेन ।**

पालदोषविनाशेतु पाले दण्डोविधीयते ।
अर्द्धत्रयोदशपणः स्वामिनो द्रव्यमेव च ॥२६८०॥

**गोप्रचार स्थलमाह,—**

प्रायमिच्छया गो प्रचारोभूमिराज-वशेनवा ४(ऽ) ।
द्विज स्तृणौघपुष्पाणि सर्व्वतः स्वव(यमा)दाहरेत् ॥२६८१॥
धनुः शतपरीणाहस्तुसस्यः कार्य्य इत्यर्थः ।
खर्व्वटे प्रचुर करंकसन्तानिस्थलम् ॥

---

१(*) गोपःस्वकाभावे तद्वारणकस्य बालस्य वा दण्डः ।
,, 'गोपस्ताड्य.' इति पाठे शस्यहाने: ताड़नीय इति ।
२(†) 'स्व यूथात् भ्रष्टः' । 'स्व यूथात् च्युतो वा' इत्यन्यः पाठः ।
३(‡) प्रसङ्गात् गोपाणां धर्म्ममाह । नगर, पल्ली, ग्राम, खेट, खर्व्वटादीनां इत्तं वास्तु शास्त्रेऽस्ति ।
४(ऽ) पद प्रान्त मिच्छया, बीजतृणेष, स्वयमाहरेत्, एतानि पाठान्तराणि सन्ति ।

## इति स्वामि पाल विवाद प्रकरणम् ॥

— * —

### इदानीमस्वामि-विक्रये निर्णय माह—

स्वं लभेताध्वविक्रीतं क्रेतुर्दोषेऽप्रकाशिते ।
हीनाद्रहोहीन मूल्ये वेला हीने च तस्करः १(*) ॥२६८२॥
नष्टापहृत मासीद्युयद्भर्त्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ च गृहीत्वा स्वय मर्पयेत् ॥२६८३॥
विक्रेतुर्द्दर्शनात् शुद्धिः स्वामी द्रव्यं नृपोदमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥२६८४॥
आगमेनाल्पभागेन नष्टं भाव्यमथोऽन्यथा ।
पञ्चमांशोदमस्तस्य राज्ञे तेना विभाविते २(†) ॥२६८५॥

### पञ्चमांशः—

नष्टद्रव्य-पञ्चमांशोनाधिकेन राज्ञे देयः ॥

### तस्कर-प्रच्छादकं प्रत्याह,—

हृतं प्रणष्टं योद्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः सतु षण्णवति पणान् ॥२६८६॥
शौल्किकैः स्थानपालैर्व्वानष्टापहृत माहृतम् ।
अर्व्वाक्सम्बत् सरात् स्वामी हरेत परतोनृपः ॥२६८७॥

### शौल्किकाः—

शुल्काधिकारिणः३(‡) । सम्बत्सराद्र्व्वाक्—सम्बरात् पूर्व्वमित्यर्थः।
किञ्च , पणानेकशतं ( एकशफे )दद्याच्चतुरः पञ्च मानुषे ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥२६८८॥

— * —

---

१(०) अत्र वष्ठि हीने, इत्यन्यः पाठः ।

२(†) पञ्चमांशद—अत्र पञ्चवर्षः इति भिन्नः पाठः । अर्व्वाक् संवत्सरा दित्यत्र, अत्र सं वत्सरादिति पाठान्तरम् ।

३(‡) अत्र घट्टहट्ट वनादीनां मौल्य-कर ग्राहकाः ।
पणानिकशतम्, इत्यन्यः पाठः ।

## इत्यस्वामि-विक्रय प्रकरणम् १(✲) ।

—✲—

**इदानीं देयादिक मुच्यते ।**

स्वकुटुम्बाविरोधेन देयं दार-सुता हते ।
नान्वये सति सर्व्वस्वं यच्चान्यस्मै प्रति श्रुतम् ॥२६८६॥
कुटुम्ब मपीड़यित्वा पुत्रदारव्यतिरिक्तं स्वन्दद्यात् ।

**तथा,—**

पुत्र पौत्राद्यन्वये सति सर्व्वस्वं नदद्यात् ।
तथाहन्य स्मैप्रति श्रुतंयत्त दन्यस्मै नदद्यादित्यर्थः ।
प्रतिग्रहः प्रकाशः स्यात्-स्थावरस्य विशेषतः ।
देयं प्रतिश्रुतं चैव दत्वा नाप हरेत् पुनः २(†) ॥२६९०॥
दत्वेति विशेष श्रुते भयेन पुत्रादि स्पर्द्धया,
परिहासेनोक्रोयेन कालेन रोगार्त्तेन,
मत्तेन च यद्दत्तं तदुप हरेदिति ज्ञायते ।

**तत्र दानाभावात् ,—**

अदत्तंहि भय-क्रोध-शोकोद्वेगरू जान्वितैः ।
तथोत् क्रोच परीहास व्यत्यासस्थल योगतः ॥२६९१॥
वालमूढ़ा स्वतन्त्रार्त्त मत्तोन्मत्ताप वर्जितम् ३(‡) ॥
अपात्रे पात्र मित्युक्तं कार्य्येवा धर्म्म संहिते ।
यद्दत्तं स्याद विज्ञानाद दत्तमिति तत् स्मृतम् ॥२६९२॥

1998. **इति नारद स्मृतेश्च ।**

---

१(✲) 'अस्वामि विक्रीत'' द्रव्यं पूर्व्व स्वामी तदाप्नुयात्' इति स्मृतिः ।
'वृद्धौ च मातापितरौ साध्वीभार्य्या सुतः शिशुः ।
अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्' इति ।

२(†) अत्र पाठः क्लिष्टार्थः, विकृतोवा । गो-प्रचार स्थलं गोचारण भूमिः ।
,, अन्यद् गोष्ठम् ।
,, गृहस्थानामन्येषाञ्च निवासः । तथा कृषिवलादिनाम् । स ग्रामः, खेटः, खर्व्वट इत्यादि संज्ञितः । अन्यदस्ति वास्तु शास्त्रे ।

३(‡) मत्तोन्मत्ता दीनामपहरेन्नान्यस्यापहरे त्तत्तेषां रक्षण सामर्थ्यात् । यदा विशेष कारणादुपहरे दिति । अत्र शिल्प कृताङ्किक च ।

## इति दत्ता प्रादाणिकं नाम प्रकणम् ॥

—*—

### अथ क्रीतानुशयः ।

दशैक पञ्चसप्ताह-मासत्र्यहार्द्ध मासिकम् ।

वीजायोवाह्य-रत्नस्त्री दोह्यं पुमान् परीक्षणम् १(*) ।

वीजं—व्रीह्यादि । अयोलोहम् । वाह्यः—वृषादिः । रत्नं मुक्तादि । स्त्री—दासी । दोह्यं—दोहणयोग्य गवादि । पुमान्—दासः । एषां यथाक्रमेण दशाहादिभिः परीक्षणं कार्य्यम् । उक्त काले वीजादेर सत्व ज्ञाने क्रयो निवर्त्तते, न पुनरुर्द्ध मित्यर्थः ॥

—*—

## इति क्रीतानुशयः ।

—*—

### इदानीं सुवर्णादेः परीक्षामाह,—

अग्नौ सुवर्णमक्षीणं रजते द्विपणं शते ।

अष्टौ त्रपुणि सीसेवा ताम्रे पञ्च दशायसि ॥२६६३॥

अग्नाव क्षीणं स्वर्णं यावत् स्वर्णकाराय दत्तं तावद् ग्राह्यं नन्यूनम् ।

रजतेतु एतत् पले प्रताप्यमाने पलद्वयं क्षीयते ।

एवमष्टौ त्र पुणि सीसे च शतपले इत्यनुवर्त्तते ॥२६६४॥

### क्वचिद् वृद्धिमाह,—

शते दशपला वृद्धि र्यासौ कार्पास सौत्रिके ।

मध्ये पञ्चपला वृद्धिः सुसूक्ष्मे त्रिपला मता ॥२६६५॥

### द्रव्यान्तरे विशेषमाह,—

कार्म्मिके रोमवन्धे च त्रिंशद्भ भागः क्षयोमतः ।

नक्षयोनच वृद्धिश्च कौषेये वाल्कलेषुच ॥२६६६॥

यत्र सिद्धेपटे स्वस्तिकादिकं चित्रं सूत्रैः क्रियते तत् कार्मिक-मित्युच्यते २(†) ।

देशं कालञ्च भोगञ्च ज्ञात्वा नष्टेवलावलम् ।

द्रव्याणां कुशला ब्रूयु र्यत्तद्दाप्यम संशयम् ॥२६६७॥

---

१(*) 'मासतयार्द्ध मासिकम' इत्यः पाठः । शिल्पि-कृताङ्कित विचित्र रात्नवादिकं रोध्यम् । तच्च शिल्प शास्त्रोक्तमिति ज्ञेयम् ।

२(†) एतत् सर्व्वं तन्तुवाय-कुविन्द-वस्त्रादि-शिल्पिभिः कृतम् ।

## इति क्रीतानुशय प्रकरणम् ।

—*—

बलाद्दासी कृतश्चौरै विंक्रीतश्चापि मुच्यते १(*) ।
स्वामि प्राण प्रदोभक्तः त्यागात्म-निश्चयादपि ॥२६९८॥

**क्वचिदपवादमाह,—**

प्रव्रज्यावसितो राजा दास आमरणान्तिकः ।
वर्णानामानुलोम्येण दास्यं न प्रतिलोमतः ॥२६९९॥

**प्रव्रज्यावसितः सन्न्यासाद् भ्रष्टः ।**

कृतशिष्यो(ल्पो)ऽपि निवसेत् कृतकालं गुरोर्हितम् ।
अन्तेवासी गुरोः प्राप्त भोजनस्तत् फलप्रदः ॥२७००॥

—*—

## इत्यभ्युपेत्य शुश्रूषा प्रकरणम् ।

—*—

राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्रतु ।
त्रैविद्यं वृत्तिमद्भ भूयात् स्वधर्म्मः पाल्यतामिति ॥२७०१॥
निजधर्म्मा विरोधेन यस्तु सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्म्मो राज कृतश्च यः ॥२७०२॥

**सामयिकः—**

तत् समये आवासिकः नतु सततं अवस्थानं तेन कृतम् ।
गणद्रव्यं हरे दयस्तु सम्बिदं लङ्घयेत्तु यः ।
सर्व्वस्व हरणं कृत्वा तं राष्ट्राद् विप्रवासयेत् ॥२७०३॥

---

१(*) अत्र दोह्या, दोहन-योग्या धेनुः । अत्र सूच्यते इत्यन्यः पाठः ।
'त्यागांत्तं निश्चयात्' इति भिन्नः पाठः ।

२(†) 'इत्याग१ सुश्रुषा' इत्यमपि पाठान्तरम् ।
अत्र प्रवासयेत्तत् स्थानाद्देशान्तरं नयेदिति ।
क्वचित् 'यो लमेत तदर्पयेत्' इत्यन्यः पाठः ।

**अत्र सम्विदं-शिष्टकृत-मर्य्यादाम् ।**

फर्त्तव्यं वचनं सर्वैः समूत्साहितवान्दिनम् १(*) ।
यस्तत्र विपरीतःस्यात् स दाप्यः प्रथमं दमम् ॥२७०४॥
समूहकार्य्य-आयातान् कृतकार्य्यान् विसर्जयेत् ।
स दान-मान-सत्कारैः पूजयित्वा महीपतिः ॥२७०५॥
समुह-कार्य्यु प्रहितो यांल्लभेतत् दर्पयेत् ।
एकादश गुणं दाप्यो यद्यसौ नार्पयेत् स्वयम् ;
धर्म्मज्ञाः शुचयोऽलुब्धा भवेयुः कार्य्य चिन्तकाः ॥२७०६॥
कर्त्तव्ये वचनन्तेषां समूहे हितवादिनम् ।
श्रेणि-नैगमि-पाषण्डि-गणाना मप्ययं विधिः ॥
भेदं चैषां नृपोरक्षेत् पूर्व्ववृत्तिञ्च पालयेदिति ॥२७०७॥

**इति सम्विद् व्यतिक्रम प्रकरणम् ॥*॥**

गृहीत वेतनं कर्म्म त्यजन् द्विगुण मावहेत् ।
अगृहीते समं दाप्यो भृत्यैरक्ष्य उपस्करः २(‡) ॥२७०८॥

**भृति मपरिच्छिद्य कर्म्म कारयितारं प्रत्याह,—**

दाप्यस्तु दशमं भागं वाणिज्ये पशुशस्यतः ।

**अनाज्ञसं प्रत्याह,—**

देशं कालञ्च योऽतीया(ता)त् लाभं कुर्य्याच्च योहन्यथा ।
तत्र स्यात् स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥२७०९॥

**अत्र च्छन्द इच्छा ३(‡) ।**

यो यावत् कुरुते कर्म्म तावत्तस्यतु वेतनम् ।
उभयोरप्यसाध्यञ्चेत् साध्ये कुर्य्याद् यथा श्रुतम् ॥२७१०॥

---

१(*) सम्वित,—शिष्टाचारः, मर्य्यादा, देशानुशिष्टः, आप्तोपदेशोवेति।
समूहे—हितवादिनम् इति भिन्नः पाठः। 'समूहाहूत वादिनम्' इत्यपि पाठान्तरम्। अत्र दिनं व्याप्य सदैव हितवान्-हितकृद् भवेदिति।

२(‡) अवोपस्करम, इत्यन्यः पाठः।

३(‡) अत्र राज्ञः स्वाभिप्रायानुरूपं देयमिति। साध्ये इति पाठश्च।

उभाभ्यामङ्गीकृतं कर्म्मासमापितश्चेत् तदनुसारेण १(*) वेतनं देयम्। न पुनः पूर्व्वकल्पितं सर्व्वम्। साध्ये समापिते कर्म्मणि सति, यथा श्रुतं यावत् परिकल्पितं तावद्दद्यादित्यर्थः।

अराज दैविकं नष्टं भाण्डं दाप्यस्तु वाहकः।
प्रस्थानविघ्न कृच्चैव प्रदाप्यो द्विगुणां भृतिम् ॥२७११॥

**अत्र भाण्डं,—**

द्रव्याधारः करण्डादि। महाकार्य्यमङ्गीकृत्य प्रस्थानं योनकरोति स प्रस्थान विघ्न कृत् २(†)।

**किञ्च—**

प्रक्रान्ते सप्तमं भागं चतुर्थं पथि सन्त्यजन्।
भृति मर्द्धपथे सर्व्वां प्रदाप्यस्त्याजकोऽपि वा ॥२७१२॥

**प्रक्रान्ते इति,—**

भृत्यान्तर सम्भव विषयम्।
तेन प्रस्थान विघ्नकृद् द्विगुणं दाप्य इति पूर्व्वेण नविरोध इति ज्ञेयम्३(*)॥

## इति वेतनादान प्रकरणम्।

—*—

द्युतादिव्यवहार निर्णयस्तु नात्युपयुक्तत्वान्नोच्यते॥
इति श्रीमद्विद्वज्जनकृपापात्रीभूतेनानन्तभट्टेन विरचिते
विधान पारिजाते व्यवहाराध्यायः॥

—०—

## अथ प्रायश्चित्तम्।

आचाराख्यं व्यवहारञ्च निरूप्य स्मृतिवाक्यतः।
सतामनुग्रहादेव प्रायश्चित्तं निरूप्यते ॥२७१३॥

---

१(०) 'तत् सेवानुसारेण' तत् मत्यानुसारेण इति वा पाठः।

२(ा) गुरुकार्य्यं प्राक्स्वीकृत्य तत् कृत्ये स्था।नेच नोयाति स विघ्न कर्त्ता इति।

३(‡) अत्र पाठः दुर्बोध्यः। 'प्रायश्चित्तानि पापक्षय मात्र साधनानि चान्द्रायणादीनि' इति।

" रोगोपशमे यथौषधं तथा पापे प्रायश्चित्तम् बोध्यम्।

तद् करणेऽनिष्ट माह, याज्ञवल्क्यः—

महापातकजान् घोरान्नरकान्प्राप्य दारुणान् ।
कर्मक्षयात् प्रजायन्ते महापातकिनस्त्विह १(*) ॥२७१४॥
मृगश्व सूकरोष्ट्रानां ब्रह्महा योनिमृच्छति ।
खरपुल्कसान्त्यजानां सुरापोयोनिमृच्छति ॥२७१५॥
कृमिकीट पतङ्गत्वं स्वर्णहारी समाप्नुयात् ।
तृणगुल्मलतात्वञ्च क्रमशो गुरुतल्पगः ॥२७१६॥
योयेन सम्भवत्येषां सतल्लिङ्गोऽभिजायते ।
अन्नहर्ता मायावीस्यान्मूकोवागपहारकः २(†) ॥२७१७॥
धान्यमिश्रोऽतिरिक्तांगः पिशुनः पूतिनासिकः ।
तिलहृत्तैलपायीस्यात् पूतिवक्त्रस्तु सूचकः ॥२७१८॥
परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ।
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः ॥२७१९॥
हीनजातौ प्रजायेत पररत्नापहारकः ।
पत्र ( पत्र ) शाकं शिखि-हृत्वा गन्धां श्छुच्छुन्दरी शुभाम् ॥२७२०॥
मूषकोधान्यहारी स्यात् यान मुष्ट्रः फलं कपिः ।
जलं प्लवः पयः काकोगृहहारी ह्युपस्करम् ॥
मधुदंशः पलं गृध्रोगां गोधाग्निं बकस्तथा ३(‡) ॥२७२१॥
श्वीत्री वस्त्रं रसं श्वाच चीरा ( चोरो ) लवणहारकः ।
प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्म्मणि ॥२७२२॥
द्रव्य प्रकाराहि यथा तथैव प्राणिजातयः ।
यथा कर्म्मफलं प्राप्य तिर्य्यक्त्वं कालपर्य्ययात् ४(ऽ) ॥२७२३॥
जायन्तेलक्षण भ्रष्टा दरिद्राः पुरुषाधमाः ।
ततोनिष्कल्मषीभूताः कुले महति भोगिणः ॥२७२४॥

---

१(*) 'प्रायश्चित्तम कुर्वाणाः पापेषु नियतानराः ।
अपश्चात्तापिनः कष्टान् नरकान् यान्ति दारुणान्' इति श्रुतिः ।
द्युतादि व्यवहारस्तु—चतुःषष्ठि लीलीचालि । पुराणे व्यवहार शास्त्रे च विद्यते ।
पचद्यीडा, मायाविद्यं, चन्दन.ञ्च करण क्रीडा तथा, चतुःषष्टिकला विद्यासु च ।
२(†) धान्यहृत चीऽति रिक्ताङ्गः इत्यन्यः पाठः । चन्न मिठं सी इत्यन्य मिर्जन इति भिन्नः पाठः ।
३(‡) पय पलमित्यत्र कुलम्, 'दंशस्तपलं' इति च भिन्नः पाठः ।
४(ऽ) 'कालपर्य्ययात्' इति भिन्नः पाठः । तिर्य्यक्त्वं तु कालविपर्य्ययो हिति च !

जायन्ते विद्ययोपेता धनधान्य-समन्विताः ।
विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् १(*) ॥२७२५॥
अनिग्रहाच्चेन्द्रियाणां पुनः पतन मिच्छति ।
तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये ॥२७२६॥
एवमस्यान्तरात्माच लोकश्चैव प्रसीदति ।
प्रायश्चित्तम कुर्व्वाणाः पापेषु निरता नराः ॥२७२७॥
अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान् २(†) ।
तामिस्रलोहशङ्कुच-महानिरय शाल्मली ॥२७२८॥
रौरवं कुड्मलं पूति मृतिकं काल सूत्रकम् ।
सङ्घातं लोहितोदश्च सविषं सप्रतापनम् ॥२७२९॥
महानरककालोलं सञ्जीवन महापथम् ।
अवीचिमन्धतामिस्रं कुम्भीपाकन्तथैव च ॥२७३०॥
असिपत्रवनञ्चैव पातनञ्चैक विंशकम् ।
महापातक जैर्घोरैरुपपातक जैस्तथा ॥२७३१॥
अन्विता यान्त्यचरित-प्रायश्चित्ता नराधमाः ।
प्रायश्चित्तैरपैत्येनो यदज्ञान कृतम्भवेत् ॥२७३२॥
कामतोऽव्यवहार्य्यस्तु वचनादेव जायते ३(‡) ।
ब्रह्महा मद्यपस्तेनस्तथैव गुरुतल्पगः ॥२७३३॥
महापातकिनस्त्वेते यश्च तैः सहसंवसेत् ।
महापातकिभिः सार्द्धंवासः सम्वत् सरावधिः ४(S) ॥२७३४॥
कृतोयेन सतच्छतुस्यासे चत्वारः सपञ्चमः ५(०) ।

---

१(*) शास्त्रोक्त कार्य्यत्यागात् । 'निन्दितस्य प्रसेवनात्' भिन्नः पाठः ।

२(†) प्रायश्चित्ते न कृते पाप वह्निर्नरकश्च स्यात् ।

पापजनक कृत्यकरणाच्च । 'नरः पतन मिच्छति' भिन्नः पाठः । तथाचनरः' इत्यन्य , पाठः ।

अव कल्लोल इति भिन्नः पाठः ।

३(‡) दिष्टजायते इत्यन्यः पाठः ।

कृते पापकृत्ये प्रायश्चित्तं विधेयम् इति । नरका नानाविधा मिताक्षरायां पुराणेषुचैकविंशतिः

चतुरशीति संख्यकानिच सन्ति ।

४(S) 'स प्रतापनं' इत्यं पाठान्तरमपि ।

अव वचनाद् धर्म्मशास्त्रोक्तेश्च ।

५(०) 'स्तेनो हिरण्यस्य' इत्यादि श्रुतौ पञ्च महापातकानां सूचितोऽपि ।

स पञ्चमः इति भिन्नः पाठः ।

## अथ महापातक समानि कथ्यन्ते ।

—*—

गुरूणामप्यधिक्षेपो वेदनिन्दा सुहृद्वधः ।
ब्रह्महत्यासमं ज्ञेय मधीतस्यच नाशनम् ॥२७३५॥
निषिद्ध भक्षणं कौटिल्य मुत्कर्षेच वचोऽनृतम् ।
रजस्वला मुखास्वादः सुरापान समानितु ॥२७३६॥
अश्वरत्न मनुष्य स्त्री भूधेनुहरणन्तथा ।
निक्षेपस्य च सर्व्वं हि सुवर्णस्तेयसम्मितम् १(*) ॥२७३७॥
सखि भार्य्या कुमारीषु सवर्णास्वन्त्यजासु च ( तिसु ) ।
सगोत्रासु सुतस्त्रीषु गमनं गुरुतल्पवत् ॥२७३८॥
पितुः स्वसारं मातुश्च मातुलानी-सुतामपि ।
मातुः सपत्नी भगिनी माचार्य्य-तनयान्तथा २(†) ॥२७३९॥
आचार्य्यपत्नीं तनयां गच्छंस्तु गुरु तल्पगः ।
छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रिया अपिः ॥२७४०॥

## अथोपपातकानि ।

—*—

गोवधो व्रात्यता स्तेयमृणाणाञ्चानपक्रिया ।
अनाहिताग्निः पण्येतु विक्रय-परिवेदनम् ॥२७४१॥
भृतकाध्ययनादानं भृतकाध्यापनन्तथा ।
पारदार्य्यं पारिवित्र्यं वार्ध्युष्यंलवणक्रिया ॥२७४२॥
स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम् ।
नास्तिक्यं व्रतलोपश्च सुतानाञ्चैव विक्रयः ।
धान्यकुप्यपशुस्तेय मयाज्यानाञ्च याजनम् ॥२७४३॥
पितृमातृ सुतत्याग-स्तड़ागाराम-विक्रयः ।
कन्या संदूषणञ्चैव परिवित्तक-याजनम् (विन्दक-) ॥२७४४॥

---

१(*) प्रागनिचितस्य धनस्य पुनर्ग्रहणं हरणं वेति ।

२(†) अत्रार्थः आचार्य्य इत्यर्थः । 'कर्त्तव्यमाचरण् कर्म्म अकर्त्तव्यमनाचरण् ।
तिष्ठति प्रकृताचारे यः स आर्य्य इति स्मृतः '
महापातकातिपात कोप पातकादीनि मृत्युकानि सप्त विधानि ।

कन्या प्रदानस्तस्यैव कौटिल्यं व्रतलोपनम् ।
आत्मनोऽर्थे क्रियारम्भो मद्यप स्त्री निषेवणम् ॥२७४५॥
स्वाध्यायाग्नि सुतत्यागो बान्धव स्त्याग एवच १(*) ।
इन्धनार्थं द्रुमच्छेदः स्त्रीहिं सौनध-जीवनम् ॥२७४६॥
हिंसयन्त्र विधानञ्च व्यसनान्यात्म-विक्रयः ।
शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवनम् ॥२७४७॥
तथैवानाश्रमे वासः परान्न-परिपुष्टता ।
असच्छास्त्राधिगमन माकरेष्वधिकारिता ॥२७४८॥
भार्य्याया विक्रयश्चैषा मेकैकमुपपातकम् ॥२७४९॥
व्रात्यता—कालेऽनुपनीतत्वम् २(†) । ब्राह्मण-सुवर्ण-तत् समावर्वाक् परस्व हरणं स्तेयम् । गृहीत सुवर्णादेरप्रदानं ऋणानपक्रिया देवर्षि पितृणानपक्रियाच । सत्यधिकारेऽनाहिताग्नित्वम् । अपरा नपाक्रिया च यस्य लवणादे र्विक्रयः । सोदरे ज्येष्ठभ्रातरि स्थिते कनिष्ठस्य दाराग्नि होत्र ग्रहणं परिवेदनं पारिवित्यंवा ।
गुरुतल्प—तत् समभ्यतिरिक्त परस्त्रीगमनं पारदार्य्यम् ।
कनिष्ठे कृत विवाहे, जेष्ठस्य विवाहरहित्यं पारिवित्यम् ।
निषिद्ध वृद्ध्युपजीवित्वं वार्धूष्यं (ष्यंम) कौसीदमिति वा ।
लवलोत्पादनं लवणक्रिया । गर्भिण्यावधः, अन्नाप्यन्य स्त्रीवधश्च ।
शूद्रवधः । अदीक्षित क्षत्रवैश्य वधः । ब्रह्मचारिण्याः स्त्रिया योगः ।
देवाद्यर्थं गृहीतव्रतस्य लोपश्च व्रतलोपः । आयसत्रपुसीसादिकुप्य-मुच्यते , मोचनं वा । शिष्टं स्पष्टम् ॥

## अथ जातिभ्रंशकरमुच्यते ।

—*—

1999 अत्र मनुः—
ब्राह्मणस्य रुजःकृत्यं घ्रातिरघ्रेय वस्तुनः ३(‡) ।
जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ॥२७५०॥

---

१(*) अत्र मद्यपानरत: स्त्रय्यासक्तोवा ।
२(†) व्रात्य: योग्यकाले संस्कारहीन: पुन: प्रायश्चित्त पूर्व्वकं संस्कार्य्य: ।
अमून्यानि सप्तविध पातकानि क्रमशोच्यन्ते ।
३(‡) मद्ययोः इति भिन्नः पाठः ।

अथ संकरी करणम् । तत्र मनुः—

खराश्वोष्ट्र मृगेभानाम जाविकवधस्तथा ।

सङ्करी करणं नाम ग्राम्याश्वमहिषस्य च १(*) ॥२७५१॥

2000. अथापात्री करणम् ,—

स एव, निन्दितेभ्यो धनादानं वाणिज्यं शूद्र सेवनम् ।

अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥२७५२॥

2001. अथ मलिनी करणम् , तत्र मनुराह,—

कृमिकीट प्राणिहत्या मद्यानुगत भोजनम् ।

फलैधः कुसुमस्तेयमधैर्य्यञ्च मलावहमिति ॥२७५३॥

अतोऽन्यानि पापानि प्रकीर्ण संज्ञकानि ।

2002. कात्यायनोक्त प्रकारान्तरमाह,—

महापापं चातिपापं तथा पातकमेव च ।

प्रासङ्गिकञ्च यत् पापमित्येवं पञ्चकोगण इति ॥२७५४॥

## अथ विप्रहत्या प्रायश्चित्तम् २(†) ।

—*—

अज्ञानाद् ब्राह्मणं हत्वा प्रायश्चित्ताद्विशुद्ध्यति ।

2003. तत् प्रायश्चित्तमाह, याज्ञवल्क्यः—

शिरःकपाली ध्वजवान् भिक्षाशी कर्म्मवेदयन् ।

ब्रह्महा द्वादशाब्दानि मित भुक् शुद्धि माप्नुयात् ॥२७५५॥

त्रिकाल स्नानवान् सन्ध्यां कुर्व्वन् क्रोधादिवर्जितः ।

स्थानासनाभ्यां विहरं स्तीर्थान्यनु सरन्नपि ॥२७५६॥

शून्यागारेषु भिक्षाशी ब्रह्महैवं विशुध्यति ।

ब्राह्मणस्य परित्राणाद् गवाञ्च द्वादशस्य वा ॥२७५७॥

तथा,—

अश्वमेधाव भृथ स्नानाद्वा शुद्धिमाप्नुयात् ३(‡) ।

दीर्घ तीव्रामय ग्रस्तं ब्राह्मणं गामथापि वा ॥२७५८॥

---

१(*) 'मीनाहिमहिषस्य च' इति भिन्नः पाठः ।

२(†) अत्र ज्ञान पूर्व्वकवधे ब्रह्महत्या प्रायश्चित्तम् ।

३(‡) अत्र यज्ञान्ते वैदिक स्नानम् अवभृथ स्नानम् ।

दृष्ट्वा पथि निरातंकं कृत्वात्र ब्राह्मणं शुचिः ।
आनीय विप्रसर्वस्वं हृतं घातित एववा ॥२७५९॥
तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि विशुध्यति ॥२७६०॥
इत्यज्ञात कृत ब्रह्महत्या प्रायश्चित्तानि ॥

—*—

## अथ ज्ञान कृत ब्रह्महत्या प्रायश्चितम् ।

—*—

स एव प्राह—
लोमभ्यः स्वाहेत्येव लोम प्रभृति वैतनुम् ।
मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्यथा क्रमम् ।
मन्त्राध्यायौ भवन्त्येते वसिष्ठोक्ता यथा क्रमात् ।
संग्रामे वाहतोलक्षभूतः शुद्धिमवाप्नुयात् ॥२७६१॥
मृतकल्पः प्रहारार्थोजीवन्नपि विशुद्ध्यति( पि ) ।
अरण्ये निपातोजह्या (त्वा) त्रिकृत्यो वेद संहितम् ॥२७६२॥
शुध्यते वा मिताशीवा प्रति स्रोतः सरस्वती ।
पात्रे धनं वाप्यर्याप्तं दत्वा शुद्धिमवाप्नुयात् ॥२७६३॥
भृग्वग्निपतनं वापि ब्रह्महा शुद्धये च रेदिति १(*) ।
इदं चाप्रकान्त द्वादश वार्षिक प्रायश्चित्तस्य मध्ये कथञ्चिद् ब्राह्मण-प्राणत्राणादिकं कुर्वतो व्रतसमाप्ति कथनम्, न पुनः स्वतन्त्रं प्रायश्चित्तम् । द्वादश वर्षे शुद्धिं प्राप्नोति । ततएव ब्राह्मणं मोचयित्वा गवां कृशानां वा परित्राणात्, सद्य एवाश्वमेधावभृथ-
2004. स्नानाद्वा, पूतो भवतीति गौतमोक्तेरिति विज्ञानेश्वरः ॥
2005. स्मृत्यर्थसारे च—
द्वितीये ब्रह्मवधे द्विगुणं प्रायश्चित्तं कार्य्यम् ।
तृतीयेत्रिगुणं च । चतुर्थेऽनिष्कृतिः ॥
यद्वा, चतुर्थादिषु प्रतिपादं गोसहस्रं—
निर्धनोग्निप्रवेशं मरणं वा कुर्य्यादिति ॥

---

१(*) अत्र यथात्मा, जह्यादवा, वेद-संहिताम्, एतानि पाठान्तराणि ।
अत्र 'शुद्धि माचरेत्' इत्यन्यः पाठः ।
अथवा काम्यकारिणः इति भिन्नः पाठः

2006. तथा, प्रोत्साहककारिणामपि प्रायश्चित्तं पैठीनसिना प्रोक्तम् ,—

हन्ता तथोपदेष्टा च तथा संप्रति पादकः ।
प्रोत्साहकः सहायश्च तथा मार्गप्रदर्शकः ॥२७६४॥
आश्रयः शस्त्रदाता च भक्तदाता विकर्म्मणाम् ।
उपेक्षकः शक्तिमांश्चेद्दोष-वक्तानुमोदकः ॥२७६५॥
अकार्य्यकारिणां(णः)स्त्वेषां प्रायश्चित्तं प्रकल्पयेत् ।
यथा शक्त्यनुरूपञ्च दण्डञ्चैषां प्रकल्पयेत् ॥२७६६॥

तथा, —

अशीतिर्यस्य वर्षाणि वालोवाप्यून षोड़शः ।
2007. प्रायश्चित्तार्द्ध मर्हन्ति स्त्रियो रोगिण एव च, इत्यङ्गिराः ॥२७५८॥

तथा,—

पादोवालेषु दातव्यः सर्व्वपापेष्वयं विधिः, इति ।

2008. शङ्खः—

ऊनैकादश वर्षस्या शीतिवर्षात् परस्य च ।
प्रायश्चित्तं चरेद्भ्राता पितावान्यः सुहृज्जनः इति ॥२७६७॥

स्मृत्यर्थस्य १(*), सोमयागस्थ व्राह्मणवधे द्विगुणं व्रह्महत्त्याव्रत्तं कार्य्यम् । आचार्य्योपाध्याय-श्रोत्रियऋत्विग्वधेतु द्वादशाब्दव्रतादूर्द्ध्वं गोसहस्रं पादोनमर्द्धपादञ्च दद्यादिति ॥

उक्तानीमाणि प्रायश्चित्तानि व्राह्मणस्यैव । क्षत्रियस्य व्राह्मणवधे-द्विगुणं प्रायश्चित्तम् । वैश्वस्य त्रिगुणम् । शूद्रादेश्चतुर्गुणम् । एवं हन्तृ हन्यमानेन विशेषेण प्रायश्चित्ते विशेषोज्ञेयः ॥*॥

—*—

## अथातिदेशः ।

—*—

यागस्थक्षत्रविड्घाती चरेद्ब्रह्मवध-व्रतम् ।

तथा—

स्त्रीनपुंसकत्वेनाविज्ञात गर्भवधे ऋतुमत्स्यात्रेयी, अत्रि गोत्रावात्रेयी, तस्याश्च वधे यथा वर्णं प्रायश्चित्तं कार्य्यम् ॥

---

१(*) स्मृत्यर्थसारे तन्नाम ग्रन्थमेवा ।

तथा,—

ब्राह्मणाग्निक्षेपं कृत्वा, आहिताग्नि ब्राह्मण-भार्य्यां सगुणां हत्वा ब्रह्महत्या व्रतं चरेत् ।

2009. मत्वा विघातार्थं चेत् समागतं इति याज्ञवल्क्यः । चरेद्व्रतं—

सर्व्वाङ्गदेशिकेषु पापेषु पादोनं प्रायश्चित्तं कार्य्यम् ।

तथा,—

वधार्थं प्रहारे कृते केनचित् प्रकारेण,

यद्यमृतस्तथापि पादोनं ब्रह्महत्या व्रतञ्चरेत् ।

आगमनेऽर्द्धम्, प्रयत्ने पादम्, सर्व्वत्रा साक्षाद् (हन्तुं)नु ग्राहकस्य पादोनंस्यात् । प्रयोजकस्यार्द्धम्, अनुमन्तुः सार्द्धंपादम् । निमित्त-कर्त्तुः पाद मात्रम् ।

अत्र सर्व्वत्र जाति शक्ति गुणाद्यपेक्षया,

प्रायश्चित्ते तारतम्यं कल्प्यम् ॥

इति श्रीविधान पारिजाते ब्रह्म-हत्याप्रायश्चित्तम् ।

—*—

## अथ सुरापान प्रायश्चित्तम् १(*) ।

—*—

2010. यदि सुरां ज्ञानात् सकृत् पिबेत्तत्राह, याज्ञवल्क्यः—

सुराम्बुघृत गोमूत्रपयसामग्नि सन्निभम् ।

सुरापोऽन्यतमं पीतो मरणाच्छुद्धिमृच्छति ॥२७६८॥

2011. स्मृत्यर्थसारे च—

अज्ञानाज् जलबुद्ध्या पाने तालुमात्र संयोगे,

जटी-बाल-चीरा-दिवासा ब्रह्महत्या व्रतं तच्चिह्नं वर्ज्जं द्वादशाब्दं सम्पूर्णं चरेत् ।

सर्व्वत्र स्त्रीबालवृद्धादीनामर्द्धादि-कल्प्यम् ।

कामकृते द्विगुणं मदि पीत्वाच्छर्दित तदा ॥२७६९॥

1(०) अत्र 'सर्व्वाङ्गदेशिकेषु' इत्यपर पाठः । एकदेशेषु पापेषु वा ।

2(*) अत्र द्वितीय महापातक प्रायश्चित्त सूचयति ।

पिण्याकं वा कणान् वापि भक्षयीत सकृन्निशि।

अज्ञानात्तु सुरां पीत्वा रेतोविण्मूत्र मेव च ॥२७७०॥

अब्दादेवं विशुध्येत पुनः संस्कार मर्हति।

देवलोकं नसा याति ब्राह्मणी वा (या) सुरां पिवेत् ॥२७७१॥

इहैव सा शुनी गृध्री शूकरी चोपजायते ॥२७७२॥

2012. इति याज्ञवल्क्योक्तं कार्य्यम्।

सुरैकौषध रोगनाशार्थं पाने, कृच्छ्रार्द्ध पादं चान्द्रायणं कृत्वा, पुनरुपनयीत। आर्द्रसुरा भाण्डोदकपानादि-सुरापान समम्।

तत्र सुराभाण्ड-स्थितं तोयं यदि कश्चित्पिवेद्द्विजः।

सप्तद्वादशाहं क्षीरेण नीत्वा तस्माद्धि शुद्ध्यति ॥२७७३॥

अत्र, ब्राह्मीं सुवर्चलामिति यमोक्तं प्रायश्चित्तं ज्ञेयम॥

सुरापमुखगन्धाघ्राणेतु—

ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः।

प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुद्ध्यति ॥२७७४॥

20.13 इति मनूक्तं ज्ञेयम्।

मत्या चेद् द्विगुणम्। सोमपश्चेदनप्सु प्राणायामान् कृत्वा कुशोदकं पिवेत्। अत्र, पिण्याक भक्षण-घृत-प्राशनादिकं भोजन-परिहारेणेति ज्ञेयम्।

साक्षात् सुरागन्धघ्राणेतु जातिभ्रंशकरोक्तं सान्तपनं कार्य्यम्।

मत्या चेत् कायमित्यादि ज्ञेयम् १(*)॥

—*—

## अथ मद्य-प्रायश्चित्तम्।

—*—

तत्र, गौड़ी माध्वी च पैष्टी च सुरा मद्यशब्द वाच्या।

ताळं पानसं द्राक्षं माधूकं खार्जुरं तैरं आरिष्टं मैरं २(†) नारिकेल-

---

१(*) चित्ते ज्ञानात् तत्तः तत्त्वं प्रायश्चित्तं ज्ञेयम्।

पञ्च.पाञ्चदशाब्दं, प्राणानायम्य त्रिवारं प्राणायामं कृत्वा इति ज्ञेयम्। न पुष्यति, पञ्च पञ्चम्यामिति वा पाठः।

२(†) शूलपाणि प्रायश्चित्तम्, प्रायश्चित्त विवेके, प्रायश्चित्त तत्त्वे, प्रायश्चित्तेन्दुशेखरे, प्रायश्चित्त निर्णये, मधूकेषादि। 'पञ्चपाकस्य वर्जये' इत्यन्यः पाठः।

जमित्येकादशविधं मद्यम् । एतच्चोपनयनादिसंस्कृतब्राह्मणानां तत् स्त्रीणाञ्चानुपनीतस्य बालस्य कन्यायाश्चापेयम् । तत्र विशेषमेद्यं न दुष्यति । त्रैवर्णिकस्या ज्ञानाज्जलादिबुद्ध्या, तालादि मद्यपाने तदा कृच्छ्रम् , पुनरुपनीतस्य मूत्रविट्रेतोऽसृगाद्यन्नभक्षणे चैवम् ।
अज्ञानाद् गौड़ीमाध्व्योः, ज्ञानःतालादीनाञ्च पाने तदा कृच्छ्रातिकृच्छ्रम् , चान्द्रायणञ्च कृत्वा पुनरुपनेतव्यः ।
गौड़ी माध्व्योर्ज्ञानात् पानेतु , पिण्याकेन कणैर्वात्रैवार्षिकं प्रायश्चित्तम् , अभ्यासेतु षड़ब्दम् । अत्यन्ताभ्यासे द्वादशाब्दम् ।
बहुकालाभ्यासेतु अग्निवर्णमद्यं पीत्वा ततः शुद्ध्येत ।
तालादिषु तदर्द्धं कल्प्यम् । स्त्रीबालादेः पूर्व्ववत् । तालादि-मद्यानामेवम् । लेह्याभक्ष्यमूत्र विड्रेतः असृगादीनां मुखमात्रप्रवेशे क्षीरोदुम्बरविल्वपलाशकुशोदकं पञ्चगव्यञ्च षड्रात्रंपिबेत् ।
गौड़ीमाध्व्योस्तु द्विगुणम् । एव मन्यत्रापि तार तम्यं ज्ञेयमिति ।

इति सुरापान प्रायश्चित्तम् ।

—*—

## अथ स्वर्णस्तेयस्य ।

—*—

अत्रस्तेय शब्देन समक्षं परोक्षं वा बलाच्चौर्य्येण च स्वर्णद्रव्यस्यस्व-त्वहेतुं विना ग्रहणमुच्यते । तत्रादौ सुवर्ण परिमाण मुच्यते ।
गवाक्षगत सूर्य्यरश्मिमध्ये १(*) दृश्यमाण त्रसरेणु प्रमाणं रजइत्यु-च्यते । त्रसरेणवष्टकं लिक्षा, लिक्षात्रयं राजसर्षपः ।
राजसर्षपत्रयं गौरसर्षपः । गौरसर्षपषट्कं यवः । यवत्रयं कृष्णलः । कृष्णलपञ्चकं मासः । षोड़शमाषकं सुवर्णः ।
अनया रीत्या अन्यत्रापि योज्यम् । अमत्या ब्राह्मणस्य सुवर्णं हृत्वा

---

१(*) अत्र सुराः नानाविधाः सन्ति । प्रधानतः गौड़ी पैष्टी माध्वी च त्रिविधाः । मद्य ञ्चाष्टादशविधाः । महाभारते विराट पर्व्वणि 'पर्व्वणि सुरामाहर' इति विराट-महिषी कथनी बहुप्रकार सुरा-नामानि सन्ति ।
अत्र सूर्य्य द्रव्याणामति सूक्ष्मान् खल परिमाणे ईनाद्धि, राघवभट्टीय तन्त्रसार व्याख्याने, शिवमार्गे च लक्षणानि ।

द्वादशवर्षाणि ब्रह्महत्याव्रत-शवशिरोध्वजकपालधारणव्रतं वैधं चरेत् । यस्यकस्यापि हिरण्यं यः कश्चिदपहृतवान् स तस्मै एकादश-गुणं दत्वा पश्चात् प्रायश्चितं समाचरेत् । यदि गुरु यज्ञ कर्तृ-श्रोत्रिय-धार्म्मिक ब्राह्मणसुवर्णं हरति तदाशिरोमुण्डयित्वात्मशरीरं घृतेना-भ्यंज्य । करीषाच्छादितोऽग्निदग्धः शुध्येत । निर्गुण विप्रसुवर्ण-हरणेतु, नवाब्दं व्रतं चरेत् । अनुपपत्त्या (सुवर्णहरणेतु) स्वकुटुम्ब-रक्षार्थमपि ब्रह्मस्वहरणेतु कृच्छ्रम् । षडब्दं विश्वजिदादिकं क्रतुं वा कुर्य्यात् । मत्या ब्रह्मस्वहारीतु एकसुवर्णमारभ्य, स्वपापं नृपतये-निवेद्य १(*) आयसदण्डं खदिरं वा प्रदाय, मुक्तकेशोभृशं, राक्षस-कृत्येन दण्डेन ताड़ितो मृतोवा जीवन्वा शुध्येत् । स्व-शक्त्यनुसारेणं ताड़ने राज्ञा( ज्ञि ) तद्दोषः स्यात् । अग्निहोत्री धार्मिको विद्वान् क्षत्रियः, ब्राह्मण सुवर्णाहर्त्ताश्वमेधेन शुद्ध्येत, यद्वा गोसवेन । अथवात्मसम्मितं हेम दत्वा शुध्येत । तावद्धनाभावे विप्रस्य कुटुम्ब रक्षण पर्य्याप्तं धनं दद्यात् । अब्राह्मणो ब्राह्मण-सुवर्णहारी, दण्डताड़ने-नात्ममरण मनुतिष्ठन्, सुरापान व्रतं कृत्वा शुध्येत् । यस्त्वपहृत-जातानुतापः प्रत्यर्पयति त्यजतिवा यद् हृतम्, सत्वापस्तम्बोक्तं चतुर्थकालमिताशनं त्र्यब्दं व्रतञ्चरेत् । मनसा स्वर्णस्तेये प्रवृत्त स्वयमेवोपरतश्चेद् द्वादशाहं वायुभक्षः शुध्येत् । सुवर्णस्तेयसमेषु, अश्व-रथ-मनुष्य-स्त्री-भूधेनुहिरण्यादिषु प्राप्तेषु स्वर्णस्तेय प्रायश्चित्ताद्धं कार्य्यम् । त्रसरेणु प्रमाण हेमस्तेये, एकः प्राणायामः कार्य्यः २(†) ।

लिक्षापरिमितेतु प्राणायामत्रयम् । राजसर्षपमिते चत्वारः, षड्वा प्राणायामाः । गौरसर्षपमितेतु अष्ट सहस्रजपोगायत्र्याः । यवमिते प्रात रारभ्य सायं कालं यावद्गायत्रीजपः कार्य्यः । कृष्णलमिते सान्तपनम् ।

माषमिते हेमस्तेये गोमूत्रपक्वयवभुग्मासत्रयाच्छुध्येत । सुवर्ण-प्रमाणात् किञ्चिन्न्यूनहेमस्तेये गोमूत्र पक्वयवमुग्युगेण शुद्ध्येत । सम्पूर्णसुवर्णप्रमाण-ब्राह्मणहेमस्तेये द्वादशाब्दव्रतकं कार्य्यमित्युक्तम् । सुवर्णप्रमाणन्यून रजतस्तेये सान्तपनम् ।

---

१(*) नृपतये निवेद्य इत्यन्यः पाठः ।

२(†) याज्ञवल्क्येऽपि—

'सुरापी स्वर्णहारी च रुद्रजापी जलेस्थितः । सहस्रशीर्षा जापीच मुच्यते नाप संशयः' इति रुद्राध्याय भाष्ये कृष्णदत्तम '

निष्कचतुष्क प्रमाणादूर्द्ध्वं दशनिष्कान्तररजतस्तेये चान्द्रायणम्। दश-निष्कादधिक शतनिष्कान्तरजतस्तेये चान्द्रायणद्वयम्। तदूर्द्ध्वं सहस्रान्तनिष्के पादोनं ब्रह्महत्याव्रतम्। नाग-रङ्गायसताम्र-पित्तल-कांस्यानां सहस्रनिष्कप्रमाणानां स्तेये पराकः १(*)। एतेषां निष्क सहस्रादि मूल्यानां स्तेये-ब्रह्महत्या व्रतं द्वादशाब्दादिकं चरेत्। चतुर्णिष्क-मूल्यरत्नस्तेये सान्तपनम्। तदूर्द्ध्वं दशनिष्क मूल्यान्तररत्नस्तेये-चान्द्रायण(मेक)म्। तदूर्द्ध्वं (दश निष्क प्रमाणादूर्द्ध्वं) शतनिष्कान्त-मूल्यरत्नस्तेये चान्द्रद्वयम्। तदूर्द्ध्वं सहस्रान्तनिष्कमूल्य(रत्न)स्तेये चान्द्रत्रयम् २(†)। तदूर्द्ध्वं निष्कमूल्यरत्नस्तेये ब्राह्मणस्य व्रतं पादोनम्। अब्राह्मणस्य निदेयं सुवर्णं हृत्वा षड्ब्दम्।

नर-भूमि-सुवर्ण-हरणे षड्ब्द-व्रतं चरेदिति ॥

2014. स्वल्पार्थसारोक्त सुवर्णस्तेय प्रायश्चित्तम् ॥

—*—

## अथ गुरुतल्पग प्रायश्चित्तम्।

—*—

तत्रच,—

अज्ञानेन मातरं गत्वा, मातृसपत्नी सवर्णामुत्तमवर्णां वा गत्वा, तया प्रोत्साहितो ज्ञानाद्गत्वावा, सुतप्तलोह-स्त्रियमालिङ्गय, तप्तायः शयने सुप्तोवा मृतः शुध्येत। स्वयं प्रोत्साह्य गतश्चेत्, सगुह्यत्रयं हस्तेनच्छित्वा, अञ्जलौ धृत्वा नैर्ऋतिदिशं गच्छन् अग्रतः स्थितमविचार(यन्) पृष्ठतः पश्यन् प्राणांस्त्यजन् शुध्येत्। अमत्या सवर्णोत्तम-वर्णा स्त्रीगमने द्वादशाब्दं ब्रह्महत्याव्रतञ्चरेत्। अमत्याऽभ्यासे घृताक्तोमुण्डितोहि, करीषाग्निमध्यस्थ-पादादि-सर्व्वाङ्गदाहान्मृतस्य शुद्धिः। मत्वा जननीगमनेऽप्येवम्। अत्रैव रेतः सेकात् प्राग्विवृतो द्वादशाब्दम्। अमत्या षड्ब्दम्, मत्या मातुः सपत्नीगमने वेदजप-सहितं चान्द्रायण त्रयं कुर्य्यात्। अमत्या कृच्छ्रम्, क्षत्रियां मत्या

---

१(*) 'यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्।
पराको नाम कृच्छ्रोऽयं सर्वपापापनोदनः' इति स्मृतिः।

२(†) 'चान्द्रद्वयं' इत्यन्यः पाठः। सर्वत्र चान्द्रं चान्द्रायण व्रतं ज्ञेयम्।

विप्रः सकृद्गत्वा नवाब्दं कुर्य्यात् । मत्या तदभ्यासेतु वृषनौविना-लिङ्गं च्छेदयेत् । तस्यामेव मत्या प्रवृत्तस्यरेतः सेकात् प्राङ् निवृत्तौ तया प्रोत्साथितस्य त्रैमासिकं व्रतम् । उभयोः प्रोत्साहने(ति)तु कृच्छ्रत्रयं मासिकम् । स्वप्रोत्साहनेतु कृच्छ्रातिकृच्छ्रन्तावत् । तत्रै-वामत्या प्रवृत्तौ प्राग्रेतः सेका (द्रि)न्निवृत्तस्य योषिदुभयात्म प्रोत्सा-हेषु, क्रमात्कृच्छ्रातिकृच्छ्र-चान्द्रायणानि भवन्ति । वैश्यायां गुरु-पत्न्यां मत्या सकृद् गमने षडब्दम् । मत्याऽभ्यासे लिङ्गार्द्धच्छेदा-च्छुद्धिः । अमत्या सकृद्गमने त्र्यब्दम् । अमत्याऽभ्यासे यावज्-जीवं व्रतञ्चरेत् १(*) । तस्यामेव रेतः सेकात् प्राङ्निवृत्तौ, तया-प्रोत्साहितस्य त्रैमासिकं व्रतम् । उभय प्रोत्साहनेऽति कृच्छ्रं त्रैमासिकम् । स्वप्रोत्साहनेतु कृच्छ्रातिकृच्छ्रम् । तावत्तत्रैवा-मत्या प्रवृत्तौ प्राग्रेतः सेकान्निवृत्तस्य, योषिदुभयात्म प्रोत्साहेषु कृच्छ्रातिकृच्छ्रचान्द्रायणानि भवन्ति । तस्यामेव रेतः सेकात् प्राङ्निवृत्तस्याभयोत्मयोषित् प्रोत्साहेषु क्रमात्पञ्चरात्रत्रिरात्राणि । शूद्रायां पितृभार्य्यां मत्या विप्रः सकृद्गत्वा त्र्यब्दञ्चरेत् । मत्याऽ-भ्यासेऽब्दम् २(†) । अमत्या सकृद्गमनेऽब्दम् । अमत्याऽभ्यासे निरन्तरं चान्द्रत्रयम् । तत्रैव रेतः सेकात् प्राङ्निवृत्तस्यप्राग्वत् अतिशय प्रोत्साहेषु क्रमादति कृच्छ्र-तप्त-कृच्छ्र-पराकाः ३(‡) । तत्रैवामत्या प्रवृत्तस्य कायसान्तपणं सप्त रात्रोपवासाः । एवं क्षत्रिया पुत्रस्य वैश्यायां मातरि मत्या सकृद् गमनादिषु नवाब्दादीनि योज्यानि । शूद्रायान्तु नवाब्दादीनिस्युः । वैश्या पुत्रस्य शूद्रायां नवाब्दादीनि योज्यानि । सर्व्वत्र गमनं चरमधातु विसर्गान्त-मुच्यते । अत्र सर्व्वत्र रेतः सेकात्तत्प्राङ् निवृत्तौ मरणान्तिकेषु द्वादशाब्देषु ॥ अन्यत्रोक्तम्—अर्द्धमेव कार्य्यम् । पुरुषवत् स्त्रीणां महापातकानि सन्त्येव । अतस्तासां मत्या प्रवृत्तौ मरणान्तिकं व्रतम् । अमत्यातु—द्वादशाब्दादिषु सर्व्वत्रार्द्ध कल्पनेन योज्यम् ॥

---

१(*) अत्र पाठाधिक्यं पाठव्यत्ययोवास्ति । एकस्मिन् पुस्तके अधिकः पाठः ।

२(†) 'अब्द त्रया व्रतम्' इति भिन्नः पाठः ।

मत्याभ्यासे चतुरब्द मितिच भिन्नः पाठः ।

३(‡) अत्र पाठव्यत्ययः अस्ति । 'उभयोरतिशय प्रोत्साहे' इत्यपरः पाठः ।

वैश्यादौतु—जातयुक्तं पारदार्य्यञ्च कन्यषाणामेवच साधारणस्त्रियां नास्ति गुरुतल्पत्व मेवचेति ।

इति गुरुतल्प प्रायश्चित्तम् ।

—*—

## अथातिपातकानुपातकादिषूच्यते ।

—*—

मत्या समान गोत्रां समान प्रवरां कन्यां शुद्धां गत्वा, गुरुतल्प व्रताच्छुध्येत । तज्जातगर्भश्चाण्डालः स्यात् । सपत्नी संभोगेतु सा त्याज्या, रक्ष्यैव १(*) । अमत्या तामेव गत्वा चान्द्रैस्त्रिभिः शुध्येत । गर्भः कन्यपः स्यात् । सवर्ण कन्यां मित्रस्त्रियं भगिर्णीं सगोत्रां २(†) असगोत्रां सहोढ़ां चाण्डालीं मातङ्गीं सुतस्त्रियश्च, सकृज्ज्ञानाद् गत्वा चान्द्रद्वयाच्छुध्येत् । आसामन्यतमामेकस्यां तिथौ गत्वा सकृद् ब्रह्म-हत्या व्रतं षड्ब्दं चरेत् । आसामेकां बुद्धिपूर्व्वं वहुदिनेषु गत्वा, अग्निं प्रविश्य मृतः शुध्येत् । मातृस्वसारं पितृस्वसारमाचार्य्य-पूत्री मनुजपत्नी मात्मसूतां मातुलानीञ्च ज्ञानात् सकृद् गत्वाब्दं ३(‡) कृच्छ्रेण शुद्धेयत । आसामेकामेकस्मिन् दिने वहुवारं गत्वा, त्रैवार्षिकं ब्रह्म हत्याव्रतं चरेत् । आसामेकां वहुदिनेषु अनुवन्धेन गत्वा ब्रह्महत्या व्रतञ्चरेत् । आसामेकां ज्ञानात् सकृद् गत्वा ब्रह्म-हत्या व्रतं त्रैवार्षिकञ्चरेत् । आसामेका मेकस्मिन्दिनेऽसकृज् ज्ञानाद् गत्वा षड्ब्दं ब्रह्महत्या व्रतं चरेत् । आसामेकां वहुदिनेषु ज्ञानाद् गत्वाग्निं प्रविश्य मृतः शुध्येत् । चाण्डालीं पुल्कसीं व्याधस्त्रियं भगिनीं स्नुषां मातुः स्वसारं सखीं विश्वस्तां प्रव्रजितां मातुलानीं शरणागतान्तः पुर-परस्त्रियं शिष्यपत्नीं गुरुपत्नीं प(य)ति व्रतां स गोत्राञ्च गत्वा रेतः पातात् पूर्व्वं निवृत्तस्य मासोपवासेन शुद्धि श्चान्द्रायणे नापि ( वा ) । एतासु व्यभिचारिर्णीं यदि सकृद् गच्छे,

---

१(*) कन्या वराणा मेव चेति भिन्नः पाठोऽस्ति । 'कन्या वराणामेवच' इत्यादि च ।

२(†) अथ षड्ब्दं कृच्छ्रेण इत्यन्यः पाठः । 'व्रतहत्या व्रतचरेत' इत्यन्यः पाठः ।

मातङ्गीं इत्यत्र मातुलानी मित्यन्यः पाठः ।

३(‡) जारजातः कानीनः सहोढ़ः स्यादिति । सात्याज्या, रक्ष्यैव इत्यन्यः पाठः ।

तदा चान्द्रायणाच्छुद्धिः १(*)। अज्ञातां स्त्रियं सकृद् गत्वा तदा कृच्छ्रेण शुध्येत ॥

इति गुरुतल्पग प्रायश्चित्तम् ।

—*—

## अथ महापातकि-संसर्गि-प्रायश्चित्तम् २(†) ।

—*—

एतैश्चतुर्भि र्महापातकिभिरध्ययनाध्यापन-विवाह-यज्ञ-सह भोजनादीनि कृत्वा, सद्यः पतति। येन महापातकिना यः संसृज्य पतति स तस्योक्त व्रतेन शुध्येत्। अस्य मरणापादक-पातकस्थले ब्रह्महत्यादि व्रतं द्वादशाब्दिकं स्यात् ॥ अज्ञानात् संसर्गे तत्तदुक्त व्रतार्द्धं कार्य्यम्। अज्ञानाच्चतुर्भिर्महा पातकिभिः पञ्चरात्रम्। संसर्गे कायकृच्छ्रः, द्वादशरात्रं संसर्गे सान्तपनम्। पक्षे संसर्गे दशोपवासः। मासे पराकः, त्रिमासे चान्द्रम्। षण्मासे चान्द्रद्वयम्, किञ्चिन्न्यूनाब्द नैरन्तर्य्य संयोगे षण्मासं कृच्छ्रव्रतम्। ज्ञानाच्चतुर्भिर्महापातकिभिः पञ्चाहं संसर्गे कृच्छ्रः। पक्षे पराकः। मासे चान्द्रम्। त्रिमासेकृच्छ्रं चान्द्रायणञ्च। षण्मासे त्रिमासं कृच्छ्रः, किञ्चिन्न्युनाब्दं संसर्गे ऽब्दं चान्द्रायणम्। एतैश्चतुर्भिः स्त्री बालवृद्धातुराणां संसर्गे तत्तदुक्तव्रतार्द्धं कुर्य्युः। महापातकि-संसर्गे—(संसर्गेतु,) तत् संसर्गि व्रतार्द्धं कार्य्यम्।

इति महापातकि-संसर्गि-प्रायश्चित्तम् ॥

—*—

## अथोपपातक-प्रायश्चित्तम् ।

—*—

अज्ञानाद्गोमात्रं ब्राह्मणस्य विप्रोहत्वा त्रिरात्रमुपोष्य, वृषभैकादशाः गा दत्वा शुध्यति। द्वादश प्राजापत्यैर्व्वा। प्रत्याम्नायेतु द्वादशधेनुर्दत्वा शुध्येत्। ज्ञानाच्चेद्गोहितरतो, गोगमन-स्थानासन-शयनेषु, स्वयञ्च तथा कुर्व्वन, भयव्याधि-क्षुत्पिपासा-शीतातपादिभ्यो-

---

१(*) -च्छुध्यतीति वा पाठः ।

२(†) श्रुत्यन्तरे—'ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सहेऽति' ॥

रक्षन्नात्मीय-परकीय भक्ष्यपानादिषु वारयन्, मौनी रात्रौ गां नीत्वा, वीरासनोषने शाकाद्याहारो मासत्रयान्ते, वृषभैकादश गादद्यात् (अन्नुन्नात्मीय परकीय-भक्तपानादिषु वारयन्मौनी) दशकृच्छ्रे सर्व्वस्वं दद्यात्। प्राजापत्य प्रत्याम्नाय यज्ञेषु पूर्वोक्तं द्विगुणम्। अमत्या क्षत्रियस्य गोमात्रं हत्वा गोहितो गवानुगामी गोष्ठशायी त्रिसवण-स्नायी संयतः पञ्चगव्य मेव पिवन् मासान्ते धेनुन्दत्वा शुध्यति। प्राजापर्व्वार्त्यै प्रत्याम्नाये षड्धेनवः॥ ज्ञानाच्चे चतुर्थकाले हविष्य-क्षारलवणम्, मितमश्नन् गोमूत्रस्नायी, द्वौमासौ नीत्वा शुध्येत्। प्राजापत्य प्रत्याम्नायौच द्विगुणौ॥ अमत्या वैश्यस्य गोमात्रं हत्वा गोहितादि कृदति कृच्छ्रं चरन् मासान्ते धेनुन्दत्वा शुध्येत्। पञ्च प्राजापत्यैर्व्वा। प्रत्याम्नायै पञ्चधेनवः। मत्या चेत्तत्तद्द्विपुर्णं पूर्व्वोक्तं चरेत्। अमत्या शूद्रस्य गोमात्रं हत्वा, गोहितादिकृत् प्राजापत्यं निरन्तरं चरण् मासान्ते धेनुन्दत्वा शुध्येत्। प्रत्याम्नाये गो-चतुष्कम्। मत्याचेद् धृत चापो गोचर्म्मणार्द्रेण संवृतो गोष्ठे वसन् मासं यवागूं पिवन् शुध्यति। प्राजापत्यं प्रत्याम्नायौ चेद्द्विगुणौ। अमत्या चेदर्द्धम्। अमत्या १(*) सोमयागस्थ-श्रोत्रियस्य गोमात्रं हत्वा, गोहितादि कृच्छ्राकादि भुगब्दान्ते, वृषभैकादशा गादद्यात्॥ षण्मासान् गोग्रासभुग्वा शुध्येत्। कामाच्चे द्गोहितादि कृण्मौण्डी शाकादि भुगुक्तश्चरेत्। धनी वक्ष्यमाण व्रतं गोशतञ्चरेत्। ज्ञानाच्छ्रोत्रियाति दुर्गतकुटुम्बि-ब्राह्मणस्य, कपिलां होमार्थां गर्भिणीं वहु क्षीरां सुवृत्त-तारूण्यादि गुणयुक्ताम्, निर्गुणो धनवान् प्रतिभया खड्गादिना हत्वा भ्रूणहा भवतीति, ब्रह्महत्यातो द्विगुणं व्रतञ्चरेत्। यद्वा गोहितादि कृद्द दण्डमौञ्जीभृद क्षारलवणं भक्तं षष्ठे कालेऽश्नन्, गोमती २(†) मृचं प्रणवं वेदं वा जपन्, द्विमासान्ते गोसहस्रं दद्यात्॥ अज्ञानाच्चेद् ब्रह्महत्या व्रतं त्रैवार्षिकं, वृषभैक शत गोदानम गर्भिण्याम कामतश्चरेत्। कामतश्चेत् गोहितादि कृण्मौण्डी शाकादिभुक् त्र्यब्दञ्चरेत्। यदि तां काष्ठेण हन्यात् सान्तपणं पूर्व्वं गोसहस्र-शतदानं अब्दादिषु चरेत्। लोष्टेन चेत्कायम्, पाषाणेन चेन्न-

---

१(*) 'यमासोमयाग' इति भिन्नः पाठः।

२(†) यत्र गोमती विद्यासंबंधा, ऋचं तत्सम्बन्धं सूक्तं वा। गोमती विद्या प्रायश्चित्तान्ते गोग्रास कादेव पठेत्।

संकृत् कृच्छ्र पूर्व्वं व्रतान्ते विप्रान् सम्भोज्य, शक्त्या हेम तिलान्दद्यात् ॥ एकाब्दे गवि हते पादम्, द्व्यब्देऽर्द्धम्, त्र्यब्दे पादोनम्, तदूर्द्धञ्च कृत्स्नं १(*) चरेत् ॥ गर्भिण्या वधे तूच्यते,—उत्पन्ने गर्भे पादम्; अर्द्धेऽर्द्धं, अपूर्णे पादोनम्, चैतन्ये गोव्रतं द्विगुणम् २(†)। अज्ञानाद् बहून् ( बहवः ) हत्वोक्त व्रतस्य—

पादं प्रत्येकं चरेयुः। द्वे हत्वार्द्धम्, बह्वीः पादोनं ज्ञानाच्चेन् प्रत्येकं कृच्छ्रमेव ॥ एकेन रोधादिना बहूनां वधे द्विगुणव्रतं एव चरेत्। अमत्या वैद्यस्य मिथ्यौषधेणैकस्या वधे द्विगुणम्। अज्ञानादवैद्येन हित बुद्ध्यात्वौषधदाने पाद व्रतम्।

रोधादौ व्यवहित कर्त्तृषु रोधने पादम्, बन्धनेऽर्द्धम्, ताड़ने योजणे पादोनम्, निपातने सर्व्वम्। अज्ञानाद्रोधादि कृत्वा तज्जन्य प्रमाद-परिहारार्थमवेक्षमाणे मृते कार्यं कृत्वा, विप्रान् सम्भोज्य गोमिथुनन्दद्यात्, रोधनादिकृत्वा प्रमादाद्रक्षणाकरणे, क्रमात् पादोऽर्द्धं, त्रिपादम्, सर्वाणि मासिकादीनि कार्य्याणि ३(‡)। चिह्नव्याध्योरन्यत्र दाहेऽतिदाहेवा, नासापुच्छादि-च्छेदे, नदीपर्व्वतादिरोधेऽतिवाहेऽतिदमने, सङ्घते योजने, शृङ्खला-नारिकेल-शाणा वालमुञ्जादि-दृढ़पाशबद्धेमृते, पादोनं सर्व्वत्र। घण्टादिभूषण-निमित्तेऽर्द्धकृच्छ्रम्, मृतकल्पवधेतुसक्तु यावकभैक्ष्य-पयोदधिघृतानि क्रमान्मासार्द्धं भुक्त्वा विप्रान् संभोज्य गान्दद्यात्। मरणहेतु व्याधिमुत्पाद्य, द्वादशरात्रं पञ्चगव्यं पिवेत्। शृङ्गास्थिभङ्गे चर्म्म-विनिर्मोकादौच गवि जीवति मासार्द्धं यवागूं पिवेत्। अशक्तश्चेत् पयोदधिघृतं वा दशरात्रं पिवेत्। अनुग्राहक प्रयोजकादीनाम्, पूर्व्ववद्दोषतारतम्यात् प्रायश्चित्ततारतम्यं कल्प्यम् ॥

अरक्षोपेक्षादिनिमित्तं जलपङ्कोच्चनीचादि-विषमस्थानेदुर्गे च शून्य-गृहबन्धे, विद्युत्-सर्प-मृगव्याघ्रश्वापदाद्यैः, शीतवाताद्यैरुद्बन्धनाद्यैश्च मृते गवि, गोस्वामी कार्यं कुर्य्यात् ॥

कार्य्यान्तरव्यग्रत्वेत्वर्द्धम्। गूढ़गर्भनिर्गमार्थं सन्दंश-दण्डाङ्कुशादि-

---

१(*) एव कृच्छ्र मित्यन्यः पाठः।

२(†) चैतन्ये ज्ञान पूर्व्वक करणे इति। यद्वा सचेतन मृते।

३(‡) 'चिह्नव्याधिसरन्ध्रतः' इति भिन्नः पाठः।

प्रवेशनिमित्तवधे, रक्षार्थरोधे बन्धनेच नदोषः । औषधस्नेहाहारे दीयमाने, हितार्थ दाहे छेदे शिराभेदेषुच प्राप्ते आघाते शरार्थगृहभङ्गेऽति-वृद्धौ, कुड्यादिपातेचारण्य गृहग्रामादिदाहे च दोषाभावः ॥ वज्रे (द्व)मृते पादं कुर्य्यात् । गवि स्त्रीत्वर्मात्रिवर्त्तितम् । सर्वत्रहत-गोसदृशं गां तन्मूल्यं वा गोस्वामिने दत्वैव प्रायश्चित्तञ्चरेत् ॥ राजदण्डं तत् समं दद्यात् । एतत् सर्व्वं हन्तुर्व्राह्मणस्यैव । क्षत्रियस्यतु पादोनं, वैश्वस्यार्द्धम्, शूद्रादेः पादं विद्यात् । सर्व्वत्र स्त्री-बाल-वृद्धानांत्वर्द्धम्, सर्व्वान्केशान् समुद्धृत्य द्व्यङ्गुलं च्छेदयेत्तासाम १(*) । पुंसान्तु पाद व्रते आकण्ठलोम्नां वपनम् । अर्द्धे श्मश्रूणाञ्च, त्रिपादे शिखावर्जम् । समस्ते सशिखं वपनम्, ज्ञानाच्च सर्व्वत्र द्विगुणं कुर्य्यादिति ॥

इति गोवध प्रायश्चित्तम् ॥

—*—

## अथ व्रात्यत्वादि प्रायश्चितम् ।

—*—

तत्र सर्व्वोपपातकार्थं २(*) चान्द्रम् । पञ्चगव्येनमासम्, पयोमासम्, पराकं त्रैमासिकम्, कृच्छ्रं वा प्रतिपदोक्ताभावे चरेत् ।

व्रात्यत्वेनूपनयनाद्यभावेनोपनयनकालातिक्रमे, चान्द्रादिव्रतचतुष्टय-मध्येऽन्यतम व्रतं शक्तितः कारयित्वोपनयनं कार्य्यम् । अनापदितु त्रैमासिकं कारयित्वोपनयेत् ।

तत्रैव पञ्चदशवर्षादूर्द्ध्वमपि, कियत्कालातिक्रमे उद्दालकव्रतञ्चरेत् । तद् यथा,—द्वौमासौ यावकेन वर्त्तयित्वा, मासं पयसा, पक्षमामिक्षया, अष्टरात्रं घृतेन, षड्रात्रमयाचितेन, त्रिरात्रमद्भिर्वर्तयित्वाऽहोरात्र-

---

१(*) 'वपनं नैव नारीणां नैव दद्याद् गराजिनम् ।
सर्व्वान् केशान् समुद्धृत्यच्छेदयेद् द्व्यङ्गुलिद्वयम्' इति स्मृतिः ।
ज्ञानाच्च इत्यत्र ज्ञानद्धेति भिन्नः पाठः ।

२(†) 'संस्कार हीनोयथाव्य काले यः स व्रात्यः' ।
अत्र महर्षि र्वशिष्ठ :—
'पतित सावित्रीक उद्दालक व्रतञ्च रेत्' इति ।
अथवा पराशर :—
'अति क्रान्ते सावित्र्याः काले ऋतुत्रं त्रिविधकं ब्रह्मचर्य्यंचरेत्' ।

मुपवसेदिति । व्रात्यस्तोमेनवा यजेदिति । यस्यपितामहादेर्नानु-स्मर्य्यत उपनयनं तस्य द्वादशाब्दं त्रैविद्यकं ब्रह्मचर्य्यम्, इत्यापस्तम्बोक्तं कृत्वोपनीतिः कार्य्या १(*) ॥

—*—

## अथ स्तेये ।

—*—

तत्र विप्रोविप्रस्यदशकुम्भधान्यं तत् परिमित तन्दुलादिकं वा, अमत्या हृत्वा त्रैमासिकं कुर्य्यात्। मत्याभ्यासे कृच्छ्रार्द्धं चरेत् । क्षत्रियादेर्हर्तुः पादपादह्रासःकार्य्यः ( कल्प्यः ), क्षत्रियस्य पूर्व्वोक्तम्, विप्रोहृत्वा षान्मासिकञ्चरेत् । वैश्यस्य चेत्त्रैमासिकम् । शूद्रस्यचेच्चान्द्रम् । एवमुत्तरत्राप्यूहः कार्य्यः । कुम्भः पञ्चसहस्र-पलपरिमाणः विप्रस्य गृहक्षेत्र भूमिनिक्षेपरजतवज्रमणीनां, नराश्व-स्त्रीणां वा सार्द्धशत-द्व्यपणलभ्य पानीयरस-वापीकूपजलानां वा, अपहर्त्तु विप्रस्य सुवर्णस्तेयसमयत् । क्षत्रियादेश्चेच्चान्द्रायणं तदर्द्धं पादादिकार्य्यम् ॥ त्रपुसीसादि द्रव्याणामल्पप्रयोजनां शस्यार्द्धशत-द्व्यपणपञ्चदशार्घानां हर्तुः सान्तपणम् । भक्ष्यभोज्याहारपाना-दीनामेकवार भोजनपर्य्याप्तानां यानशय्यासनानां, पुष्पमूलफलानाञ्च-हर्त्तुः, पञ्चगव्येनाहोरात्रं वर्त्तनम् । तृणकाष्ठद्रुमाणां त्रिवारभोजन-पर्य्याप्तमूल्यानां, शुष्कान्नगुड़चैलचर्म्ममांसानाञ्च हर्त्तुस्त्रिरात्रम् । मणिमुक्ताप्रवलानां ताम्ररजताय: सीस आयस )कांस्योपलानां च, द्वादशाहार पर्य्याप्तमूल्यानां हर्त्तुर्द्वादशाहं काणभक्षणम् २(†) । कार्पासकीटजोर्णानां द्विशफैक-शफरज्जु-पक्षि गन्धौषधीनां, त्रिवार भोजनपर्य्याप्त मूल्यानां च हर्त्तुः पयोभक्षणम् । एवं सर्व्वत्र ।

---

१(*) सर्व्वोपपातक नाशनार्थं मित्यर्थं । प्रागुक्तमुप पातकम् ।
कृतीच 'पतिता यस्य सावित्री दशवर्षाणि पञ्च च ।
तान् वारयित्वा त्रीन् कृच्छ्रान् यथान्दुपनायवेदिति' ॥
सूत्रमत्र—'यस्य पिताःमहादयो नोपनीतास्ते श्मशान संस्तुताः' इत्यादिः ।
अन्यत् पारस्कर गृह्य सूत्र तद्‌ भाष्ये, गागाभट्टीयेचास्ति

२(†) काण भक्षणं-तण्डुल कणादिजनित भक्षणम् ।

ह्रियमाण द्रव्याल्पत्व-बहुत्वाभ्यां प्रायश्चित्ताल्पत्वमहत्त्वे कल्पे। सर्व्वं—स्तेयप्रायश्चित्तं स्वामिनिस। -ति हृतद्रव्यं दत्त्वैव कार्य्यम् ॥

इति स्तेयप्रायश्चित्तम् ॥

—०—

## अथ ऋणानपाकरणस्य १(*) ।

—*—

तत्र ऋणं आत्म-पितृ-पितामहादिकृतं ज्ञेयम्। एवं ब्रह्मचर्य्याद्यकरणे ऋषीणामृणम्, यज्ञाकरणे देवाणामृणम्, प्रजोत्पत्त्यकरणे पितॄणामृणम्। एषामृणानामनपाकरणे चान्द्रादिष्वेकं शक्त्या कार्य्यम्। सर्व्वथा तदसम्भवे दर्शान्तेवैश्वानरेष्टिः कार्य्या। अनाहिताग्नित्वे तु सत्यधिकारेऽब्दादर्व्वाक् प्रतिमासं त्रिरात्रं ततः प्रत्यब्दं चान्द्रादिष्वेकं अत्रापादि त्रैमासिकम्। पितर्य्यनाहिताग्नौदेय पशुश्च, सुतस्य व्रात्येपशुः, कार्य्ये औपासनाग्न्यसन्निधानेऽब्दं प्रतिमासमुपवासोऽब्दे चान्द्रादिष्वेकम्। यद्वा आद्येऽब्दे कृच्छ्रः, द्वितीयेऽतिकृच्छ्रः, तृतीये कृच्छ्रातिकृच्छ्रौ, तदूर्द्ध्वं चान्द्रम्।

इति ऋणापरिशोधने विधानम्।

—*—

## अथापरपण्यानां विक्रयस्य।

—*—

गुड़-तिल-पुष्प-फल-पक्वान्नविक्रये सौम्य कृच्छ्रम्। लाक्षा लवण-मधु-मांस-तैल क्षीर-घृत-दधि-तक्र चर्म्म-वाससां बिक्रये चान्द्रम्। ऊर्णा-केश-केशरि-भू-धेनु-वेश्मविक्रये-ऽप्येवम्। अभक्ष्यमांस- स्नाय्वस्थि-शृङ्ग-शङ्ख-शुक्तिविक्रये तप्त कृच्छ्रः। हिङ्गु गुग्गुल-हरिताल-मनःशिलाञ्जन-लवण-मणि-मुक्ता-प्रवाल-वैणववेणु-मृन्मयविक्रये तप्त कृच्छ्रः २(†)। आराम-तडागोदन्वान-पुष्करिणी सुकृत-विक्रये त्रिषवणस्नाय्यधः शायी, चतुर्थकालाहारोद्श-सहस्रं गायत्रीं

---

१(*) अत्र, ऋणानां देव-पितृ-मनुजादीनां अनपाकरणमपरिशोधनम्।

२(†) वैणव-वैन: इत्यन्य: पाठ: अत्र परपण्यानां इति भिन्न: पाठः।

'अनृणी चाप्रवासी च स वारिचर मोदते' इति भारते।

'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' इति स्मृतिः।

जपञ्चऽदेन शुद्ध्येत् । हीनमानो-न्मानसंकीर्ण-विक्रये च ैवम् । परिवेत्ता चान्द्रादिष्वेकं कृत्वा ज्येष्ठाय स्वोढ़ां स्त्रियं दत्त्वा तेनानुज्ञातां तामेवोद्वहेत् । मत्या चेत्तत्रापि कन्या पित्राद्यज्ञानेऽब्दं कार्य्यं, ब्राह्मणगृहभैक्ष्याशनं च कृत्वैवं शुद्धयात् । कन्या,— पित्रादिदत्तकन्योद्वाहे त्रैमासिकं कृच्छ्रातिकृच्छ्रौ वा कृत्वा त्वेवं कुर्य्यात् । परिवेद्यस्य तु द्वे कृच्छ्रे, कन्यायाः कृच्छ्रः, दातुरतिकृच्छ्रः, होतुश्चान्द्रम् । एवं परिवेद्यवत् पर्य्याहित-परीज्य-परिवित्तीनां कार्यद्वयम्, परिवेत्तृ-परिवित्त-पर्य्याधातृ-परियष्ट्रग्रेदिधीषुपतिः,दिधीषु-

2015. पतीनां चाब्दं गौतमोक्तं ब्रह्मचर्य्यं कृत्वा पश्चाद्विवाहः अग्रेदिधीषुपतिः कृच्छ्रं कृत्वा तामुद्वहेत् १(*) । दिधीषुपतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा तस्मै तां दत्त्वा तदनुज्ञातः पुनस्तामेवोद्वहेत् । यद्वा अग्रेदिधीषुपतिः कार्य्यं कृत्वा तामेव ज्येष्ठां पश्चादन्येनोढ़ां प्रोद्वहेत् । दिधीषुपतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा स्वोढ़ां ज्येष्ठां कनीयस्याः पूर्व्ववदेव दत्त्वा अन्यामुद्वहेत् । ज्येष्ठे स्थिते कनिष्ठः कृतविवाहः परिवेत्ता, परिविविदानश्च सः ज्येष्ठः, परिवित्तिः परिवेद्यश्च सः परिविभक्तादिश्चैवं ज्येष्ठायां कन्याया मनूढ़ाया मनुजोढ़ा चेत् साऽग्रेदिधीषुरित्युच्यते । पूर्व्वा च दीधिषूः भृतकाध्यापको भृतकाध्यापितश्च पयसा ब्राह्मीं सुवर्च्चलां त्रीन् पक्षान् नियतः पिबेत् । चान्द्रादिष्वेकं कोपात् २(†) अनुयोगप्रदाने चैवम् । उत्कर्षहेतोरधीयानस्य किं पठसि नाशितं त्वयेत्येवं पर्य्यनुयोगोऽनुयोगप्रदानम् । अनुयोगप्रदाना प्रदानाभ्यासे पातित्यमाहुः ।

इति परिवेदनस्य ॥

—*—

## अथ पारदार्य्यस्य ।

—*—

तत्र गुरुतल्पगमादिषु प्रायश्चित्तमुक्तम् । प्राक् तदन्यत्र ऋतुकाले जातिमात्रब्राह्मणीगमने वार्षिकं प्राक्तनब्रह्मचर्य्यं ऋतावेव

१(*) अत्र कृच्छ्रं नाम व्रतम्, इति पाठान्तरम् ।

२(†) 'जायमानो वै ब्राह्मण स्त्रिभिः ऋणवान जायत' इति । त्रिभिः—पितृार्षदैवैः ऋणैः ऋणवानभूत् इति । अत्र ब्राह्मण इत्युप-लक्षणत्वेन क्षत्रियादयोऽपि ग्राह्याः ।

" एव परिवेदनस्य प्रतिकार उक्त इति । अन्यत्रापि कृतौ ।

धर्म्मकर्म्मसाधनत्वादिगुणवत्यां ब्राह्मण्यां गमने त्रैवार्षिकम् । तादृश्यामेव क्षत्रियायां द्विवार्षिकम् । तादृश्यां वैश्यायां वार्षिकम् । तद्वत्-शूद्रायां षाण्मासिकम् । एवं क्षत्रियस्यापि क्षत्रियादिषु द्विवार्षिक-वार्षिक-षाण्मासिकानि । वैश्यस्य च वैश्या-शूद्रागमने वार्षिक-षाण्मासिके । शूद्रस्य च शूद्रयां परपत्न्यां षाण्मासिकमेव । अनन्य पूर्व्विकासु चतुरभ्यासे द्वादशाब्दम् । एकस्यामेव गमनाभ्यासे पादं पादन्यूनं स्यात् । अमत्या सर्व्वस्यार्द्धंयोज्यम् । अमृतौ—जातिमात्र-ब्राह्मणीगमने त्रैमासिकम । क्षत्रियादिषु स्त्रीषु त्रैमासिक-चान्द्रमासिकादीनि । क्षत्रियादीनां क्षत्रियादि स्त्रीषु त्रैमासिकादीन्येव । अमत्या ब्राह्मण्यादिषु १(*) वृषभैकादश गोदानम्, मासं पञ्चगव्यं, मासं कायञ्च क्रमात् कुर्य्युः । शूद्रा-गमनेतुमासं कायार्द्धम् । ब्राह्मणश्चेदपेक्षा पूर्व्वकं ब्राह्मण भार्य्यां शूद्रामभि गच्छेन्निवृत्तकर्म्मा कृच्छ्रं चरेत् । अनि-वृत्तधर्म्मकर्म्मणोऽति कृच्छ्रं स्यात् । द्विजाति स्त्रीषु विप्रोढ़ासु द्विस्त्रिर्व्यभिचरितासु मत्या गमने चैवम् , अमत्या कृच्छ्रद्वयम । चतुर्वर्णस्त्रियोऽपि चतुर्थे व्यभिचारे स्वैरिण्यः स्युः, पञ्चमे वन्धक्यः, स्वैरिणी-शूद्राणी-शूद्रीगमनेतु सचेल स्नात उदकुम्भं विप्राय दद्यात् । स्वैरिणी वैश्यायां चतुर्थ कालाहारो विप्रान् भोजयेत् । स्वैरिणी क्षत्रियायां चेलकम्, शूद्रायां उदकुम्भं दद्याद्विप्रायां द्वयञ्च प्रायश्चित्तम् । गर्भानुत्पत्तिविषयम् । गर्भोत्पत्तौ तु यद्विशेषेण—यत् प्रायश्चित्त-मुक्तं तदेव तत्र द्विगुणं कुर्य्यात् । प्रातिलोम्यगमने पुंसोवधः । स्त्रियाः कर्णादिच्छेदनम् । स्वस्त्रीभ्रान्त्या प्रातिलोम्यगमने ब्राह्मण्यां शूद्रस्य द्वादशाब्दम् । वैश्यादेः पाद-पाद-ह्रासः । अत्यन्त व्यभि-चरित ब्राह्मण्यां शूद्रस्य गोमूत्र-यावकभक्षणेनमासः , वैश्यक्षत्रिययोः कृच्छ्रसान्तपने । रजक-चर्म्मकार-भिल्ल-व्याध-शैलूष-नटबुरुड़-कैवर्त्त-मेद-म्लेच्छाद्याः, एते रजकाद्यन्त्यजाः कापालिकाश्चतद्वत्, रजकाद्यन्त्य-जागमने त्वमत्या ब्राह्मणस्य पराकश्चान्द्रं वा, मत्या चान्द्रद्वयम् । क्षत्रियादीनां पादह्रासः । अभ्यासे कृच्छ्राब्दम् । रेतः सेकात प्राङ्निवृत्तौ कायम् । चाण्डालाद्यन्त्यावसायि-स्त्रीसंगमे तु

१(*) 'ब्राह्मण्यादिषु' इति भिन्नः पाठः । वृषभैकादशमित्यंत्र पादमिति भिन्नः पाठः ।

गुरुतरं १(*) प्रायश्चित्तम्, गुरुतल्प प्रकरणे दर्शितः। चाण्डालादिषु गर्भोत्पत्तौ द्वादशाब्दं गुरुतल्प व्रतम्। स्त्रीणामपि सवर्णानुलोमगमने यत् पुरुषस्योक्तं त्रैवार्षिकादिकं तदेव कार्य्यम्। प्रातिलोम्यगमने तु शूद्रो ब्राह्मणीं गच्छेच्चेद्वीरणैः तं वेष्टयित्वाऽग्नौ क्षिपेत्। ब्राह्मण्याः शिरोवापयित्वा सर्पिषाऽभ्यञ्जनानां खरमारोप्य महापथं गमयेत्। अनेन सैवं पूता स्यात्। वैश्यश्चेल्लोहित दर्भैर्वेष्टयित्वाऽग्नौ तं क्षिपेत्। क्षत्रियश्चेच्छरपत्रैर्वेष्टयित्वाऽग्नौ तं क्षिपेत्। ब्राह्मणीं पूर्व्ववद् गमयेत्। एवं क्षत्रियायां वैश्यशूद्रयोः, वैश्यायां शूद्रस्य चैवं स्त्रीपुंसयोः प्रायश्चित्तम्। यद्वा ब्राह्मण्यां क्षत्रियगमनेऽति कृच्छ्रः, वैश्ये कृच्छ्रातिकृच्छ्रौ. क्षत्रियायां विप्र-क्षत्रिय-वैश्य-गमने पूर्द्धकाय कायाति कृच्छ्राणि। वैश्यायां विप्र-क्षत्रियवैश्यगमनेषु कृच्छ्रार्द्धपाद कृच्छ्रार्द्धकायानि। शूद्रायां शूद्रे कायम्। तस्यामेव विप्रक्षत्रिय-वैश्येषु त्वहोरात्र-त्रिरात्रार्द्धकृच्छ्राणि॥ ब्राह्मण्याः प्रतिलोमगमने गर्भानुत्पत्तौ विशेष-उच्यते। ब्राह्मण्याः शूद्रसंगमे कृच्छ्रं, चान्द्रत्रयम्। वैश्ये कृच्छ्रं, चान्द्रद्वयम्। क्षत्रिये कृच्छ्रं चान्द्रश्च। क्षत्रियायाः शूद्रसंगमे कृच्छ्रं चान्द्रद्वयञ्च। वैश्ये कृच्छ्रं चान्द्रश्च। वैश्यायाः शूद्रसंगमे कृच्छ्रं चान्द्रश्च। गर्भोत्पत्तौ तु ब्राह्मण्या विप्रगर्भे पराकः। क्षत्रगर्भे चान्द्रम्। वैश्यगर्भे चान्द्रं पराकश्च। शूद्रगर्भस्य चाण्डालत्वात् त्यागः॥ अनुलोमैर्गर्भस्रावे चान्द्रत्रयञ्च, मत्या गमने पराकादि द्विगुणम्। द्विजभार्य्याः शूद्रेण सह संगता अनिःसृतगर्भाः प्रसूयन्ते चेत् प्रायश्चित्ताभावः। गर्भधारणोत्तरकालं शूद्रादिसंगमे तु प्रसवोत्तरमेव प्रायश्चित्तं कार्य्यम्। अन्यथा गर्भवाधात् तच्च मासमध्येसगर्भा संस्कार्य्यम २(†), प्रायश्चित्ताकरणे तु नार्य्याः कर्णादि कर्त्तयेत्। अन्त्यजगमनेऽपि स्त्रीणामेवम्। तत्र ब्राह्मण्या अमत्या रजकाद्यन्त्यजसंगमे चान्द्रत्रयम्।

---

१(*) 'गुरुप्रायश्चित्तम्' गुरु तल्पगम इत्यन्यः पाठः।

,, प्राग् गुरुतल्प प्रकरणे उक्तम्।

,, विप्र क्षत्र-विट्-शूद्रा इत्यनु लोमक्रमः।

,, शूद्र-विट्-क्षत्र-विप्रा इति प्रतिलोम क्रमः।

२(†) 'अत्र पाठ व्यतिक्रमः। प्रसवात् प्रागेवा गर्भिणी संस्कार्य्या।

तदा अकरणे पश्चाद् गुरु प्रायश्चित्तम् भवेत्।

चण्डालाद्यन्त्यावसायि-संगमे त्वमत्या ब्राह्मण्याश्चान्द्र चतुष्कम् । मत्या द्विगुणम् । गर्भिण्याः पश्चादन्त्यसंगमेऽपि प्रसूताया एव प्रायश्चित्तम् । सा गृहे न प्रचरेत् , न भर्त्रा सह शय्यते, १(*) नच बान्धवैः सह भुञ्जीत, न धर्म्मं कर्म्म साधयेत् । सा कृच्छ्राब्दं चरित्वा हिरण्य-धेनु-वासोदक्षिणां दद्यात् । मत्याऽन्त्यजसंगमे तु सा प्रदीप्तेऽग्नौ प्रविश्य मृत्वा शुद्ध्येत् । प्रायश्चित्तमकुर्व्वाणा पुंलिङ्गेनाङ्कनीया वध्या वा स्यात् ॥

॥ [illegible]गादिपारदार्य्य-प्रायश्चित्तम् ॥

## [illegible] परिवेत्तृप्रायश्चित्तवत् प्रायश्चित्तम् ।

तत्र [illegible]तिकृच्छ्र[illegible] त्रयः कायाः । वाद्धर्धूष्येत २(†) चान्द्रादिष्वेकं त्रैमासिकं वा जातिशक्तिगुणाद्यपेक्षया योज्यम् । प्रागुक्त लवणक्रिया [illegible] ।

## अथ स्त्र्यादिवधे ।

—*—

तत्र ब्राह्मण्यादिस्त्रीणां प्रातिलोम्येनान्त्यजातिप्रसूतानां ब्राह्मणादि-भार्य्याणां स्वैरिणीनां वधे जलाधारं चर्म्मकोशं दृतिं धनुः छागं मेषं च क्रमाद्धन्ता दद्यात् ३(‡) । मत्या चेत् षट्चतुर्द्व्येक मासाः कार्य्याः । सूतादीनां वधेऽप्येवम् । वैश्यकर्म्मणाय-जीवन्तीनां वधे किञ्चिज्ज्वलं दद्यात् । प्रातिलोम्येन व्यभिचरित-ब्राह्मण्यादि स्त्रीवधे क्षत्रियादीनां हन्तृणां गोवधोक्तप्रायश्चित्तं यथार्हं योज्यम् । ईषद्व्यभिचरितब्राह्मण्यां षड्वर्षं प्राकृतं ब्रह्मचर्य्यं , क्षत्रियायां त्रैवार्षिकं, वैश्यायां सार्द्धवर्षं, शूद्रायां नवमासविधेयम् ॥

अमत्याचेत् सर्व्वत्रार्द्धं कल्प्यम् ॥

---

१(*) नच शय्यते इत्यन्यः पाठः ।

२(†) कायाः प्रायश्चित्तानि वर्ज्जियन्ते इत्यन्यः पाठः । 'वाद्धुं येत्' इत्यपरः पाठः । जाति-शक्ति-धन-गुणादेः शाठ्यं न कार्य्यम् । 'वित्त शाठ्यम कुर्व्वाणः' इति स्मृतेः । पत्र सा [illegible]-[illegible]-स्व [illegible] वधे, इत्येते पाठाः स्युः ।

३(‡) क्रमाद्व हनन-गमन-कर्त्तावान्ता दद्यात्—इति भिन्नः पाठः । यस्य यस्य यद् यद् योग्यत्वेन तत्तत् कार्य्यं नतु वित्त शाठ्यं विधेयम् ।

## अथ क्षत्र-विट्-शूद्रवधे।

—*—

अत्रामत्या जातिमात्र—क्षत्र-वैश्यशूद्रवधेषु क्रमेण-ब्रह्महत्याव्रत-
त्रैमासिक-षाण्मासिकानि कुर्य्यात्। यद्वा वृषभैकसहस्रगाः
वृषभैकशतगाः वृषभैकादशगाः दद्यात् १(*)। अत्र एवं प्रवृत्तादथ-
क्षत्रादिवधेषु ब्रह्महत्या-व्रतचतुर्थांशाष्टमांशषोड़शांशाधिक-व्रतानि
कुर्य्यात्। साम्यावृत्तस्थवधेष्वेकांशाधिकानीमानि, सदाचारगुरुपूजा-
घृणाशौचेन्द्रियनिग्रहभूतहितादिगुणयुक्तत्वं वृत्तस्थत्वम्। मत्या
चेत् षड्वार्षिकत्रैवार्षिकैकवार्षिकानि। श्रोत्रियक्षत्रादिवधेषु
नवषट्त्रिवर्षव्रतानि। वृत्तस्थश्रोत्रियक्षत्रादिवधेषु बुधे दशवार्षिकम्,
प्रारब्धसोमयागस्थश्रोत्रियक्षत्रादिवधे द्वादशाब्दम्, सोमयागस्थ-
श्रोत्रियक्षत्रादिवधेऽष्टवार्षिकम्, ब्रह्मचर्य्यवृषभैकसहस्रगोदानसहितं
त्रैवार्षिकं ऋषभैकशतगोदानसहितं वार्षिकं ऋषभैकादशगोदान-
2016. सहितं षाण्मासिकञ्च गौतमोक्तं प्रायश्चित्तं कुर्य्यात्।
दुर्वृत्तक्षत्रादिवधे मत्या त्रैमासिक-द्वैमासिक-चान्द्राणि २(†)।
अमत्या त्रिरात्रोपवाससहितमृषभैकादशगोदानं पञ्चगव्यं मासं
पयोमासञ्च कुर्य्यात्। इदं प्रायश्चित्तजातं ब्राह्मणस्य कर्त्तुर्ज्ञेयम्।
क्षत्रियादेः पाद-पादन्यूनं ज्ञेयम्।
मूर्द्धावसिक्तादीनां वधे चैवं प्रायश्चित्तं तत्र तत्रोह्यम्।
सर्व्वत्र दण्डवृद्धिह्रासाभ्यां प्रायश्चित्तवृद्धिह्रासौ ज्ञेयौ॥

इति क्षत्र-वैश्य-शूद्रवधप्रायश्चित्तम्।

—*—

## अथ तदन्यत्र प्रायश्चित्तम्।

—*—

तत्रास्थिमतां कृकलासादीनामनुक्तानिष्कृतीनां सहस्रवधे
चानस्थिमतां क्षोदिष्ठानां यूकमत्-कुणादीनां शकटपूर्णमात्रवधे च

---

१(*) षत्र सहस्रा गाः इत्थं पाठः।

,, ईषत् ह्रसात् इति भिन्नः पाठः।

२(†) कृत्यक्त चान्द्रायण व्रतानि। पूर्णमात्रं पूर्णपात्र मित्यन्यः पाठः।

षाण्मासिकं प्राकृतं ब्रह्मचर्य्यं दशधेनुदानं वा कुर्य्यात् तत्प्रमाणाधिक्ये आधिक्यं कल्प्यम् । ततोऽर्व्वाक् सास्थि-प्राणिवधे किञ्चिद्देयम् ।

2017. अष्ट-मुष्टिर्भवेत् किञ्चित् किञ्चिदष्टौ च पुष्कलम् ।
पुष्कलानि च चत्वारि पूर्णपात्रं तदुच्यते १(*) ॥२७७५॥

इति वचनादष्टमुष्टिमितं धान्यं किञ्चिदित्युच्यते । किञ्चिदष्टकं पुष्कलम् । पुष्कलचतुष्टयं पूर्णपात्रं आढ़कं चोच्यते । चतुराढ़कं धान्यं द्रोणम् । चतुर्द्रोणन्तु खारिका । हिरण्ये तु पणं क्वचित्, अनस्थिके त्वोद्दिष्टे प्राणायामः । स्थविष्ठानस्थिकघुर्णादिप्राणिवधे तु तदा यावकं त्र्यहम् । फलपुष्पान्नरससञ्जातप्राणिवधे-घृताहारोऽहोरात्रम् । मार्जार-गोधा-नकुल-मण्डूक-चाष-काकोलूकादीनां प्रत्येकं वधे पयस्त्रिरात्रं पेयं पादकृच्छ्रं योजन-तीर्थगमनं वा कार्य्यम् । स्रवन्त्यां समुद्रगायां नद्यां स्नानसदैवतसूक्तत्रयो वा एकवर्षवत्सो वा देयः । मत्या चेद्द्विगुणम् । अभ्यासे कायम् । एषां समुदितानां वधे कायं षाण्मासिकं कार्य्यम् । गजवधे पञ्च-नीलवृषा देयाः । हये वरवस्त्रयुग्मम् । उष्ट्रे गुञ्जाभारसुवर्णम् । खरे वृष एकवर्षवत्सोवा देयः । अजेऽनड्वान् वृषो वा । मेषे चैवम् । हंस-सारस-पारावत-मयूर-चक्रवाक-वलाकाविषज्ञ-कङ्क-श्वावि-कारण्डव-श्येन-भास-राजपक्ष्यादिषु गौर्द्देया । काकोलूककपोत कुक्कुटेषु एकवर्षोवत्सः । अनेकेषुसकृत् कपोतेष्वेकवर्षोवत्सः २(†) क्रव्याद-व्याघ्र-शृगालादिमृगेषु-वानर-हंस-श्येन-कङ्क-गृध्रादिषु-जलचरवकादिषु भासे मयूरे च एषां प्रत्येकं वधे गौर्द्देयः । अक्रव्याद-हरिणादिषु खञ्जरीटादिपक्षिषुच वत्सतरी देया । सरीसृपेष्वयोदण्ड

---

१(*) अन्यत्र द्रव्य परिमाण ग्रन्थे च,—
'अष्ट मुष्टौ भवेत् कुञ्चिः कुञ्चिरष्टौ च पुष्कलम् ।
पुष्कलानि च चत्वारि आढ़कः परिकीर्त्तितः' इति ।
दण्डवृद्धि—इत्यत्र पापे गुरु लघु ज्ञेयम् ।

२(†) अन्यदन्यत्र—'क्रव्यादो मृतभक्षणे' इत्यग्निः प्रेतश्च । अत्र दग्धवीध्यः ।
विश्वेषु आत्मानां स्थावर-जङ्गमेषु, वारिविन्दुतः वारिधौ, मृत् कणातः सुमेरौ, मानवात्-क्षुद्रतमकीटेषु आत्मास्ति । 'सर्व्वं खल्विदं ब्रह्म' । 'सर्व्वभूतेषु चात्मानम्' इति ।
एवं कस्य हिंसने महदेव पापम् । अतः प्रायश्चित्तम् ।

उभयाग्रः(त्र)। यद्वा शुके द्विवर्षीयवत्सः। क्रौञ्चे त्रिवर्षः। मृगपक्षिषु नपुंसक वधे त्रपुसीसकं माष-मितं देयम्। शूकरे घृतकुम्भः। तित्तिरे तिलद्रोणम्। अत्र दानाशक्तस्य द्रव्यकल्पनया तत्समपादकृच्छ्रादि स्यात्। यद्वा गज-गण्ड-सारसाश्वोष्ट्र-खर-सौरगवयऋक्ष महिषाज-मेषादिष्वमत्या प्रत्येकं वधे सार्द्धकृच्छ्रः। समुदित वधे चान्द्रम्। मत्या प्रत्येकं वधे चान्द्रमेव। समस्तवधे चान्द्रावृत्तिः हरिण-सारङ्ग-रुरु-वराह-सिंह-गण्ड-केसरि-व्याघ्र-मकर-महामत्स्य-ग्राह शिशुमारादिष्वमत्या वधे प्रत्येकं त्रिरात्रम्। समस्तवधे कृच्छ्रः। मत्या कृच्छ्रः। मत्या समस्तवधे कृच्छ्रद्वयम्। मत्य प्रत्येकं वधे चैवम्। समस्तवधे चान्द्रम्। श्व-वृक-वानर-जम्बुक-विड्वराहादिष्वमत्या प्रत्येकं त्रिरात्रम्। समस्तवधे द्विगुणम्। मत्या वधे प्रत्येकं वधेऽपि मार्जा-रसर्वाजार-दुन्दुभ-नकुलमण्डूकभूषणि कर्कटशलभभेकगोधाशल्लककूर्म्मशशादिष्वमत्या प्रत्येकं पादकृच्छ्रः। समस्तवधेत्वर्द्धकृच्छ्रः। मत्याप्रत्येकं चैवम्। समस्तवधे कृच्छ्रः। हंसादिष्वमत्या प्रत्येकं कृच्छ्रः। गृध्रादिषु पादन्यूनः कृच्छ्रः। शुकादिष्वर्द्धकृच्छ्रः। टिट्टिभादिषु पादकृच्छ्रः। अत्र समस्त-वधादौ द्विगुणम्। मत्या प्रत्येकं वधे चैवम्। इदं सर्व्वं हन्त्रेकत्वे ज्ञेयम्। हन्तृद्वित्वे तु प्रत्येकं तत्रोक्तार्द्धं स्यात्। हन्तृबहुत्वे तु गजादिषु प्रत्येकं कृच्छ्रः। हरिणादिषु त्रिरात्रम्, श्वादिषु द्व्यहं। मार्जारादिष्वेकाहमुपवासः। हंसादिषु त्रिरात्रं, गृध्रादिषुद्व्यहं, शुकादि उपवासः. टिट्टिभादिषुनक्तं, मृतप्रायेष्वेषु गजादिषु प्रत्येकंवधे त्रिरात्रं. हरिणादिषु द्व्यहं, श्वादिषु चतुर्थकालम्। मार्जारादिषू-पवासः. गृध्रादिषु नक्तं, शुकादिष्वेकभक्तं. टिट्टिभादिषु जले प्राणा-यामः, अनिमातम्स[illegible]पक्षिषु त्रिरात्रमित्यादि देशकालशक्तिजाति-गुणाद्यपेक्षया गुरुविषये गुरु. लघुविषये चलघु प्रायश्चित्तं योज्यम्॥

इति [illegible]विधान-पारिजातेऽस्थिमदादि-

प्राणिहिंसा-प्रायश्चित्तम्॥

---

# अथौषधि वृक्षादिच्छेदे प्रायश्चित्तम्।

—*—

तत्र वृक्ष-गुल्म-लता-वीरूधां फलपुष्पादिभिरूपकारिणां छेदे गायत्र्या-दीनामृचां शतकृत्वोजपः तावद् गायत्रीजपोवा। ग्राम्यारण्या-नामोषधीनां च्छेदे दिवा गोपरिचर्य्यां कृत्वा रात्रौ क्षीरं पीत्वैव स्वपेत्। पञ्च महायज्ञाद्य दृष्टार्थं छेदे न दोषः। कृष्याद्युपकरणादि दृष्टार्थत्वे त्र न दोषः। चैत्य श्मशान सीमा पुण्यस्थान देवालयस्थे वृक्षेऽन्यस्मिन् प्रख्याते वा छिन्ने पूर्व्वोक्तोजपो द्विगुणः। एवं तारतम्येन प्रायश्चित्तं कल्प्यम्। सर्व्वत्र शूद्रस्य जपस्थाने द्विगुणादि कल्प्यम्। वृक्षे छेदाभ्यासे चान्द्रादिष्वेकं कार्य्यम्।

इति वृक्षादिच्छेद प्रायश्चित्तम्॥

—*—

# अथ श्व-मार्जारादि-दंशने प्रायश्चित्तम्।

—*—

श्व-वृक-शृगाल- खरोष्ट्र-विडवराहादि-काक-कुक्कुट-वानर-पुंश्चली-क्रव्यादान्त्यजाति दष्टः, शक्तश्चेन्नाभेरधः पयसा द्विरात्रम्, अग्नि-होत्रेचकरात्रम्, ब्रह्मचारी त्रिरात्रम्, नाभेरूर्द्ध दंशने द्विगुणम्, वक्त्रे त्रिगुणम्, मस्तके चतुर्गुणम्। यद्वोत्तमाङ्गे समुद्रग-नदी स्नानं प्राणायाम शतं च कृत्वा घृतेनैकरात्रम्। अशक्तेन जले प्राणायामं कृत्वा घृतेनैकरात्रम्। अत्यशक्तो गत्वा ब्राह्मणान् प्रणिपत्य तैर्निरीक्षितः शुद्ध्येत्। अत्यन्ताशक्तो हिरण्योदक मिश्रं घृतं प्राश्य शुद्ध्येत्। नाभेरध ईषद्दंशने त्वापोहिष्ठीयाभिः १(*) स्नानं प्राणायाम त्रयं च। नाभेरूर्द्धश्चेत् द्विगुणादि पूर्व्ववत्। मार्जार-मूषक-श्व-नकुलाश्वाजमहिषी-हीनजात्यारण्य मृगैर्दष्टेजले दश प्राणा-यामाः, ईषद्दष्टे पञ्च, क्षत्रियादेः पादन्यूनः, शूद्रस्य तूपवासेन दानेन गो-मिथुनदानेनामन्त्रक प्राणायामेन वा दंशन तारतम्या-च्छुद्धिः। ब्राह्मणी दष्टा स्नात्वोदितं ग्रहनक्षत्रं दृष्ट्वा शुद्ध्येत्।

१(*) 'आपो हिष्ठादि भिर्मन्त्रैः मान्त्रिक स्नानमन्त्रैः शुध्येत। स्नानं विविधं मान्त्रं दिव्यं भौमश्चेति। मन्त्रशास्त्रे स्मृती च।

कृच्छ्रादि व्रतस्था दृष्टा चेत् त्रिरात्रमुपोष्य स घृतं यावकं भुक्त्वा व्रतशेषं समाचरेत्। ब्राह्मण्यनुसारेण क्षत्रियादि स्त्रीणां चैवम्। रजस्वला श्वादि दृष्टा पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्येत्। नाभेरूर्द्धं मुखे मस्तके च द्वित्रि चतुर्गुणादि योज्यम्। श्वादि घ्रातस्य चावलीढ़स्य नखैर्व्विलिखितस्य चाद्भिः क्षालनमग्न्युपतापतश्च नश्वादिदंशे शस्त्रघातादिजनितव्रणे कृमिजनने गवां मूत्रपुरीषेण त्रिसन्ध्यं स्नानमाचरेत्। नाभेरूर्द्धं चेत् त्रिरात्रं पञ्चगव्याशी स्यात्, तत आकण्ठात् षड्रात्रम्। शिरोव्रणे तु कायम्। तत्रापि श्वादिदंशव्रणे तदुक्त प्रायश्चित्तानन्तर मिदं कृमिजननं निमित्तं कार्य्यम्। शस्त्रादि व्रणेऽप्येवमेव त्र्यहं पञ्चगव्याशनादिकम्। अत्र क्षत्रियादेः पाद-पादहानिः कल्प्या। अन्यव्रणे क्रिमिजननेतूपोष्य हिरण्यं दत्वा कृच्छ्रेण शुध्येत्। तथा निन्दितार्थोपजीवने चान्द्रादिष्वेकं त्रैमासिकं कार्यचम्। नास्तिक्ये सकृत्कृतः कृच्छ्रः १(*)। नास्तिक्यं नाम वेदोक्त कर्म्मनिन्दनेन जीवनम्। नास्तिक्या वृत्तावति कृच्छ्रः। अभ्यासे चान्द्रादिष्वेकम्। अत्यन्ताभिनिवेशेन वहुकालाभ्यासे तु पञ्चाब्दं ब्राह्मणगृहे भैक्ष्यचर्या कार्य्येति॥

इति श्वादिदंशन प्रायश्चित्तम्।

—*—

## अथ व्रतलोपे प्रायश्चित्तम्।

—*—

तत्रोप-कुर्व्वाणोनैष्ठिकब्रह्मचारी त्रैवर्णिकः स्त्रियं गत्वाऽवकीर्णी स्यात्। तत्र गुरुतल्पे तत्समे वा गुरू प्रायश्चित्तं प्रागुक्तम्। अन्यस्त्रियं गत्वा नैर्ऋतयागः कार्यः। स चैवं निर्ऋति दैवतेनैकाक्ष गर्द्दभेन पशुनाऽरण्ये चतुष्पथे वा रात्रौ लौकिकेऽग्नौ पाकयज्ञ धर्म्मेणाश्वलायनादि-गृह्योक्त २(†) पशुकल्प तन्त्रेणेष्ट्वा तस्याजिन

---

१(*) नास्तिक्यंनाम,---नास्तीश्वरः, न परलोकः, न वैदिक मित्यादि मतिः। [illegible]

२(†) आश्वलायनपारस्कर[illegible]

मूर्द्धवालं परिधाय त्रिषवण स्नायी लोहितप्राज्ञः स्व कर्म्माचक्षाणः सदा गृहभैक्ष्येणैकवाराशी वत्सरेण शुद्धेचत्। अत्रा शक्तस्तु नैर्ऋतं चरूं निरुप्य ( यत् ) जुत् कामाय स्वाहा, कामंकामाय स्वाहा, निर्ऋत्यै स्वाहा, रक्षोदेवताभ्यः स्वाहेति हुत्वा होमशेषं समाप्याब्द व्रते चरित्वा शुद्धेचत्। इदमेक वार्षिकव्रतम्। श्रोत्रीय विप्रपत्न्यां वैश्यायां श्रोत्रिय पत्न्यां वा ज्ञेयम्। गुणवत्यां क्षत्रियायां श्रोत्रीयपत्न्यां तु द्विवार्षिकम। गुणवद्व ब्राह्मण्यां श्रोत्रियपत्न्यां तु त्रिवार्षिकम्। अमत्याऽवकीर्णी तु वार्षिकस्थाने ब्रह्महत्या व्रतं षण्मासं चीरवासाश्चरेत्। ईषद्व्यभिचारि-ब्राह्मण्यां चैवम्। अमत्या द्विवार्षिकादिष्वर्द्धम्। अत्यन्त व्यभिचरित शूद्रयां सचेलस्नात उदकुम्भं दद्यात्। तादृश्यां वैश्यायां चतुर्थकालाहारी ब्राह्मणान् भोजयेत् यवसम्भारञ्च गोभ्योदद्यात्। क्षत्रियायां त्रिरात्रोपोषितो घृतपात्रं दद्यात, ब्राह्मण्यां चतुर्थकालाहारी ब्राह्मणान् भोजयेत् यवसम्भारञ्च गोभ्योदद्यात्। क्षत्रियायां त्रिरात्रोपोषितोघृतपात्रं दद्यात, ब्राह्मण्यां चतुर्थकालाहारी ब्राह्मणान् भोजयेत् यवसम्भारञ्च गोभ्योदद्यात् १(*)। क्षत्रियायां यड्रात्रमुपोषिती गां दद्यात् गोष्ववकार्ण्णकायं २(†) चरेत्। षण्ढायां पालल-भारं सीसंमाषञ्च दद्यात्। स्त्री-सम्भोगे विनां रेतोमत्योत्सृज्य नैर्ऋत-यागमात्रम्। दिवा स्वापे चैवं कृच्छ्रम्। चान्द्रवृतेष्वतिदिष्ट ब्रह्मचर्य्येषु रेतः स्कन्दे चैवम्। स्वप्ने रेतः स्कन्दे ब्रह्मचारी स्नात्वाऽर्कमर्च्चयित्वा पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्निधिष्णा यथास्थानं कल्पतामित्यृचं जपेत् ३(‡)। वानप्रस्थोयतिश्च मत्या ब्रह्मचर्य्यलोपे पराकत्रययुक्तमवकीर्णिव्रतं चरेत्। अमत्य कृच्छ्रत्रये सँन्यस्तस्य गार्हस्थ्यपरिग्रहे षाण्मासिककृच्छ्रं कृत्वा पुनर्जातकर्म्मादिसंस्कारैः शुद्धस्य पुनः संन्या साच्छुद्धिः। क्षत्रियस्य चान्द्रद्वयम्। वैश्यस्य कृच्छ्रत्रयम्। यद्वैतानि ब्राह्मणस्यैव शक्तयशक्तिसकृदभ्यासाद्यपेक्षया

१(*) तथाहि—'ग्रासमुष्टिं परगवे सान्नं दद्यात्तु यः सदा।
अकृत्वा स्वयमाहारं स्वर्गलोकं सगच्छति' इति ॥

२(†) अत्र अवकीर्णः, अवकाष्य, इति पाठान्तरम्।

३(‡) श्रुति :—

योऽर्थान। अनाशकनिवृत्तानां वाऽऽमरण-संन्यासिनान्तु जलाग्न्युद्बन्धनभ्रष्टानां प्रव्रज्यानाशकच्युतानां भृगुपतन-प्रायोपवेशन-वस्त्रघातच्युतानां च चान्द्रम्, तदा कृच्छ्रद्वयं शक्त्याद्यपेक्षया योज्यम्। आत्मत्यागाद्यशास्त्रीयमरणाध्यवसितस्य तावन्मात्रे त्रिरात्रम्। शस्त्रादि संयोगे कृच्छ्रः। इदृक्षते चान्द्रं, शस्त्रादिना मृतस्य तु पुत्रादयश्चान्द्रं तदा कृच्छ्रद्वयञ्च कुर्य्युः। इदं तत्र तत्रोक्तमप्यत्र वृद्धयारोहार्थं शङ्कलय्योक्तमिति न पुनरुक्तिरित्यत्रधेयम्॥ ब्रह्मचारी त्वनातुरो गुरुकार्य्यव्यग्रतया सदा रात्रं भैक्ष्यस्याग्निकार्य्यस्य वा लोपे कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामाय स्वाहा। कामावपन्नोऽस्म्यवपन्नोऽस्मि कामकामाय स्वाहेति मन्त्राभ्यामाहुती हुत्वा, समासिञ्चतु मरुतः समिन्द्रः संबृहस्पतिः संमग्निः सिञ्चत्वायुषा च बलेन चेत्यनेनोपतिष्ठेत्। अव्यग्रतया लोपे तु अवकीर्णिव्रतं उपनीत्यनन्तरम् व्रतमध्ये यज्ञोपवीतादिनाशे वस्त्रं सूत्रान्तरं धृत्वा मनोज्योतिरित्यादिमनोलिङ्गाभिस्तमग्ने व्रत···व्रतलिङ्गकोभिश्चतस्र आज्याहुतीर्हुत्वा विधिना तद्धारयेत्। असद्भैक्ष्यभोजनेऽभ्युदितेऽस्तमिते वाऽन्नभोजने दिवास्वप्ने नग्नस्त्रीजर्शने नग्नस्त्रापे श्मशानाक्रमणे नयाद्यारोहणे१(*) पूज्यातिक्रमणेऽग्निकार्य्यलोपे चैता आहुतीर्जुहुयात्। मणिवासोगवादीनां यज्ञोपवीतमन्यथा कृत्वा च भोजने विन्मूत्रोत्सर्गे वा गायत्र्यष्टसहस्रेण प्राणायामेन च शुद्धिः। जलादिपाने प्राणायामत्रयम्। नक्तं भक्षणे षट्प्राणायामाः। भोजने मेहने चैवम्, यज्ञोपवीत-मेखलाऽजिन-दन्तानां लोपे व्याहृतिभिर्होमं षट्प्राणायामान् वा कृत्वा पुनर्धारयेत्। सन्ध्याऽग्निकार्य्यलोपे स्नात्वा गायत्र्यष्टसहस्रं जपेत्। भिक्षाटनमकृत्वां स्वस्थस्यैकान्नाशनेऽष्टशतजपः। भिक्षां याचित्वैकन्नाशने न दोषः। गुरुशुश्रूषादिलोपेऽष्टशतजपः। मधु-मांस-मद्य-भक्षणे कृच्छ्रः। मत्या पराकः। अभ्यासे द्विगुणं पुन संस्कारश्च, ततोव्रतसमापनम्। मध्वादिवैद्यकार्य्ये गुरूच्छिष्टं ग्राह्यम्। ततोनिरुजोभूत्वा 'हंसः शुचिषदि'त्या-

---

१(*) नयाद्यारोहणे, शास्त्रविधि लङ्घने। अन्यत्र यानाद्यारोऽणे इति।

,, प्राणायामेण,—पूरक-कुम्भक-रेचकेषु प्रणवादि मन्त्रेण।

,, भूरादि सप्त व्याहृतिभिः। प्रायुक्त प्राणायामान् कुर्य्यात्।

,, अनेन मन्त्रेण सूर्य्योपासनं कुर्य्यात्।

दित्यमुपतिष्ठेत् । आज्ञाविघातादिगुरुप्रातिकूल्यमाचरन् प्रणिपाता-दिना गुरुं प्रसाद्यैव शुद्धेत् । चौर-व्याघ्रादिभयाकुलप्रदेशे महान्धकारे रात्रौ गुरुणा स्वकार्य्यार्थं प्रेषितः शिष्योदैवान्मृतश्चेत् सगुरुः कृच्छ्रत्रयं चरेत् । सर्व्वत्रारोग्यार्थमौषधपथ्यान्नप्रदानेन शास्त्रोक्तेन मरणे न कस्यापि दोषः ॥

इत्यवकीर्ण्यादि प्रायश्चित्तम् ॥

—*—

## अथ मिथ्याभिशस्तादेः ।

—*—

यस्तु ब्राह्मणो ब्राह्मणं महापातकाद्यैर्मिथ्याभिशंसति । स मासमब्भक्षो-नियतेन्द्रियः शुद्धव्रती मन्त्रजपशीलः शुद्ध्येत् । क्षत्रियाद्यभिशंसने त्वर्द्धार्द्धहान्या कुर्य्यात् । क्षत्रियाद्याः ब्राह्मणाभिशंसने द्वित्रिचतुर्गुणं कुर्य्युः । शूद्रस्यात्र जपस्थानेऽमन्त्र-प्राणायामः । भूताभिशंसने तदर्द्धम् । अतिपातकाभिशंसिनां पादोनम् । अतिपातकाभिशंसिनां ततोऽपि न्यूनम् । मिथ्याभिशस्तः कृच्छ्रं वाऽऽग्नेयं पुरोडाशं वायव्यःपशुं वा कुर्य्यात् । अतिपातकादिषु पादपादह्रासः । ज्येष्ठभ्रातुः कनिष्ठभ्रातुर्व्वा भार्यामनियुक्तोऽमत्या चान्द्रं चरेत् । रजस्वलां स्वभार्याममत्या सकृद्गत्वा त्रिरात्रं घृतं प्राश्य शुद्ध्येत् । अभ्यासे सदा रात्रम्, मत्या सकृच्च दशा रात्रम्, अभ्यासेऽतिकृच्छ्रः ।

अनवच्छिन्नाभ्यासे त्रैवार्षिकम् ॥

—*—

## अथ रजस्वलानां मिथःस्पर्शे प्रायश्चित्तम् ।

—*—

तत्र रजस्वले द्वे सवर्णे वा ऽसवर्णे, वैकभर्तृके अमत्या परस्परं स्पृष्टे सद्यः स्नाने शुद्ध्येताम् । असपत्न्योस्तु सवर्णयोर्योनिगोत्रसम्बद्धयोरमत्या स्पर्शे स्नानमात्रम् । अमत्यैकरात्रं निराहारत्वं पञ्चगव्याशित्वञ्च । असम्बद्धयोः सवर्णयोः स्पर्शेत्वमत्या स्नात्वा

दिना(न्ते)न्तरे रात्र्यन्ते वा शुद्धिः। मत्या स्पर्शे त्वाशुद्धेर्नाश्नीयात्। भुक्तौ प्रतिदिन मुपवासस्तावद्दानं वा असवर्णयोस्तु ब्राह्मणी शूद्र्योर्मत्या स्पर्शे ब्राह्मण्याः कृच्छ्रः। शूद्र्याः पादकृच्छ्रः। ब्राह्मणी वैश्ययोः स्पर्शे तु ब्राह्मण्याः पादोनकृच्छ्रः। वैश्यायाः पादकृच्छ्रः। ब्राह्मणी क्षत्रिययोः स्पर्शे ब्राह्मण्याः कृच्छ्रार्द्धम्। क्षत्रियाया अहोरात्रम्। वैश्याशूद्र्योः स्पर्शे वैश्यायास्त्रिरात्रम्। शूद्र्याश्चतुर्थकालाहार एव, एवं स्त्रीणां मत्या स्पर्शपरा। अमत्या स्पर्शे तु सवर्णासाधिकवर्णां वा स्पृष्ट्वा स्नात्वा शुद्ध्येत्। हीनवर्णां स्पृष्ट्वा त्वाशुद्धेर्नाश्नीयात्, यदि भुंक्ते पश्चात् प्रतिभोजनमुपवासः, तावद्दिनं विभोजनादि प्रत्यास्नायं वा चरेत्। चण्डालाद्यन्त्याव-सायि पतित सवादीनां मत्या स्पर्शे तदाद्यहान्य भुञ्जाना स्नात्वा प्रायश्चित्तं चरेत्। तच्च प्रथमेऽह्नि स्पर्शे त्रिरात्रम्, द्वितीये द्व्यहम्। तृतीये त्वहोरात्रम्, परतोनक्तम्। प्रथमादिदिने यदि भुंक्ते चान्द्रं पाद पादन्यूनं दिनानुसारेण चरेत्। अमत्या चाण्डालादि स्पर्शे तदहाद्यनाहारः कालेनैव शुद्ध्येत्। तत्र प्रथमादिदिने भुक्तौ प्रत्याम्नायः। मत्या रजकादिस्पर्शे चण्डालादिस्पर्शे च प्रथमादि-दिनोक्त कृच्छ्रद्वयमर्द्धार्द्धन्यूनं यथादिनं कुर्य्यात्। अमत्या रज-कादिस्पर्शे तु तदाहाद्यभुञ्जाना कालेनैव शुद्ध्येत्। भुक्तौ प्रत्याम्नायः। श्व-वृक-शृगाल-वानर-खरोष्ट्र-विड्वराह-काक-कुक्कुट-पञ्चनखोच्छिष्टे १(*) शूद्राणां मत्या स्पर्शे तदहाद्यभुञ्जाना स्नात्वा प्रायश्चित्तं चरेत्। यथा प्रथमेऽह्नि स्पर्शे २(†) द्व्यहम्, द्वितीये-ऽहोरात्रम्, तृतीयेन दिनद्वय-कालेन शुद्ध्येत्। अत्र प्रथमादिदिने भुक्तौ प्रत्याम्नायः। चाण्डाल-रजक-रजस्वलादि संस्पृष्टानां मत्या स्पर्शे हीनामेध्यादिमलोच्छिष्टस्पर्शे च तदाद्यहान्यभुञ्जानाऽतिक्रम्य प्रथमेऽह्नि स्पर्शे उपवासः, द्वितीये नक्तम्, तृतीये त्वेकभक्तम्, परतः पञ्चगव्यम्, प्रथमादिदिने भुक्तौ त्रिरात्रोपवासाः, नक्तानि। अमत्या तत्स्पृष्ट ३(‡) स्पर्शने तदहाद्यभुञ्जाना कालेन शुद्ध्येत्। भुक्तौ

---

१(*) अत्र उच्छिष्टे, 'उच्छिष्ट-स्पर्शे' इति च पाठः।

२(†) प्रथमेऽह्नि त्र्यहम्' इति भिन्नः पाठः।

३(‡) अत्र तत्स्पृष्ट स्पर्शने, 'तदुच्छिष्ट स्पर्शने च' इति च पाठान्तरम्। अत्र प्रकरणे स्पृष्टा-स्पृष्टादि निषेधादिकं संक्रामक रोगादि-निवृत्त्यर्थं बोध्यम्। तद्द वैद्यके बहुधा उक्तम्।

प्रत्याम्नायः । अशक्तौ स्नात्वा तदैवाद्यात् । उच्छिष्टयोः रजस्वलयोरमत्या मिथः स्पर्शे ब्राह्मणी त्रिरात्रंकृच्छ्रेण शुद्ध्येत् । शूद्रच्पोषिता दानैः शुद्ध्येत् १(*) । अन्यवर्ण स्त्रीणाम नुच्छिष्टानां मत्या मिथः स्पर्शे यत् प्रायश्चित्तं पूर्व्वमुक्तं तदेवोच्छिष्टानाममत्यास्पर्शेऽपि मत्योच्छिष्टयोः स्पर्शे तत्तद्द्विगुणं ज्ञेयम् । उच्छिष्टानि द्विजान्नजलानिस्पृष्टवती चेदधस्तनोच्छिष्टेपूपवासं कुर्य्यात् । २(†) ऊर्द्धोच्छिष्टस्पर्शने त्रिरात्रम् । रजःस्वला भुञ्जानोच्छिष्टा च चाण्डालादिस्पृष्टा तदाहाद्यभूञ्जाना स्नाता प्रथमेऽह्नि स्पर्शे गोमूत्र यावकं षड्रात्रम्, द्वितोये चतूरात्रम्, तृतीये त्रिरात्रम्, चतुर्थे तूपवासं चरेत् । यदि प्रथमादिदिने भुक्तवती तदा कायोत्तरं चान्द्रं चरेत् । उच्छिष्टा रजस्वला रजकादीन् स्पृष्ट्वा तदहाद्यभुञ्जानैव स्थिता प्रथमादिदिनक्रमेण पञ्चरात्राद्यैकदिनह्रासं कुर्य्यात् । अत्र प्रथमादिदिने भुक्तौ त्रिरात्रोत्तरं व्रतं कार्य्यम् । श्वादिस्पर्शे तदहाद्यभूक्तैव चतुरात्रादिकं चरेत् । प्रथमादिदिने भुक्तौ उपवासोत्तरं त्रिरात्रम् । चण्डालरजस्वलादि संस्पृष्ट संस्पर्शने तदहाद्यभुक्तवैव त्रिरात्रादि चरेत् । प्रथमादिदिने भूक्तौ प्रत्याम्नायः । सर्व्वत्राशक्तौ काञ्चनादि दद्यात् विप्रान् वा भोजयेत् । अन्यदा (था) तत्संस्कुर्य्यात्, ततः शुद्धा भवेदिति वाचयेत् । अप्रायत्ये समुपन्ने रजोदृष्टौ त्वेवम् । सपत्नीं रजस्वलां स्पृष्टा रजोदृष्टौ सद्य स्नात्वा शुद्ध्येत् । असपत्नीं सवर्णां स्पृष्टा रजोदृष्टाचैकरात्रं निराहारत्वम् । हीनवर्णं स्पृष्टा रजोदृष्ट्वा वा शुद्धेरभुक्त्वा पञ्चगव्याशनञ्च कार्य्यम् । चण्डालादिसूतिकाशवततपरिचारादिस्पर्शे रजोदृष्टावा शुद्धेव भुक्त्वा पश्चाच्चान्द्रं कार्य्यम् । रजकादिस्पर्शे ३(‡) कायम्, श्वादिस्पर्शे त्रिरात्रम्, अन्यास्पृश्योपहतौ रजोदृष्टावुपवासः । अप्रायत्ये समुत्पन्ने रजोदृष्टौ सर्व्वत्रबालापत्याया ४(०) अभिषेके कृते भुक्तिः स्यात्, पश्चादनशनंप्रत्याम्नायः

---

१(*) अत्र पाठः सन्दिग्धः ।

२(†) एतावत् प्रकरण समाप्तिं यावत् रजस्वला शुद्धि विषये उक्तं, अन्यदापि संहितासु निबन्धेषु चास्ति ।

३(‡) रजकश्चर्म्मकारश्च नटोबरुड़ एव च ।
कैवर्त्त-मेद-भिल्लाश्च सप्तैतेचान्त्यजाः स्मृताः' इति स्मृतिः ।

४(ऽ) शुद्धिः स्यादित्यन्यः पाठः । बालः अपत्यं यस्याः सेति ।

इतरस्या आशुद्धेरभोजनम्। भुक्तौ प्रतिभोजनमुपवासः प्रत्याम्नायो वा कार्य्यः। कृच्छ्रचान्द्रादिव्रतस्थायाः स्नाने नैमित्तिके प्राप्तेरजोदृष्टौ स्नानं ततोऽद्भिः सिक्तगात्रा वस्त्रं निष्पीड्यान्यद्वस्त्रं धृत्वा व्रतं समाचरेत्। जाताशौचे मृताशौचे वा तन्मध्ये वा मध्ये ऋतुदर्शने स्नात्वा भुञ्जीत, शुद्धोपवासं कुर्य्यात्। आर्त्तवमध्ये जातमृताशौचप्राप्तौ तु स्नात्वा भुञ्जीत। व्रतस्थ रजस्वलाया रजस्वलाभिभाषणे तूपवासः। रजस्वलां स्पृष्ट्वा भुक्त्वा रजस्वला स्नानकालं नाश्नीयात्। व्रतस्थयोः पञ्चगव्यञ्च प्रारब्धे दीर्घव्रते रजोदृष्टौ लोपो नास्ति, व्रतस्था हविष्यं भुञ्जीत, देवार्च्चनादिकं कारयेत्। शुद्धिकाले त्वस्नात्वा मत्या भोजने चान्द्रं कार्य्यम्। शेषमभक्ष्यभक्षण प्रायश्चित्ते वक्ष्यामः। रजस्वला त्वञ्जनाभ्यञ्जन-स्नान-प्रवास-दन्तधावन-नखनि कृन्तनः-रजःस्पर्श-अस्पृश्य स्पर्श, ताम्बुल-मधु-मांस-गन्ध-पुष्प-दिवास्वाप-ग्रहनिरीक्षणादिकं वर्जयेत् १(*)।

इति श्रीविधान पारिजाते स्मृत्यर्थसारोक्तं
रजस्वला-शुद्धि विधानम्॥

—*—

## अथ सुत-विक्रयादौ २(†)।

—*—

तत्र सुत-कन्या-विक्रये देवगृह-प्रतिश्रयोद्यानाराम-पुष्करिणी-सभा-प्रपा-धर्म्मगृहा-पुण्यविक्रये च चान्द्रादिष्वेकं कार्य्यम्। यद्वा द्वैमासिकम्। आपदि तदा कृच्छ्रः। अत्यन्तापदि सान्तपनम्। अत्र सुतविक्रये द्विगुणं ज्ञेयम्। एकापत्यः पुत्रविक्रये विधि त्रिषवण स्नार्य्यधःशायी चतुर्थकालाशी वत्सरेण शुद्ध्येत्। तथा व्रात्ययाजकोव्रात्योपनेता तदध्यापकोहीनयज्ञ ३(‡) याजकः

---

१(*) रजः स्पर्शः इत्यत्र ग्रन्थश्चत्वयोऽस्ति। अन्यद् रजस्वलाया नियमादिकं स्मृत्यन्तरे विद्यते।

२(†) 'अपत्यं पुत्रकन्ययोः' इत्यमरः। अत्र सुतस्य सुतायाश्च विक्रयः बोध्यः।
'अस्पृश्य स्पर्शने चैव न स्नायादुष्ण वारिणा' इति स्मृत्यन्तरे।
'तं देशं पतितं मन्ये यत्रास्ते शुक्र विक्रयी' इति स्मृतौ। अत्र शुक्र जमपत्यम्।

३(‡) अहीन यज्ञ इत्यन्य: पाठः। हीनयज्ञः—पञ्चमहायज्ञादि शून्यः पारिभाषिकः।
पुष्पितायानार्य्या नियमापालने क्षति-स्वस्य तनययोः रोगः पश्चाद् निर्वीर्य्यस पत्यं उत्पत्स्यते। सर्व्वस्य स्वास्थ्यहानञ्च भवेदिति।

शूद्रान्त्येष्टि कर्म्मयाजको वेदविप्लवी, तस्करव्यतिरिक्तशरणागतत्यागी, तस्करात्यागी, परहिंसार्थमभिचारी, चामत्या कार्य्याविष्णुयोग्यं कृच्छ्रत्रयं कुर्य्यात्। मत्या चेदुद्दालकव्रतं व्रात्य प्रायश्चित्त प्रकरणोक्तं कुर्य्यात् १(*)। व्रात्यो नामातिक्रान्तोपनयनः कालः। अहीनयज्ञश्च-उद्दाहादि द्वादशाहान्तः ब्राह्मणाद्यन्त्येष्टि कर्म्मसु लोभाद्याजने कायातिकृच्छ्र स्वल्पात् तदा कृच्छ्रतिश्च। बह्वभ्यासे द्विगुणम्। शूद्राद्ययाज्ययाजने त्वमत्या अशक्तौ कृच्छ्रः। मत्या त्रैमासिकम्, अभ्यासे द्विगुणम्। परिवेदनकादियाजने चैवम्। चाण्डालादि-श्रोत्रावकाशेऽनध्याये चाध्ययनं स्वोत्कर्ष हेतोर्यथा वदधीयानस्य किं पठसि नाशितं त्वया? इत्येव प्रयोगकरणं च वेदविप्लवः। तत्रामत्या वेदपाठे चोपवासः, मत्या त्रिरात्रमभ्यासे कृच्छ्रः, अत्यन्ताभ्यासे कृच्छ्र त्रयम्। (श्रु)स्मृतिधर्म्मशास्त्र व्याख्याने तु तदर्द्धम्। नित्यानध्यायाध्यापने यावदधीतं तावज्जलेऽघमर्षणं २(†) कुर्य्यात् स्वाध्यायं जपेच्च। अघमर्षणाशक्तौ तावज्जले जपेत्। अत्यशक्तौ स्थले जपेत्, तावदन्य मन्त्रं वा जपेत्। मत्या प्रत्यनध्याय मुपवासः। अशुद्धावध्ययने चैवम्। नैमित्तिकानध्यायाध्ययनेऽप्येवम्। दुर्व्बोधस्य तदर्द्धम्। काक-कुक्कुट-मूष-मं-डूकाद्यन्तरागमने नक्तम्। गवाश्व-महिषादि पशु-स्त्री-शुद्राद्यन्तरागमने तूपवासः। मार्जारः-सर्प-नकुल-पञ्चमजात्यादिभिरन्तरा गमने त्रिरात्रं त्रिकाल-स्नानञ्च। श्व-वृक-श्रृगाल-वानर-रजकाद्यन्तरा गमनेऽध्ययने कृते कायम्। वराहोष्ट्रादि-चण्डाल-सूतिकोदक्याशवाद्यन्तरागमने कायत्रयम्। गो क्षपणकादि ब्रह्मह—नास्तिकाद्यन्तरा गमने त्रैमासिकम्। शश-मेष- श्वपाकाद्यन्तरागमने षाण्मासिकम्। गज-गण्ड-सार-व्याघ्र-महापातकिकृतघ्नादि गमनेऽध्ययने कृच्छ्राब्दं तत्काल मनध्यायश्च। सर्व्वत्र

---

१(*) प्रायश्चि' आपस्तम्बगृह्य सूत्र-भाष्य, मिताक्षरा, प्रायश्चित्त सन्दर्भेषु विद्यते।

२(†) अघं पापम्, मर्षणं नाशः। स्नात्वा जलेस्थित्वाघमर्षणं अष्टोत्तर सहस्रं सूक्त-जपं कुर्य्यात्। अथान्य मन्त्रं गायत्रीं प्रणवं वेति।

" अत्र पञ्चमजातिः,—अन्त्यजः मलापहारक-चर्म्मकारादयः।

" क्षपणक—इत्यत्र भगणज इत्यन्यः पाठः।

" अत्र संहिता जपः,—वेद पाठः। क्षपणकः,—बौद्धः नास्तिकश्च।

मत्या अर्द्धं ज्ञेयम् । अन्तरागमने तदानीमेव स्वाध्याय-विरमण-प्रायश्चित्तमित्येके ॥

—*—

## अथ पितृ-मातृ-गुरूणां वृथात्यागे ।

—*—

कारणेन मत्या त्यागे चान्द्रादिष्वेकं त्रैमासिकं वा संहिताजपोवा। सुतत्यागे चान्द्रादिष्वेकं त्रैमासिकं वा । बान्धवत्यागे चैवम् । कन्यादूषणे सवर्णानां चान्द्रं त्रैमासिकं वा । असवर्णानां त्वानुलोम्येन मासं पयः कायं वा । प्रातिलोम्ये तु क्षत्रिय-वैश्ययोः कृच्छ्रार्द्धम्, अत्यन्ताभ्यासे सवर्णेऽपि कृच्छ्राब्दम्, शुद्रस्य वधे एवम् ॥

इति पित्रादि वृथा त्यागे संक्षेपोक्तिः ।

—*—

## अथ सोमविक्रय्यादि ।

—*—

वृषलीपतिः कौमारे दारत्यागी शूद्रयाजको गुरोः प्रतिहन्ता सुरामद्यपो ब्राह्मणवृत्तिघ्नः कृतघ्नः कूटव्यवहित व्रतलोपेऽन्य व्रतलोपे चात्मार्थ-पाके १(*) मद्यपस्त्रीनिषेवणे च चान्द्रादिष्वेकं त्रैमासिकं वा कुर्यात् । अधीतस्वाध्यायत्यागे व्यसनासक्त्या कृते सति ब्रह्महत्यासमवत् सच्छास्त्राभ्यासासक्त्या कुटुम्बरक्षाऽसक्त्या वा त्यागे कृते चान्द्रादि-ष्वेकं त्रैमासिकं वाऽत्यन्तापदि कायं कुर्यात् ॥

—*—

## अथाग्नित्यागे ।

—*—

तत्र नास्तिक्यादग्नित्यागे मासद्वये कायं कृत्वा पुनः संदधीत । मासचतुष्टयत्यागेऽतिकृच्छ्रः, षण्मासादूर्द्धं चान्द्रादिष्वेकम्, सम्वत्-सरादूर्द्धं त्रैमासिकं द्वैमासिकं वा २(†) । आस्यादिनाग्नित्यागे

१(*) 'स केवलं मद्यं भुंक्ते यः पचत्यात्म कारणात्' । इति स्मृतौ ।

२(†) अनालस्यादिना अग्नि त्यागी, इति पाठान्तरम् ।

तु द्वादशाहातिक्रमे त्र्यहमुपवासः । मासातिक्रमे द्वादशाहमुपवासः, सम्वत्सरातिक्रमे मासोपवासोमासं पयोभक्षणं वा कार्य्यम् । प्रमादादिनाऽग्नित्यागे आत्रिरात्रात् द्वादश लघुप्राणायामाः, आषड्रात्रात् चतुर्विंशतिः, आ द्वादशरात्रात् पञ्चाशत्, आविंशतिरात्रात् शतं प्राणायामाः कार्याः । आत्रिंशद्रात्रादुपवासः, आषष्टिरात्रात् आसंवत्सराच्च कायम्, अतःपरं प्रत्यब्दं कायं कार्य्यम् । सर्व्वत्र यावत्काल महोर्मी तावद्धोमद्रव्यं दद्यात् । सम्वत्सरादूर्द्ध्वं अग्निहोत्रत्यागे तु चान्द्रं कृत्वा पुनरादधीत । द्विवर्षत्यागे चान्द्रं सोमायनञ्च चान्द्रद्वयं वा कार्य्यम् । त्रिवर्षत्यागे कृच्छ्राब्दं १(*) गोदानञ्च कृत्वा पुनरादधीत, तथा स्त्रीजीवने हिंसाजीवने वश्याद्यऽर्थौषधजीवने, हिंसार्थमन्त्रविधाने च २(†) चान्द्रं त्रैमासिकं वा, दूयत मृगयादिव्यसने चैवम् । अनृतवाक् तस्करोराजभृत्योवृत्तारोपणवृत्तिर्गरदोऽग्निदश्च रथ-गजारोहणवृत्तिः रङ्गोपजीवी श्वागणिकः शूद्रोपाध्यायोवृषलीपतिर्भाण्डिकः, श्ववृत्तिर्ब्रह्मजीवी नक्षत्रोपजीवी, चिकित्सकोदेवलकः पुरोहितः कृतघ्नोमद्यपः कटकारकोऽपत्य-नर-पशुविक्रेता चेदेवमेव, मद्ययोज्याग्राशने ब्राह्मण्यमिच्छन्तोद्रव्यं त्यक्त्वा त्रैमासिकं कुर्य्युः । बहुकाले तु द्रव्यं त्यक्त्वा चतुर्थकालाहारास्त्रिकालस्नायिनोऽब्दं चरित्वा देवपितृतर्पणं कृत्वा गवाह्निकं च दत्वा शुद्ध्येयुः । श्वागणिकः श्व-गणजीवी । भाण्डिकः-शूर्पादिवान्यजीवी, वन्दीवा श्ववृत्तिर्नीच सेवकः । ब्रह्मजीवी मूल्येन द्विजकर्म्मकर्त्ता ३(‡) ॥

—*—

## अथात्मविक्रये ।

—*—

शूद्रसेवायाञ्च चान्द्रादिष्वेकं त्रैमासिकं वा । बहुकालं शूद्रसेविनस्तु चतुर्थकाले मितभोजिनस्त्रिकालस्नायिनस्त्रिभिर्वर्षैः शुद्धेयुः । समुद्रयाने ब्राह्मणन्यास-हरणे सरोपे व्यवहारे भूम्यनृते चैवम् ।

---

१(*) अत्र कृच्छ्रार्द्धम्, अन्यः पाठः ।

२(†) वश्यार्थे,—अभिचारे षट् कर्म्मणिच । मन्त्रमिति भिन्नः पाठः ।

श्वागणिकः, केवल नक्षत्रसूचक इति च भिन्नः पाठः ।

३(‡) सारमेय पालकः तत शिक्षकः तत-क्रय विक्रयीच ।

हीनसख्ये चान्द्रादिष्वेकं त्रैमासिकं वा कार्य्यम् । हीनयोनि-निषेवणे-चैवम् । अहीन-सख्यं भेदयन्नुपोष्य पयो व्रतं पारणं च कुर्य्यात् । तत्रामत्या ब्राह्मणोराजन्यां पूर्व्वोढ़ां गत्वा कायं कुर्य्यात् । वैश्यां पूर्व्वोढ़ां गत्वा ततः कृच्छ्रम् । शूद्रां पूर्व्वोढ़ां गत्वा कृच्छ्रातिकृच्छ्रौ कुर्य्यात् । राजन्योवैश्यां पूर्व्वोढ़ां गत्वाऽतिकृच्छ्रम् । वैश्यः शूद्रां पूर्व्वोढ़ां गत्वा कायम् । मत्या त्वेचान्द्रादिकं ब्राह्मणादिषु यथा योग्यं योज्यम् । तथा साधारणस्त्रीगमने पशु-वेश्याभिगमने च कायम् । आयासे चान्द्रादिष्वेकम् । मत्या कुशतप्तोदकं सप्तरात्रं सकृत् पिवेत् । अभ्यासे त्रैमासिकम् । अत्र प्रतिनिमित्त-नैमित्तिक-प्रायश्चित्तस्यावृत्तिर्नास्ति, किन्त्वमत्या गमनाभ्यासेऽह-र्गुणावृद्धिर्मासादर्व्वाक्, ततोमासद्विगुणा वृद्धिर्यावदब्दं ततोऽब्दगुणा वृद्धिर्यावत् पापमेवं समाचरेत् । अमत्या गमनाभ्यासेतु सकृत्कृते यत् प्रोक्तं त्रिभिर्द्दिनैस्तत्त्रिगुणमभ्यासात्, पञ्चगुणम् । षण्मासाद्‌द्-दशगुणान्यब्दात् पञ्चदशगुणानि । ततोऽप्येवं प्रकल्प्यम् । प्रोक्तमेव मुपपातकाभ्यासे ॥ महापातकाभ्यासेतु यत् प्रोक्तं सकृत्कृते तद्द्वितीये द्विगुणं तृतीये त्रिगुणं । चतुर्थे निष्कृतिर्नास्ति । साधारण स्त्रस्त्रीगमन तदुन्म-प्रभृत्यनुसन्धानेनावच्छिन्नाभ्यासे गुरुतल्प-व्रतम् १(*) । अनाश्रमीविधुरादि-तत् सम्भवे वत्सरे कायं कृत्वा-श्रममुपेयात् । द्वितीयेऽब्देऽतिकृच्छ्रम् । तृतीयेऽब्दे कृच्छ्रातिकृम् । अत ऊर्द्धं चान्द्रम्, सम्भवे त्वनाश्रमी प्रथमेऽब्दे चान्द्रादिष्वेकम् । यद्वा त्रैमासिकम् । तत उर्द्धं त्रिचतुर्गुणं योज्यम् । तथाऽपर पाक-रुचित्वे सच्छास्त्राभिरतौ आकराधिकारित्वे भार्य्याविक्रये चान्द्रा-दिष्वेकं त्रैमासिकं वा कार्य्यम् । अथासत् प्रतिग्रहे प्रतिग्रहस्यासत्त्वं परतः स्वतश्च भवति—यथा जाति दुष्ट चाण्डालादेः कर्म्मदुष्टपतितादेः कुरुक्षेत्रादिदेशतो ग्रहणादिकालतश्च २(†) । परतः सुरामद्यमहिषी-

---

१(*) 'अनाश्रमी न तिष्ठेत्तु क्षणमात्रमपि द्विजः' इति स्मृतिः । स्व स्वाश्रमोचित स्व योग्य-विहितकाले आश्रमोक्तं कर्म्मावश्यं कुर्य्यात् ।

'अनाश्रमि-तदिति' अन्यः पाठः । चत्वारः आश्रमाः सत्य-धर्म्म-वंशादि संरक्षणायार्थैर-वश्यं याह्याः ते श्रुति षूक्ताः ।

" 'आकाराधि' इति भिन्नः पाठः ।

२(†) कुरुक्षेत्रादिदेशा-ब्रह्मर्षिदेशाः श्रुति स्मृत्युक्ताः । अत्र ग्रहणं चन्द्रसूर्य्ययोर्द्वयोः ।

मैषी-कृष्णाजिन-काल पुरुष-मृतशय्यादेः स्वतः १(*)। उभय-प्रतिग्रहेऽपि ब्रह्मचर्य्यं चरन् गोष्ठे वसन् प्रत्यहं सावित्रीत्रिसहस्रं जपन् पयोव्रतो मासेन शुद्ध्येत्। न्यायवर्त्ति ब्राह्मणादेः सकाशान्निषिद्ध-मेष्यादि प्रतिग्रहे, पतितादेः सकाशादनिषिद्ध भूम्यादि प्रतिग्रहे च चान्द्रं पवित्रेष्टिर्वा मृगारेष्टिर्वा मित्रविन्देष्टिर्वा २(†) आहिताग्नेरन्यस्य गायत्रीलक्षजपोवा प्रायश्चित्तम्। अभ्यासे मासमप्सु वसन् षष्ठकाले पयोभक्षोमासान्ते विप्रान् सन्तर्प्य शुद्धेत्। पतितादेः कुरुक्षेत्रादौ ग्रहणादौ मेष्यादि-प्रतिग्रहेचैवम्। सर्व्वत्रानुक्तौ-दातृ-देश-काल-द्रव्येष्व दुष्टेषु द्वादशनिष्कप्रमाणप्रतिग्रहे कायम्। एवं सर्व्वत्र-द्रव्यानुसारात् प्रायश्चित्तवृद्धि-ह्रासौ कल्प्यौ। दातृदेश-काल-द्रव्येष्व-दुष्टेषु द्वादशनिष्कप्रमाणप्रतिग्रहे कायम्। एवं सर्व्वत्र द्रव्यानुसारात् प्रायश्चित्तवृद्धि-ह्रासौ कल्प्यौ। दातृ-देश-काल-द्रव्येष्वन्यतरदोषेतु प्रायश्चित्तस्यैकैकगुणवृद्धिः। मणिवासोगवादी-नामल्पमूल्यानां प्रतिग्रहे गायत्र्यष्टसहस्रजपः कार्य्यः। ततोऽल्पेऽल्पः। भिक्षामात्रपरिग्रहे ३(‡) पुण्यमन्त्रं जपेत्। इदं प्रायश्चित्तं गृहीतं द्रव्यं त्यक्त्वा कार्य्यं विद्यमाने द्रव्ये। इत्यसत्प्रतिग्रहप्रायश्चित्तम्॥

—*—

## अथाभक्ष्यभक्षणे।

—*—

तत्र स्वभावदुष्टलशुन-गृञ्जन-छत्राकविड्वराह ग्रामेषुवलेषुभेदग्राम्य-कुक्कुटानाममत्या सकृद्भक्षणे सान्तपनम्। अभ्यासे यति चान्द्रायणम्। मत्या सकृदपि चान्द्रायणम्। अभ्यासे तु सुरापान- समवत्। पलाण्ड्वादि समेषूक्तिभेदेषु लशुनदीर्घपत्र-पिच्छगन्धमहौषधारण्य-नवतनु-पलाण्डु तालकपरारिकायवनेषु छत्राक कोविदारश्लेष्मातक क्षुद्रश्वेतकन्टकिकीटवृतोकवककादौ चैवम्। मत्याऽभ्यासे तु चान्द्रावृत्तिरत्यन्ताभ्यासे तु सुरा-पानवत्। एषु बलात्कारभक्षणे सावित्र्यष्टसहस्रेण मूर्द्धणि सन्ततज-

---

१(*) अत्रोभयोः स्वतः परतः—आत्मपरयोः।
२(†) एते पवित्रेष्टि कादयो-व्रता इष्टयः पाप हारकाः श्रुत्युक्ता ज्ञेयाः।
३(‡) पुण्यजनक पवित्र विष्णु मन्त्रादिकम्। अघमर्षण सूक्तादि।
" अभक्ष्यो ग्राम्य कुक्कुटः, अभक्ष्यो ग्राम्य शूकरः। इभ भाष्ये पतञ्जलीये।
" हरेणु इत्यन्यः पाठः।

लविन्दुपातेनोपवासेन च सह शुद्धिः। सर्व्वत्र च्छर्दितेषूक्तार्द्धम्। गन्ध-वर्ण-रसैर्लशुनादिसमे सान्तपनम्। यति-व्रति-ब्रह्मचारिणां तदा कृच्छ्रादि, खट्टाख्यपद्मिकुसुम्भवार्त्ताकूकुम्भशिग्रुभूस्तृणस्वस्थमण्डक-कृष्णसर्षप-तण्डुलीयकनालिका नालिकेरी खट्टात्त-शाक-कलिकोपोदकी मूलादिकुम्भीशाकालाबुपु, आरण्यकण्टकिकुसुम्भरक्ताशिग्रुकेतुलावशण-शाल्मलेषु चान्येषु, कटुदुर्गन्धविशेषकमूलफलादिषु, ब्रश्चनोद्भवेषु, लोहितवृत्तनिर्य्यासादिषु रेतोविण्मूत्रेषु करमथितदधिषु वहिर्व्वेदि-पशुचरुपुरोडाशेषु च भक्षणे सकृत्, अमत्या चेदुपवासः। आवृत्तिर-भ्यासे, मत्या त्रिरात्रम्, अभ्यासे कायम्। अत्यन्ताभ्यासेऽ-तिकृच्छ्रन्तदा कृच्छ्रः, पुनरुपनयनञ्च, अन्यथा पतेत्। भीत्या-त्वमत्या सकृद्भक्षणे चान्द्रं विप्रस्याभ्यासे चावृत्तिः, अत्यन्ता-भ्यासे पतनम् १(*)। शैव-सौर-गाणपत्य-निर्म्माल्य-नैवेद्यभक्षणे-चान्द्रम्, मत्याभ्यासे पतनम्। इदं भोजनप्रकरणोक्तमपि सङ्क-लनयत्रोक्तमिति न पुनरुक्तिरित्यवधेयम्। एवमन्यत्रापि॥

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते
अभक्ष्यभक्षणप्रायश्चित्तम्॥

—*—

## अथ जातिदुष्टेष्वित्यादि।

—*—

सन्दिनीयमसुस्यन्दिन्यनिर्द्दशामेध्यसेविकावत्सगवामनिर्द्दशाजा महि-ष्योरेकशफानां महिषीवर्जितारण्यमृगाणामजावर्ज्जितसर्वाद्धिस्त-नीनाञ्च क्षीरपाने दधितत् सम्भववर्जित सर्व्वशुक्तेषु चामत्यो-पवासोमत्या त्रिरात्रम्। अवि-खरोष्ट्र-नर-विड्राह-श्वापद-क्षीरेष्वमत्या सान्तपनं, मत्या ततकृच्छ्रः, अभ्यासे चान्द्रं पुनरुप-नयनञ्च। पुरुपनेतु वपन-मेखला-दण्ड-भैक्ष्यव्रतानि निवर्त्तन्ते। अभ्यन्ताभ्यासे पतनं ब्रह्मचायर्यादेः कृच्छ्रस्ततप्तकृच्छ्रो वा। शुक्तेषु सविकारंदधि भोज्यम्, द्विस्तन्येष्वाजमारण्येषु माहिषञ्च भोज्यम्।

---

१(*) अत्र सौरादीनां वैध निवेदित देव नैवेद्य भक्षणे दोषः साम्प्रदायिकः नतु शास्त्रोक्तः। परमेशोपासकास्ते पञ्चोपासकास्तुल्याः मार्य्याः।

क्षत्रियादेः कपिलाक्षीरादिके सर्व्वनिषिद्ध क्षीरविकारेषु चामत्या द्विरात्रं मत्याश्चरात्रम्, द्विगुणम्। विडवराहग्रामकुक्कुटसमान-जातीयव्यतिरिक्तपशुपक्षिमांसभक्षणं, अजा महिष-मृगाणां मृल्लोष्ठ-केश-नख-कीट-पतङ्ग-कृमि-जलचरास्थिरक्त-मत्स्यास्थिभक्षणे रक्त-वमने चामत्योपवासः, मत्या त्रिरात्रम्। मांसभाण्डपक्वान्नाशने कुशपक्वपयस्त्र्यहं व्रतिनः केशादौ मुखे प्रविष्टे घृतं वा ब्राह्मीरसं वा पिबेत्। भोजनकालेऽन्ने मक्षिकाकेशादि-दूषितेऽनन्तरमप उपस्पृशेत्, तच्चान्नं भस्मना वा मृदा वाऽम्बुना वा स्पर्शयेत्। अस्थ्ना दूषितेऽन्ने स्नानं घृतप्राशनञ्च। दन्तपाते चैवम्। रक्तादि-दृष्टौ तूपवासोमुखे दृष्टौ त्रिरात्रं, भक्ष्ये ब्राह्मीरसो जले कुशोदकं देयम्। सर्प-सरीसृप-मूषक-मार्जार-कृकलास-कर्कट-नकुल-मण्डूक-शृङ्गि-मयूर-क्रव्याद-नर-वानर-कपि-श्व-गोमायु-वृक-दंष्ट्रि-पञ्चनख-सिंह-व्याघ्र-श्वापद-गजाश्वोष्ट्र-खरैकशफानामुभयतोदन्तानां, काकवला-कादिभास-गृध्र-जाल पाद-चक्र विष्विव १(*) पुण्डरीक कपिञ्जल पशु-पाद कुक्कुटाम्र माचरू-हंस-प्लव चक्रवाक-कारण्डव चठक कपोत-पारावत पाण्डुक शारिका सारस टिट्टिभोलूक कङ्क-रक्तपाद-तित्तिर कोकिल सहलि कुट चाल सकुल विङ्क-क्रौञ्च श्येन खञ्जरीट चाष दार्वाघाटभूलिं सरागुहादीनां मत्स्यादीनां च मांसादीनां सौनस्थान गतानाञ्च शुष्क मांसानाञ्च तेषां विण्मूत्रशुक्ररक्त-वसामज्ज्ञानां च तदुच्छिष्टानाञ्च भक्षणे कायम्, अभ्यासे महासान्तपनम्, मत्या तप्तकृच्छ्रः, अभ्यासे चान्द्रम्, अमत्याभ्यासे पतनम्। तेषां कर्णविट् प्रभृति मलषट्क भक्षणेऽर्द्धं कल्प्यम्। ब्रह्मचार्य्यादेर्मधु मांस भक्षणेऽधिकं त्रिरात्रं कायं वा पुनरूपनयनं, ततो व्रतयापन गोमूत्रादि मेध्यं, अजास्वानां मुखमुच्छिष्टम् ॥

—*—

## अथ शुचि संस्पृष्टान्न भक्षणे ।

—*—

तत्रोच्छिष्ट भक्षणे तावत् श्व-काक-पक्षि-श्वापदाखु—बिड़ाल-नकुलोच्छिष्टे भूयस्यन्ने रसे च जग्धेऽमत्या चेद्ब्राह्मीं सुवर्चलामेक-

---

१(*) विष्विव इत्यत्र टिट्टिभ इति पाठान्तरम्। पुनरुक्तेर्लोऽस्यास्ति पश्चात्।

रात्रं पिवेत्, मत्या चेत्त्रिरात्रम्, अल्पद्रव्ये च गव्यं पिवेत्। अभ्यासेऽत्याभ्यासे च पक्षं यावकव्रतम्। वृत्तस्य ब्रह्म क्षत्र-वैश्य शुद्रोच्छिष्टेतु व्राह्मण एक-त्रि-पञ्च-सप्त रात्राणि क्रमात्—पञ्चगव्यं पिवेत्। अभ्यासे त्वेषामावृत्तिः, मत्या भोजने तान्येव शुद्धोप वासानि कुर्य्यात्। मत्याचैक कायाति कृच्छ्र तप्तकृच्छ्र-चान्द्राणि ; क्षत्रादौ पादं पादं ह्रासयेत्। भाण्डस्थेऽन्नादौ केश-पिपीलिकामेध्यसेवि-कीटैरुपहते तावन्मात्रमुद्धृत्य मृद्भस्मताम्र-वैदूर्यहिरण्यरजतादिभिर्गोवालदर्भयुक्तेन वारिणा शेषं प्रोक्षयेत्, हस्तस्थमेवम्भूतं त्यजेत्। मुखस्थं चेन्निष्ठीव्य घृतं प्राश्नीयात्। मनुष्यरेतोविन्मूत्रभक्षणे वर्णा स्तप्तकृच्छ्रातिकृच्छ्रकायत्रिरात्राणि कुर्य्युः। मत्या चान्द्रतप्तकृच्छ्रातिकृच्छ्रकायानि कृत्वा पुन-रुपनयेयाः। अलेह्यापेयत्वं, चाण्डालाद्यन्त्यान्नभक्षणे चैवम्। चाण्डालः श्वपचः क्षत्ता सूती वैदेहको मागध इत्याद्या अन्त्याः १(*)। अन्त्यानां भुक्तशेषं भुक्त्वा वर्णाश्चान्द्रं कार्यं तदर्द्धपादं क्रमात्कुर्युः। अन्त्यानामुच्छिष्टभक्षणे तु चाद्रं महासान्तपनं षड्रात्रं त्रिरात्रञ्च कुर्युः। अत्यन्ताभ्यासे द्विगुणम्। निरन्तराभ्यासे पतनम्। आमान्न ग्रहणे त्वर्द्धम्। तदुच्छिष्टभोजने द्विगुणम्। सहभोजने त्रिगुणम्। मत्याऽभ्यासे पतनम्। दीपोच्छिष्टं तैलं रात्रौ रथ्याहृत-भोक्ष्यांगावशिष्टञ्च च भुक्त्वा नक्तं चरेत्। पीतावशिष्टमुखनिर्गतपाने सत्यभ्यासे चान्द्रं पराकं वा कुर्यात्। पीतावशिष्टमात्राम्बुपाने वामहस्तेन च पाने तदर्द्धम्॥

—*—

## अथाशुचिद्रव्यसंस्पृष्टभक्षणे।

—*—

तत्र केशकीटाद्यवपन्ने २(†) नीलीलाक्षाक्षाव स्थचर्म्मरक्तमांसवसा-मज्जासृक् शुक्रविन्मूत्रस्पृष्टे महापातक्यवेक्षिते दुष्ट पक्ष्युच्छिष्टे विड्व-

---

१(*) 'रजक श्चर्म्मकारश्च नटो वरुड एवच।
केवर्त्त: मेधो भिल्लश्च सप्तैते चान्त्यजाः स्मृताः' इति स्मृत्यन्तरे पृथगुक्तम।

२(†) तत्तु द्विजात्यनुपनीत-वालानां विषये विधानम्।

,, अलेह्यम्‌ पेयत्व चण्डालाद्यन्नमिति वा पाठः।

राहाद्युच्छिष्टे गवाघ्राते शुक्ते पर्य्युषिते वृथापक्वे देवपित्रर्थान्नहोमार्थं-हविःषु चामत्या, भक्षणे उपवासः पञ्चगव्यञ्च। सर्व्वत्र मत्या चेत् पादकृच्छ्रः, अज्ञातजात्यस्थ्यादिदूषिते तदर्द्धम्। कर्णविड़ादिमल-पट्के चान्द्रम्। एतदल्पसंसर्गे ज्ञेयम्। महासंसर्गे तु द्विगुणम्। दूषितरसज्ञाने तप्तकृच्छ्रः। सर्व्वत्रापि पुनः संस्कारश्च। संसर्ग-दुष्टवत्-क्रिया दुष्टे च चण्डालाद्यन्त्यजसूतिका-रजस्वला-पतित-शव तद्दाहक षण्ढ देवलकविप्राग्र १(*) पुनः सन्त्यक्त्वाऽन्तर्व्वाह्य मुखलेपान् प्रक्षाल्य स्नायात्। किञ्चिन्मात्रनिगिरणेऽष्टोत्तरशत-गायत्रीजपः। तद्ग्रासभोजनेतु पक्षिण्युपवासः। समस्तभोजने त्रिरात्रम्। जलपानेऽर्द्धम्, श्वादिष्वाचमनम्। भुक्त्वास्नात्वाऽष्ट-शतं जपः २(†) उपवासो वा। चण्डालाद्युच्छिष्टस्पृष्टे कांस्य पात्रे भोजने कृच्छ्रः। मृन्मयेऽतिकृच्छ्रः। रजकाद्युच्छिष्टस्पृष्टकां-स्यादौ तदर्द्धम्। चण्डालादिसंस्पृष्टान्नभोजने त्रिरात्रम्। चण्डालादिदृष्टान्नभक्षणे-तूपवासः पञ्चगव्यञ्च। चण्डालादिहस्तभोजने चतुर्गुणम्। चण्डालादिहस्तनिर्म्मुक्ताम्बुपाने तूपवासः। तत् स्पृष्टजले तदर्द्धम्। भुक्तोच्छिष्टश्चण्डालादीन् दृष्ट्वा त्रिरात्रम्। चण्डालादिर्यस्य गृहेत्वज्ञातस्तिष्ठति तस्यान्नममत्या भुक्त्वा कायं चरेत्; मत्या पराकम्। चण्डालादिस्व (स्वी)कृततीर्थतड़ागादिष्वमत्यापयो भुक्तोच्छिष्टश्चण्डालादिस्पर्शेकायम्। यद्वा गायत्र्यष्टसहस्रं, द्रुप-दाशतं वा जप्त्वा त्रिरात्रान्ते च गव्यं पिवेत् ३(†)। आमभक्ष्योच्छिष्टे पादम्, अधस्तनोच्छिष्टचण्डालादिस्पृष्टः पादम्। चण्डालादि-स्पृष्टमूत्राद्युच्छिष्टे त्रिरात्रम्, उपोष्य जातवेदसं वा जपेत्। अमत्या-शक्तस्याप्युपवासः। भोजने षड्रात्रम्। आमभक्षे त्रिरात्रं प्राणायाम-शतं वा। रजकादिविषयेतु चाण्डालाद्युक्तार्द्धं ज्ञेयम्। उच्छिष्ट-श्वादिस्पृष्टद्रष्टामेध्यादि स्पृष्ट्वोपोष्य पोष्य पञ्चगव्यं पिवेत्। रजस्वला सूतिकाऽमेध्यपतित—चाण्डालपुल्कसावधूतकरण्डहस्त-कुणि-कुष्ठि कुनखिश्यावदन्ताद्यस्पृश्यस्पृष्टोमत्या भुक्त्वा कायम्,

---

१(*) द्युतपन्ने, सम्पन्ने, संमिश्रे इत्येतानि पाठान्तराणि। श्वपन्ने,—समाक्रान्ते इति। अत्र जपः गायत्र्या वोध्यः। 'दशभि र्जन्मजनितं शतेन च पुराकृतम्'। त्रियुगन्तु सहस्रेण गायत्रीहन्ति पातकम्'। इति स्मृतौ तज्जप फलमुक्तम्।

२(†) प्रविष्टाग्रः, विष्टाग्रे प्रविश्य, इति च।

३(†) 'द्रुपदादिव मुमुचानः' इत्यादि मन्त्रं जपेत्।

अमत्याऽर्द्धम् । अशक्त एषु केशकीटाद्यवपन्नेषु कुशाज्यशङ्ख-पुष्पादिकषायं ब्राह्मसुवर्चलां वा पिवेत् । शूद्रेणसहामेध्य-सेवि-कीटोपहते च भुञ्जानः शूद्रस्पर्शे चाहरेकपङ्क्तौ वा भुञ्जानेषु यत्रोच्छिष्टं वा प्रयच्छेदाचामेद्वा कुतसित्वा १(*) वा यत्रान्नं दद्यादु-च्छिष्टपङ्क्तौ वा तत्र भुक्त्वोपवासं पञ्चगव्यञ्च कुर्य्यात् । मत्या सान्तपनम् । वामहस्तनिर्म्मुक्तपात्रान्नभुक्तौ वैकपङ्क्तावेकस्मिन्नु-त्थिते पश्चाद्भुक्तौ वा सान्तपनम् । अगतौ मर्य्यादाकरणे न दोषः । मृतपञ्चनखखरविड्वराहादिशवयुक्तकूपादौ विण्मूत्रादिभिरत्यन्तोप-हतोदपाने स्नाने च वर्णास्त्रिद्व्येकोपवासनक्तादिकुर्य्युः पञ्च-गव्याशनञ्च । तत्रैव क्लिन्न भिन्नशवयुक्ताम्बुयाने तु मत्या कृच्छ्रम् । तादृङ्मानुष शवयुक्ते तु मत्या चान्द्रायणम् । चण्डालादि-सम्बन्धि-कूपाद्यल्पजलाशयेषु जलयाने स्नाने तद्भाण्डस्थ जलविषये वा मत्या वर्णा महासान्तपनं कार्य्यं तदर्द्धं पादं क्रमाच्चरेयुः । अमत्या तत्तदर्द्धम् । अशक्तः पञ्चगव्यं पिवेत् । महाजलाशये न दोषः । ह्रदपुष्करिण्यादिषु २(†) जानुदघ्नेषु न दोषः । ततोऽधस्तनेषु अमत्या नक्तम् मत्योपवासं विप्रः कुर्य्यात् । अन्ये नक्तादि कुर्य्युः । रजकाद्यन्त्यजकूपतद्भाण्डस्थाम्बुपयोद-धियाने त्वमत्या द्विजा ब्रह्मकूर्च्चेन त्रिद्व्येकोपासान् कुर्य्युः । उपवासाशक्त्या दानञ्च मत्या द्विगुणम् । अन्त्यजैः खानितवापीकूप-तड़ागादिष्वल्पेषु स्नाने पाने चोपवासः, मत्याऽभ्यासे कायम् , मध्यमेषु पञ्चगव्यम् , महत्सु स्नानं वा न दोषः । पपास्थमरण्ये सेरेयद्रोण्यां जलकोशं विनिःसृतञ्च पीत्वा पञ्चगव्येनाशक्तः शुद्ध्येत् , शक्त उपवासेन ॥

---

१(*) सुवर्चला, मण्डुकपर्णं, अतसी, तिक्तब्राह्मी वेति ।
अत्र श्रुतकृत्वा, फुतकृत्वेतिचान्यः पाठः ।
" कुर्य्यात्,—पञ्चगव्यं संशोध्य स्नात्वाःपिवेत् । .
'पञ्चगव्य मिदं प्रोक्तं महापातक नाशनम्' इति स्मृतिः ।
२(†) जानुपरिमितं जलं जानुदघ्नम् ।
अत्र परिमितार्थे दघ्नच् प्रत्ययः ।
" अत्र येन पातं वारि प्रभृतिः द्रोणिका इति ।
" सिञ्चन द्रोण्यामितिच पाठः ।

# अथ भावदुष्टभक्षणे ।

—*—

तत्र निजवर्णादिरहितं भावदुष्टं वा दुष्टभोजने भावदुष्टभोजने च मत्या त्रिरात्रम् , अमत्याऽर्द्धम् ; छर्दने घृतप्राशने भक्ष्याभक्ष्यशङ्कितभक्षणे त्वक्षारलवणेरुक्तां ब्राह्मीं सुवर्चलां पिवेत् । त्रिरात्रं सम्वत्सरस्य त्रीन् द्वावेकं या कृच्छ्रं चरेत् । शङ्कायां विज्ञाने तादृद्विगुणं द्विजश्चरेत् ॥

—*—

# अथ कालदुष्टभक्षणे ।

—*—

तत्र कालदुष्टं पर्य्युषित-शुक्तानिर्दशाहगोक्षीरादि, तस्यामत्याभक्षणे उपवासः, मत्या त्रिरात्रं यावकव्रतम् । यव-गोधूम-पयोदधिपिष्ट-विकारस्नेहपक्वान्न-मांसादौ न दोषः । शृङ्गास्थिदन्तजैः पात्रैः कन्द-शाल्क-शुक्ति-कपर्दकैश्चाम्बु पीत्वा नवोदकञ्च स्वकाले व्यवहारा-दर्व्वाक् एकादशाहादर्व्वाक्च पीत्वा पञ्चगव्यं पिवेत् । मत्योप-वासम् , संग्रहभोजने नवश्राद्धे च ग्रामयाजकान्नादौ च चान्द्रम् । ग्रहणनिमित्तनिषेधकाले सन्धिकाले चातिप्रातरतिसायमित्यादौ काले च धाना-दधि-शक्तूनां रात्रौ तिलसम्बद्धान्नस्य च भोजने स्नाने चैवमादिष्वत्रादिष्टप्रायश्चित्तेषु च प्राणायामशतं मत्योपवासं चरेत् ॥

—o—

# अथ गुण दुष्टशुक्तादि भक्षणे ।

—*—

तत्र गुण दुष्टशुक्तादिकषायादि सन्धिन्यान्यमेध्यान्यमत्या नीत्वा भुक्त्वा चोपवसेत् , मत्या त्रिरात्रं यावकम् । आमलकादिफलयुक्त-कञ्जिकायां न दोषः, अभिधारणे च तद्व्रतस्यारविलयन पिण्याक-मथितादिष्वन्नं विकारेषु मत्या त्रिरात्रं यावकममत्याञ्छर्दित्वा घृतं १(*) पिवेत् । प्राक् पञ्चनखेभ्यः प्राणिष्वेवम् । वैश्यदेवादिरहितान्न भोजने वृथा कृसरसंयाव पायसापूपशष्कुलीमधुमांसानां च भुक्तौ-त्वमत्योपवासोमत्या त्रिरात्रं कायं वा कार्य्यम् । शूद्रभाजनाभिन्न-

१(०) अत्र 'च्छर्दिवंमनम्, इति व्यासभाष्ये । अन्यत्र तरलकफादेः निष्ठीवण मुद्गिरणञ्च इति ।
अत्र 'स्नेह पक्वान्न' इत्यन्यः पाठः ।
'कसन्धिन्या अमेध्यान्यमत्या' इति भिन्नः पाठः ।

(भाण्डेन) भाण्डे १(*) भुक्त्वा तूपवासः पञ्चगव्यञ्च, मत्या त्रिरात्रम्, भिन्नकांस्ये कार्यं त्रिरात्रं वा। भिन्नभाण्डेष्वन्नभोजने पञ्चगव्यं ब्राह्मीं घृतं वा पिबेत्। वटाश्वत्थ-कुम्भी-तिन्दुक-कोविदारक देवपत्रेषु भुक्त्वा चान्द्रम्। लता-पलाश-पद्मपत्रेषु गृही भुक्त्वा चान्द्रं कृत्वा शुद्ध्येत्। ब्रह्मचारी वनस्थोयतिश्च भुक्त्वा चान्द्रायण फलं लभते॥

—*—

## अथ हस्तदानादिक्रिया दुष्टभोजने।

—*—

मत्योपवासः। पञ्चगव्यञ्च।
आसनारूढ़पादोवा वस्त्रार्द्ध प्रावृतोऽपि वा।
मुखेन धमामितं भुक्त्वा कृच्छ्रं सान्तपनं चरेत्॥

—*—

## अथ श्राद्धभोजने प्रायश्चित्तम्।

—*—

तच्चतत्र विक्षिप्योक्तमपि बुद्ध्यारोहार्थं संप्रति संगृह्योच्यते। ततोनव्य मिश्रपुराणभेदाच्छ्राद्धानि त्रिविधानि। तत्रान्तर्द्दशाहे चैकादशाहे च क्रियमाणानि नवानि। तदूर्द्ध्वमावर्षात् क्रियमाणानि मिश्राणि। तदूर्द्ध्वं पुराणानि। तत्रापदि सूतकसम्बन्धेषु नवश्राद्धेषु भोजने कायम्, एकादशा हैकोद्दिष्टेकायं पादोनकायञ्च। कार्य्यदोषगौरवात्, द्वादशाहे वोनमासे पादोनं कार्य्यमेव, त्रिपक्षे द्वै मासिके वोनषाण्मासिके वोनाब्दे चार्द्धकृच्छ्रम्। त्रिमासाद्यब्दमोक्षान्तेषु सपिण्डने चाब्दिके चोपवासं पादकृच्छ्रं वा प्रत्यब्दं पुराणे च नक्तं कुर्य्यात्। गुरुविषये द्रव्यार्थे नवश्राद्धभोजनेतु त्रिरात्रम्। द्वादशाहादौ द्विरात्रं त्रिमासादावुपवासं, नक्तं पञ्चगव्यं वा प्रत्यब्दे चान्यत्पुराणे च षट्प्राणायामांश्चरेत्।

---

१ *) जत्र 'शूद्र भाजन भिन्न भाण्डेन भाण्डे भुक्ता' इति च पाठः। 'सूतक सम्बन्धिंषु' इति पाठान्तरम्।

,, 'श्रामं शूद्रस्य पक्वान्नं पक्व मुच्छिष्ट मुच्यते' इति स्मृतिः।

,, प्रागुक्त—'ब्राह्मी मण्डुकपर्णी स्यात्'। 'वयः संस्थापनी ब्राह्मी मेधायुः स्मृतिवर्द्धिनी' इति च।

अत्रैव निस्पृह भोक्तुर्जपशीलिनो वा तत्तदर्द्धम्। क्षत्रियादिश्राद्ध-भोजनेषु द्वित्रिचतुर्गुणानि पूर्व्वोक्तानि क्रमात् कार्य्याणि। अनापदि तु नवश्राद्धे चान्द्रम्। आद्यमासि चान्द्रं पराकश्च। द्वादशाहादौ कायमेव। द्विमासादौ पादोनम्। त्रिमासाद्यब्दान्तेषु सपिण्डे च त्रिरात्रम्। अर्द्धं कायं वा। आब्दिके पादकायम्। प्रत्याब्दिके तूपवासः। क्षत्रियनवश्राद्धेषु चान्द्रम्। आमासिके १(*) चान्द्रं पराकश्च। द्वादशादौ पराकमेव। द्विमासत्रिपक्षादौ सान्तपनम्। त्रिमासादौ कायम्। आब्दिके पादकायम्। आद्यमासिके प्रत्याब्दिके त्वर्द्धं पुराणे पादम्। वैश्यश्राद्धे त्वेतान्येव व्रतानि श्राद्धानि। शूद्रश्राद्धे द्विगुणानि। यद्वा नवश्राद्धे चान्द्रद्वयम्। आद्यमासिके च चान्द्रद्वयम्। सार्द्धं चान्द्रञ्च। द्वादशाहादौ सार्द्धं चान्द्रमेव। द्विमासत्रिपक्षादौ चान्द्रं त्रिमासादौ पराकम्। अब्दे महासान्तपनम्, प्रत्यब्दे सान्तपनम्॥

—*—

## अथ चण्डालोदकन्नादि-विषये।

—*—

ब्राह्मणापसद-पशु-दंष्ट्रि २(†) वैद्युतप्रपतन विषोद्वन्धनानाशकैर्मृतानां पापिनां स्तेनपतिताद्यभोज्यान्नानां च श्राद्धेषु नव श्राद्धे चान्द्रम्। आद्यमासिके चान्द्रं पराकश्च। द्वादशाहादौ पराक एव। द्विमासत्रिपक्षादौ अतिकृच्छ्रम्। त्रिमासादौ कायः। आब्दिके पादः। प्रत्याब्दिके तूपवासः। सम्यग्विषयेऽपि द्रव्यार्थं भोजने चैवम्। अपाङ्क्तेयानामेकादशाहश्राद्धे शिशुचान्द्रम्, यतिर्ब्रह्मचारी सूतकान्नव श्राद्धमासिकादौ भुक्त्वोक्तं कृत्वाऽधिकं त्रिरात्रं वोपवासं त्रिः प्राणायामान् घृतप्राशनञ्च कृत्वा व्रतशेषं समापयेत्। अनापदितु कायं त्रिरात्रमेकरात्रमुपवास-प्राणायामाः पञ्चगव्य प्राशनञ्चाधिक महाकृच्छ्रञ्च समाचरेत्

---

१(*) अत्र षाण्मासिके इत्यन्यः पाठः।

२(†) अत्रशापः इति भिन्नः पाठः। एतत् पुनरुक्तमपि बुद्धिकृत्य सौकर्य्यार्थम्।

„ केषाञ्चिन्मते शूद्रार्चानवर्यां विद्यादतोऽदर्शितः।

हेम श्राद्धे त्रिरात्रं कायञ्च। साङ्कल्पिक श्राद्धे त्रिरात्रमुपवासञ्च। दैवात् सूतकव्यवहितेषु ब्राह्मण क्षत्रिय वैश्य शूद्रश्राद्धेष्वेकोद्दिष्टेषु कृच्छ्रातिकृच्छ्रचान्द्रायणद्वादशाहादिषु प्रायश्चित्तेषु पादं ह्रासयेत्। अतिव्यवहितेषु तु त्रिरात्रादिकम्। गुरुविषये तूपवासनक्तषट् त्रिप्राणायामाः अनापदि द्विगुणम् १(*)। सर्व्वत्रापि श्रोत्रियपुराणेषु नक्तप्रायश्चित्तेषु च गायत्र्या दश कृत्वोऽपः पीत्वा शुद्ध्यति। ततः सन्ध्योपासनं होमञ्च यथोचितं कुर्य्यात्। निर्वृत्ते चूड़ाहोमे प्राङ्नामकरणाच्च जातकर्म्मणि चाङ्गश्राद्धे सूतके च नाम श्राद्धे चूड़ाहोमान्ते चौल श्राद्धे सीमन्ते सोमे चाधान-ब्रह्मौदने च मत्या चापदि भुक्त्वा सान्तपनम्। मत्याऽनापदि चान्द्रम्। अन्येषु संस्कारेषु तूपवासोनिर्द्दिष्टः आपदि स्त्रिरात्र-ञ्चानापदि। अन्यदत्ता कन्यामन्यस्मै पुनर्द्दत्ता सा पुनर्भूः। असंस्कृते पूर्व्वगर्भे प्रसूते द्वितीयगर्भे संस्कारो यस्याः सा पुनारेताः। षोड़शाब्दान्तात् पश्चादेव या गर्भिणी सा रेतोधाः। भर्त्तृशासनो-ल्लङ्घिनी २(†) कामचारिणी। आसां गर्भेषु पूर्व्ववत्सान्तपनं चान्द्रं वा सर्व्वस्त्रीप्रथमगर्भेषु भुक्ता पूर्व्ववत् सान्तपनं चान्द्रं वा कार्य्यम्॥

—*—

## अथ परिग्रहाशुचिदुष्टभोजने।

—*—

तत्राश्रोत्रियकृते यज्ञे ग्रामयाजकादिहुते वा क्लीवहुते स्त्रीहुते वान्न-भोजने राजपुरोहित-राजभृत्यवैश्मशूद्राणां क्लीवाजाविकमाहिष-हास्थिनक-भूमिपालानां स्तेनगायनतक्ष-वार्द्धषिक-दावस्थितानां कदर्य्य-

---

१(*) अत्र 'सर्व्वत्राति' इत्यन्यः पाठः।

२(†) अत्र कानीना, सहोढ़ा, पुनर्भूः, पुनारेताः, रेतोधाः, कामचारिणी प्रभृतीनां पृथग्-निर्द्देशः प्रसङ्गादुक्तः।

,, अत्र किराट प्रजिंतानाम्, इति पाठान्तरम्।

,, हास्तिनिकः इत्यन्यः पाठः। अत्र सांवत्सरिकः नक्षत्रसूचकः न तु शास्त्रज्ञः ज्योतिर्विद्।

वार्धिक-राजाभिशस्त पुंश्चली दाम्भिकवैद्य-वैद्यकुलिमत्-सांवत्सारिकाणां मत्तक्रुद्धातुरगण-गणिकानां चक्रशस्त्रमृगजीविनां क्रूरोच्छिष्ट-भोज्युग्रपतित-पिशुनानां शैलूषतन्तुवाय-किरातवर्जितानां व्रात्य-कामुक घोष-तरुवाजि-जीविकानां घृतक्षीरतिललवणगुड़विक्रयिणामग्निद्-नित्यरोगिणां घाण्टिक-विष-शस्त्रकार-विप्रगोदेवविक्षिप्तानां वर्णैय पाक्षिक-वेश्यापाषण्डिजीविलूतादिप्रतिलोमजानां कर्म्मारकृतघ्नानां पुण्यसोमकर्म्मात्म-शस्त्रविक्रयिणां१(*) विषदद्वेषिरङ्गावतारिसुवर्णकारानृतीनाम्, शौण्डिक वस्त्रनिर्णेजनकवेणुश्ववतां कूटनटनर्त्तकवृषलीततपतीनां, नृशंसगृहोपपतिकोऽनार्षकम स्त्रीजितकितवानां शूद्राध्यापक-याजकापुत्राधर्म्मापतिस्त्रीणां ग्रामयाजि-वृषलवणिक्काण्डपृष्ठ-सेवकानां, पर्य्याहितपरीष्ट-परिवित्ति-परिविविदानानां, पुनर्भूजाग्रेदिधिषूपति-तक्रतैल-वध-जीविनां-भगवृत्ति पार्श्वरक्षि समुद्रतारकहीनाङ्गातिरिक्ताङ्गानां, मातृपितृसुतगुर्व्वाग्नित्यागिनां, कूटकमानकूटकसुतकन्यास्त्रीविक्रयिणां, सीसकार-गोघालोहकार-योनिसङ्करकारकाश्रमभेदक-सूचक-ब्रह्मचारिणां, कुण्डाशि-वीरह-गुरुगुप्तिकृद्दागागारदाहि पशुजीविनाम्, सैनिकपाणविक-कुलालाविक-कर्म्मणां, तस्कर-वृथाश्रमिवृथाहोतॄणामित्यादि-पापिनाममार्गे तिष्ठतां भिक्षावृत्तीनाम्, अकृतनिस्कृतीन मन्नभोजने दानप्रतिग्रहे याजने च चान्द्रं कार्य्यम् ॥ कुनखि-कृष्ण-दन्त-कुष्ठि-ब्राह्मणान्नद शूद्र-शूद्रान्नद-ब्राह्मणानामभोज्यानाम्, सत्रे सोमे एकादशाहश्राद्धे दुष्टान्न दुष्टावघुष्ट-दुष्ट विदुषां जुगुप्सित—महा पाप्यवेक्षितशुना स्पृष्टं उदक्यास्पृष्ट-गवाघ्रात पक्ष्यवलीढ़मन्नमसत्कृतं वहुयाचितं सरोषं सविस्मयान्नञ्च पादस्पृष्टमवज्ञातमनर्च्चितं पर्य्यायान्नं च स्त्रीशूद्रोच्छिष्टं वृथामांसं जात मृत सूतक सूतिका-प्रेतान्नं चातुष्किरुचान्यतमस्यान्नं भुक्त्वा दत्वा वा रेतोविण्मूत्राणि भक्षयित्वा वाहमत्या त्रिरात्रम्, अभ्यासे कृच्छ्रः, मत्यातिकृच्छ्रः, मत्याऽभ्यासे तदा कृच्छ्रः कार्य्यः। ब्रह्मचार्य्यादेस्तु कायाति तदा कृच्छ्र चान्द्राणि पुनः संस्कारश्च। यद्वा त्रिषण्णव-द्वादश-रात्राणि पयसावर्त्तनम्, अभ्यासे चान्द्रम्, अत्यन्ता-

१(*) 'द्विषद'—'अनृतानाम्' इति पाठान्तरद्वयम् ।

भ्यासे चान्द्रवृद्धिः । आपद्येकद्वित्रिचतुरूपवासाः । अत्यन्तापदि त्रिषण्नव द्वादश प्राणायामाः । आमेषु स्नानम् । विप्रान्ने एकभक्तम् । अनाचारे दुराचारे च नक्तम् । अब्राह्मणवधे स्नानमष्टशतजपश्च । गुर्व्वाचार्य्याग्नि-धर्म्मशास्त्र-गो-ब्राह्मणद्वेषिणोऽन्नभोजने शाखा १(*) रण्डान्नभोजने चैवं त्रिरात्रम् , पुंश्चल्यभिशस्तम्लेच्छ-चण्डालदस्युभिर्बलाद् दासी कृतानाम् , गवादि हिंसकैतदुच्छिष्ट मार्जने भोजने च खरोष्ट्रविड्वराहभक्षणे तत् २(†) स्त्रीभिः संगमे भोजने च मासोषितद्विजस्य कायम् । आहिताग्नेश्चान्द्रं पराको वा, सम्वत्सरोषितस्य चान्द्रं पराकश्च ॥

—*—

# अथ जात मृताशौचान्न भोजने ।

—*—

तत्र द्विजाशौचे सर्व्ववर्णनामुपवासः । विप्र क्षत्रवैश्य शूद्राशौचेत्वमत्या विप्रोभुक्त्वा ३(‡) यद्वा नक्ता नक्तैकद्वित्र्युपवासान् कुर्यात् । अभ्यासे त्वेकत्रि पञ्चसद्य उपवासान् कुर्यात् । यद्वा, ऽभ्यासे द्वादश त्रिंशत् षष्टि शतप्राणायामाः । मत्या चेत् सान्तपनकाय महासान्तपन चान्द्राणि । सर्व्वत्र पञ्चगव्यञ्च एकद्वित्रि चतुःकायानि वा । मत्याऽभ्यासे कायातिकृच्छ्र तप्तकृच्छ्र चान्द्राणि । यद्वा अभ्यासे यावकव्रतानि एकद्वित्रिषण्मासानि । अत्यन्तापदि द्वादशत्रिंशत्षष्टि शतप्राणायामाः । क्षत्रस्य वैश्यशूद्राशौचे चैवम् । विप्राशौचे क्षत्र वैश्ययोरष्ट शतजपोनक्तं वा । क्षत्राशौचे वैश्यस्य चैवम् । द्विजाशौचे शूद्रस्य स्नानम् । शूद्राशौचे शूद्रस्य स्नानं पञ्चगव्यञ्च । शूद्रं संस्पृश्यान्नाशने स्नानं पञ्चगव्यञ्च । ब्रह्मचार्यादेरूपवासः शतजपः पण्चगव्यञ्च तिरात्रं सहस्रं जपः ।

---

१(*) अत शापा, रण्डान्न-भोजने, इति शाखा इति च पाठाः ।

२(†) खरादि पालक-स्त्रीभिः संगमने, सह भोजनेऽपि चेति ।

,, सर्व्वत्र प्रायः प्रकरणे क्वचित् क्वापिच तदर्हाणां पुनरुक्तिः ज्ञानवैशद्याय यन्यत्रता लिखिता दृश्यते ।

३(‡) यद्वा इति क्वचित् पाठः ।

पञ्चगव्यश्चाधिकं जाताशौचे लघुयोज्यमित्येके। आहिताग्न्यशौचे चैवम्, अशौचे भुक्तवन्तं न स्पृशेत्। आपुरीषोत्-सर्गात् तत्प्रायश्चित्तं तदशौचे गते कार्य्यम्। सकृद्भोजनमात्रेणभोक्तृणां तावदशौचित्वादनधिकारात्तद्गृहान्नभोजने नक्तमुपवासोवा। कापालिकान्ने च क्रमात् कार्यं तदर्द्धञ्च। अभ्यासे द्विगुणम्, मत्या त्रिगुणम्। मत्याभ्यासे चतुर्गुणम्। अन्नसत्रप्रवृत्तस्याग्निहोत्रिणश्चामे न दोषः। पक्वान्नेत्वेकरात्रं वा यावकं द्वादश चतुर्व्विंशतिर्व्वा प्राणायामाः। गृहीत्वाग्निं समारोप्य पञ्चयज्ञानकुर्व्वंश्चपाकनिवृत्तः पञ्चयज्ञान् कृत्वा नित्यं परान्नोपजीवी परपाकरतः दानविवर्जितः पक्षे मासे वा पितृणभोजयन्नश्राद्धः, एषामन्नाशनाभ्यासे चान्द्रम्। पूर्व्वगणितव्यतिरिक्तनिषिद्धाचरणशीलान्न-भोजनेतूपवासोदिनं सम्वत्सराभ्यासे पराकः अत्रादिष्टं विप्रस्यैव, क्षत्रस्य पादोनम्, वैश्यस्यार्द्धम्, शुद्रस्यपादः, तत्तत् स्त्रीणां तदर्द्धं कल्प्यम्।
इत्यभक्ष्य-भक्षण प्रायश्चित्तम्॥

—*—

## अथ जातिभ्रंश करादि प्रायश्चित्तम्।

—*—

तानि चाब्राह्मणस्य रुक्करणादीनि यातेषु तेतु कृतेषु सत्सु मत्या सान्तपनम् १(*)। अमत्या कृतेषु कायम्। सङ्करीकरणेषु मासं यावकम्, कृच्छ्राति कृच्छ्रं वा। अपात्रीकरणेषु तप्तकृच्छ्रमतिकृच्छ्रं वा। मलिनीकरणेषु महासान्तपनं तप्त कृच्छ्रं वा। ब्राह्मणस्यतुरुजं कृत्वा रासभादिप्रधाणञ्च, निन्दिताद्धनादानञ्च कृत्वा कृच्छ्राद्धं चरेत्। अत्र स्त्रीणामर्द्धं रजस्वलानान्तु तत्र तत्रोक्तमेव कार्य्यमित्युपपातकप्रायश्चित्तं समाप्तम्॥

—*—

## अथ प्रकीर्णक प्रायश्चित्तानि।

—*—

खरयुक्त मुष्ट्रयुक्तं यानमारुह्याध्वानं गत्वा भुक्त्वा च स्वस्त्रियं दिवागत्वा मत्या स्ववस्त्राऽपोऽवगाह्य प्राणायामेन शुद्ध्येत्।

१(*) अब्रह्मरुक्करणम्,— 'ब्राह्मणस्य रुजः कृत्यं घ्रातिरघ्रेयमद्ययोः' इत्यादि कृत्वा।

स्नानमात्रं, साक्षात् खराद्यारोहणे तु द्विगुणम् । गुरु' शुत् कृत्य २(†) हुं कृत्य छलवादेन विप्रं निर्जित्य वाससा बद्ध्वा शीघ्रं तं प्रसाद्योपवसेत् । अभ्यासे त्रिरात्रम् । विप्रं हन्तुं दण्डोद्यमने कृच्छ्रः । ताड़नेऽति कृच्छ्रः । रक्तस्रावणेऽति कृच्छ्राति कृच्छ्रः । साभ्यन्तररक्ते कृच्छ्रः । अस्थिभेदेऽति कृच्छ्रोऽङ्गकर्त्तने पराकः । पादेन प्रहारे तूपोष्य स्नात्वा प्रसादयेत् । पादेन स्पर्शने तु प्रसादनम् । देवसन्निधौ चाग्नौचव्रतं चरेत् । ततोविण्मूत्र-निष्ठीवने चैलेन सह जलसाप्लुत्य गां पृष्ट्वा शुद्ध्येत् । मत्या चेदुपोष्य सचैलं स्नायात् । अभ्यासे चानार्त्तस्य तप्तकृच्छ्रम् । श्रौतस्मार्त्तकर्म्मलोपे-तूपयासः, पश्चात् विहितस्थले प्रतिपदोक्तेष्ट्यादिः, सूर्य्योदये स्वस्थोमत्या सुप्त्वाऽह्नि तिष्ठन् सावित्रीं जपन्नुपवसन् , माघीयस्नानादिकर्म्मलोपेतूपवासोऽष्टशतजपो वा । जीर्णमसीमयवस्त्रधारणादि-स्नातकव्रतलोपे चोपवासोऽष्टशत जपोवा । तत्राप्यनातुरस्योपवासः । पञ्चमहायज्ञेष्वन्यतरलोपेष्वनातुरस्योपवासः । धनिनः कृच्छ्रार्द्धम् । आहिताग्नेः पर्व्वण्युपस्थानलोपे चैवम् । ऋतौ भार्य्यागमनलोपे चैवम् १(*) । प्रथमायां भार्य्यायां जीवन्त्यां स्थितायां द्वितीय-भार्य्यायां वैतानिकैर्होहे सुरापानसमवत् । स्वभार्य्यां क्रोधान्नच गच्छेति वदेच्चेद्वर्णानां कृच्छ्र-नव-षट्त्रिरात्राणि । अस्नात्वा भोजनादौ तूपवासोदिन-जाप्यञ्च । एकपङ्क्त्योपविष्टानां स्नेहादिना विषमदाने पाने च कायम् । उदकाहरणमार्गहन्तुः कन्यादि-विघ्नकरस्य च समेषु विषमपूजादिकर्त्तुश्च भैक्ष्यान्नेन चान्द्रं, सुरापस्य गन्धमाघ्राय सोमपोब्राह्मण स्त्रिःप्राणायामांस्त्रिरघमर्षण जपं वा कृत्वा घृतप्राशनं च कुर्यात् । असोमपो क्षुद्रतरस्यामन्त्रकाः प्राणायामाः । मद्यपगन्धे तत्तदर्द्धम् । साक्षात् सुराघ्राणे सुरापान-

---

१(*) 'गुरु' हुंकृत्य शुत्कृत्य विप्रान् निर्जित्य वादतः ।
श्मशाने जायते वृक्षः गृध्रकङ्क-निषेवितः' इति गीता टीकायां स्मृतः ।
" 'स वासा जल माप्लाव्य सद्य एव विशुध्यति' ।
'सचैलः स्नान माचरेत्' इत्यादि शुद्धौ स्मृतयः ।

२(†) 'ऋतौ भार्य्या मुपेयात्' इति श्रुतिः । पर्व्वेतर-ऋतु कालावच्छेदे भार्य्या संगमो वैधः ।
, क्रोधाद् द्वेषाद्वा ऋतु स्नातां भार्य्यां यो न गच्छेत् स च प्रायश्चित्तार्हः शास्त्रसम्मतः ।
यत्र सुरायाः पाने यादृक् प्रायश्चित्तन्तादृग् भवेदिति ।

यत् । अमत्या घ्राणेषु त्रिः प्राणायामाः । मद्यघ्राणे विन्मूत्रगन्ध-घ्राणे क्रव्यादपूतिगन्धस्य च घ्राणे त्रिः प्राणायामाः । दर्शने त्वेक प्राणायामः । स्पर्शने स्नानम् , घृतप्राशनञ्च । सुरापस्पर्शने स्नानं पञ्चगव्यञ्च । शवाघ्राणेषु त्रिः प्राणायामाः । असोमपस्य क्षुद्रतरस्यामन्त्रक-प्राणायामाः । शुष्कसुराभान्डस्था अपः पीत्वा पक्षं यावकम् । सुराभान्ड पीतासु शङ्खा पुतवारि पक्कं पयः पञ्च-रात्रम् । पर्यु षिता शङ्खा पूत पयः षड़हं शुष्कमद्यभान्डस्थाः सप्तरात्रं यावकम् । अन्यत् पूर्व्वोक्ताद्धं सुरामद्यरसोपलब्धौ तारतम्यं कल्प्यम् । वमने चान्द्रं कायञ्च, पुरीषाद्युपहता अपः पीत्वा सान्तपनं, द्व्यहं,रसोप लब्धौ पादकृच्छ्रः । मद्यविन्मूत्र संस्पृष्टे मुखमन्डले मृत्तिकागोमयैः प्रक्षाल्य पञ्चगव्यं पिवेत् । मदिरादन्तैः स्पृष्ट्वा प्रतिगृह्य च स्नात्वा कुशाम्बु त्र्यहं पिवेत् । संक्रान्त्यादिनिमित्तेऽस्नात्वा जग्ध्वा पीत्वा ऽष्टसहस्रं जपेत् । शूद्रादिस्पर्शने निमित्ते तु प्रतिगृह्य च स्नात्वा कुशाम्बु त्र्यहं पिवेत् । संक्रान्त्यादिनिमित्तेऽस्नात्या जग्ध्वा पीत्वाऽष्टसहस्रं जपेत् । शूद्रादि स्पर्शने निमित्ते तूपवायः । चन्डालादिस्पर्शने कायं त्रिरात्रम् । रजकादिस्पर्शे तदर्द्ध म् , तत्स्पृष्टस्पर्शे तूपवासस्त्रिरात्रं, नित्यस्नानमकृत्वा भुक्तोप-वासस्त्रिरात्रमनातुरस्य नैमित्तिके स्नाने त्वकृते सर्व्वत्राष्टसहस्रजपो-दश प्राणायामा वाऽधिकम् । अमेध्याद्यस्पृश्यस्पर्शनेऽप्यस्नात्वा भुक्तौ गृहस्थादेस्त्रिरात्रम् , मत्या षड्रात्रम् , व्रतिनः कायं चान्द्रं वा । चाण्डालादिस्पर्शने त्वस्नात्वा भुक्तौ चान्द्रम् । रजकाद्यन्त्यज-स्पर्शे त्वस्नात्वा भुक्तौ मत्या कायम् । श्व-काकादिस्पर्शे त्वस्नात्वा भुक्त्वा मत्या त्रिरात्रम् , उत्पन्ने स्नाने भुक्त्वा पीत्वा त्रिरात्रं सान्तपनं वा । अनाचम्य शतजपो भोजने तूपवासः । भोक्तुकाम-स्यापोशानात् पश्चाद्व्यवहारात् पूर्व्वं पुरीषनिर्गमने सचैलोवहिरा-प्लवः षट्प्राणायामाश्च । भुञ्जानस्य गुदनिस्रावे शौचं कृत्वा स्नायात् । तद्ग्रासाशने तूपवासः, सर्व्वान्नाशने त्रिरात्रम् । भुञ्जानस्य मस्तके विष्टादिपतनेऽन्नं भुक्त्वा नद्यां स्नात्वा त्रिःप्राणायामाः । भुञ्जानस्य भुञ्जान-सगोत्रस्पर्शनेऽन्नं संत्यज्योदकं संस्पृश्य शुद्धिः । भुञ्जानस्यासंगोत्रभुञ्जानस्पर्शे भोजनाद्विरस्यैव शुद्धिः । भुञ्जानयोः सवर्णयोः स्पर्शे (भोजनन्द्व न्द्वं) विरस्यैव शुचिः । भुञ्जानस्योच्छिष्ट-

क्षत्रियस्य स्पर्शे स्ना-नं जपञ्च कृत्वा दिनान्ते घृतप्राशनम् । भुञ्जानस्योच्छिष्ट-वैश्यस्पर्शे चैवम् । त्रिषण्नवस्नानाधिकम् । भूक्तोच्छिष्टस्पृष्टे सवर्णे स्नानं शतजपो वा । तत्रैवासवर्णे तूपवासः सहस्रजपो वा कार्य्यः । भुक्तोच्छिष्टस्य शूद्रादिस्पर्शे तूपोस्य पञ्चगव्यम् । रजकादिस्पर्शे त्रिरात्रम् । ऊर्द्धोच्छिष्टस्य चण्डालादिस्पर्शे कायम् । अधरोच्छिष्टे उच्छिष्टोद्विज उच्छिष्टं द्विजं स्पृष्ट्वा शूद्रः-श्वादीन् वा स्पृष्ट्वोपोष्य पञ्चगव्यं पिवेत् । उच्छिष्टद्विजश्चण्डालादिस्पृष्ट्वस्त्रिरात्रं कुर्य्यात् । रजकादिस्पर्शे तदर्द्धम् । अनुच्छिष्टस्पृष्टेयत्र स्नानं विहितं तत्रोच्छिष्टस्पृष्टौ त्रिरात्रं कायं वा, उच्छिष्टस्पृष्टस्पृष्टौ एकएव दुष्यति, तत्स्पृष्टिनो नदुष्यन्ति । येन केन चिदुच्छिष्टः परं स्पृष्ट्वा सद्यआप्लुत्य प्रायश्चित्तं चरेत् । विण्मूत्राद्युत्सर्गे भुक्त्वा पीत्वा त्रिरात्रमुपवासः त्रिरात्रं गोमूत्र यावकम् , अशक्तौ यावकम् । जलपाने तूपवासः पञ्चगव्यञ्च काञ्जिकादिनाऽशौचं कृत्वा भुक्त्वा पुनर्जलेन शुद्धिं कृत्वोपोष्य पञ्चगव्यं पिवेत् । नीलीवस्त्रादिधारणे केशनिर्मुण्डिते धारणे चोपवासः पञ्चगव्यं घृतं हिरण्योदकं वाऽधिकम् । नीलीमध्यगमने स्नात्वा त्रिः प्राणायामाः । नीलीं विक्रीण्वन् पालयन् नीलीवृत्त्या जीवंश्च पतति १(*) । विरक्तश्चेत् त्रिभिः कृच्छ्रैः शुध्येत् । नीलीवस्त्रधारिणः स्नान-दान-जप-होम-स्वाध्याय-देवतार्च्चनादि सर्व्वं कृतं निष्फलम् । नीलीक्षेत्रोत्-पन्नाद्द्रव्याद्भुक्तौ चान्द्रम् । नीलीक्षेत्रे नीलीमुत्पाद्य द्वादशाब्दात् परं भूमिः शुध्येत् । नीलीं धृत्वा मैथुने गर्भश्चण्डालोजायते । नीलीं धृत्वा मृतः षष्टिवर्षाणि विष्ठायां क्रिमिर्जायते । मृते भर्त्तरि पत्नी यावन्नीलीं धृत्वा, आस्ते तावकालं नरके तद्भर्त्ता वसेत् । नीलीं जग्ध्वा चान्द्रम् । नीलीं धृत्वा यद् ददाति तत्र दातुर्भोक्तुश्च सान्त-पनम् । नीलीदारुभेदे नक्तं, दर्शने चान्द्रं, कम्बले पट्टसूत्रे च नीली-दोषो नास्ति २(†) प्रत्यवायं पलाशाग्निञ्चास्य प्रदर्श्योपोष्य क्रमाद्धनं

---

१(*) अत्र 'न रक्तं सुल्बणं वासो न नीलञ्च प्रधारयेत्' इति स्मृतिः । धर्म्मकृत्ये-शुभ-धौत-सदशा-च्छिन्नवासः सोत्तरीयं क्षौम-पट्ट-कौषेयादिकं च प्रशस्तम् ।
परिधेय-विषये प्रागन्यदुक्तम् ।

२(†) इन्द्रवायम् इति भिन्नः पाठः । नीलीदारुः इत्यत्र नीलं इति पाठः स्मृतः । नीलीं वासं इत्यत्र नीलरूपं वास इति पाठः साधुः ।

दण्डञ्च दक्षिणां दद्यात् । पतित-म्लेच्छ-शूद्रा धार्म्मिकैः सम्भाषणे पुण्यकृत्ये पूत ब्राह्मणेन वा सह सम्भाषेत, विना यज्ञोपवीतेनोच्छिष्टत्वे त्व मत्या भक्षणेऽम्बु पाने च त्रिः प्राणायामाः, भोजने नक्तम्, विण्मूत्रे षट्प्राणायामाः, मत्या भक्षण-पान-विण्मूत्र-विसर्गे ष्वष्टशतजपो भोजने तूपवासः, भुक्त्वाऽनाचम्य उत्थाने सद्यः स्नानम्। दण्ड्यचौराद्युत् सर्गे तूपवासः । राज्ञः, अदण्ड्यदण्डने त्रिरात्रं राज्ञः पुरोहितस्य कृच्छ्रं, स्तेन पतिताद्य पाङ्क्तेय-पङ्क्ति-भोजने तूपवासः पञ्चगव्यञ्च । गलाशय खट्वाशयनासन पादुकारोहणे ( पनसपादुकारोहणे वा ) त्रिरात्रं यावकम् । फलप्रदवृक्षच्छेदेऽब्द व्रतम् । पलायमाने नृपस्यैवम् । विप्रयोरग्नि १(*) विप्रयोर्गोविप्रयोर्द्दम्पत्योश्च मध्ये गन्तुः सान्तपनम् । होमकाले गवां दोहे सान्नाय्याद्यङ्गे स्वाध्याये विवाहे च मध्यगमनेऽप्येवम । मत्याऽभ्यासे च चान्द्रम्, दुःस्वप्न दुरिष्ट दर्शनादौ घृतं हिरण्यञ्च दद्यात् । अतीर्थार्थिनः २(‡) सिन्धुसौवीर !सौराष्ट्रान्ध्रमगधप्रत्यन्ताङ्ग (दि) वङ्ग-कलिङ्गोड्र-देशगमने पुनः संस्कारः, तीर्थार्थे न दोषः । प्रत्यर्कादिमेहने आत्मशकृद्दर्शने च सूर्य्यं विप्रं गाञ्च पश्येत् । वह्नेरधः करणे पादप्रतापने कुशैः प्रमार्जने चोपवासोयावकञ्च वा । क्षत्रियवैश्ययोरभिवादने विप्रस्योपवासः । शूद्राभिवादने त्रिरात्रम् । शय्यापादुकोपानदारुढान्धकारस्थ श्राद्धकृद्धोमकृज्जपदेवपूजादिरतानां समित् पुष्प कुशाग्न्यम्बुगन्धाक्षताक्षपाणिनामभिवादने एते चान्यानभिवाद्य त्रिरात्रं कुर्य्युः । अन्यत्राभिमन्त्रितस्यान्यत्र भोजनेऽप्येवम् । इत्यादि देशकाल पात्र शक्त्यपेक्षं सर्व्वत्र प्रायश्चित्तं ज्ञेयम् । अनुपदिष्टेषु दण्डार्थं द्वेष हिंसा क्रियाभिः प्रायश्चित्तं कल्प्यम् । स्त्रीबालवृद्धातुराणान्तु यथायोग्यं देयमित्यादि ॥

इति प्रकीर्णक प्रायश्चित्तम् ॥

---

१(*) अग्नि विषप्रयोगी इति पाठः ।

२(†) तथाच स्मृतौ:—

'विप्राग्नी विप्रयोर्मध्ये दम्पत्यो र्गुरुशिष्ययोः । हलाग्रे नैव गन्तव्यं प्राणान्ते च कदा बुधः ।'

" यत्तूक्तं 'अङ्गवङ्ग कलिङ्गेषु सौराष्ट्र मगधेषु च । तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हति' तत् न सर्व्व सम्मतं, महाभारत-पुराण-मन्त्र-शास्त्रेषु एषां देशानां श्रेष्ठ कीर्त्तनादिति ।

## इदानीं प्रसङ्गात् सुवर्णादि द्रव्य शुद्धिरभिधीयते १(०) ।

—o—

2018. **आचाराध्याये याज्ञवल्क्यः २(*)—**

सौवर्ण राजतानाञ्चवार्द्धपात्रमहाश्मनाम् ।

शाकरज्जुमूलफलवासो विदलन-चर्म्मणाम् ।

पात्राणां चमसानाञ्च वारिणा शुद्धिरिष्यते ॥२७७६॥

अब्जं मुक्ता शङ्खशुक्त्यादि ऊर्द्धपात्रं यज्ञीयोलूखलादि विदलं वैणवादि,
चर्म्म कृष्णाजिनादि, पात्राणि प्रोक्षण्यादीनि । सस्नेहानामेषां
विशेषमाह,—चरु-स्रुक् स्रुव सस्नेहपात्राण्युष्णेन वारिणा शुध्यन्ति ।
तैजसाश्मानि मृदा भस्मादिना चैव, यज्ञीय विधिनाचरु-स्थाली स्वयं
स्फेण कुशेनच, शूर्पाजिनधान्यानां मुसलोलूखलानसां प्रोक्षणं संहतानां
चान्यवाससाम् । एतदुक्तं भवति यदा पूर्व्वोक्तानि चान्यवस्त्रादीनि
वीहाशीकृतानि ३(‡) तत्रमलादिना स्पृष्टान्यल्पानि बहून्यस्पृष्टानि
तदा स्पृष्टानां पूर्व्वोक्तैव शुद्धिरस्पृष्टानां प्रोक्षणम् । यदा पुनः
स्पृष्टानां वहुत्वमस्पृष्टानां त्वल्पत्वं तदा सर्व्वेषां क्षालनमेव । अद्भिस्तु
प्रोक्षणम् शौचं बहूनां धान्यवाससाम् । प्रक्षालनेन त्वल्पानामद्भिः
2019. शौचं विधीयत । इति मनुस्मृतेः । स्पृष्टानामस्पृष्टानाञ्च समत्वेऽपि
प्राक्षणमेव । इयत्स्पृष्टमियदस्पृष्टमित्यविवेके तु तत् क्षालनमेव ।
एक्तिकस्यापि दोषस्य परिहार्य्यत्वात् , अनेक द्रव्याणां तु
धान्यवासः प्रभृतीनां स्पृष्टानामस्पृष्टानाञ्च प्रोक्षणमेवेति निबन्धकाराः ।
एषां सलेपत्वे तु त्वक्षणम् । दारु-शृङ्गादि गवलैः फल-संभुवां
मार्ज्जनम् , यज्ञपात्राणां पाणिना यज्ञकर्म्मणि फलसम्भुवां विल्वाला-
बुनारिकेलादिफलसम्भूत पात्रानां गोवालैरुद्घर्षणाच्छुद्धिरित्यर्थः ॥

---

१(*) उक्तञ्च प्रायश्चित्तादिना—यथा पापेभ्यः शुद्धि तथा सुवर्णा दीनां वक्ष्यमाणोक्त्या परिशोधनम् । मृदग्नि-वारि-मन्त्र-भस्म-प्रभृतिभिरिति ।

२(†) द्रव्य शुद्धि प्रकरण वर्णने याज्ञवल्क्य-स्मृतौ, १८२-८५ श्लोकाः । 'चम विवासको क्षतानि' चेति भिन्नः पाठः ।

३(‡) तथा पराशर स्मृतौ, ११२ श्लोकाश्च ।

तथा—

2020. सोषैरुदकगोमूत्रैः शुध्यत्याविक-कौशिकम् ।
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा १(*) ॥२७७७॥

सोषैरुषरमृत् सहितैः, कौशिकं कोशप्रभवम्, ठसरीपट्टादि वस्त्रम् । अंशुपट्टं वल्कलतन्तु कृतम्, सश्रीफलैः विल्वफलसहितैः कुतपः पार्व्वतीयः कम्बलः । एतच्चोच्छिष्टस्नेहादियोगविषयम् । अल्पोपघाते तु प्रोक्षणमेव क्षालनासहत्वात् सर्व्वत्र द्रव्याविनाशेनैव शुद्धेरिष्टत्वात् ।

उर्ण-कौशेय-कुतप-पट्ट-क्षौम-दुकूलजाः २(†) ।
अल्पशौचा भवन्त्यन्ते शोषण-प्रोक्षणादिभिः ॥२७७८॥

तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः ।
धान्यकल्कैस्तु फलजै रसैःक्षारानुगैरपि ॥२७७९॥

2021. इति देवलोक्तेश्च । तथा—

तूलिकामुपधानञ्च पुष्परक्ताम्बरं तथा ।
शोषयित्वाऽऽतपे किञ्चित्करैः सगौरसर्षपैः ।
क्षौमं पाकान्महीमयं कारुहस्तः पुनः शुचिः ॥२७८०॥

पण्यभेक्ष…गौरसर्षपसहितैर्जलैः क्षौमवस्त्रं शुद्ध्येत् ।
महीमयं घटादिकं तु पुनः पाकेन शुद्ध्येत् ।
एतच्चोच्छिष्टस्नेहद्रव्यविषयम् ।
चण्डालाद्युपघाते तु त्यागस्तेषाम् ।

चण्डालाद्यैस्तु संस्पृष्टं धान्यं वस्त्रमथाऽपि वा ।
प्रक्षालनेन शुद्ध्येत परित्यागान्महीमयम् ॥२७८१॥

---

१(*) 'वर्णानान्तु' इत्यन्यः पाठः । 'पुष्पाणाञ्च फलादीनां प्रोक्षणाच्छुद्धि रिष्यते' इति स्मृतौ । प्रोक्षणात्, पूतजलेनेति ।

२(†) कौशकीटकार जातसूत्र भवं कौशेयमिति । चीनां शुकम् । क्षुमा ष्पतसी-ततसूत्रजातं क्षौमवस्त्रम् । शणसूत्रजातं शाणकं वस्त्रम् । वासस्तु कार्पास-सम्भूतं वस्त्रम् । कौशेयं यत्नात् प्रतीच्य वर्ज्जेऽपि समुत्पन्नम् ।

" ऊर्णाविषस्य लोम' न' ; तेषलोम भिर्जात तौर्ं कम्बलादि ।

2022. इति पराशरोक्तेः ।

कारवः शिल्पिनोवैद्या दासी-दासास्तथैव च ।
राजानोराजभृत्याश्च सद्यः शौचाः प्रकीर्त्तिताः ॥२७८२॥

2023. इति स्मृत्यन्तरोक्तेः । पण्यं विक्रेय मनेकजनकरस्पृष्टमपि शुचि । भैक्ष्यं ब्रह्मचार्य्यादिहस्तगतं साचान्तस्त्रीप्रदानादिनाच शुचि, रथ्या-क्रमणादिनाऽपि न दुष्यति ।

योषिन्मुख-रतौ—

भूशुद्धिर्मार्ज्जनाद्दाहात्कालाद्गोक्रमणात्तथा ।
सेकादुल्लेखनाल्लेपाद्गृहं मार्ज्जनलेपनात् ॥२७८३॥

2024. देवलोऽपि—

यत्र प्रसूयते नारी म्रियते दह्यतेऽपि वा ।
चाण्डालाद्युषितं यत्र यत्र विष्ठादि सङ्गतिः ॥२७८४॥
एवं कश्मलभूमिष्ठा भूरमेध्या प्रकीर्त्तिता ।
श्व-शुकर-खरोष्ट्रादि संसृष्टा दुष्टतां व्रजेत् ॥२७८५॥
अङ्गार तुषकेशास्थि भस्माद्यैर्मलिना भवेत् ॥२७८६॥
इत्यमेध्या दुष्टा, मलिनेति शोध्याभूमेस्त्रैविध्यमभिधाय शुद्धिविभागं दर्शयति—
पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति ।
दुष्टान्विता त्रिधा वापि शुध्यते मलिनैकधाः ॥२७८७॥
दहन १(*) काल-गोक्रमण-सेकोल्लेखनरूपेणपञ्चधात्वं अन्यतर परित्यागेने तरत्र, गोघ्रातेऽन्ने, तथा केश-मक्षिकाकीट-दूषिते 'सलिलं भस्ममृद्वापि इत्यादि । इदन्तु पाकोत्तरकाल संयोगपरम् । कीटा-दिभिः सह पाके तु नित्यमभोज्यं केश कीटाद्यवपन्नमिति गौतमेन

2025. तत्यागाभिधानात् । मार्ज्जारोपघातेऽपि न दोषः ।
तथाहि,—मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः ।

१(*) अत्र मह्नीमयं—घट-शराव-मल्लिकादि । 'काल-गो-क्रमण' इत्यन्यः पाठः ।

2026. इति मनूक्तेः ।

2027. त्रपु सीसक-ताम्राणां क्षाराम्लोदकवारिभिः ।
भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावोद्रवस्य तु १(*) ॥२७८८॥
द्रवस्य द्रव्यस्य घृतादेः प्रस्थ प्रमाणाधिकस्य श्व-काकाद्युपहतस्य च प्लावः सजातीयेन द्रव्येण भाण्डस्याद्भिः पूरणं यावन्निः सरणं ततोऽल्पस्य त्यागः। अत्र बह्वल्पत्वं देशकालाद्यपेक्षया वेदितव्यम्।
देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् २(†) ।
उपपत्तिमवस्थाञ्च ज्ञात्वा शौचं प्रकल्पयेत् ॥२७८९॥

2028. इति बौधायनोक्तेः ।

कीटाद्युपहतस्य तूत्पवनमेव, द्रव्याणाञ्चैव सर्व्वेषां शुद्धिरुत्प्लवना

2029. स्मृतेति मनूक्तेः। उत्प्लवनं नाम वस्त्रान्तरिते पात्रे प्रक्षेपः।
शूद्रभाण्डस्थ मधूदकादेस्तु पात्रान्तरेण नयनाच्छुद्धिः।

2030. मधूदके गोपयस्तद्विकाराश्च पात्रान्तरानयनाच्छुद्धा इति बौधायनोक्तेः। वर्णाद्यनुसारेण हस्तप्रक्षालनरीत्यामधुघृतादेस्तु पात्रान्तरा नयनानन्तरं पुनः पाकश्च कार्य्यः। अभ्यवहार्य्याणां घृतेनाभि

2831. घारितानां पुनः पचनमेव स्नेहानाम स्नेहा नामिति शङ्खोक्तेः।
इदानीं पूर्व्वोक्त सौवर्णराजतानाममेध्योपहतत्वे शुद्धिरुच्यते।
अमेध्यास्तु मृत्तोयैः शुद्धिर्नोदन धावनकर्षणात्।
अमेध्यं शरीरजं मलं तेनाक्तस्य सुवर्णादेरित्यर्थः।
तदमेध्यं द्वादशविधम्—
वसा शुक्र मसृङ्मज्जा मूत्रं विट् कर्णविण् नखाः।

2032. श्लेष्मना दूषिका स्वेदा द्वादशैते नृणां मला इति मनूक्तेः।

दूषिका नेत्रमलं महोमयन्तु त्याज्यमेव—
मद्यैर्मूत्रपुरीषैश्च श्लेष्न पूपाश्रु शोणितैः।
संसृष्टं नैव शुद्ध्येत पुनः पाकान्महीमयम् ॥२७९०॥

---

१(*) उदकेनतु, 'प्लावोदकस्यतु' इत्यन्यः पाठः। भस्मास्थि इत्यन्यः पाठः।

,, देश-काल-पात्र-शक्तीनां, तदनुसारेण कृत्यं स्यात्। ज्ञात्वा धर्म्मं समाचरेदिति भिन्नः पाठः।

२(†) अथैत् पवनं शुद्धि विधानम्, पात्रान्तर करणं वा।

2033. इति विशेषोक्तेः ।

अमेध्यत्वञ्चैषां देहाच्चैव मलाश्च्युता इति स्मृते देहच्युतानामेव नख-स्थानावस्थितानाम् ।

मानुषास्थि-वसां विष्ठां मार्त्तवं मूत्ररेतसी ।
मज्जानं शोणितं स्पृष्ट्वा स्पृष्ट्वा स्नानमाचरेत् ॥२७६१॥
तान्येव स्वानि संस्पृश्य प्रक्षाल्याचम्य शुध्यति ।
नाभेरूर्द्ध्वं करौ मुक्त्वा १(*) यदङ्गमुपहन्यते ॥२७६२॥
तत्र स्नान मधस्तात्तु प्रक्षाल्याचम्य शुध्यति ।
वाक्‌शस्तमम्बुनिर्णिक्तमज्ञातञ्च सदाशुचि ॥२७६३॥

इति च स्मृतेः ।

कृतेपि यथोक्ते शौचे मनसोऽपरितोषाद्यत्रशुद्धिः, सदेहस्तद्वाक् शस्तं शुचि शुद्धमेतदस्त्विति विप्रवचनेन शुद्धं भवतीत्यर्थः। अम्बु-निर्णिक्तं यत्र प्रतिपदोक्तशुद्धिर्नास्ति तस्यस्वच्छ प्रक्षालनेन शुद्धिः। प्रक्षालनासहस्यप्रोक्षणेन, अज्ञातञ्च सदाशुचि, यत्काकाद्युपहतं सत्कर्मण्युपयुक्तं २(†) उपहतमिति कदाचिन्नज्ञायते तत् सदा शुचि,

तथा च,—

शुचि गोतृप्ति कृत्तोयं प्रकृतिस्थं महीगतं ।
तथा मांसं श्वचण्डालक्रव्यादादि-निपातितम् ॥२७६४॥
तथा अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके यथा ३(‡) ।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ॥२७६५॥
रविरश्मि-तरुच्छाया गौरम्बोवसुधाऽनिलः ।
विप्रुषोमक्षिकाः स्पर्शे वत्सः प्रस्रवणे शुचिः ॥२७६६॥

---

१(*) कर्म्मण्यनुपयुक्त इत्यन्यः पाठः ।

२(†) अत्र दत्वा, स्थाप्य, इति च पाठान्तरम्। 'करौकृत्वा' इति भिन्नः पाठः ।

३(‡) 'मांसम्' इति भिन्नः पाठः । तथा अन्त्यजैः खनित कूप-तटाकादि वारिणा धर्म्मं कार्य्यं न समाचरेन्न वासो इत्यादि धावयेदिति स्मृत्यन्तरे ।
अत्र रथच्छाया, नभच्छाया इत्यपरः पाठः ।

वभ्मरादयोवश पदार्थाश्च चण्डालादि स्पृष्टा अपि स्पर्शविषये शुद्धाः स्युः । रजोऽजाजादिरजोव्यतिरेकेण श्वकाकोष्ट्रखरोलूक-सूक-सूकरग्रामपक्षिणां अजागोरेण संस्पर्शादायुर्लक्ष्मीश्च क्षीयत इति द्वीप श्रुतेः १(*) ।

वत्सस्तु प्रस्रवणेऽधोभागे गत दुग्धाकर्षणे शुचिः ।

तथा,—

अजाश्वयोर्म्मुखं मेध्यं न गोन नरजो मलाः ।
पन्थानश्च विशुध्यन्ति सोमसूर्य्यांशु मारुतैः ॥२७१७॥
अजाश्वयोर्म्मूखं पूतं न गोर्म्मूखं पूतम् ।
नरजाः प्राणिशरीराज्जाताः, रुधिरवसादयोमला न मेध्याः ।

अन्यात्स्पृष्टम् , तथा च—

मुखजा विप्रुषो मेध्यास्तथाचमनविन्दवः ।
श्मश्रुचास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥२७१८॥
मुखे जाताः श्लेष्मविप्रुषोमेध्या नचेदङ्गे निपतन्ति, तथाचमनविन्दवः पादस्पर्शिनोऽपि मेध्याः २(†), श्मश्रुचास्यप्रविष्टमुच्छिष्टं न, तथा दन्तसक्तं चान्नादिकं स्वयमेव च्युतं त्यक्त्वा शुद्धिर्भवति । अच्युतन्तु
2034. दन्तसमं, दन्तश्लिष्टन्तु दन्तवदन्यत्र जिह्वाभिमर्षणादिति गौतमोक्तेः ।

तच्चर्व्वणेतु—

चर्व्वणे त्वाचमैन्नित्यं मुक्त्वा ताम्बूल चर्व्वणम् ।
ओष्ठौ विलोमकौ स्पृष्ट्वा वासोविपरिधायच ॥२७१९॥

---

१(*) 'अजरजः स्त्रियो रजः गृहधर्म्मार्जनीरजः ।
'पचि-शूर्प रजश्चैव लक्ष्मीं हन्ति सदा बुधा' इति स्मृत्यन्तरे ।

२(†) 'पादौ शुचौ ब्राह्मणानां अजाश्वानां मुखं शुचि गवां पृष्टानि मेध्यानि सर्व्वगात्रश्च योषिताम्' इति स्मृतिः ।

(‡) 'मक्षिका सन्तता धारा मार्जारी विप्रुषः ।
स्त्रो मुखं वालमुखञ्च न दुष्ट मनुरब्रवीत्' इति स्मृतिश्च ।

इति स्मृतेराचामेत् । ताम्बूलं फलाद्युपलक्षणम्—

ताम्बूले च फले चैव भुक्तस्नेहावशिष्टके ।
दन्तलग्नस्य संस्पर्शे तूच्छिष्टो भवति द्विजः ॥२८००॥

2035. इति शातातप स्मृतेः । तथा—

स्नात्वा पीत्वा क्षुते सुप्ते भुक्ते रथ्यापसर्पणे ।
आचान्तः पुनराचामेद्वासोऽपि परिधायच ॥२८०१॥

एषु जातेषु द्विराचामेदित्यर्थः । चकाराद्रोदना—दिष्वपि ।

क्षुत्वा सुप्त्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतं वचः ।
पीत्वाऽपोऽध्येष्यमाणश्च रुदित्वाचम्य शुध्यति ॥२८०२॥

2036. इति मनूक्तः ।

भोजने त्वादावपि द्विराचामेत् ।

2037. भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत् इत्यापस्तम्बोक्तेः ।

स्नानपानयोरादौ सकृत् ।

अध्ययनारम्भे द्विः, शेषेष्वन्ते एव यथोक्तं द्विराचमनम् ।

तथा—

रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च ॥२८०३॥

पक्वेष्टकचितानि धवलगृहादीनि च १(*) चाण्डालादिभिः स्पृष्टान्यापि मारुतेनैव शुध्यन्ति । इदन्तु प्रोक्षणं संहतानामित्युक्तं प्रोक्षण-निषेधार्थम् । तृणकाष्ठपर्णमयानान्तु प्रोक्षणमेव शुद्धिकरम् ॥

इति श्रीमन्नागदेव भट्टात्मजानन्तभट्टविरचिते विधानपारिजाते द्रव्यशुद्धिविधानम् ॥

---

१(*) पक्वेष्टक चितानि,—इष्टकनिर्म्मिताः गृहादयः । वर्षाकालेऽप्येतानि सूर्य्यालोक समीरणा-दिभिः शुध्यन्ति । एवं मृन्मया वा दीनामपि । तथा तडाग-सरोवर-वेश्मादीनामपि वारिधि-शुद्धिः ।

## अथ प्रायश्चित्तोपक्रमः ।

महाप्रायश्चित्तं न कुर्य्यात् तस्य पतितस्य सपिण्डा बान्धवाश्च रिक्तायां तिथौ सायाह्ने ग्रामाद्बहिरपां पूर्णं कुम्भं १(*) प्रतिष्ठाप्य प्राचीनावीतिनोभूय मुक्तशिखा दक्षिणाभिमुखी गुरुसन्निधावस्माकं त्वं मृत इति विनयेयुः । तंवितिन्त्य ततोनिरीक्षमाणाः अप उपस्पृश्य ग्रामं प्रविविषेयुः । ततस्तं सर्व्वकर्म्मवहिष्कृतं सम्भाषणादिषु वर्जयेत् । यदि प्रमादात् सम्भाषणादि कृतंस अमत्या तदा सावित्रीं जपन्नेकरात्रं तिष्ठेत् । मत्यात्रिरात्रम् , अभ्यासे चान्द्रम् । अथ यदि कृतप्रायश्चित्तः समेति तदा तत्सपिण्डाद्यास्तेन सह पुण्येजले स्नात्वाऽपां पूर्णं कुम्भं पुण्ये देशे काले च पुण्यदिङ्मुखास्त्वमस्माकमिति निनयेयुः । ततः स गोभ्योयवसं दत्वा भक्षिते यवसे शुद्धः नचेत् पुनः प्रायश्चित्तं२(†) चरेत् । तदा स व्यवहार्य्यः स्यात् । स्त्रीणां पतितानां चैवं त्यागः, परिग्रहश्च । किन्तु प्रधानगृहसमोपे कुटीं कृत्वा प्राणधारणार्थमन्नं पानं वासश्च दत्वा भोगरहितां रक्षेत् । स्त्रीणामपि महापापातिपापानु-पापान्यभ्यस्तानि चोपपापानि पतनानांनिमित्तानि स्युः । विशेषतो-हीनवर्णगमनं गर्भपातनं, अब्राह्मण्या अपि भर्त्तृहिंसनं, अब्राह्मण्या अपि तानि च पतन हेतूनि । शिष्यगागुरुगास्वैरभोसंगाणामप्येवं प्रायश्चित्तम । क्षत्रियादेः प्रायश्चित्तं ब्राह्मण मन्तरे कृत्वा ब्रुयात् । स्त्रीशूद्राणान्तु जपहोमवर्जं वाच्यं, अमन्त्रकप्राणायामाः सर्वत्र वाच्या एव । यागाद्यनुष्ठानशोलानामेव जपादिकं, इतरेषां तप आद्विनामधारक-मूर्खनिर्द्धनानां तप एव । अनधीतानाञ्च तथा कर्त्तृव्यतिरिक्तै-र्विज्ञातदोषः सद्विद्वानपि शीघ्रं पर्षदनुमतं प्रायश्चित्तं कुर्य्यात् । तत्र वेदधर्म्मज्ञा विप्राः सहस्राः सन्तो यावन्तो यथायोग्यं पर्षदनुमतं यतिवर्जं पर्षद्दक्षिणाचक्षमाणा गवादिकं यत् किञ्चिद्दत्तं यथा योग्यं कृच्छ्रसंख्या वा पर्षत्तुष्टिर्व्वा । तत्र सकृदाप्लुत्य सचैल-वाग्यतः स्नात्वार्द्रवासाः पर्षद्दक्षिणां दत्वा पापश्चाख्याय प्रायश्चित्तमादाय पुनः स्नात्वा व्रतश्चरेत् पर्षच्च ब्रुवात् नच तत् समाभवेत् । अज्ञात्वा-

---

१(*) [illegible], [illegible], [illegible] च । अत पर्षद् धर्म-परिषत् । अननो एषा परिषद् दशावरा [illegible] । [illegible] ।

२(†) [illegible] ।

यदि [illegible] पुनः प्रायश्चित्तं स्यात् । [illegible]

चेद्वदेत पापं सर्व्वमापतेत् १(*)। पर्षन्मतं विना कुर्व्वद्विगुणं कुर्य्यात्। तथा केशरक्षार्थमपि द्विगुणं चरेत्। विद्वद्विप्रनृपस्त्रीणां वपनं नास्ति।

इति प्रायश्चित्तोपक्रमप्रयोगः ॥

—*—

## अथ रहस्य प्रायश्चित्तम्।

—*—

तत्र कर्त्तृव्यतिरिक्तैरविज्ञातदोषोरहस्य प्रायश्चित्तं चेत्, अविद्वांस्तु मुख्यान्तरेण रहस्यप्रायश्चित्तं ज्ञात्वा रहश्चरेत् २(†)।

**स्त्री शूद्राश्च जपहोमवर्ज चरेयुः, तथाहि,—**

स्त्रियं शूद्रं समासाद्य यदा धर्म्मपुरः सरम्।
प्रायश्चितं प्रदातव्यं जपहोमविवर्जितम् ॥२८०४॥

2038. **इत्यङ्गिरःस्मृतेः।**

तत्राहारविशेषानुक्तौ पयःप्रभृतयः, कालसंख्याविशेषानुक्तौ वत्सरादयो-
2039. मासान्ताः। देशविशेषानुक्तौ-शिलोच्चयाद्या गौतमोक्ता ग्राह्याः। अमत्या ब्राह्मणवधेऽनशनन् स्त्रिरात्रमन्तर्जले निमग्नः ऋतञ्च सत्यञ्चेत्यघमर्षण सूक्तमावृत्त्यन्ते पयस्विनीं गां ३(‡) दत्वा शुध्येत्। अत्र सर्व्वत्र जपादौ ऋषिदैवतच्छन्दोविनियोगाः ज्ञेयाः। दानाशक्तौ सव्याहृतिकाः प्राणायामाः व्रतीभिःदिनं मासं षोड़शकृत्वा वर्त्तनीयाः।

---

१(*) 'अज्ञात्वा धर्म्मशास्त्राणि प्रायश्चित्तं वदेद्द यदि। प्रायश्चित्ती भवेत् पूतः' इत्यादि स्मृतौ। 'विद्वद् विप्र नृप स्त्रीणां नेष्यते केश वापनम्' इति स्मृतौ च।

२(†) रहस्ये अन्येषामज्ञाते कर्त्तुर्ज्ञाते येन येन यद् तत् पापं कृतं स सज्ञात-पापा, तत्तत् विहितं प्रायश्चित्तं कुर्य्यात्। अन्यथा व्रतेऽकृते तीर्थे, दाने, योगेच, पापाद् दुःखम्, रोगः अकीर्त्तिः, नरकश्च परे काले भवेदेव।

३(‡) मतान्तरे—'आपः पुनन्तु पृथिवीं पृथिवीपूता' इत्यघमर्षण सूक्तम्। अथ आवृत्त्यान्ते इत्यन्यः पाठः। 'प्राजापत्य व्रताशक्तौ धेनुं दद्यात् पयस्विनीम्। धेनोरभावे दातव्यन्तुल्यं मूल्यं न संशयः' इति स्मृतिः। उदनासं—अथ 'उपवासम्' इति भिन्नः पाठः।

अभ्यासेतु त्रिंशद्रात्रं व्रतस्थप्राणायामैरन्तर्जलेऽघमर्षणं जपेत् , महापापां-स्तुद्धेत । मत्याच ग्रामात् प्राग्वोदग्वा निर्गम्यतस्नातः शुचिः शुचिवासा जलान्ते स्थण्डिलमुपलिप्यात्र गोसकृत् छिन्नवस्त्रो गोसकृत् पूतेन वा पाणिनाऽर्काभिमुखोऽघमर्षणं प्रातः शतं मध्याह्ने शतमपराह्ने शत-परिमितं वोदितनक्षत्रदर्शनो जपेत् , प्रसृतियावकं पिवेत् , सदा रात्रादुप-वासे द्वादशरात्रान्महापापसमैरेकविंशतिरात्रान्महापापैश्च शुध्येत् । अमत्या श्रोत्रियाचार्य्यवनस्थविषयश्चैतत् ॥

## मत्या श्रोत्रियादिवधेतु ,—

अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् ।
मुच्यते पातकैः सर्व्वैः पराकैः शोधितैस्त्रिभिः ॥२८०५॥

2040. इति मनूक्तं अल्पमहापापो, मत्या चैवम् । निर्गुण ब्राह्मणवधेतु प्राग्वोदग्वा ग्रामान्निर्गत्य प्रभूतवनाग्निं प्रज्वाल्याघर्षणेनाष्टसहस्राहुती-र्जुहुयात्म । अनुग्राहककर्त्तुश्चैवम् । गुणवतोहन्तुर्निगुणब्राह्मणवधेतु त्रिरात्रोपोषण-त्रिषवणस्नानत्रिरघमर्षण जपाइत्यादि स्मृत्युक्तं ज्ञेयम् । इदमेव प्रायश्चित्तं यागस्थ-स्त्री-क्षत्र-वैश्येष्वात्रेय्यामाहिताग्नि पत्न्यां गर्भिण्यामविज्ञाते गर्भे च व्यापादिते चतुर्थांशन्यूनं कार्य्यम् । यद्वा अहोरात्रोपोषितोरात्रावुदवासं कृत्वा तीर्थप्रातर्लोमभ्यः स्वाहेत्याद्यष्टमन्त्रैः प्रत्येकं पञ्च-पञ्चाहुतय इत्येवं चत्वारिंशद्घृता-हुतीर्जुहुयात् ॥ इतिरहस्यं ब्रह्महत्याप्रायश्चित्तम् ॥ गौड़ीमाध्व्योः सकृत्पानेऽनन्तरोक्तं कार्य्यम् । पानावृत्तौ त्रिरात्रोपो-षितः कूष्माण्डैश्चत्वारिंशद्घृताहुतीर्जुहुयात् । त्रिरात्रोपवासाशक्तौ तु मासं प्रत्यहं षोड़शकृत्वोऽ'पोनः शोशुचदघं'प्रतिस्तोमभिरुग्रसं-वासिष्ठं 'माहित्रीणामवोऽस्तु' एतोन्विन्द्रंस्तवामेत्येतेषामन्यतमं जपेत् । [illegible] सकृत्पानेऽपीदम् , मत्या चेन्महापापेऽब्दे देवकृतस्यैनस इत्या-[illegible] इदुग्रनम आविवास इत्यस्याशक्तोजेन वा शुध्येत् । महापापाभ्यासे तु समाहिताग्ना अनुगच्छन्नब्दं भिक्षाशी [illegible] महापापमनुष्ठेय [illegible] । इति सुरापानस्य ॥ ब्राह्मण [illegible] त्रिरात्रोपोषितः

(१) [illegible]

शुद्ध्येत् । यद्वा भस्मच्छन्नो-[illegible]-
जापी १(*) ब्रह्मवधात् सुरापानात् स्वर्णस्तेयाद्गुरुतल्पगमनाच्च शुद्ध्येत् । अत्यन्तनिर्गुण ब्राह्मण स्वर्णहारीत्वस्य वामस्य पलितस्य होतुरिति सूक्तं सकृज्जपेत् । यद्वा २(†) 'यज्जाग्र तोदूरमुदैति' इति षड्चं शिवसङ्कल्पं जपेत् । सुवर्णान्न्यूनपरिमाणस्तेये चैवम् । अनुग्राहकप्रयोजकादीनामप्येवं ज्ञेयम् ॥ इति स्वर्णस्तेयस्य ॥ अमत्या-गुरुपत्नीगस्त्रिरात्रोपोषितः, षोड़शर्च्चपुरुषसूक्तेन चत्वारिंशत्संख्यया जपं होमञ्चावर्त्यान्ते पयस्विनीं गां दत्वा शुद्ध्येत् । सुरापाने स्वर्णस्तेये चैतत् । यद्वा गुरुतल्पगो हविष्यान्तमजरं स्वर्विदीति सूक्तं नतमंहो न दूरितमिति सूक्तमिरा इति मे मन इति सूक्तं, पुरुषसूक्तं वा प्रत्यहं षोड़शकृत्वो जप्त्वा मासेन शुद्ध्येत् । मत्याचेद्देवकस्यैनस इत्याद्यैरष्टभिर्म्मन्त्रैः शाकलहोमः कार्यः ३(‡) । महापातकावृत्तौ तु व्याहृतिभिस्तिलैर्लक्षहोमः । व्यभिचारिणीगमने हविष्यान्तं वा पावमानी र्वा कुण्डाण्डीर्वा वालखिल्यानि, प्रैषान् वा वृषाकपिं वा हेतून् रुद्रान्वा सकृज्जप्त्वा शुद्ध्येत् । गुरुतल्पाति-दिष्टेष्वतिपातकेषु पादोनं योज्यम् , गुरुतल्पसमेष्वनुपातकेष्वर्द्धोनम् , सर्व्वत्रैव महापातकिसंसर्गे तु यस्य येन संसर्गस्तस्यैव प्रायश्चित्तं स कुर्यात् ॥

इति श्रीमदनन्तभट्टविरचिते विधान-पारिजाते
रहस्यमहापातकि-प्रायश्चित्तम् ॥

—※—

## उपपातकानां रहस्यानां प्राणायाम-शतम् ।

—※—

यद्वा महापातके प्राणायाम-चतुःशतम् । अतिपातके त्रिशतम् । अनुपातके द्विशतम् , उपपातके शतम् , सर्व्वत्राभ्यासे द्विगुणम् ,

---

१(*) [illegible]
२(†) [illegible]
३(‡) शाकल संहितोक्त होमः कार्यः ।
[illegible]

मत्याभ्यासे चातुर्गुण्यम् । प्रकीर्णकेऽनुपातकचतुर्थांशप्राणायामाः । यद्वा प्रकाशितपापे यत्र चान्द्रायणत्रयं तत्र सहस्रं प्राणायामाः । तत्र सहस्रं पादोनं त्रि सप्तकृच्छ्रेऽर्द्धं, अतिकृच्छ्रे पादसंख्याः प्राणायामाः, मिश्रकार्थे इत्यादि सर्वत्र योज्यम् । स्त्रीशूद्राणाममन्त्रकप्राणायामाः । यद्वा गायत्री लक्षजपो महापापे पादोनमति पापे अर्द्धमनुपापे पादमुपपापे तच्चतुर्थांशं, प्रकीर्णकेषु चरेत् । यद्वा गायत्र्या व्याहृतिभि र्वा तिल लक्षहोमो महापापे पादोनमिति ।

2041. पापाति-पापादिषु पादोपापादिकं योज्यमित्यादिस्मृत्यर्थसारोक्तरीत्या

रहस्यप्रायश्चित्तं समाप्तम् ॥

—*—

# अथ कृच्छ्राणां लक्षणम् ।

—*—

तत्र व्रताङ्गभूता धर्म्मा यमनियमाश्च ब्रह्मचर्य्यादयः क्षान्तिर्दानं सत्यमकौटिल्यमहिंसास्तेयं माधुर्य्यं दमश्चेति दश यमाः, १(*) स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहगुरुशुश्रूषाशौचाक्रोधाप्रमादता इति दश नियमाः । सान्तपने कृच्छ्रे पूर्व्वेद्युरनाहारो गोमूत्रगोमयक्षारदधि सर्पिः कुशोदकान्येकी कृत्य पीत्वा परेद्युरुपवसेत् । एष द्विरात्रः सान्तपनकृच्छ्रः ।

2042. गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकरात्रोप वासश्च कृच्छ्रः सान्तपनं स्मृतम् ॥२८०६॥

इति तल्लक्षणात् ।

एवमपि तल्लक्षण माकरग्रन्थे द्रष्टव्यं । ग्रन्थ गौरवभीयानेहोच्यते । पूर्व्वेद्युरुपोष्यापरेद्युरिमानि पञ्चगव्यानि समन्त्रं संयोज्य हुत्वा

---

१(*) अत्र यमाः दश इति स्मृतौ । पातञ्जलि योगदर्शने तु अहिंसादयः, तथैव चित्त शुद्धी सन्ति । ५ गीतायाञ्चेति । पातञ्ज लोका नियमाश्चेति । तेच शौच सन्तोषादयः तत् सूत्रोक्ताः । एते स्मृतावपि सन्ति । 'पञ्चगव्य मिदं' प्रोक्तं महापातक नाशनम्' इति च स्मृतौ ।

समन्त्रकं प्राशनं यदा तदा ब्राह्मकूर्च्चसंज्ञः कृच्छ्रः स्यात् १(*)। अथैतत् प्रयोगः। गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकञ्चेति पञ्चगव्य संज्ञम्। तत्र ताम्रवर्णायागो मूत्रं, श्वेतवर्णाया गोमयं, पीतवर्णायाः क्षीरं, नीलवर्णाया दधि, कृष्णवर्णायाः सर्पिर्ग्राह्यम्। यद्वा सर्व्वं कापिलमेव। अलाभे सर्व्ववर्णानां सर्व्वं ग्राह्यम्। गोमूत्रेऽष्टमाषाः प्रमाणं, गोमये षोड़शमाषाः, क्षीरे द्वादशमाषाः, दध्नि दशमाषाः, घृतेऽष्टौमाषाः, कुशोदके तदर्द्धम् २(†)। गायत्र्या गोमुत्रम्, गन्धद्वारेति गोमयम्, आप्यायस्वेति क्षीरम्, दधिक्राव्ण इति दधि, तेजोऽसि शुक्र मसीत्याज्यम्, देवस्यत्वेति कुशोदकम्, एतत् पञ्चकं पद्मादिपात्रे समन्त्रं निक्षिप्य यज्ञीय काष्टेन निर्म्मथ्य प्रणवेनाभिमन्त्र्य सप्त पत्रैरच्छिन्नाग्रैः शुक्लवर्णैः इरावती १, इदं विष्णुः २, मानस्तोके ३, शंवा ३(‡), तौ ४, एताभि रग्नौ हुत्वा शेषं प्रणवेनालोड्य प्रणवेनाभिमन्त्र्य तेनैवोद्धृत्य तेनैव पिबेत्। मध्यमेन पलाशपत्रेण पद्मपत्रेण स्वर्णपात्रेण वा ब्रह्मतीर्थेन वा पिबेत्॥ एतद् ब्रह्मकूर्च्चसंज्ञकं होमसहितं ज्ञेयम्॥ स्त्री शूद्रौ तु विप्रैः कारयित्वा तूष्णीं पिबेताम्। ब्रह्म कूर्च्चाभ्यासे सति सान्तपनं स्यात्। यद्वा गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकं, एकैकं पूर्व्ववत् प्रत्यहं पीत्वैक रात्रोपवासे सान्तपनः कृच्छ्रः साप्ताहिकः। एषु शक्त्याद्यपेक्षया योज्यम्। एवमुत्तरत्रापि। महासान्तपनं तु गोमुत्र-गोमय-क्षीर-दधि-सर्पिषामेकैकं त्र्यहं त्र्यहमावर्त्य पञ्चदशाहिकं स्यात्। यद्वा गोमुत्र-गोमय-क्षीर-दधि-सर्पिः कुशोदकानां षण्णामेकैकं त्र्यहं त्र्यहमावर्त्य त्र्यहोपवासे एकविंशति रात्रकं महासान्तपनं स्यात्। यति महासान्तपनं तु, गोमुत्रादीनां षण्णामेकैकस्य द्व्यहद्व्यहाभ्यासे स्यात्। तप्तकृच्छ्रस्तु तप्तक्षीर घृतोदकानामेकैकं प्रत्यहं पीत्वैक रात्रोपवासे

---

१(*) इति ब्रह्मकूर्चं संज्ञक प्रायश्चित्त लक्षणं ज्ञेयम्। अत्र धेनुषु सवत्सा कपिला पूता गरीयसीति।

२(†) 'गो सकृद द्विगुणं मूत्रं सर्पिर्दद्याच्चतुर्गुणम्। क्षीर मष्टगुणं दद्यात् पञ्चगव्य तथा दधि' इति स्मृत्यन्तरे। पञ्चगव्य परिशोधन मन्त्रा उच्यन्ते। गायत्र्या त्यादिभिः।

" शुक्लयजुः—३०।२॥ ऋोत्रूक्ति, १२।११२॥ २३।१२॥ २२।१॥ २०।३॥

३(‡) १ शुक्ल यजुः ५।१६॥ ५।१५॥ १६।१५॥ ३५।८॥ (एषु पञ्चगव्य शोधन मन्त्राः सन्ति)।

स्यात् । यद्वा क्षीर घृतोदक-उष्णजल बाष्प-मारुतानां त्र्यहाणाम् , त्रिरभ्यासे द्वादशरात्रस्तप्तकृच्छ्रः स्यात् । तत्र क्षीरादि परिमाणमेवं-वम्,—जल त्रिपलं, पयोद्विपलं, घृतमेकपलं । उदकवाष्पमारुतेनु त्रिरात्रस्य पूरणमात्रम् । पादकृच्छ्रस्त्वेक भक्तेन नक्तेनायाचितेनोप-पवासेन चेत्येवं रूपः स्यात् । तत्र ग्राससंख्या-अनक्तेन पञ्चदश वा षड्विंशतिर्वा ग्राह्याः । नक्ते द्वादश वा द्वात्रिंशतिर्वा ग्राह्याः । अयाचिते तु चतुर्विंशतिरेव, सर्वे ग्रासाः कुक्कुटाण्ड प्रमाणा अप्रवेश प्रमाणावा १(*) । अनयोः पक्षयोः शक्त्या विकल्पः । यद्वैवं पादकृच्छ्रः । एकभक्तत्रयं पादकृच्छ्रः शूद्रस्य देयः, नक्तत्रयं पादकृच्छ्रो वैश्यस्य, अयाचितत्रयं पादकृच्छ्रो राज्ञः । उपवासत्रयं पादकृच्छ्रो विप्रस्येति, व्यवस्था च—अर्द्धकृच्छ्रस्त्व याचितोप वासाभ्यां स्यात् । पादोन कृच्छ्र एकभक्तोऽयाचितोपवासपादैः स्यात् । प्राजापत्य कृच्छ्रस्त्वेक भक्ते नक्तो याचितोपवासे त्रिरा वृत्तैः प्राति लोम्येन त्रिवावृत्तैर्वा, बालवृद्धातुरार्थः स्यात् । एकनक्त त्रिनक्त-त्रयाश्रितोपवास त्रयैः, प्राजापत्यै कैकग्रासापत्तिः स्या च्छक्तानां उपवासादि प्रातिलोम्येणवा । अति कृच्छ्रस्त्वेक पाणि पूरण-मात्रान्न-भोजनकोन तद्ग्रास संख्यायुक्तः । यदैकैक-ग्रासाशी भोजनदिने स्यात् ॥ शक्तस्यैषोऽति कृच्छ्रः । शेषं पूर्व-वत् । कृच्छ्रातिकृच्छ्र स्तु—पयसैक विंशतिरात्रः स्यात् । यद्वा द्वादशरात्रं तत्तु भक्षणे कृच्छ्रातिकृच्छ्रः स्यात् । शक्तस्य-पराको-द्वादशाहोपवासेन स्यात् । सौम्य कृच्छ्रस्तु पिण्याक मोदनाग्रनि-स्रवं तक्रमुदकं सक्तूंश्च, प दिनेषु क्रमात्-प्राश्य षष्ठेह्न्युपवासे स्यात् । पिण्याकादीनां यत् परिमाणं प्राणधारक मात्रमेव २(†) पिण्याक-सक्तु तक्रैः त्र्यहमतीत्य-चतुर्थेऽह्न्युपवासे, यति सौम्य-कृच्छ्रः । चान्द्रायणन्तु—शुक्ल प्रतिपदादि दिनेषु मयुराण्डमित-प्रमाणग्रासानां एकैक वृद्धया पौर्णमास्यां पञ्चदश ग्रासाः स्युः ३(‡) । ततः कृष्ण प्रतिपदादिष्वेकैक ग्रासह्रासेन, चतुर्दशी

---

१(*) अत्र करप्रवेश प्रमाणावेति प्रादेश प्रमाणाश्चेतिच भिन्नः पाठः ।

२(†) 'प्राणयात्रा मात्र' इत्यं पाठान्तरं दृश्यते । अत्र प्राणयात्रा निर्वाहयुक्त इति ।

३(‡) चन्द्रस्यायन मिवायनं यस्य तत् व्रतम् । शुक्लपक्षे ग्रासवृद्धिः । कृष्णपक्षे ग्रासैकैक-ह्रासः । अन्यत् स्मृतौ च ।

पर्य्यन्तं भुक्त्वाः ऽमावास्यायामुदवासे-यवमध्यं चान्द्रायणं स्यात् ॥ पिपीलिका मध्यचान्द्रायणन्तु, कृष्णप्रतिपदादि क्रमेण पौर्ण्य-मास्यन्तं स्यात् । अत्र सर्व्वत्र तिथिवृद्धिह्रासयोः ग्रासवृद्धि ह्रासौ ज्ञेयौ ॥ यद्वा चत्वारिंश दधिक-शतद्वयग्रासानां आवृत्त्यावा, यथाकथञ्चिदावृत्त्या मासेन चान्द्रायणंस्यात् । पञ्चविंशत्यधिकशतद्वय संख्याकानां ग्रासानामावृत्त्या वा १(*) । यथा—कथञ्चिन्मासेन चान्द्रायणं स्यात् ॥ यतिचान्द्रायणन्तु प्रत्यहं दिवसस्याष्टमेऽष्टग्रासै-र्मासेन स्यात् ॥ शिशुचान्द्रायणन्तु प्रत्यहं दिवानक्तञ्च, चतुर्भिश्च-तुर्भिर्ग्रासैर्मासेन स्यात् ॥ ऋषिचान्द्रायणन्तु प्रत्यहंत्रिस्त्रिभि-र्ग्रासैर्मासमेव स्यात् । यतिचान्द्रायणादिषु यथाकथञ्चित् त्रिंशद्दिनः मासोज्ञेयः । नचान्द्रगतिवत् । सोमायनन्तु गोस्तनचतुष्टयजं क्षीरं सप्तरात्रं पिवेत् । समत्रयजं सप्तरात्रं, स्तनद्वयजं सप्तरात्रम् । एक-स्तनजं षड्रात्रं, त्रिरात्रं वायु भक्षता, एतच्चान्द्रायणधर्म्मवताचेति ॥

इति कृच्छ्रचान्द्रायणादि लक्षणम् ॥

—*—

## अथ कृच्छ्रचान्द्रायण व्रत साधारण धर्म्मः ।

—*—

तत्र त्रिकालं द्विकालं वा स्नानं तद्वा शुध्येत् सकृत्स्नानात् । सर्व्वत्र स्नानमार्जनाघमर्षण तर्पणानि कृत्वा जलादुत्तीर्य्य सौरमन्त्रैः सावित्र्यावा, सूर्य्योपस्थानं कार्य्यम् । ततः पुण्यमत्रं गायत्रीं वाष्ट-सहस्रमष्टशतं वा शक्त्या जपेत् । चरु-भैक्ष्य-यावक पयोदधि-घृतमूलफलकन्दादि-हविष्यं वा भोज्यम् । तद्धविष्यं 'आप्यायस्वे'-त्यभिमन्त्र्य ग्रासान् कृत्वा गायत्र्याभिमन्त्रयेत् ॥

—*—

## अथाशक्तस्य प्राजापत्याम्नाया उच्यन्ते ।

—*—

तत्र प्राजापत्ये धेनुदानम् , तन्मूल्यदानं वा कार्य्यम् । यत्र गोमूल्यं निष्कं निष्कार्द्धं निष्कपादं वा शक्त्यनुसारेण कल्प्यम् । अत्यशक्तौ-

तथाच स्मृतौ, 'तिथि वृद्ध्या चरेत् पिण्डान् शुक्ले शिख्यण्ड सम्मितान् । एकैकं वर्द्धयेच्छुक्ले कृष्णे पञ्चैव ह्रासयेत्' इति ।

तदर्द्धं तत्सम भूधनधान्ययववस्त्रादिवा दद्यात् । द्वादशब्राह्मणान् वा भोजयेत् । उपवासो वा श्रुति संहिता पारायणं वा, गायत्र्ययुत-जपोवा, तिलहोमसहस्रंवा, प्राणायामशतद्वयंवा, एकादशावृत्त्यारुद्र-जपंवा, शक्त्याकुर्य्यात् । धेनुदानविप्रभोजनादि १(*) शक्त्यपेक्षया द्वित्रि चतुःपञ्चषड्गुणं वर्द्धते । उपवासस्थाने एकविप्र-भोजनम् । तावद्धनधान्यादि वस्त्रादिदानं वा कार्य्यम् । शक्तस्य द्विगुणादिवृद्धिश्च, गायत्रीसहस्रजपोवा, द्वादशप्राणायामावा, शक्त्या योज्याः ॥ चान्द्रा यणस्थानेऽष्टौ प्राजापत्याः स्युः । मासोपवासस्थाने पञ्चदशप्राजा-पत्याः । तप्तकृच्छ्रे प्राजापत्याः । अतिकृच्छ्रे त्रयः । यद्वा तप्त कृच्छ्रे सार्द्धकायद्वयम् । अतिकृच्छ्रमहासान्तपने कायद्वयम् । पराके पञ्च त्रयोवा कायाः कार्य्याः ॥

—*—

## अथ कृच्छ्रस्थाने तीर्थ-प्रत्याम्नाय उच्यते ।

—*—

वेदे तीर्थेच दैवेच दैवज्ञे चौषधे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥२८०७॥
क्षेत्राण्यापः सुरा विप्रा गौर्गुरु स्तीर्थमुच्यते २(†) ।
निवासहोमस्नानार्चा कृत्यैः पापात्पुनाति तत् ॥२८०८॥

अथ पुराण-शास्त्रवाक्येभ्यः सर्व्वतीर्थ प्रत्याम्नाये किञ्चिन्मूल मुच्यते ।

ब्रह्मविष्णुशिवादेवा इन्द्रोऽग्निर्यमनैऋती ।
वरुणः पवनोयक्षः सोमः सूर्य्योगुहोगणः ॥२८०९॥

---

१(*) तथाहि,—

'प्राजापत्य व्रताशक्तो धेनुं दद्यात् पयस्विनीम् ।
धेनोरभावे दातव्यन्तुल्यं मूल्यं न संशयः' ॥

अन्यच्च स्मृतौ,—

'धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिकी ।
कार्षापणैक मूल्याहि दरिद्राणां प्रकीर्त्तिता' ॥

२(†) 'तीर्थं शास्त्रेऽध्वरे पात्रे शास्त्रे सलिल-योनीच । योषिद रजस्यु पाध्याये उपाये चापि मन्त्रिणि' इति कोषकारः । पुराणे च, कुरुक्षेत्रादि प्रसिद्धम् ।

एते स्वयं तीर्थभूता स्तीर्थैः शुद्धीरदर्शयन् १(*) ।
मनवोवसवोरुद्रा आदित्या मरुतोगणाः ॥२८१०॥
विश्वेदेवास्तीर्थैसाध्या नागा यक्षाश्च राक्षसाः ।
इत्याद्यनेकदेवास्तु तीर्थैः सिद्धिमवाप्नुवन् ॥२८११॥
भृगवोऽङ्गिरसोऽगस्त्य विश्वामित्रात्रिकश्यपाः ।
वशिष्ठाद्या महात्माण स्तीर्थैः सिद्धिमवाप्नुवन् ॥२८१२॥
हरिश्चन्द्रोनलोवैण्या पुरुकुत्सौ पुरूरवाः ।
सगरः कार्त्तवीर्य्याद्या स्तीर्थैराज्यमवाप्नुवन् ॥२८१३॥
इन्द्रभैरवरामाद्या गौतमाद्या महर्षयः ।
ब्रह्महत्यादि पापानि तीर्थैरेव व्यपोहयन् ॥२८१४॥
विश्वामित्रः सकुलस्तु महापापं व्यपोहयत् ।
सुतीर्थैंतपसा ब्राह्मं प्राप्तःवासिष्ट-शापतः ॥२८१५॥
त्रिकुम्भमपि चाण्डालं विप्रं कृत्वाप्ययाजयत् ।
तन्तु तेनैव देहेन स्वर्गलोकमवेशयत् २(†) ॥२८१६॥
अनुपोष्य त्रिरात्रादि तीर्थान्यनभिगम्य च ।
अदत्वा काञ्चनं गाश्च दरिद्रोनाम जायते ॥२८१७॥
व्रतोपवास कृच्छ्रादीन् कृत्वा तीर्थ-सुसेवनम् ।
अदत्वाचाश्ववस्त्रादि दरिद्रोजायते ध्रुवम् ॥२८१८॥

2043. **इति महाभारते । तथा आदित्यपुराणे—**

पाण्डवैराज्यलाभाय दुरितोपशमायच ।
श्रीकृष्णनारद व्यास श्रीकण्ठेन्द्राजरोमशैः ।
तीर्थ यात्रा पुराऽकारि-तीर्थैः कुर्व्वन् महत् फलम् ॥२८१९॥

2044. **इत्यादित्यपुराणे श्रूयते कथा ।**

विश्वनाथेन यतिना निर्व्याजेन महात्मना ।
विंशत्यब्दाच्छताब्दान्तं सर्व्वदा तीर्थ सेविना ॥२८२०॥

---

१(*) 'तीर्थ-पूताः' इत्यन्य: पाठः । अतः तीर्थपूतान्देवानुक्त्वा ऋषीनन्यांश्चाहुः शास्त्राणि । 'विकुट' इति पाठान्तरम् ।

२(†) 'प्रवेशयन्' इति भिन्नः पाठः ।

" अत्र 'वस्त्रादि' इत्यन्यः पाठः । तीर्थं—कुरुक्षेत्र पुष्करादि । तीर्थं,—करे ब्राह्मपित्रादि । तीर्थं.—उपाध्यायाचार्य्यादि ।

बहुस्मृति-पुराणज्ञैर्बहुभिः सह सूरिभिः ।
कृतस्नं (च्छ्रं)तीर्थफलं प्रोक्तं यत्नसाध्यमपीर्य्यत ॥२८२१॥
मार्कण्डेयाजह्नुमद्यावसद्रोमशादिभिः ।
कृच्छ्रं (तृस्नं) तीर्थफलं प्रोक्तं गोदानक्रतुसाम्यतः ॥२८२२॥
द्वापरान्ते पुराणानि व्यासः स्वल्पायुषां नृणाम् १(*) ।
हिमवद्दक्षिणे देशे संकोच्यैव व्यचारयत् ॥२८२३॥
भूत प्रेत पिशाचाश्च पितरोब्रह्मराक्षसाः ।
अद्यापि प्रचरन्त्येव कृच्छ्रार्थ-तीर्थमर्थवत् २(†) ॥२८२४॥
सूतः शूद्रः पुराणज्ञः तीर्थे विप्रोऽभवत्ततः ।
शिष्यानूचे जराङ्कानि तीर्थाणि कुरुतेतिवै ॥२८२५॥
ते विश्वकर्म्मणे प्रोचु र्विश्वकर्म्मा च सर्व्ववित् ।
शिष्यैः कृच्छ्राजरांकानि सर्व्वतीर्थान्यकारयत् ॥२८२६॥
अद्यापि कृच्छ्रवर्णाङ्काद्दृश्यन्ते तत्र तत्र च ।
लिप्यङ्कानामविज्ञाने प्रकारान्तर मुच्यते ॥२८२७॥
पुराणस्मृतिविद्विष्णु-प्रोक्ततीर्थफलाप्तये ।
उक्तं लोकोपकारार्थं यत्नसाध्यम पीर्य्यते ॥२८२८॥

पुराणेषु स्मृतिषु च ३(‡) तीर्थफलं गोदानफलं दशधेनु फलं शतधेनुफलं गोसहस्रदानफलं, अग्निहोत्र फलञ्च, पुण्येष्टि फलं षड्मासोपवास फलं सम्वत् सरोपवासफलं चान्द्रायणजं पराक फलं लभेत् । इत्यादि वचने ष्वर्थवाद शङ्कांविसृज्य ,
सर्व्वत्र योग्यतया कृच्छ्रादिकं परिकल्प्य—

## संग्रहकारेणापि यथैवोक्तानि तीर्थफलानि ।

अतः कायकृच्छ्राचरणाशक्तानां पातित्यपरिहारार्थं, अस्माभिरपि तथैव तान्युच्यन्ते । तत्र भागीरथ्यां स्नानं षष्ठि योजनादागतस्य

---

१(*) अत्र 'शौरिभिः' अपरः पाठः ।
,, 'द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुनिः ।
कृत्वा वेदं स बहुधा कुरुते जगतोहितम्' ॥ इति पराशरीप पुराणे ।
२(†) 'कृत्स्नार्थं तीर्थमर्थवत्' इत्यन्यः पाठः । 'कृत्स्नाज् जड़ाङ्गाणि' इत्यपरः पाठः ।
३(‡) 'यस्य पादौ च हस्तौ च मनश्चापि सु संयतम् ।
परमेशे दृढा भक्तिः स तीर्थफलम श्नुते' ॥ इति पुराणे ।

षड्ब्द कृच्छ्रसमम् । अत्र यात्रायोजन वृद्धौ सत्यां योजनस्यार्द्धकृच्छ्र वृद्धिः कल्प्या ॥ पूर्व्वं राक्षस भयात् सप्तमातृकानद्योऽभवन् । भये गते पुनर्देवता कृपातः अष्ट कृच्छ्रसमानि फलानि प्रयागेऽभवन् । तत्र नदीशुष्कखातेषु भागीरथी सदा(च सप्त वृद्धिः कल्प्या । तासु विष्णुगङ्गादि सप्तमातृकानामसु सप्त(धा)गङ्गासु स्नानं षड्ब्द कृच्छ्रसमम् । प्रयागे चैते द्विगुणम् । गङ्गाद्वारे गङ्गसागरेत्रैवम् । वाराणस्यां गङ्गाऽतीवदुर्लभा, समुद्रान्तं पुण्यं नगरान्ते १(*), वाराणस्यां महापातकम् नप्रविशति । तत्र मृतो मुक्तः स्यात् । सर्व्वत्र ग्रामा देशान्तरं भाषाणां विशेषः २(†) महापर्वतव्यवधाने, महानदी व्यवधाने च क्रमेण द्वादशाष्ट-चतुर्योजनन्यूनं भवति । भाषाभेदमात्रैः पर्वतव्यवधाने नदीव्यवधानं षट्चतुर्द्वियोजन-न्यूनं भवति ॥ यमुनायां स्नानमेकाब्दकृच्छ्र-फलम्, विंशति योजनागतस्य । मथुरायां द्विगुणं सरस्वत्यां चतुरब्द कृच्छ्रसमं चत्वारिंशद्योजनागतस्य ॥ प्रभासे द्वारावत्याञ्च द्विगुणम्, एतयोर्नद्योर्मध्ये योजनवृद्धौ पादकृच्छ्र वृद्धिः । दशद्रुतो स्वरस्वती-शतद्रु-सुरुद्री-विपाशावितस्तैरावती-मरुद्वृधा-मधुमती-पयस्विनी-घृतवती-त्यादिदेवनदीषु स्नानं त्रिकृच्छ्र समम्,

---

१(*) पूर्व्वं राक्षसभयात् सप्तमातृकानद्योऽभवन् । भयेगते पुनपुनर्देवताऽधोऽवहत् । इत्यधिकः पाठः क्वचास्ति । नगरं नगरी वा, भूपपौरम्, पत्तनं पुरम्, राजधानीति । 'नगरं मत्स्यराजस्य श्मशाने भरतर्षभ ।' काकया महापापस्य सर्व्वं पापं प्रणश्यति । 'व्यक्तं दूरे विराटस्य राजधानी' इति विराट पर्व्वणि ।

२(†) 'वाचा यत्र विभिद्यन्ते गिरिर्वाव्यवधानतः । महान् वान्तरं यत्र तद्देशान्तर मुच्यते' इति स्मृतौ ।

" संस्कृतं प्राकृतं देश्यं—इति विविधा भाषाः । अन्यद् दशकुमारचरिते अलंकार शास्त्रादिषु भेदाः सन्ति । देश्यभाषा विभिन्नाः, यथा च, देशेदेशे नरेन्द्राणां जनानाञ्च स्व के स्वकैः । भङ्गया विभिद्यते यस्मात्त स्माद्देश्यं प्रकीर्त्तितम्'—इति सरस्वती कण्ठाभरणे मार्कण्डेय वृत्तौ च।

कुत्र कुत्रचा गङ्गाया दौर्लभ्यमाह, पुराणे

'सर्व्वत्र सुलभा गङ्गा त्रिसु स्थानेषु दुर्लभा ।

गङ्गाद्वारे प्रयागे च गङ्गासागर सङ्गमे' ॥

पञ्चदश योजनागतस्य ॥ चन्द्रभागा-वेत्रवती-सरयू-गोमती-देविका-कौशिकी-नित्यजला मन्दाकिनी सहवद्धा पौनःपुण्या पूर्णपुण्या वाहुदा वारुणी गण्डक्यादिदेवनदीषु, स्नानं षोड़शकृच्छ्र समम्, द्विगुणं फलम् ॥ अन्यासु समुद्रगासु महानदीषु, स्नानं षट्कृच्छ्र समं स्यात्। महानदीषु तु महानद्यर्द्धफलम् १(*)। शोणे महानदे गङ्गार्द्धफलम्। वैरोचने नदे महानद्यर्द्ध फलम्। पुष्करतीर्थेषु प्रयागसमम्। सन्निहत्या तथैव। माहिष्मत्यादौनित्यं प्रत्यद्गाग्नौ होमोदशगुणः। गयास्थ महानदी सेतुवन्धस्थ-रामेश्वरं, श्रीरङ्ग—पद्मनाभं सन्निहत्य तथैव। माहेरं २(†) नर्म्मदां आम्नातकेश्वरं, कुब्जाम्रं, कोकामुखम्, प्रभासं विजयेशं पुरीन्द्रं पञ्चनदम्, गोकर्णम्, अयोध्यां द्वारावतीं गयां मायामवन्तीम्, कांचीं कावेरीं शालग्राम मित्यादिषूक्तं ( युक्तम् ) क्षेत्राणि संसेव्य गङ्गासमं फलं लभते ॥ सर्व्वेभ्योविशिष्टा वाराणसी। तत्र महाप्रयागेच मृतस्य मुक्तिरेव ३(‡)। अन्यप्रयागेतु मरणं मुक्ति-वीजम्। नर्म्मदायां चतुर्विंशति योजनागतस्य फलमाह चतुर्विंशति कृच्छ्रसमम् ॥ कुब्जिका सङ्गमेनेद्विगुणम्। शुक्लतीर्थे चतुर्गुणम्। ताप्या(प्त्या)न्तु दशकृच्छ्र समम्, दशयोजनागतस्य। पयोष्ण्यामष्ट कृच्छ्र समम्, अष्टयोजनागतस्य तत्रापि सङ्गमे द्विगुणम् ४(ऽ)। गोदावर्य्यां षष्टि योजनागतस्यत्र्यव्दकृच्छ्रसमम्। त्रिंशद्योजना-गतस्यैकादशतीर्थेषु प्रतिलोमानुलोमाभ्यां स्नानं षष्टिकृच्छ्रफलम्। पं (वं) जरासङ्गमे प्रयागे तद्द्विगुणम। सप्तगोदावरी भीमेश्वर सङ्गमे त्रिगुणम्। कुशतर्पणे गयासमम्। वंजरायां द्वादश योजनागतस्य द्वादशकृच्छ्रसमम्। गोदाय्यां विशेषमुद्रा ( द्गा ) न्तं षड्गुणं

---

१(*) महानदी, उत्कले कटकान्तर्गते एका, तथाच,—'महानदी नदी यत्र ईश्वरो भुवनेश्वरः' इत्यष्ट दुर्गान्तर्गत राज्ञां वृत्ते। अपराविशाला सिन्धुसंगता महानदी यथा वङ्गेषु पद्मा महती सरित्। अन्याच गयायाम्।

२(†) नर्म्मदातु पूत सरिद्वाण लिङ्गोत्पादिका। अत्रै वोङ्कारेश्वरः प्रतिष्ठितः।

,, प्रयागे विदेशां तीर्थराजि। 'स तीर्थराजो-जयति प्रयागः' इति।

३(‡) त्र्यम्बकेश्वरः यत्र राजते, तच्छैलाद् गोदावरी विनिर्गता पुण्य सलिला सा दक्षिण वाहिनी। वृत्तन्तु पुराणेषु वर्त्तते। स्वतः समुद्र गाभिन्ना स नहानदी स इति ज्ञेयमव।

४(ऽ) प्रागुक्त--काशीविषये अन्यत काशी मुक्ति विवेके सन्दर्भे, पुराणे काशी खण्डे चास्ति।

पुण्यम्। प्रणीतायां चतुः कृच्छ्रसमं चतुर्योजने। पूर्णायां तदर्द्धं-तावद्द्विगुणम्। हरिक्षेत्रे त्रिगुणम्। भीम (श्रीम) रथ्यां दशकृच्छ्र समम्। द्वायोजनागतस्य ककुद्मती सङ्गमे पञ्चदश कृच्छ्रसमम्। तुङ्गभद्रायां वरदासङ्गमे पञ्चविंशतिकृच्छ्रसमम्। मलापहारिण्या-मष्टकृच्छ्रसमम्। अष्ट योजनागतस्य निवृत्यां षट्कृच्छ्रसमम्। षड्योजनागतस्य गोदावर्यां या (पा) त्रा वृद्धौ योजने पादकृच्छ्रः॥ सिंहस्थे गुरौ १(*) सर्व्वत्र जाह्नवी समम्। कन्यास्थे गुरौकृष्णवेण्यां सर्व्वत्र जाह्नव्यर्द्ध समम्। तुङ्गभद्रायां सर्व्वत्र गङ्गार्द्धसमम्। कर्कटस्थे रवौ कृष्णवेण्यांमलापहारिणी सङ्गमे प्रयागेचतुर्गुणम्। ब्रह्मेश्वरे पञ्चगुणम्। पाताले गङ्गायां मल्लिकार्ज्जुनेच षड्गुणम्। ततः पूर्व्वंषष्टि कृच्छ्र समम्। लिङ्गावृत्तिसङ्गमे प्रयागेच चतुर्गुणम्। ब्रह्मालये द्विगुणम्, समुद्र सङ्गमे चैवम्। कावेर्य्यां महानद्यांच पञ्चदशकृच्छ्र समम्। दशयोजनागतस्य ताम्रपर्णीधृ-(कृ)तमालापर्यास्विनीषु द्वादशयोजनागतस्य द्वादशकृच्छ्रसमम्। सह्यपादोद्गता विन्ध्या त्रिपादोद्भृताश्च नद्यः स्वदैर्घ्यानुसारेणैक-द्वि-त्रि-कृच्छ्र फलप्रदाः

विन्ध्यशैलोद्भवास्तु द्विगुणफलाः। हिमवदुद्भवास्तु त्रिगुणफलाः॥ एवं स्मृतौ पुराणेवा यथा कथञ्चिदनुक्तौ, कुल्याः त्रिरात्र फलाप्ताः (दाः)। अल्पनद्यः कृच्छ्रफलदाः। नद्योद्विकृच्छ्रफलाः महानद्य-

---

१(*) पयोष्णी सरित्—कलिङ्गे वैतरणीति ख्याता। पुराणे कृत्तिरस्या अस्ति।

" पाताल गङ्गा-भोगवती नामेति। मर्त्ये भागीरथी, स्वर्गे तु नाम मन्दा किनीति। विन्ध्याचले भागीरथी सन्निहिता। तत्र श्रीदुर्गा भद्रकाली च नित्यमस्ति। तत्र मुनयः तदक्षिनदः पूर्व्वमासन् इति याज्ञवल्क्यंऽथास्ते। अपराः कृष्णा, कावेरी, ताम्रपर्णी, गोदावरी नाम नद्यः दक्षिणापथे सन्ति।

" वाराणसी, साक्षान्मुक्तिदा। तत्रैव विश्वेश्वरश्चैव मणिकर्णिका चेति। श्रेष्ठा 'तत्रैव मणिकर्णिका'।

" सेतुबन्धे रामेश्वरः, 'सेतुं दृष्ट्वा विमुच्येत ब्रह्म हा ब्रह्म हत्यया' इति तत् प्राधान्यं पुराणेऽप्युक्तम्।

सिंहस्थे गुरौ संस्कारादिष्वकालः। तीर्थेतु शुभकालः।

तथाच ज्यौतिषे,—

'गण्डका उत्तरे तीरे गिरिराजस्य दक्षिणे।

सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत्' इति। अन्यद् मतमात्र तत्त्वे चास्ति।

त्रिकृच्छ्रफलाः ॥ सर्व्वत्र पात्रानुक्तौ कृच्छ्रसंख्या योजनसंख्यावा-स्यात् । एकयोजनगादिकगा अधिकयोजनाधिकगा महानद्यः । समुद्रगाश्चमहानद्यः । यत्र महानदीति च समाख्यास्ति १(*) तत्र ता अपि महानद्यः । उपवाससहितं नदीस्नानं , कृच्छ्र समयोजनादर्वागपि, शुनी-गर्द्दभी-चाण्डाली-शुद्री-कष्टगेत्यादिनाम्न्योनद्यः पापनद्यश्च वर्ज्याः २(†) ॥ सर्व्वत्र समुद्रस्नानं दर्शे कार्य्यम् । देवतासमीपे सरः सरिन्नदी-सङ्गमेषु समुद्रेच सदा कार्य्यम् । समुद्रस्नानं पञ्चशत योजनागतस्य प्रख्यात देवतासमीपे-द्विगुण फलम् । तत्र स्नात्वा तत्त देवतादर्शने स्थाणुनाच स्नानेच त्रिगुणम्, सेतौ गमनं त्रिंशत्कृच्छ्रसमं त्रिंशद्यो योजनगतस्य । तत्र स्नात्वा रामेश्वरदर्शने षष्टिकृच्छ्रसमं फलम् ३(‡) विन्ध्यदेशीयानां सेतुरामेश्वरयोर्द्दर्शनेचैकमेवोक्तं फलम् ॥ दक्षिण-देशीयानां जाह्नव्यां स्नानं षड्गुणम् । गङ्गातटदेशीयानां सेतुरामे-श्वरयोर्दर्शने षडगुणम् । स्कन्ददर्शने त्रिंशत्कृच्छ्रसमम् । त्रिंशद्यो-जनागतस्य, यत्र गङ्गासंज्ञास्ति तत्र चैवम् ॥ सर्व्वत्रभाषाभेद—पर्व्वतादिना यात्रा ऽत्तमो भवत्येच, श्रीरङ्गपद्मनाभ-पुरुषोत्तम-चक्रकोट-लक्ष्मीदर्शन-लवणाकरस्नानेच त्रिंशतकृच्छ्रसमम् । त्रिंशत् योजनागतस्य केदारे त्रिगुणम् ॥ सर्व्वेषुवैष्णव-माहेश्वर-सौर-शाक्तेष्वपि पीठेषु दर्शने पञ्चकृच्छ्रसमम् । प्रख्याते द्विगुणम् । अहोवल क्षेत्रेऽपि तथैव । श्रीशैलप्रदक्षिणं षष्टिकृच्छ्र समम्-श्रीशैले एकैकलिङ्गदर्शनञ्च त्रिंशत् कृच्छ्र समम् । त्रिंशद्योजनागतस्व सर्व्वत्र कृच्छ्र संख्याः यात्रायोजनसंख्याया विज्ञेयाः ॥ यत्र यत्र

---

१(*) प्रागप्युक्तमेतद, महानदी कलिङ्ग देशेऽस्ति, 'महानदी नदी यत्र ईश्वरो भुवनेश्वरः' इति रुक्मिणीहरण काव्ये । महती विशालानदी वा महानदीति । यथा प्राग्वङ्गे पद्माख्या-नदी । ब्रह्मपुत्र, यमुना-करतोयाः पद्मासध्येऽङ्गताः ।

२(†) यथा, बिहारप्रदेशे कर्म्मनाशा । सेतुबन्ध विषयेच,—'सेतुं दृष्टा विमुच्येत ब्रह्म हा ब्रह्म हत्यया' । 'राजा भिक्षुर्महोदधिः—दृष्टिमात्रं पुनन्तीति' इति च स्मृती ।

३(‡) अत्र योजन प्रशङ्गाद योजन परिमाण मुच्यते । अन्यद हेमाद्री राघव-भट्टीये चास्ति । अन्यत्र—'धनुः सहस्राण्यष्टौ च गतिर्यासां न भिद्यते ।
नता नदी शब्दधरा गर्त्तास्ताः परिकीर्त्तिताः' इति स्मृतो ॥
भाषाभेदे देशान्तरत्वञ्चेति । यथा, 'वाचा यत्र विभिद्यन्ते गिरेर्वाव्यवधानतः । महा-नद्यन्तरं यत्र तद्देशान्तर मुच्यते' इति स्मृति निबन्धे ।

यद्विशेषतया यद्दृष्टं तत्र तद् ग्राह्यम् । सर्व्वत्र देशकाल-देवतातीर्थ विशेषेण फल विशेषोऽस्त्येव । सर्व्वत्रोक्तफलदशांशफलम् । तोरस्थस्य योजनादर्व्वाग् भवति । तत्रापि क्रोशसंख्यायाः तारतम्य-मस्ति । सर्व्वत्र यात्रावृद्धौ यात्राफलमधिकम् । योजने योजने उपवासः तथासति षडुपवासाः प्राजापत्यमितिकल्पना भवति ॥

2045. तिर्य्यग् यवोदशान्यष्टावूर्द्धावा व्रीहय स्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ॥२८२९॥
वितस्तिर्द्विगुणारत्निस्ततोनिस्कुस्ततो धनुः ।
धनुः सहस्रे द्वे क्रोशश्चतुः क्रोशन्तु योजनम् ॥२८३०॥
सार्द्धगव्युति-देशश्च योजनं परिचक्षते ।
गव्यूतिं पञ्चसाहस्र-धनुर्भिः प्रमितां विदुः ॥२८३१॥

यात्रासु सर्व्वत्र नियमा एकभक्ता अधः शयना ऋतौ ब्रह्मचर्य्या-अप्रति ग्रहाद्याः कार्य्याः । तीर्थे गत्वा स्नान जप तर्पणाद्यवश्यं कार्य्यम् ॥ देवेषु, अर्घपाद्याक्षत गन्धपुष्पादिनाभ्यर्च्चणं कार्य्यम् । एवं यथा मनःपूतं भवति तथा तीर्थं सेव्यम् । परार्थं गच्छतः षोड़शा(ङ्गां)शं फलं प्रसङ्गाद् गच्छतोऽर्द्धम् १(*) । अनुषङ्गाद् गच्छतः स्नान फलमेव, न यात्रा फलमित्यादि विशेष स्तृतीयस्तवके, तीर्थयात्रा प्रकरणेऽव गन्तव्यः । तीर्थयात्रा २(†) सम्बन्धिनोऽशेष विशेषस्य तस्मिन्नेव प्रपञ्चि तत्वादित्यु परम्यतेऽत्र ॥

इति तीर्थयात्रा तत् तीर्थकृत्यफलमुक्तम् ॥

—*—

१(*) 'षोड़शांश स लभते यः परार्थेन गच्छति' । परार्थेन इति चात्र पाठः स्मृतौ च । प्रायश्चित्त विषये—'प्रायश्चित्तानि पापचय मात्र साधनानि चान्द्रायणादीनि' इति । अन्यत्र, 'प्रायोनामतपः प्रोक्तं चित्तं नियत मुच्यते । तपो नियत संयुक्तं प्रायश्चित्तं विदु-र्बुधाः' इति च ।

" 'कृते व्रतं समादिष्टं त्रेतायां धेनुरेवच । कृष्णादीनान्तु सर्व्वेषां मूल्यन्तु द्वापरेकलौ, इति स्मृतौ । अपरञ्च—'धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपौराणिकी । कार्षापणैक मूल्याहि दरिद्राणां प्रकीर्त्तिता' इति च ।

२(†) अन्यत् तीर्थं तरङ्गिण्यां पुराणेष्वपि । स्मृतौ धर्म्मशास्त्र निबन्धेषु च ।
'प्राजापत्य व्रताशक्तौ धेनुं दद्यात् पयस्विनीम् ।
धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः' इति च स्मृतौ ।

## अथ महापातकेषु द्वादश वार्षिकादि व्रतस्थानेषु प्राजापत्यादय स्तत्तत् प्रत्याम्नायाश्च योज्यन्ते ।

—*—

तत्र द्वादशवार्षिके द्वादशदिने त्वेकैकं प्राजापत्यं परिकल्प्य-गम्यमाणे षष्ठ्यधिक शतत्रयं प्राजापत्या भवन्ति। ततो महापापेत्वमत्या सकृत्कृते, षष्ठ्यधिक शतत्रयं प्राजापत्यानुक्तरीत्या चरेत्। तत्राशक्तौ षष्ठ्यधिक त्रिशतधेनू र्दद्यात्। मत्याचेत् कायांश्चरेत्। अल्पाभ्यासे द्विगुणम्, बह्वभ्यासे त्रिगुणम्। धेनूनाम सम्भवे तन्मूल्यं-वा। गो मूल्यत्वेन षष्ठ्यधिक-त्रिशत-निष्कानि, निष्कार्द्धाणि निष्कपादोवा देयः। तत्राप्यशक्तौ तावन्त उपवासाः कार्य्याः। तत्राप्यशक्तावेकैकस्य प्राजापत्यस्यायुत संख्येयाः, गायत्रीजपाः षड्विंशल्लक्ष-जपाः कार्य्याः। तत्राप्यशक्तौ तावन्ति वेदपारायणानि कार्य्याणि। तावन्ति तिल होम सहस्राणि वा। तावन्तः शतद्वय-प्राणायामा वा कार्य्याः। इत्यादि कृच्छ्र प्रत्याम्नायत्वेन, षष्ठ्यधिक शतत्रयं संख्यया महापातकेषु योज्यम्॥ अति पातकेषु तु पादन्यूना द्वादशवार्षिक व्रतस्थाने, सप्तत्यधिक शतद्वय संख्याः कायाः कार्य्याः। तदशक्तौ धेनुदानादिकं कार्य्यम्॥ अनुपातकेषु षड्वार्षिक- व्रतस्थाने साशीति शत संख्याः कार्य्याः। धेन्वादयो वा तत् संख्याः॥ उपपातक बहुत्वे त्रैवार्षिक व्रतं कार्य्यम्। तत्स्थाने नवति संख्याः कार्य्यावा, धेन्वादयोवा तत् सख्याः कार्य्याः। एकैकोपपातके तु त्रैमासिक व्रतमुक्तम्। तत् स्थाने सार्द्धसप्तकायाः। तत् प्रत्याम्नाया धेन्वादयोवा तत् संख्याकाः स्युः। वृषभैकादश सहितत्रिरात्रात्मक गोवध स्थानेतु, सार्द्धैका दशकाया उप(द)वासादयोवा, तत् संख्याकाः कार्य्याः। मास-प्रयो व्रतस्थाने, सार्द्धकायद्वयम्। तत् प्रत्याम्नायोवा पञ्चगव्यं मासव्रते चैवम्॥ पराकेतु कायत्रयं प्रत्याम्नायश्च तद्वत्। सप्ताह-सान्तपण व्रते त्वर्द्ध कायमित्यादि १(*)। प्रकीर्णकेषु प्राजापत्य-पादादि कृतस्नं (कृच्छ्रं) कल्प्यम्।
प्राजापत्ये षडुपवासा इति वा कृतस्नं कल्प्यम्॥

---

१(*) अन्यत् प्रायश्चित्तविवेके, प्रायश्चित्ततत्त्वे, प्रायश्चित्त कौमुद्याम्, प्रायश्चित्तेन्दुशेखरे, प्रायश्चित्तरत्नाकरे, प्रायश्चित्तनिर्णयेचास्ति।

## अथ सर्व्व प्रायश्चित्तानि कथ्यन्ते।

—*—

तत्र महापातकादर्व्वाचीन-पातकेषु विविधेषु ज्ञानावतकृतेषु बहुगुण-वानत्यन्त विरक्तः प्रति निमित्तं प्रायश्चित्तं कर्त्तुमशक्तौ, सर्व्वं-प्रायश्चित्तं षड़ब्द कृच्छ्रं साशीति शतसंख्याक-प्राजापत्यांश्चरेत्। तदशक्तौ धेन्वादि (दानं) प्रत्याम्नायं तत् संख्यया कुर्य्यात्। अभ्यासे द्विगुणम्, मत्या चेत् त्रिगुणम्, मत्याभ्यासे चतुर्गुणम्। अत्यन्ताभ्यासे निरन्तराभ्यासे च पञ्चगुणम्। बहु कालाभ्यासे षड्गुणम् १(*)॥

## अथोपपातकादौ सर्व्व—प्रायश्चित्तम्।

—*—

तत्रोप पातकमारभ्यार्व्वाचीनेषूप पापेष्वत्यन्त गुणवानत्यन्त विरक्तः प्रतिनिमित्तं कर्तुञ्च, अशक्तौ, द्विवर्ष कृच्छ्रं षष्टि-संख्याक-प्राजापत्यं
2046. चरेत्। धेन्वादि प्रत्याम्नायं वा, तत् संख्यया कुर्य्यात्। अत्राप्य-भ्यासे द्विगुणम्। मत्या त्रिगुणम्, मत्याऽभ्यासे चतुर्गुणम्। अत्यन्ताभ्यासे निरन्तराभ्यासे च पञ्चगुणम्। बहु कालाभ्यासे षड्गुणम्। प्रकीर्णकेषु क्षुद्रपापेषु, बहुष्वज्ञान कृतेषु प्रतिनिमित्तं कर्त्तुमशक्तौ, सर्व्व प्रायश्चित्तमब्द कृच्छ्रम्, त्रिंशत् संख्याकं प्राजा-पत्यञ्चरेत्। धेन्वादि प्रत्याम्नायं वा तत् संख्यया चरेत्। अत्राप्य-भ्यासे द्विगुणं, मत्या त्रिगुणम्, मत्याभ्यासे चतुर्गुणम्। अत्यन्ता-भ्यासे निरन्तराभ्यासे च पञ्चगुणम्। बहु कालाभ्यासे षड्गुणम्। प्रकीर्णकेषु क्षुद्रेषु प्रत्याम्नायं वा तत् संख्याश्चरेत्। अत्राप्यभ्यासे द्विगुणम्, मत्यात्रिगुणम्, मत्या भ्यासे चतुर्गुणम्। अत्यन्ताभ्यासे निरन्तराभ्यासे च पञ्चगुणं कल्प्यम्। अति क्षुद्रपापेषु बहुष्वज्ञान-

---

१(०) योग्यकालेऽकृते कालान्तरे पश्चात् कृते पापक्षयो व्रत स्यापि वृद्धेर्विधाना द्रोगवृद्धेर्दीर्घ-कालौषध सेवनवत्। तथाच—'प्रायश्चित्तम कुर्व्वाणाः पापेषु निरता नराः। अपश्चात्तापि नः कष्टान्नरकान् यान्ति दारुणान्' इति स्मृतौ।

'दीर्घकाल-नैरन्तर्य्यं भगवदाराधन—तीर्थादि सेवन-याग-दानादि भिरष्टाङ्ग योगैश्च पापानि नश्यन्ति' इति।

कृतेषु प्रतिनिमित्तं प्रायश्चित्तं कर्त्तुमशक्तौ, सर्व्वं प्रायश्चित्त-कृच्छ्रातिकृच्छ्र-चान्द्रायणं कुर्य्यात्। तत् स्थाने द्वादश प्राजापत्यानि वाचरेत्। षट् प्राजापत्यानि वा चरेदित्यन्ये वदन्ति ॥

—*—

## इति सर्व्व प्रायश्चित्त विधानम् ॥

**सर्व्वत्रानुक्त निष्कृतौ,—**

कृच्छ चान्द्रायणादीनि समस्तानि व्यस्तानिवा योग्यतया योज्याणि। अति क्षुद्रपापेषु द्वादश षड् वा प्राणायामाः। पदषाहारे १(*) कृते-कराग्र ग्रास परिमितान्न वस्त्रधान्यादि दानं वा कुर्य्यात्। यदा तु कृत प्रायश्चित्तो भवति। तदापि षड् मासं प्रतिवर्षं वा, कृत पापानुमानेन २(†) सर्व्वं प्रायश्चित्तं कर्त्तव्यम् ॥

2047. **तथाच पद्मपुराणे,—**

ज्ञाताज्ञातेषु पापेषु क्षुद्रेषु च महत्सु च।
षट्सु षट्सु च मासेषु प्रायश्चित्तञ्च यश्चरेत् ॥२८३२॥
निष्कल्म ' नरो वै स्यात् स कृतान्तं न पश्यति।
प्रायश्चित्तम कृत्वैव नरो भवति नारकी ॥२८३३॥
प्रायश्चित्तं चरेद् यस्तु वाग्भवः कायजस्य तु।
स प्राप्नोति शुभां ल्लोकान्देव गन्धर्व सेवितान् ॥२८३४॥

2048. इत्यादि विज्ञानेश्वर-स्मृत्यर्थ सारोक्त-प्रकरणे—३(‡)

## प्रायश्चित्तं निरूपितम्।

**अन्यच्च—**

कृते पापे अनुतापो वै यस्य पुंसः प्रजायते।
प्रायश्चित्तं तु तस्योक्तं हरिसं स्मरणं परम् ॥२८३५॥
नाम्नोऽस्य यावती शक्तः पाप संहरणे हरेः।
तावत् कर्त्तुं न शक्नोति पातकं पातकी नरः ॥२८३६॥

---

१(*) 'पुरुषाहारे' इत्यन्यः पाठः। केषाञ्चिन्मते कुक्कुटाण्डमिता ग्रासाः।

२(†) 'कृत पापानुसारेण' इत्यन्यः पाठः।

३(‡) अयं विज्ञानेश्वराचार्य्यः मिताक्षरादि सन्दर्भ-कृत् सुप्रसिद्धः।

2049. श्रीभागवते षष्ठस्कन्धे—

कर्म्मणा कर्म्मनिर्हारो न ह्यात्यन्तिक इष्यते।
अविद्वदधिकारित्वात् प्रायश्चित्त—विमर्शणम् ॥२८३७॥
ज्ञानिभिरविदुषोऽधिकृत्य, प्रायश्चित्तं विमृश्यत इत्यस्यार्थः।
तपसा ब्रह्मचर्य्येण शमेनच दमेन च।
देहवाग् बुद्धिजं धीरा धर्म्मज्ञाः श्रद्धयान्विताः ॥२८३८॥
क्षपयन्ति महदघं वेणु गुल्ममिवानलः १(*)।
केचित् केवलया भक्त्या वासुदेव-परायणाः ॥२८३९॥
अघं धुन्वति कात्स्न्येन नीहार मिव भास्करः।
नतथा ह्यर्थवान् जह्यादु (न्यू )पेत तापसादिभिः ॥२८४०॥
यथा कृष्णार्पित-प्राण स्तत् पुरुष-निषेवया।
सध्रीचीनोह्ययं लोके पन्थी क्षमोऽकुतोभयः ॥२८४१॥
सुशीलाः साधवोयत्र नारायण-परायणाः ॥२८४२॥
यत्रैतेऽधिकारिण इत्यर्थः।
प्रायश्चित्तानि चीर्णानि नारायण पराङ्मुखैः।
नवै पुणन्ति राजेन्द्र! सुराकुम्भमिवापगाः ॥२८४३॥
तस्मात् सर्व्वप्रयत्नेन कर्त्तव्या हरिसंस्मृतिः॥
प्रायश्चित्तिर्हि सर्व्वस्य दुस्कृतस्येति वैश्रुतिः २(†)
सांकेत्यं पारिहास्यं वा स्तोभं हेलणमेववा
वैकुण्ठनाम ग्रहण मशेषाघहरं विदुः ॥२८४४॥
स्वपादमूलं भजतः प्रियस्य,
त्यक्तवान्यभावस्य हरिः परेशः।
विकर्म्मयच्चोत् पतितं कथञ्चिन्,
धुनोति सर्व्वं हरिसन्निविष्टः ॥२८४५॥

2050. भागवते द्वादशेऽपि,—अविस्मृति-स्तच्चरणार विन्दयोः,
क्षिणोत्य भद्राणि शमं तनोति च।
स्वसत्वशुद्धि परमाञ्च भक्ति, ज्ञानञ्चविज्ञानविराग युक्तम्॥

---

१(*) अत्र 'श्रीमद्भागवते' इति पाठः सम्यक्। 'गुल्म गुल्ममिवानलः' इति भिन्नः पाठः।
२(†) अत्र पाठव्यत्ययोऽस्ति। अत्र केवला भक्तिः 'चाहैश्वरे पराशुरक्तिः'। अहैतुकी भक्तिर्वा। ईदृशी निविशेष भक्तिः सा श्रेष्ठा मुक्तिरेव। 'भक्तेस्तु या पराकाष्ठा सैव ज्ञानं प्रकीर्त्तितम्' इति देवी भागवते।

सर्व्वपापक्षयकरं कर्त्तव्यं स्मरणं हरेः ।

इत्याद्याः श्रुतिस्मृति पुराणेति हासागमाः परःशता अति स्फुट-प्रमाणीभूता अत्रार्थे सन्तीत्यु परम्यते ॥

इति श्रीमदनन्त भट्ट विरचित-विधानपारिजाते
पञ्चमस्तवके श्रीहरि स्मरणरूपं
महाप्रायश्चित्तम् ॥

—*—

अथ प्रशंगात् कुष्माण्ड-गण-होमावुच्येते तौच,

2051. (तद्यथा) जमदग्नि प्रोक्त-कुष्माण्ड-होमविधिः प्रदर्श्यते ।
अथातः सम्प्रवक्ष्यामि कुष्माण्डविधिमुत्तमम् ।
एनसां स्थूल-सूक्ष्माणां प्रायश्चित्तन्तु वैदिकम् ॥२८४६॥
अकुर्वन् विहितं कर्म्म निन्दितञ्च समाचरण् ।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तो भवेद् द्विजः ॥२८४७॥
योवाऽभ्युदयकामः स्यात् सोऽपि ह्येतत् समाचरेत् ।
अमायां पौर्णमास्यां वाऽन्यस्यान्तु तिथावपि ॥२८४८॥
केशश्मश्रुवापयित्वा स्नात्वा पुण्यजलाशये ।
आज्यभागानन्तरंहि कुष्माण्डैर्जुहुयाद्घृतम् ॥२८४९॥
'यद्देव' इत्यनुवाकैश्च त्रिभिर्हुत्वाज्यमन्वहम् ।
'वैश्वानराये'त्येताभि स्तमग्नि मुपतिष्ठते ॥२८५०॥
कर्म्मादिष्वेतैर्जुहुयात् पुनः स्वर्गं समश्नुते ।
सम्वत्सरं ब्रह्महातु मासं वै वीरहो द्विजः ॥२८५१॥
चतुर्व्विंशति रात्रीस्तु परिवेत्तापि दीक्षितः ।
द्वादश त्वग्रेदिधीतः षड्रात्रीः श्यावदन्त्यपि ॥२८५२॥
तिस्रोरात्रीश्च कुनखी दीक्षितो भवति द्विजः ।
अत्र दीक्षितो व्रतस्थ इत्यर्थः १(*) ।

---

१(*) 'द्विज' इत्यत्रनर इति भिन्नः पाठः। कुष्माण्डैर्होममन्त्रादि। तद्धोममन्त्राः पश्चादुच्यन्त इत्यन्यत्रापि। अन्यत्र दीक्षितः गुरुतो मन्त्र दीक्षितः मन्त्र—शास्त्रतः। अन्यत्रोपनीतः, असमावृत्तः यद्वा दीक्षितसङ्कल्पोवेति। अत्रान्यस्यांमिकादश्यादि शुभतिथौ ज्योतिः शास्त्रोक्तायामपि। अत्र 'वीरहा' इत्यन्यः पाठः।

" अत्र ज्येष्ठानुजयोर्व्विवाहव्यतिक्रमी, परिवेत्ता, परिवित्तीति दुष्टः स्यात्। अन्यत्र परीवाद कर्त्ता।

एकस्मिन्दिवसेऽप्येककर्म्मचैतत् समाचरेत् ।
नोर्द्धंशयीत खट्टायां जुगुप्से(प्से)तानृताद्‌द्विजः ॥२८५३॥
पयोव्रतं ब्राह्मणस्य यवागूः क्षत्रियस्य च ।
आमिक्षाचैव वैश्यस्य प्रायश्चित्तार्थ मिष्यते ॥२८५४॥
साविर्त्री प्रजपेन्नित्यं पवित्राणि च शक्तितः ।
पुंसूक्तादीणि १(*) सूक्तानि शुद्धयन्त्येवं भवेद्विजः २(†) इति ॥

## प्रथमानुवाके,—

### अथास्य प्रयोगः प्रतन्यते ।

शुद्धिकामोद्विजोऽमावास्यायां पौर्णमास्यामन्यस्यांवा, तिथौ पूर्व्वाह्ने-केशश्मश्रु-नखलोमाणि वापयित्वा, तीर्थे स्नात्वा, नित्यकर्म्माणि-निर्व्वर्त्य, आचमन-मन्त्रप्रोक्षण-पुण्याहवाचनानि कृत्वा, स्थण्डिलमुपलिप्य, स्वगृह्योक्तविधिनाऽग्निं प्रतिष्ठाप्य, अमुकप्रयोजन-सिद्धयर्थम् कूष्माण्डहोमं करिष्य इति संकल्प्य, यथा स्वशाखं ब्रह्मोपवेशनाद्याज्यभागान्तं कर्म्म कृत्वा, 'यद्देवादेवहेड़नम्' इत्यादि-भिस्तैत्तिरीयार-
2052. ण्यक( पद्धत्युक्त )—त्रिभिरनुवाकैः प्रतिमन्त्रं सस्नुवाज्यं जुहुयात् ।
तत्र यद्देवा इत्येक विंशति ऋचः ( मन्त्रस्य ) ३(‡) प्रथमानुवाकस्य ब्रह्मास्वयम्भुः ऋषिर्लिङ्गोक्तादेवताः, आद्यानां चतसृणामनुष्टुप्छन्दः पञ्चमीत्रिष्टुप्, षष्ठीषडवसानातिजगती, सप्तमी जगती, अष्टमी त्रिष्टुप्, नवमीषट पदा जगती, दशमी बृहती । ततोद्वे षट्पदे शर्क्यौ, त्रयोदशी त्रिष्टुप्, चतुर्द्दशी सप्तपदाउष्णि(ष्ट)क्, पञ्च दश्यनुष्टुब्, षोड़शी अनुष्टुब् विराट्, सप्तदशी गायत्री । तत त्रिस्त्रस्त्रिष्टुभः एक विंशत्यनुष्टुभः । एभिः आज्य होमे विनियोगः ॥

### अथ मन्त्राः—

षोड़शी अनुष्टुब् विराट्, यद्देवा देव हेड़नं देवास श्च कृमा वयम् ।

---

१(*) 'पुरुष सूक्तानि' इत्येवं भिन्नः पाठः । शुक्ल यजुः २०।१४ । एवं पश्चात् सर्व्व मन्त्रान्ते समर्पणम् ।

२(†) 'शुद्धयत्येवं भवेत्' इत्यमपि पाठान्तरमस्ति ।

३(‡) शु, यजुः २०।१४ ।

यजुर्व्वेदः सं २०।१४।१५।१६।१७। 'अग्नि वायु सूर्य्य दैवत्यास्तिस्रोऽनुष्टुभः कुष्माण्डो संज्ञाः भवन्ति' । २० अः, मन्त्राः । अत एभिश्छन्दोभिर्मन्त्र लिङ्गादिभिश्च ।

अग्निर्मा तस्मादेनसो विश्वामुञ्चन्त्वंहसः ॥
आदित्येभ्य इदं न मम । एवमुत्तरत्रापि ज्ञेयम् (१) ।

## अथ प्रथमानुवाकः—

देवा जीवनकाम्या यद्वाचाऽनृतमोदिम । तस्मान्न इह मुञ्चत विश्वेदेवाः सजोषसः स्वाहा, विश्वेभ्योदेवेभ्यः (२) । ऋतेन द्यावापृथिवी ऋतेन त्वं सरस्वति । कृतान्नः, पाह्येन सोयत् किञ्चानृतमूदिम द्यावापृथिवीभ्यां सरस्वत्यै च स्वाहा । (३) इन्द्राग्नी-मित्रावरुणौ सोमोधाता बृहस्पतिः । त्वेनोमुंचन्त्वेनसोयत्किञ्चानृतमोदिम स्वाहा । (इन्द्राग्नीमित्रावरुणौ सोमोधाताबृहस्पतिः) (४) सजातशं सादुत जामिशहं साज्यायसः क्शंशादुतवा कनीयसः । अनाधृष्टं देवकृतं यदेनस्तस्मात् त्वमस्माज् जातवेदोमुमुग्धि स्वाहा जातवेदसे (५) यद्वाचा यन्मनसा बाहुभ्यामूरूभ्यामष्ठीवद्भ्या-उँशिश्नैर्यदनृतञ्चकृमावयम् । अग्निर्मातस्मादेनसोगार्हपत्यं प्रमुञ्चतु च कृम यानिदुष्कृतां इति स्वाहागार्हत्याग्नये (६) येन त्रितो अर्णवान्निर्वभूव येन सूर्यं तमसोनिरमोचि येनेन्द्रोविश्वाअजहादराती स्तेनाहं ज्योतिषाज्योतिरा न शानशान अयाद्ति साहा अग्नये (७) यत् कुसीदमप्रतीतं मयेह येन यमस्य निधिना चरावः । एतत्तदग्ने अनृणोभवामि जीवन्नेव प्रतिहस्तानृणामि स्वाहाग्नये (८) यन्मयि माता गर्भेसति । एनश्चकार यत् पिताअग्मिन्मातस्मादेनसः गार्हपत्यः प्रमुञ्चतु, दुरितामानिपुकाम करोतु मामग्नेनस्वाहाअग्नये (९) यदापिपेष मातरं पुत्रः पितरं प्रमुदितोधयन् अहिगुंसितौत्रौ तयदग्ने अनृणोभवाम्यहतौ पितरौस्वाहा अग्नये (१०) यदन्तरीक्षं पृथिवीमुतद्यां यण्मातरं पिततरं वा जिहिगुंसिम । अयं तस्माद्द गार्हपत्योनो अग्निरुदिन्नयति सुकृतस्य लोकम् ( सोपितरौघयातत ।

---

(१) मै, सं, ४।१४।१७२४२ ।
(२) तै, आ, २।३ । —२४७ । —२४९ ।
(३) मै, सं, ४-१४-१७५ ।
(४) मैं, सं, ४।१४।१७२१४ ।
(५) तै, आ, २-३-५ ।
(६) वा, वै, सं—१३।११ । (७) ६।१२०।१ । (८) तै, ब्रा, ३-७-१२।३ ।
(९) शु, यः, सं—१९-११ । (१०) अथर्व, सं—६।१२०।१ ।

तदग्ने अनृणोभवामिस्वाहा ) अग्निर्मातस्मा देनसोसं स्वाहा गार्हपत्याग्नये (११)। वदाशसानिशसायत् पराशसा। यदेन श्चकृने मा नूतनंयत् पुरा राणम् अग्निर्मातस्मा देनसोगार्हपत्यः प्रमुञ्चतु स्वाहा गार्हपत्याग्नये (१२)। अतिक्रामामिदुरितं यदेनः जहामिरिप्रं परमे सधस्थे। यत्रयंति सुकृतोनापि दुस्कृतः तमारोहामि सुकृतांनु लोकं स्वाहाग्नये (१३)। त्रिते देवा अमृजतै तदेनः। त्रितन्नतद्मनुष्येषु तद्म। मृजे ततोयदि त्वाग्राहिरानशेतांतेदेवा ब्रह्मणा नाशयन्तु स्वाहा गार्हपत्याग्नये (१४)। दिविजाता समुद्रजः सिन्धुतः सपर्य्याभृतः। सनोहिरण्यजाः शङ्ख आयुष्प्रतरणोमणिः (१५)। इमं मे वरुण श्रुधीहवमद्या (घा) च मृड़य। त्वामस्यु राचके स्वाहा वरुणाय (१७)। तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेड़मानोवरुणे हवोध्युरुशंसमान आयुः प्रमोषीः स्वाहा वरुणाय (१८)। त्वन्नोऽग्ने वरुणस्य विद्वान् देवस्य हेड़ोऽवयासि सीष्ठाः। यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहाऽग्निवरुणाभ्याम् (१९)। सत्वंनो अग्नेऽवमोभवोतिनेदिष्ठो अस्या उषसोव्युष्टौ अवयक्ष्वनो वरुणं वराणो वीहिमृड़ीकं सुहवोन एधिस्वाहाग्नीवरुणाभ्याम् (२०)। त्वमग्नेऽयासि अयासन्मनसाहितः। अयासन् हव्यमूहिषे। अयानोधेहि भेषजं स्वाहा (२१) इति प्रथमोऽनुवाकः। आदित एकविंशतिसंख्यकाः।

—*—

## अथ द्वितीयानुवाकः, यददीव्यमिति,—

—*—

द्वितीयानु वाकस्य त्रयोदशर्चस्य ब्रह्मा स्वयम्भूऋषिः तत्तन्मन्त्रोक्ता-देवताः आद्या प्रस्तारपङ्क्तिः (यः) द्वितीया द्याश्चतस्त्रिष्टुभः दशम्य

---

(११) तैः ब्रा, ३।७।१२।११। (१२) तैः ब्रा, ३।७।१२।१२।

(१३) अ, वे, सं, ४-१०-४। (१४) मै, सं, ४।१४।१७।२२।

(१५) अ, वे, सं ४-१-४। (१६) तै, ब्रा, २-४-१-१३। (१७) ऋ, वे, वे, सं, २।१।४।

(१८) मैं, सं ४।१४।१७।२५२। (१९) मै, सं २५३। (२०) ऋ, सं ४।१।५।

(२१) दिविजातः समुद्रजः सिन्धुतस्पर्य्याभृतः। सनोहिरण्यजाः शङ्ख आयुष्प्रतरणो मणिः। अथर्व—सं ४।१।४।

नुष्टुप् , एकादशी चतुष्पदोष्णिक् , द्वादश्यनुष्टुप् , त्रयोदश्यनुष्टुप् , आज्यहोमे विनियोगः । (अ॑) यददीव्यन्नृणमहं बभूवादित् सन्वासं-जगर-जनेभ्यः । अग्निर्मातस्मादिन्द्रश्च संविदानौ प्रमुञ्चतां स्वाहा-ग्नये ॥१॥ यद्धस्ताभ्यांचकर किल्बिषाण्यक्षाणां वग्नुमुपजिघ्नमानः । उग्रं पश्याच राष्ट्रभृच्च तान्यपसरसावनुदत्ता मृणानि स्वाहाऽक्षरे [णे]भ्यः ॥२॥ उग्रं॑ पश्ये राष्ट्रभृत् किल्बिषाणि यदक्षवृत्तमनुदत्त मेतत् । नेन्नऋणानृणवइत् समानो यमस्य लोके अधिरज्जुराय स्वाहा मन्त्रोक्त देवतायै ॥३॥ अवते हेडोवरुणोनमोभिरव यज्ञेभिरीमहे हविर्भिः क्षयन्नस्मभ्य मसुरप्रचेताराजन्नेनांसिशिश्रथः कृतानि स्वाहा वरुणाय ॥४॥ उदुत्तमं वरुण पाश मस्मदवाधमं विमध्यसं श्रथाय । अथावयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा वरुणाय ॥५॥ इमं मे वरुण ॥६॥ तत्त्वायामि ॥७॥ त्वन्नोअग्ने ॥८॥ सत्वन्नो अग्ने ॥९॥ संकुसुको विकुसुको निर्ऋथोयश्च निः स्वनः, तेऽस्मदयक्ष्मद्मनागसो दूराद्दूरमचीचतं स्वाहा मन्त्रोक्तदेवताभ्यः ॥१०॥ निर्यक्ष्ममचीचते कृत्यां निर्ऋ॑तिं च । तेन योऽस्मत समृच्छातै तमस्मै प्रसुवामसि स्वाहा मन्त्रोक्त देवताभ्यः ॥११॥ हैसानु शङ्गाभ्यां घणोनानुघणै नच । तेनान्यो-ऽस्मत् समृच्छार्चै प्रसुवामसि स्वाहा मन्त्रोक्त देवताभ्यः ॥१२॥ संवर्चसा पयसा सन्तनुभिरगन्म हि मनसा सं शिवेन । त्वष्टा नोअत्र विदधातु रायोऽनुमार्ष्टु तन्वोऽयद्विलिष्टं स्वाहात्वष्ट्रे ॥१३॥ आदित स्त्रयोदशसंख्यकाः । इति द्वितीयोऽनुवाकः ॥

---

(१) तै, आ, २।४।१ । तै, आ । (२) तै, आ, २।४।३ ।
(३) ऋ, सं, १-२४-१४ । (४) ऋ, वे, १२।१२ ( ६।८ )—प्रायुक्ता मन्त्राः ।
(५) शु, यजुः—१२-१२ । (६) तै, आ, २।४।५ ।
(७) तै, आ, २।४।१२ । (८) मै, सं, ४-१४-१७-२५२ ।
,, ,, ,, ,, ,, ,, २५३ ।
(९) शु, यजुः, ९८।१६ । (१०) ५ (७।८) शु, यजः १८, ४९।२१-२ ।
(११) ऋ, सं, ४-१-४ । ,, ,, ,, ,, ,, ५ ।
(१२) तै, आ, २।४।५ ।
,, ,, ,, ,, ,, ,, ,, ,, २।४।१ तै, आ, ब्रा ।
(१३) सत्वं नो अग्ने वमो भवोति नेदिष्टो अस्या उषसोव्युष्टौ । अव यक्ष्णो वरुणं रराणो वीहि मृडीकं सुहवो न एधि ॥ वे, सं, २।४ । इति पूर्णं मन्त्रः ।

# अथ तृतीयानुवाकः आयुष्ट इति ।

—*—

तृतीयानु वाकस्य सप्तदशर्चस्य ब्रह्मास्वयम्भूः ऋषि लिङ्गोक्तादेवताः, आद्या अनुष्टुप्, द्वितीयातृतीये त्रिष्टुभौ, ततस्तिस्रोगायत्र्यः, सप्तम्यष्टम्यौ त्रिष्टुभौ, ततः षडनुष्टुभः । पंचदशीजगती, षोड़शी अनुष्टुप्, सप्तदशी पञ्चपदा, शर्कर्य्यत्यष्टिर्व्वा आज्यहोमे विनियोगः । (अं) आयुष्टेविश्वतोदधदयमग्निर्वरेण्यः । पुनस्तेप्राण आयाति परायक्ष्मङ्सुवामिते स्वाहाग्नये ॥१॥ आयुर्दा अग्ने हविषाजुषाणोघृत-प्रतीकोघृतयोनिरेधि । घृतंपीत्वामधुचरुगव्यं पितेवपुत्रमभिरक्षतादिमं स्वाहायुर्दाग्नये ॥२॥ इममग्नआयुषे वर्चसे कृधितिग्मोजोवरुणसं शिशाधि । मातेवास्माअदिते शर्म्मयच्छ, विश्वेदेवाजरदष्टिर्यथऽसत् स्वाहा मन्त्रोक्तदेवताभ्यः ॥३॥ अग्न आयूंषि पवस आसुवोर्ज्जमिषंचनः, आरे वाधस्व दुच्छुत्वनांस्वाहाग्नये ॥४॥ अग्ने पवस्वस्वपा अस्मैवर्च्चः सुवीर्य्यं, दधद्रयिंमयिपोषं स्वाहाग्नये ॥५॥ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे सहागयं स्वाहाग्नये ॥६॥ अग्नेजातान् प्रणुदानः सपत्नान् प्रत्यजातान् जातवेदोनुदस्व । अस्मैदीदिहि सुमनाअहेडन्च्छर्म्मन्तेस्यामत्रिवरूथ उद्भौ स्वाहाग्नये जातवेदसे ॥७॥ सहसाजातान् प्रणुदा नः सपत्नान् प्रत्यजातान् जातवेदोनुदस्व । अधिनोब्रुहि सुमनस्यमानोवयंस्यामप्रणुदा नः सपत्नान् स्वाहा जातवेदसे ॥८॥ अग्ने योनोऽभितोजनोवृकोवारोजिघांसति । तांस्त्वंवृत्रहन्जहि वस्वभ्यं । माभर स्वाहाग्नये ॥१०॥ योनः शपादशपतोयश्चनः शपतः शपात् । उषाश्च तस्मैनिम्लुक् च सर्व्वंपापं समूहतां 'पाहोस्वसेनिम्लुत्रे' ॥११॥ योनः सपत्नोयोरणोमर्त्तो-ऽभिदासति देवाः । इध्मस्येच प्रत्तायतोमातस्योच्छेषि किञ्चन । स्वाहा देवेभ्यः ॥१२॥

---

(१) तै, आ, २।५ । (२) तै, आ, =।५ २ ।

(३) —तै, आ, २।५।२१ । (४) अ, वे, सं, १।३५ ।

(५) तै, आ, २।५।८ । (६) तै, आ, २।५ ।

(७) तै, आ, २।५।११।१२१ । (८) ,, ,, १२ ।

(११) ६, २, कुवादर्श अधिकः पाठः ।

योमां द्वेष्टि जातवेदोयंचाहं द्वेष्मि यश्चमाम्। सर्व्वांस्तानग्ने-संदहमाउं श्चाहंद्वेष्मि ये च मां स्वाहाग्नये जातवेदसे ॥१३॥ योऽस्मभ्यमरातीयाद्यश्च नोद्वेषते जनः। निन्दाद्यो अस्मान्दिप्साच सर्व्वां स्तान्मष्मषा कुरु स्वाहा मन्त्रोक्तदेवतायै ॥१४॥ संशितं मे ब्रह्म सं शितं वीर्य्यं वलं। सउं शितं क्षत्रंमेजिष्णु र्यस्याहमस्मि पुरोहितः स्वाहा मन्त्रोक्त-देवतायै ॥१५॥ उदेषां वाहूअतिरमुद्वर्चो अथोवलम्। क्षिणोमि ब्रह्मणामित्रा नुन्नयामि स्वां अहं स्वाहा मन्त्रोक्तदेवतायै ॥१६॥ पुनर्मनः पुनरायु र्मआगात् पुनश्चक्षुः पुनः श्रोत्रं मआगात् पुनः प्राणः पुनराकुतंम आगात् पुनश्चित्तं पुनराधीतं मआगात् वैश्वानरो मे अदब्ध स्तनूपाअववाधतां दुरितानि विश्वा स्वाहा वैश्वानराय ॥१७॥

## इति तृतीयोऽनुवाकः ॥

एव मनुवाकत्रयेण स्रुवाज्यं प्रतिमन्त्रं हुत्वा यजमानोऽग्नेर्दक्षिणतः समित्पाणिरुदङ्मुखस्तिष्ठेत्। 'वैश्वानरमा प्रतिवेदयामः' इतिसूक्तेन अग्निमुपतिष्ठेत। अस्य द्वादशर्चस्य सूक्तस्य ब्रह्मा स्वयम्भूऋषिः लिङ्गोक्ता वैश्वानराद्या देवताः, आद्येद्वे त्रिष्टुभौ, तृतीया चतुर्थ्यावनु-ष्टुभौ, ततस्तिस्रस्त्रिष्टुभोऽष्टमी पंक्तिः, ततोद्वे त्रिष्टुभौ एकादशीद्वा-दश्यौपञ्चपदे शर्क्वर्य्यौ, अग्न्युपस्थाने विनियोगः। अं, वैश्वानराय, प्रतिवेदयामो, यदीनृणं सँगरोदेवतासु। सएतान् पाशान् प्रमुचन्प्रवेदसनोमुञ्चातु दुरितादवद्यात् ॥१॥ वैश्वानरः पवयान्नः पवित्रै र्यत् सगरमभि धावाम्याशाम। अनाजानन्मनसायाचमानो यदत्रैनो अवतत् सुवामि ॥२॥ अमीये सुभगे दिवि विचृतौनाम तारके। प्रेहामृतस्ययच्छतामेतद्वद्धक मोचनम् ॥३॥ विजिहीर्ष्वलोकान् कृधि वंधान्मुञ्चासिवद्धकं। यो योनेरिव प्रच्युतोगर्भः स र्वान्पथो अनुष्वम् ॥४॥ सप्रजानन् प्रतिगृभ्णीत विद्वान् प्रजापतिः प्रथमजा-ऋतस्य। अस्माभिर्दत्तं जरसः पुरस्तादच्छिन्नं तन्तु मनुसञ्चरेम ॥५॥

---

(१३) तै, आ, १४।
(१४) तै, आ, १५।
(१) तै:, आ:, २।६।१।
(२) तै:, आ:, २।६।२।
(३) तै:, आ:, २।६।३।
(४) तै:, आ:, २।६।४।
(५) तै:, आ:, २।६।५।

ततं तन्तुमन्वेके अनुसञ्चरन्ति, येषां दत्तं पित्र्यमायनवत्। अबंध्वेकेदददतः प्रयच्छा-दातुंचेच्छक्नवाङ्स स्वर्गएषाम् ॥६॥ आरभेमनु संरभेथाङ्समानं पंथामवथोघृतेन। यद्वां पूर्त्तंपरिविष्टं यदग्नौ, तस्मैगोत्रायेहजायापती संरभेथां ॥७॥ यदन्तरीक्षं पृथिवीमुतद्यां यन्मातरं पितरं वा जिहिङ्सिम। अयं तस्माद् गार्हत्योनो अग्निरुदिन्नयाति सुकृतस्य लोकम् ॥८॥ भुमिर्माताऽदितिर्नो जनित्रं भ्रातान्तरिक्ष मभिशस्त्य नः। द्यौर्नः पिता पितृयाच्छम्भवाणि जामि मित्वामाविवित्सिलोकात् ॥९॥ यत्र सुहार्द्दः सुकृतोमदन्ते-विहायरोगं तन्वांस्वायाम्, अश्लोणाङ्गैरह्रुताः स्वर्गे तत्र पश्येम-पितरञ्च पुत्रम् ॥१०॥ यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुतवाऽ-करिष्यन्। यद्देवानां चक्षुष्यागो अस्तियदेव किञ्च प्रतिजग्राह-मग्निर्मातस्मादनृणं कृणोतु ॥११॥ यदन्नमद्मि बहुधाविरूपं वासोहिरण्यमुतगामजामविम्। यद्देवानां चक्षुष्यागो अस्ति यदेव किञ्च प्रतिज ग्राहमग्निर्मातस्मादनृणं कृणोतु ॥१२॥ एव मग्निमुपस्थायोपविश्य, यन्मयेति ऋचा समिधमग्नावादधीत। अस्या ब्रह्मा स्वयम्भूऋषिः अग्निर्देवताऽनुष्टुपच्छन्दः समिदाधाने विनियोगः। यन्मया मनसा वाचा तामनः कदाचम, सर्व्वस्मात्तस्मात्ततो-जयात्यातानौ(ग्नौ)राष्ट्रभृतोहोतव्याः ॥ वाजसनेयीयानान्तु—आदौ राष्ट्रभृतः पश्चाज्जयाव्याताहोमौ (११)। ऋग्वेदिनामेते नसन्त्येव। ततः स्विष्टकृत् प्रायश्चित्तादिकर्म्मशेषं, यथा शाखं समापयेत्। इदन्तु कर्म्म यावन्ति व्रत दिनानिस्यु स्तेषु प्रतिदिन मावर्त्तनीयम् ॥ अत्र मांसाशी नस्यात्, स्त्रियं नोपेयात्, नखट्टाशायीस्यान्नात्महेतुत्वया भक्षी, ब्राह्मणोयवाग्वाशी, क्षत्रियश्चामीक्षाशी, वैश्यश्च स्यात्। यथा शक्ति गायत्रींजपेत्, पवित्राणि च सूक्तानि यावद् व्रतादिकं चरन् वैदिक प्रायश्चित्तेन निष्पापो भवति। काम्यकर्म्मस्वधिकारी भवति' इत्याह भारद्वाजः ॥ बौधायनोऽत्र चरुहोममधिकमाह, तथाच तत्सूत्रम्। अथ कूष्माण्डै जुहुयाद्योऽपूत इव मन्येत, यथास्तेनो

(६) तै:, आ:, २।६।७।
(७) तै:, आ:, २।६।७।
(८) ऋ, वे, सं, ६।१२७।१।
(९) तै:, आ:, २।६।१०।
(१०) तै:, आ:, २।६।११।
(११) तै:, आ: २।६।१२।
(११) वाजसनेयीयानां शाखिनां विप्राणां पक्षे इति।
(१२) तै, आ, २।६।१२।

यथा भ्रूणहैव मेष भवति योग्यो नोरेतः सिञ्चति, यदर्व्वाचीन-मेनोब्रह्महत्यायास्तस्मान्मुच्यते । योवाऽपवित्रकामोऽमावास्यायाम्, पौर्णमास्यांवा केशश्मश्रू-त्यक्त्वा, ब्रह्मचारिकल्पेन व्रतमुपैति, सम्वत्सरं मासञ्चतुर्विंशतिं ( दिनानि ), द्वादश षट्स्तिस्त्रोवाःरात्रीः, न मांसमश्नीयान्नस्त्रियमुपेयान्नोपरि शयीत, सत्यंन जुगुप्सेत १(*) नानृतान् सेवेत् पयोव्रतः । यतिरिति प्रथमः कल्पोयावकञ्चोपभुञ्जीत, कृच्छ्रान् द्वादशरात्रं वाचरेत्, भिक्षेतवा तद्विविधिषु यवागूमिति । राजन्यस्यामीक्षाम्, वैश्यस्य यदिमन्येत यदस्यामामाञ्जोदनं धानाः शक्तून् घृतमित्यनु व्रतये दात्मानोऽनुपदासायेति । ब्राह्मणः पाकयज्ञीयधर्म्मेणाग्निमुप २(†) समाधाय, संपरिस्तीर्य्य परिधि-निधान प्रभृत्याग्निमुखान्तं कृत्वा, सावित्रीं पुरोऽनुवाक्या मनूच्य सावित्र्या पक्वेन जुहोति॥ अथस्विष्टकृतं हव्यवाहमभिमाति । सहेड् रक्षोणं पृतनासुजिष्णुं ज्योतिष्मन्तं दीद्यतं तुरधिमग्निस्विष्ट-कृतमाहवे योऽयमित्यनूच्य स्विष्टाग्ने अभितत् पृणीहि विश्वादेय-पृतनाजिष्णूं ज्योतिष्मन्तं दीद्यतन्तुरधिमग्निङ् स्विष्टकृतमाह अनिष्प उरुनः पन्थां प्रदिशण्विभाहि ज्योतिष्मान् धेह्य जयन्न आयुरिति याज्य-माचरुशेषं जुहोत्यथ कुष्माण्डैः ३(‡) यद्दैवा देवहेड़नं द्रव्वन्नृणमहं-त्रमूवायुष्टे विश्वतोदधदित्येतै स्त्रिभिरनुवाकैः प्रतिमन्त्र माज्यं हुत्वा सिंहे व्याघ्र इति चतस्रः स्रुवाहूतयः ४(ऽ) । अग्नेऽभ्यावर्त्तिन्नग्ने अङ्गिरः, पुनरुर्ज्जा सरय्येतिच हुत्वा, समित्पाणिर्यजमानोऽग्नेर्दक्षिणतो-ऽवस्थाय । 'वैश्वानराय प्रतिवेदयाम' इति द्वादशर्च्चेन सूक्तेनोपतिष्ठते, यन्मयायनसेति समिधमादाय वरं ददाति, जय प्रभृति सिद्धमाद-दीता, इत्याह भगवान् बौधायन इति॥ एवं सत्यनयोगुरुलघु-कल्पयोः, सर्व्वशाखाधिकरणन्यायेन बहुभिर्निरूपितः । कुष्माण्ड-गणहोम एक एवेति, गुणोपसंहारन्यायेनाविरुद्धाने कसाङ्गोपसंहारं-कृत्वैकः प्रयोगः कर्त्तव्यः । यद्वा, ५(॥) एनसि गुरुणि गुरूणि लघुनि

---

१(*) अवानुप वा सार्येति क्वचित् पाठः ।

२(†) 'ब्राह्मणः पापयज्ञेन' इति भिन्नः पाठः । 'कृष्णचेत' इत्यं भिन्नः पाठोऽस्ति :

३(‡) प्रागनुवाकैरुक्तैः कुष्माण्डी होममन्त्रः इति ।

४(ऽ) लघुनि लघु प्रायश्चित्तं बोध्यम् ।

५(॥ गापे गुरौ गुरु प्रायश्चित्तम ।

लघूनि प्रायाश्चित्तानि स्युरिति गौतमस्मरणात्। अपनोद्यपापाल्पत्वे लघुकल्पःस्वीकार्य्यः। इतरथा गुरूपत्तादर इति। यद्वा, शक्ताशक्तविषयत्वेन। अथवा, योऽन्य योनौ रेतः सिञ्चति। यश्च ब्रह्महत्यावर्ज्जं, गुरु प्रायश्चित्त-विषयाणि महापातकादीनि करोति, तस्य गुरुकल्पो यः पवित्रकामो योवाऽऽधानादि चिकीर्षुः तस्यलघुकल्प इतिवा व्यवस्थाऽत्र द्रष्टव्येति दिक्॥

—*—

## द्वितीयकल्पे विशेषोऽभिधीयते।

यथाशाखं वह्निस्थापन-चरु श्रपणाज्यभागान्तं कृत्वा चरुमभिघार्य्याविदानधर्म्मेणावदाय। गायत्र्या विश्वामित्रऋषिः सविता देवता गायत्रीच्छन्दः चरु-होमे विनियोगः, इत्यभिलष्य (अं) तत् सवितुरित्यादि प्रचोदयादोमिति, पुरानुवाक्यामनूच्य। पुनरपि सावित्रीमेवोक्तरीत्या पठित्वा १(*) स्वाहा सवित्रे इदं नममेति त्यक्त्वा, अथस्विष्टकृतेऽवदायहव्यवाहं स्विष्टग्नये इतिद्वयोः पुरोऽनुवाक्या याज्ययो र्विश्वेदेवोशेषयोरग्निः स्विष्टकृद्देवतानुष्टुब् विराट्च्छन्दसी स्विष्टकृद्धोमेविनियोगः। अथवाहमहुरेमोमित्यनूच्य स्विष्टमन आयुः स्वाहाऽग्नये स्विष्टकृते इदं नममेतित्यक्त्वा हुतशेषमग्नेः पुरस्तादश्वत्थपत्रेसु निदधीत॥ केचिदत्र स्विष्टकृतेऽवदाय स्थापयित्वा, कुष्माण्डैर्हुत्वा स्विष्टकृतं जुहुतीति महार्णवकारआह। कूष्माण्डानुवाकत्रय-होमानन्तरम्, सिंहे व्याघ्र इति चतसृभिर्ऋग्भिः स्रुवाहुतीर्जुहुयात्॥ २(†) तासां सोमऋषिः त्विषिर्देयतात्रिष्टुप्छन्द-आज्यहोमेविनियोगः ३(‡)। अं, सिंहेव्याघ्रउतया पृदाकौत्विषिरग्नौ ब्राह्मणेसूर्य्ये या। ज इन्द्रं यादेवी सुभगा जजान। सान पैतुवर्च्चसा संविदाना स्वाहात्विष्यै। पाराजन्ये दुन्दुभावायताषां अश्वस्य क्रन्धे पुरुषस्य मायौ इन्द्रं ये इत्यादि पूर्व्ववत, त्विष्यैपाहा॥१॥ या हस्तिणि द्वीपिनि या हिरण्येत्विषिरप्सुगोषु सा पुरुषेषु। इन्द्रं या देयी सुभगाजजानसानपैतुवर्च्चसा संविदाना स्वाहा त्विष्ये॥२॥

---

१(*) 'सावित्रमेव' इति पाठान्तरम्। 'पराजन्य' इति मूले नो लभ्यते।

२(†) अत्र पाठ व्यत्ययः। सिंहे-व्याघ्र, अ, वे. ६।३८।१। ३(×) अ, वे. ६।३८।१।

३(‡) अ, वे. ६।१३८।२। अत्र 'सहिरण्यानित्यं पाठान्तरम्। अत्र चत्वारी मन्त्रा अथर्व्वणाः।

रथे अश्वे ऋषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना स्वाहात्विष्यै ३(*) अग्नेऽभ्यावर्त्तिन्नभि चतसृणामग्निऋषिः अभ्यावर्त्ती अग्निर्देवता आद्या पञ्चपदोष्णिक् द्वितीयापञ्चपदासतीबृहती, इतरे द्वे गायत्र्यौ आज्यहोमे विनियोगः । अग्नेऽभ्यावर्त्तिन्नभिमानिवर्त्तस्वायुषां वर्चसा प्रजयाधनेन सन्यामेधया रय्यापोषेण स्वाहात्विष्यै ॥४॥ अग्नेऽभ्यावर्त्तिन्निति चतसृणामग्निर्ऋषिः अभ्यावर्त्ती अग्निर्देवताऽग्नयेऽभ्यावर्त्तिने, एव मुत्तरत्रापि त्यागः । अग्नेअङ्गिरः शतन्तेसंत्त्वावृतः सहस्रं त उपावृतः । तासां अधापोषस्य पोषेण पुनर्नोनष्ट माकृधि पुनर्णोरयि माकृधिस्वाहा ॥२॥ पुनरूर्जानिवर्त्तस्व पुनः रग्न इषायुषा पुनर्नः पाह्यंहसः स्वाहा ॥३॥ पुनरुर्ज्जानिवर्त्तस्व अथोवर्त्तस्य पुनरग्नइषायुषापुनर्नपाह्य (विश्वतः) हसः स्वाहा ॥४॥ सहर्जानिवर्त्तस्वाग्नेपिणुस्वधारया । विश्वफ्स्निया-विश्वपस्न्यरिस्वाहा ॥५॥ अथोपस्थानसमिदाधानादि पूर्व्ववदेव ॥

इति श्रीविधान पारिजाते पञ्चमस्तके
कुष्माण्डहोमविधानम् ॥

## अथ गणहोम विधानम् ।

—*—

तत्रापस्तम्बः प्राह, आधानस्यावा, काम्यानां कर्म्मणां वादौ पवित्रत्वादि-कामनावा, यदा तदैतत् कर्म्मकर्त्तव्यम् । येषु कर्म्मसु पतिपत्न्योः सहाधिकारस्तेषामाधानानामादौ, पत्नी सहितोऽन्यत्र पवित्रत्वादि-कामनादावेक एव, स्वयं यजमानो दर्भेष्वासीनः कृत्यारभमाणः प्राणानायस्यामुक प्रयोजनार्थं सप्ताहं ३(‡) सवनत्रयं गणहोमं

---

१(*) 'हवन त्रयम्' इति भिन्नः पाठः । ऋ, वे, ६।३८।३ ।

२(†) 'सिंहे व्याघ्र उतया पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या । इन्द्रं या देवी सुभगा जजान सानऐतु वर्च्चसा संविदाना' ऋ, वे, ६-३८, १ । तैः, आः, १-७ ।

ऋ, वेद, सं, ६।१२।१ ।

,, 'अथो वर्त्तस्य' इति भिन्नः पाठः । श्रीभवदेव भट्ट धृतः अन्यः पाठः ।

,, ,, ,, ॥

३(‡) पाठान्तरम्—

होष्यामीति संकल्प्य, स्वस्वगृह्यानुसारेणाग्निस्थापनप्रभृति स्थाली-पाकवत्तन्त्रम् । पात्रासादनकाले, प्रोक्षणीपात्रेणसह प्रणीतापात्रं तन्तुभिर्वेष्टित कलशञ्च प्रयुनक्ति । प्रणीताप्रणयनकाले प्रणीता (आनीता) साद्येकलशे सवित्रे अपआनीयो १पूय निदध्यात् । आज्यविलापन प्रभृत्यग्नि मुखान्ते कर्म्मणि कृते, चरौ घृतमानीय दर्व्यामुपस्तीर्य्य द्विरवदाय अभिघार्य्याग्निेन वेति षडर्च्चेन सूक्तेन, 'सहस्रशीर्षेति' अष्टादशर्च्चेन, 'अग्निर्मन्वेति' द्वा विंशतृचचेन च, मृगारसूक्तेण, 'यावामिन्द्रावरुणे'त्यनेन च(अनुवाकेन)मन्त्रैश्चतुर्भिं, 'यावामिन्द्रावरुणे' त्यनेनाष्टमन्त्रेण, 'पवमाणः सुव'रित्यने न चानुवाकेन, सप्तदशर्च्चेन, 'यद्देवादेव हेडन, मिति विंशतृचचेना... च्छिद्र पठितेनानुवाकेन, वैश्वानरोनउत्येत्यष्टम मन्त्रेण चैवमष्टभिर्मन्त्रैः प्रतिमन्त्रं जुहोत्यपिचासकृत्—अपहत्य जुहुयात । आद्यन्तम् । ततो जयोनवा जय पत्तेतु जयादीन कृत्वा स्विष्टकृतं जुहोति । तत्र सकृदुपस्तरणं सकृदवदानं द्विरभिघारणञ्च । ततश्चा वशिष्टं कर्म्म-यथा गृह्यं कुर्य्यात् । तस्य कर्म्मणः प्रायश्चित्ततार्थत्वे रक्ष्याः परिधयः प्रकारान्तरत्वेतु परिधि-(प्रहरणं) प्रकरणं भवन्मेवेति ॥ ततः कलशमादाय चतुष्पथं गत्वा, पादप्रक्षालनं कृत्वा, आचम्य प्राङ्मुख आसीनः कलशमादाय 'सिंहे मे मन्यु'रित्यनुवाकेन कलशे चात्मनश्छायां दृष्ट्वा पत्नीभिः सह कर्त्तृत्वे १(*) स्व स्वात्मनश्छायां दृष्ट्वा, सुमित्रीयानः आपऔषधयः सन्त्विति, भूमौ किञ्चिज्जलमानीय, दुर्म्मित्रीयास्तुतस्मै भूयासु'-रित्यादिना पृष्ठतः कलशं क्षिपेत् । यस्यामस्य दि शि द्वेष्यो भवति ॥ ततोऽप उपस्पृश्य गृहान् व्रजेत् । एवं सप्ताहं त्रिषु सवने कृत्वान्ते, आशीर्व्वचनं कारयेत् २(†) । तथा ब्राह्मण भोजनं कुर्व्वीत, सप्ताहं सवनत्रये मौनी व्रती सकृद्धविष्याशी यतेन्द्रियश्च भवेत् ॥ ब्राह्मणेभ्योभू-तिल-गो-वासो-हिरण्यानि दत्वा, सर्व्वेभ्यः पापेभ्यः प्रमुच्येत । महतः पातकादपि । काम्यानां कर्म्मणा माधानादि कर्म्मणाञ्च योग्यो भवतीति संक्रियाणा माचार्य्य-पितृ मातृणा-

---

१(*) तपोदीन्-इत्यन्यः पाठः । पुंसूक्तेन वा ऊर्जेन इति भिन्नः पाठः ।

२(†) 'प्रणीता पात्रस्योत्तर' इत्यं वा पाठः । 'त्रिषु हवनं कृत्वा' इत्यन्यः पाठः । अत्र हवन पञ्चत्यन्तु सारेण सर्व्वे होमा विधेयाः ।

" 'अग्नेनयसुपथा रायेऽस्मान् । विश्वस्यदेवः' इत्यादि सूक्तेन ।

मात्मनश्च कुर्य्यान्नान्यस्य। अन्यस्य कुर्व्वन्नश्यति। कारयित्वा तु सर्व्वस्मात् पापात् प्रमुच्यते। गणचतुष्टयं द्वयमेकं वा, जुहुयात्। जयी द्वादश पूर्व्वान् दशपरान् आत्मानञ्च एक विंशं यावच्च पश्यति, तावत् पुणाति। यत्र द्वारयति, यश्चैतदाह यस्मादेत दाह सोऽपीति॥ वौधायनस्तु,—सावित्र होम पूर्व्वकं गणहोममाह। तथाच तत् सूत्रम्—

**काम्यानां कर्म्मणा माधानस्य चादौ, यदा वा पवित्रा च कामना, तदा गणहोमं १(*) कुर्व्वीत।**

पूर्व्वाह्णेऽग्निं प्रतिष्ठाप्य, प्राणानायम्य सकल पापक्षयार्थम्, अशेष कर्म्मानुष्ठान योग्यता सिद्ध्यर्थं वा, गणहोममहं कारिष्ये। तत्र सविता देवता-धारवत्तन्त्रमित्यादिकं सङ्कल्प्य, सकृद्धोमान्तं कृत्वाऽवशिष्ट प्रभूतचरौ, प्रभूतमाज्यमासिच्य मेक्षणे नोपघातं जुहोत्यग्ने नयेति चर्चेन १(*) सूक्तेने त्याद्यत्रापि समानम्॥

## अथास्य प्रयोगः प्रदर्श्यते।

आधानं काम्य कर्म्मणि वा चिकीर्षु द्वादश वार्षिकादि महाप्रायश्चित्त-२(†) विषयभूत-पाप-निवृत्ति कामो वादौ, यजमानो नित्यकर्म्म निर्वर्त्य, पत्नी सहितः स्वयमेव वा, पवित्र-पाणिः दर्भेष्वासीनो देश-कालादि संकीर्त्य, अमुक प्रयोजनार्थं स(म) द्याहं सवन त्रये गणेशादि होमं होष्यामीति-संकल्प्याग्निं प्रतिष्ठाप्य, पात्रासादनकाले प्रोक्षणी पात्रेण सह प्रणीतापात्रम स्योत्तर तो निदधीत २(†)। ततो यथा शाखं चरुं श्रपयित्वाज्य भागान्तेऽभगं-भूत-सावित्रं ३(‡) चरु होमपक्षे चरुमवदान धर्म्मेणावदाय, कूष्माण्ड होमोक्त रीत्या गायत्रीं पुरोऽनुवाक्या मनूच्य, तामेव याज्यां पठित्वा स्वाहासवित्रे नम-मेत्युक्त्वा, प्रधानचरुहोमं कुर्य्यात्। चरौ प्रभूतं घृतमासिञ्चयाद् दर्व्यामुपस्तीर्य्य, द्विरवदायाभिघार्य्याग्नेनयेत्यादिभि रष्टभिर्गणै-रष्टोत्तरशतं प्रति मन्त्रं जुहुयात्॥ यद्वा सकृत् सकृदपहत्य मेक्षणेन

---

१(*) गणहोम,—श्रुति प्रमाणं यथा, 'गणानांत्वागणपतिम्' 'मयोपाभिन्त: सगणोमरुद्भिः'। मरुतोगणाः। रुद्रगणाः। देवगणाः, एवं भूपाभावे प्रजागणो राष्ट्रं पालयेत्। इति। प्रागुक्तमेतत् सूक्तम्।

२(†) प्रायश्चित्तविषये प्रागुक्तम्।

३(‡) 'अभङ्गसिद्भूतं' इत्यन्य: पाठ:।

जुहुयात् । यद्वा सकृत् सकृदपहत्य मेक्षणेनजुहुयात् (१) ॥ अथ प्रथमगणस्य 'अग्नेनय' इति षडृर्चस्य विश्वेदेवा ऋषयः अग्निर्देवता त्रिष्टुप्छन्दः चरुहोमे विनियोगः ।

(ओं) अग्ने नय-विधेम स्वाहाग्नये ॥१॥ प्रवः (धः) शुक्राय जिगाति स्वाहाग्नये ॥२॥ अच्छागिरोमानुषाणां स्वाहाग्नये ॥३॥ अग्ने त्वमस्मयजत्र स्वाहाग्नये ॥४॥ अग्नेत्वं याशंयोः स्वाहाग्नये ॥५॥ प्रकारयोऽकृताची स्वाहाग्नये ॥६॥ सहस्रशीर्षेति द्वितीयगणस्याष्टा-दशर्चस्य, प्रजापति-ऋषिः जगद्वीजः पुरुषोनारायणोवादेवता, आदितः पञ्चदशानुष्टुभः, ततस्तिस्रस्त्रिष्टुभश्चरुहोमे विनियोगः ।

ओं सहस्रशीर्षाङ्गुलं स्वाहा पुरुषाय नारायणायवा इदं नमम एवं सर्व्वत्र ॥१॥ पुरुषःतिरोहति स्वाहा ॥२॥ एतावान् दिवि स्वाहा ॥३॥ त्रिपादूर्ध्वभिस्वाहा ॥४॥ तस्माद्विराड्पुरः स्वाहा ॥५॥ यत् पुरुषेणहविः स्वाहा ॥६॥ सप्तास्या-पशुं स्वाहा ॥७॥ तं यज्ञंये स्वाहा ॥८॥ तस्माद्यपे स्वाहा ॥९॥ तस्माद्यज्ञात् सर्व्वहुत शजायत स्वाहा ॥१०॥ तस्मादश्वायः स्वाहा ॥११॥ यत् पुरुषं व्यते स्वाहा ॥१२॥ ब्राह्मणोऽजायतस्वाहा ॥१३॥ नाभ्यां-यत् स्वाहा ॥१४॥ वेदाह-दास्ते स्वाहा ॥१५॥ धातागुविद्यते स्वाहा ॥१६॥ यज्ञेन पथा स्वाहा ॥१७॥

(क) अग्नेर्मण्व इति तृतीयगणस्य द्वाविंशर्च्चस्य मृगारसूक्तस्य चतुर्दशीपथ्या वाऋषयेङ्गोक्तादेवताः आदितः सप्तोपरिष्टाज्जोतिषः अष्टमीचतुष्पदा पङ्क्तिः पञ्चोपरिष्टाज्जोतिषः, चतर्दशीपथ्या, पञ्चदशी षोड्श्यावनुष्टुभौ, सप्तदशी गायत्री, अष्टादशीत्रिष्टुप्, ऊनविंशीचोपरिष्टाज्जोतिषौ, अन्त्ये द्वे त्रिष्टुभौ, चरुहोमे विनियोगः (२) ।

(अ) अग्नेर्मन्वे हसः स्वाहाग्नये ॥१॥ यस्येदं हसं, स्वाहाग्नये ॥२॥ इन्द्रस्य मन्वे हसः स्वाहेन्द्राय ॥३॥ ग्रामं नयति हसः स्वाहेन्द्राय ॥४॥ मन्वेवं मित्रावरुणा मागसः स्वाहा वायु सूर्य्याभ्यां ॥५-६॥

---

(१) अत्र यद्वेति सन्दर्भान्तरे पक्षान्तरोक्तिः ।

(२) अवहवनीय मन्त्राणां आर्षच्छन्द स दैवताः सर्व्वाः प्रागुच्यन्ते । पुरुषसूक्तानि शुक्ल यजुर्व्वदे सर्व्वाणि सन्ति ।

(२) अ, वे, सं, ३।११।७१ ।

(३) अ, वे, सं ।

(४) मै, सं, २, १६, ७४ ।

(६) अ, वे, सं, ३, १६, ७१ ।

उपश्रेष्ठा मगसः स्वाहावाशुसूर्य्याभ्याम् ॥७-८॥ रयीतमौ रथीनांसः स्वाहाऽश्विभ्याम् ॥९॥ आदयातं वहतुंरगसः स्वाहा अश्विभ्याम् ॥१०॥ यदिदमाभि शोचति, हसः स्वाहा विश्वेभ्यो देवेभ्यः ॥१४॥ अनुनोद्या नुयमति मः स्वाहानुमत्यै ॥१५॥ हव्यवाहनायाग्नयेच ॥१६॥ अन्विदमनुमतेतरिषः स्वाहानुमत्यै ॥१७॥ वैश्वानरोनऊत्या, स्वाहाग्नये ॥१८॥ पृष्टोदिविक्तंस्वाहावैश्वानरायाग्नये ॥१९॥ ये अप्रथेतां, हसः स्वाहाद्यावापृथिवीभ्याम् ॥२०॥ उर्व्वीरोदसीः हसः स्वाहा द्यावापृथिवीभ्याम् ॥२१॥ यत्तेवयं गङ्गे (ग्ने)स्वाहाग्नये ॥२२॥ यथाहत्य द्वसवो आयुः स्वाहाग्नये ॥२३॥

(च्छ) या(पा)मिन्द्रावरुणेति चतुर्थगणस्य चतुर्मन्त्रस्य विश्वेदेवा ऋषयः इन्द्रावरुणौ देवते सर्व्वाणि यजूं(यजुंषि)षिचरुहोमेवि नियोगः॥ अयावामिन्द्रां वरुणायतव्याः तं स्वाहा इन्द्रावरुणाभ्याम् ॥१॥ यावामिन्द्रा वरुण सहस्यातं स्वाहेन्द्रा वरुणाभ्याम् ॥२॥ यावा मिन्द्रा वरुणारक्षस्यातं स्वाहा इन्द्रावरुणाभ्याम् ॥३॥ यावामिन्द्रावरुणेतेजस्यातं स्वाहा इन्द्रावरुणाभ्याम् ॥४॥ (च्छ) यावामिन्द्रा वरुणेति पञ्चमहागणस्याष्टमन्त्रस्य विश्वेदेवा ऋषयः, इन्द्रावरुणौदेवते सर्व्वाणियजूंषि चरुहोमेविनियोगः। अयोवा मिन्द्रावरुणावग्नोस्रामवयजे स्वाहेन्द्रावरुणाभ्याम् ॥

एव मुत्तरत्रापि ॥१॥ योवामिन्द्रावरुणाद्विपात् सुजेस्वाहा ॥२॥ योवामिन्द्रावरुणाचतुष्पात् सुजेस्वाहा ॥३॥ योवामिन्द्रावरुणा गोष्टेजेस्वाहा ॥४॥ योवागृहेषुजेस्वाहा ॥५॥ योवास्रुस्रामजे स्वाहा ॥६॥ योवाणोवध्यपु जे स्वाहा ॥७॥ यावावनस्पतिपुजे स्वाहा ॥८॥ (च्छ) पवमानः सुपंजन इति षष्ठगणस्य सप्तदशर्चानुवाकस्य सोमऋषिः लिङ्गोक्तादेवताः पावमान्यो वा देवता, आद्येद्वे गायत्र्यो, तृतीयानुष्टुप्, ततो द्वेगायत्र्यौ, षष्ठीविराट्, सप्तमीत्रिष्टुप, ततः सर्व्वा अनुष्टुभः। चरुहोमेविनियोगः॥

अं, पवमानः सुर्जनः मास्वाहा पावमान्योएव मुत्तरत्रापि ॥१॥ पुनन्तु मा त्रिष्टुप्, ततः सर्व्वा अनुष्टुभः। चरुहोमे विनियोगः॥ म

---

(९) ऋ, वे, सं, ३।१६।७। (१८) मै, सं, ३।१६।४।
(१०) ऋ, वे, सं, ३, १६, ७९। (१९) ऋ, वे, सं, ७, ५, २०।
(११) ,, ,, ,, ३, १६, ८९। (२०) मै, सं, ३, १६, ५०। (२१) मै, सं ३, १६, ८
(१२) ,, ,, ,, ऋ, वे, ४, २६, १०।
(१) वाष, सं, ३८।२०। (२१) ऋ, वे, ४।४८।१०।
(२) ,, ,, १२८।१४। (२२) ,, ,, ४।१२।६०।

देव जनाः आपवः स्वाहा ॥२॥ जातवेदः पवित्रवत् रनुस्वाहा ॥३॥ म(स)वित्रमहेस्वाहा ॥४॥ उञ्चाभ्यां देव सवितः महेस्वाहा ॥५॥ वैश्वदेवी पुनती, रयीणां स्वाहा ॥६॥ वैश्वानरोरश्मिभिः मा पुनीत स्वाहा ॥७॥ वृहद्भिः सवित स्त्रिभिःमास्वाहा ॥८॥ येनदेवा अपुनत, ब्रह्मणास्वाहा ॥६॥ यः पावमानीरध्यैभिश्च ना स्वाहा ॥१०॥ पावमानीर्यो मधूदकंस्वाहा ॥११॥ पावमानीः स्वस्त्ययनीः हितं स्वाहा ॥१२॥ पावमानीर्दधन्तुनः भृताः स्वाहा ॥१३॥ पावमानीः स्वस्त्ययनीः सुदुघाहि हितं स्वाहा ॥१४॥ येन देवाः पवित्रेण मा स्वाहा ॥१५॥ प्राजापत्यं पवित्रं महे स्वाहा ॥१ ॥ इन्द्रः सुनीती पुनातु स्वाहा ॥१७॥ अत्र सर्व्वत्रपावमान्यैलिङ्गोक्तदेवतायैवा इदं नममेति त्यागोज्ञातव्यः ॥

(च्छ) यद्देवादेवहेड़न मित्यच्छिद्रपठितस्य, विंशत्युचस्य सप्तमगणस्यानुवाकस्य विश्वेदेवा ऋषयः लिङ्गोक्तादेवता आद्यानुष्टुप,द्वितीयाषडवसानाजगती, महापङ्क्त्याख्या तृतीयानुष्टुप् , चतुर्थीत्रिष्टुप् . पञ्चमीसाप्तपदा अतिशर्करी, षष्ठीत्रिष्टुप् , सप्तमी षडवसानातिजतती, अष्टमी षठपदाजगती, नवमीवृहती। ततोद्दिष्टपदेशर्कर्य्यौ, द्वादशी त्रिष्टुप् त्रयोदशी सप्तपदाऽष्टिः, चतुर्द्दशीनुष्टुप् , पञ्चदश्यनुष्टुव् विराट षोड़शीगायत्री ॥ तत स्त्रिस्त्रिष्टुभः, विंशत्यनुष्टुभः चरुहोमेविनियोगः। अं यद्देवाहेड़नं मुतः स्वाहादित्येभ्यः ॥१॥ देवा जीवनकाम्या सःस्वाहा गार्हपत्याया(वा)ग्नये ॥२॥ ऋतेन द्यावा पृथिवी मूदिम स्वाहाद्यावा पृथिवीभ्यां सरस्वत्यैच ॥३॥ सजात शंसा मुमुग्धिस्वाहा गार्हपत्याग्नये ॥५॥ यद्धस्ताभ्यांचकरनिस्वाहाराषभतेत्तरोभ्यश्च ॥६॥ यदीव्यं नृणं महं नसं स्वाहा गार्हपत्ताग्नये ॥७॥ यन्मयिमातामुतु स्वाहा गार्हपत्याग्नये ॥८॥ यदापियेष पितरौ स्वाहाग्नयो ॥६॥ यदन्तरिक्षं पृथिवीं न सं स्वाहागार्हपत्याग्नये ॥१०॥ यदाशसानिशसा स्वाहागार्हपत्याग्नये ॥११॥ अतिक्रामामि दुरितं लोकं स्वाहाग्नये ॥१२॥ त्रितेदेवायन्तुस्वाहागार्हपत्याग्नये ॥१३॥ द्विविजाता अप्सु(त्सु)जाता शुन्धनीः स्वाहाऽद्भ्यः ॥१४। यदापोनक्तं

(१२) श्र, य, वे, १, ३०० । (१) मै, सं, ४ १४।१७-२४१। (६) तै, श्रा, २. ४, २।
(१३) शु, य, वे, १, ३००१ । (२) मै, सं, ५, १४, १७-२४१।
(११) ऋग्, सं, ९ ३७३२। (१४) शु, य, वे, १३००२।
(३) तै, श्रा, २ ३।३। (१२) सा, वे, १३००। (१५) शु, य. वे, १३०३ ॥
(१७) सा, वे, १२०४। (१३) सा, वे, १३०१। (१८) सा, वे, १२०५।

नीतनस्वाहाऽङ्क्यः ॥१५॥ इमंमे वरुणचक्रे स्वाहावरुणाय ॥१६॥ तत्त्वाया मोपीः स्वाहा वरुणाय ॥१७॥ तन्नोऽग्नेऽस्मत्स्वाहाऽग्नी वरुणाभ्याम् ॥१८॥ सत्वन्नोऽग्नेवमोभविस्वाहाग्नीवरुणाभ्याम् ॥१९॥ त्वमग्ने अपोस्य यासन् भेषजं स्वाहाग्नये ॥२०॥ वैश्वानरोनऊ-(ऊ)त्येतत्त्वष्टर्चस्याष्टमगणस्य विश्वेदेवा ऋषयः, वैश्वानरोदेवता आद्येद्वेगायत्र्यौ तृतीयाजगती तत त्रिस्त्रस्त्रिष्टुभः सप्तमी जगती, अष्टमीत्रिष्टुप्, चरुहोमे विनियोगः ॥

(अ) वैश्वानरोन ऊत्या वाहसा स्वाहाग्नये वैश्वानराय ॥१॥ (ऋ) ऋतावानं वैश्वानरं मीम हेश्वाहा ॥२॥ वैश्वानरस्य सुमतौ १(*) यतते सूर्य्येण स्वाहा ॥३॥ पृष्टोदिवि नक्तं स्वाहा ॥४॥ जाग्रोमदग्ने भुवना त्र्यख्य, सदान; स्वाहा ॥५॥ त्वमग्नेशोचिशोशुचानमहित्वा-स्वाहा ॥६॥ अस्माकमग्ने मघवत्सु जभूँराणः स्वाहा ॥७॥ वैश्वा-नरस्य सुमतौ सूर्य्येण स्वाहाग्नये, वैश्वानरायेति सर्व्वत्रत्यागः ॥८॥ (च्छ) इत्यष्टभिर्गणैः प्रतिमन्त्रं अष्टोत्तरं [त्र्युत्तरं] शतं वरुणाहुत्वा, जयादिनवहोमपक्षे, तान् हुत्वा न्सकृदुपस्तीर्य्य, सकृदवदाय द्विरभिघार्य, अग्नये स्विष्ट कृतेस्वाहेति स्विष्टकृतं जुहुयात् ॥ इदमापस्तम्बमते ज्ञेयम् ॥

## बोधायनमतेतु—

प्रधानचरुहोमानन्तरमवदान धर्म्मेण स्विष्टकृत मवदाय, हव्यवाह-मभिमातिवाहमिति, पुरोऽनुवाक्या मनूच्य स्विष्टमग्नेऽभितत पृणीमावः ।

## प्रकारान्तरत्वेतु—

वहिरञ्जनपरिधि प्रहरण संस्रवहोमं कृत्वा, प्रायश्चित्ताहुतीर्जुहुयात् ॥ अथ पूर्व्वासादित कलशमादाय नैर्ऋतिदिशं गत्वा चतुष्पथमुपविश्य, पादौ प्रक्षाल्याचम्य, प्राङ्मुखकलशे पत्नीसहितः केवलोवा आत्मनोरूपमवेक्षमाणो विधिसंज्ञकं सिंहे व्याघ्र, विदाना इत्यानुवाकं बौधायनाचार्य्य प्रणीत-कल्पसूत्रस्य—

(१५) मा, तै, १३०२। (१६ मा, मं, ३०३। (१) 'दउसमा' इति भिन्नः पाठः।
(१) सं. मं ३ १६, ६८। (१९) ऋग्, मं. ४, १, ५, (५) वैश्यानरः—ग्र, ग. मं [illegible]

'यश्च वयंद्विष्म' इत्यन्तं पठेत् ॥
अथाप उपस्पृश्यानवेक्ष्यमाणो
'यथेतं देव यजनं प्रविश्य स्नायात् ॥

एवं सप्ताहं त्रिषु सवनेषु कृत्वान्ते,
स्वस्ति वाचयित्वा पायसेन ससर्पिसा ब्राह्मणान् सम्भोज्य,
तेभ्योगो-भू-तिल-हिरण्याणि दद्यात् ॥
यावद् व्रतं सवनत्रये मौनी १(*)
सकृद्धविष्याशी नियतेन्द्रियश्च भवेत् ।
एवं स कुर्व्वन् सर्वेभ्यः पापेभ्यः प्रमुच्यते,
कर्म्मस्वधिकारीच भवति,
इत्याह भगवान् वौधायनः ॥

इति श्रीमदनन्त-भट्ट-विरचिते-विधान-पारिजाते
गणहोम विधानम् २(†) ॥

—*—

---

१(*) अत्र श्रुत्याद्यक्तं दानफलं पूर्व्वमुक्तम्। तथाहि 'त्रयोधर्म्मस्कन्धा यज्ञोऽध्ययनं दानञ्च' इति छान्दोग्यें। कर्म्मकर्त्तश्च 'श्रुतिप्रोक्त लक्षणं यथा,—'शुचिः ततकालभोजी, संयत-वाक्, मौनव्रतः, अहिंसः, अद्दिष्टाऽलोभश्च' इत्यादि।

,, हविष्याशी, सात्त्विकाहारेण हविष्येण च संयतमना स्यात्तकिः कर्म्मणां तेन वर्द्धते। एवं कर्म्माऽधिकर्त्ता, अनधिकारिणः कर्म्मानुष्ठाने संकल्पं तथाहि, 'श्रम एव॰ केवलम्' इति भागवते।

२(†) अतगणः—बहुसंख्यान्वितः। बहवोजना एकस्वार्थं सम्बन्धाः। बलिदातारं इति ... विषये। अर्थयुत टीकायां मयाऽलेखि, नृपाभावे जनगणैक्येन राष्ट्ररक्षण भवति। ... श्रुतिश्चाव 'गणानांत्वा गणपतिंऽहामहे' गणदेवता:। भूतगणा देवगणाश्चेति। ... गणानामीशः गणेशापि।

श्रीमत्काण्वकुलाब्धि-शीतकिरणोविद्याकलानां निधिः,
श्रीमद्विष्णुपदाश्रितः सरलगुर्विद्वच्चकोर—प्रियः ।
यस्मिन् भट्ट जनेह्यभूत् पृथुयशास्तस्यात्मजोऽभूम्महान् ;
चन्द्राच्चन्द्रकलेव विशुद्धिभृच्छ्रीनागदेवाभिधः ॥१॥
तस्माच्छ्रीमदनन्त आविरभवद्वयजज्ञानभक्त्यादिके,
सन्तस्सन्ति गुणेषु यस्य च हरिः प्रेष्ठोवरीवर्त्तते ।
तेनायं रचितो विधानदिविषद्वृक्षोऽर्थि सर्वप्रदः ;
कालेद्वयष्ट षड्क(व)लांकविमिते काश्यामगात् पूर्णताम् १(*) ॥२॥
सन्ति ग्रन्थसहस्राणि विद्वद्भिरचितान्यपि ।
कोऽप्यस्य महिमावेद्योविज्ञैर्ज्जयति सर्वतः ॥३॥
नपाण्डित्याभिमानेन नववित्तस्य लिप्सया ।
ग्रन्थोऽयं रचितः किन्तु हरेः प्रीत्यै सतामपि ॥४॥
तिष्ठन्ति सन्तः सर्व्वत्र ज्ञातविद्वत् परिश्रमाः ।
अत्रत्यं मत्कृमं दृष्ट्वा कृपांकुर्व्वन्तु सज्जनाः २(†) ॥५॥
श्रीजाने ! विहितमविहितं निगमतो—*
नच त्वत्पादार्च्चां तवपरिजनेष्वपचितिम् ।
तथापि त्वद्वीक्ष्याचलमिदमहोगहनमलिखम् ;
गिरिं पङ्गुमगमयेदिति सत्यमभवत् ॥६॥
यावच्चन्द्रश्च-सूर्य्यश्च यावत्तिष्ठति मेदिनी ।
यावत्तावदेवायं ग्रन्थोमे सन्ततिस्तथा ॥७॥
वचन-प्रसूनमालाच विचित्रा रचितामया ।
पदे समर्पिता विष्णोस्तुष्टोभव सदामम ॥८॥
इति, श्रीमद्विद्वज्जनकृपा-पात्रेणानन्तविदुषा ।
विधान-पारिजातोऽयं पञ्चमस्तवक संयुतः ॥
नानाविधानगन्धाढ्यः संसेव्योविबुधैरिह ॥९॥

**समाप्तश्चायं पञ्चमः स्तवकः ॥**

—*—

१(*) १६२५ ख्रीष्टाब्दाः कालः ग्रन्थस्यास्य विरचने इति केचनबुधाः । 'अङ्कानां वामतोगतिः' इति रीत्या शकमितिः १६८२ (·६२८) स्यात् । काश्यां –वाराणस्यामिति ।

२(†) 'मनच्यने' । 'मज्जनाः' । 'नैमठः' इत्थं पाठान्तराणि सन्ति ।

## अत्र, अनुलिपिकरस्य स्वस्ताभिप्रायः—

देवकी मातरं नत्वा पितरं रामसंज्ञकम् ।
विधान-पारिजाताख्यं यादवोग्रन्थमालिखत् १(*) ॥१॥

अगस्ति-गोत्रोद्भव-कृष्णशर्म्मणः,
सुतः शिवाख्योऽस्य शरीर जन्मतः ।
रामाभिधेयस्य सुतेन कृत्स्नना ;
संलिखितः श्रीविधिपारिजातकः २(†) ॥२॥

द्विखवसुशशिशाके यौवनाख्येच वर्षे,
तपनशमनकाले तूहिनर्तौ तथंच ३(‡)
सुररिपुगुरुवारे मासि पौषेच दुर्गा-,
प्रियवरवसुतिथ्यां यादवेनाप्यलेखि ॥३॥

यदि हृदयाभिनिवेशाल्लेखनी भ्रान्तिभावा,-
नयनचलनसंज्ञाच्छ्रोत्रशब्दावलम्बात् ।
लिखितमकृतबुद्ध्या यन्मया पुस्तकेऽस्मिन् ;
अङ्क-कृतमपराधं क्षन्तुमर्हन्ति सन्तः ॥४॥

## समाप्तिमगद्विधानपारिजाताख्य-
## धर्म्मशास्त्रग्रन्थः ॥

ग्रन्थविरचनकालः १८८२ शकाब्दाः ।

सदाशिवमस्तु ।

---

१(*) अत्र पादपः इति अन्य पाठः ।
२(†) तुहिनर्तौ—शीतर्त्तौकाले ।
३(‡) 'दुर्गाष्टम्यास्वातीथौ' इति ।
अत्र भृगुवारे इत्यर्थः ।
४(§) 'कृत्तिना लिलेखितः' इति भिन्नः पाठः ।
प्रतिलिपिकरण समयः,—१८०० शाके ।

# नवीन प्रकाशित महत्त्वपूर्ण ग्रन्थ

१–षट्चक्रनिरूपणम् । संस्कृत-हिन्दी टीका सहित । व्याख्या०–गोस्वामी प्रह्लादगिरि वेदान्तकेशरी — ३५-००

२–यज्ञफलम् नाटकम् । महाकवि भासप्रणीत । सम्पा०–डॉ० सुधाकर मालवीय — १५-००

३–नाट्यशास्त्रम् । सटिप्पण 'नाट्यचन्द्रिका' हिन्दी व्याख्या सहित । सम्पादिका–डॉ० श्रीमती सुधा रस्तोगी । प्रथम भाग — १००-००

४–कायचिकित्सा । ( सचित्र ) ताराशंकर वैद्य — १५०-००

५–तुलसी । ( सचित्र ) । आचार्य ब्रह्मदत्त शर्मा — ८५-००

६–एलोपैथिक सार व सिद्धयोगसंग्रह । डॉ० ओंकारदत्त शर्मा — १२५-००

७–आयुर्वेद के मूल सिद्धान्त एवं उनकी उपादेयता । डॉ० लक्ष्मीधर [illegible] । प्रथम भाग — १२५-००

8–Anal Fistula and Kshar Sutra Treatment by Dr. S. N. Pathak. — 80-00

9–Astanga Hridayam of Vagbhata. Text with English Translation by Prof. K. R. Srikantha Murthy.
Vol. I Sutra Sthana and Sarira Sthana. — 250-00
Vol. II Nidan, Cikitsa and Kalpasiddhisthana. — 250-00

१०–प्रौढमनोरमा । ( सशब्दरत्न ) सविमर्श 'भावप्रकाशिका' 'भावबोधिनी' संस्कृत-हिन्दी व्याख्या सहित । व्याख्या० डॉ०-जयशंकरलाल त्रिपाठी । पञ्चसन्ध्यन्त — ६०-००

११–तिङन्तार्णवतरणिः । ( ण्यन्तप्रक्रियादिसहित-बृहत्तमधातुरूपकोशः ) । पं० धन्वाडगोपालकृष्णाचार्य सोमयाजी प्रणीतः । सम्पा०–पं० रामचन्द्र झा — १२५-००

१२–बृहन्नारदीयपुराणम् । महर्षि वेदव्यासप्रणीत । पं० हृषिकेश शास्त्री सम्पादित टिप्पणी सहित । — २००-००

१३–बृहद्धर्मपुराणम् । महर्षि वेदव्यास प्रणीत । म. म. हरप्रसाद शास्त्री सम्पादित टिप्पणी विभूषित । — २००-००

14–Mahanirvana Tantram. A Prose English Translation by M. N. Dutt. — 100-00

15–Non-Rigvedic Citations in the Asvalayana Srautasutra (A Study). By K. P. Aithal. — 200-00

16–Vishnupuranam. A Prose English Translation by M. N. Dutt. — 125-00

17–Samveda. Translated into English with a popular commentary by Ralph T. H. Griffith. — 100-00

१८–मुहूर्तचिन्तामणिः । सविमर्श 'चन्द्रिका' संस्कृत-हिन्दी व्याख्या सहित । व्याख्या०–डॉ० रामचन्द्र पाण्डेय — ४०-००

१९–मध्यसिद्धान्तकौमुदी । 'सीता' 'सावित्री' संस्कृत-हिन्दी व्याख्या सहित । व्याख्या०–पं० कालीकान्त झा — ७५-००

२०–पातञ्जलयोगदर्शनम् । व्यासभाष्य सहित । सटिप्पण 'योगभाष्यचन्द्रिका' हिन्दी व्याख्या सहित । व्याख्या०–डॉ० रमाशंकर त्रिपाठी — ७०-००

२१–बीजगणितम् । संस्कृत हिन्दी टीका सहित । व्याख्या०–पं० देवचन्द्र झा — ७५-००

२२–मानसागरी । 'मनोरमा' हिन्दी व्याख्या तथा विवेचनात्मक परिशिष्ट सहित । व्याख्या०–डॉ० रामचन्द्र पाण्डेय — ६०-००